2.)

# काशीविद्यासुधानिधिः

# THE PANDIT.

## A MONTHLY PUBLICATION

OF THE

## BENARES COLLEGE,

DEVOTED TO

## SANSKRIT LITERATURE.

NEW SERIES.

VOL. II.



BENARES:
PRINTED AND PUBLISHED BY THE PROPRIETORS,
E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS.
1878.

19269

# INDEX TO VOLUME II. NEW SERIES.



ÁNANDAVṚINDÁVANA-CHAMPÚ, 20, 84, 148, 212, 275, 340, 407, 468, 530, 597, 661, 725.

GAṆARATNÁVALÍ BY BHAṬṬA YAJNEŚVARA, 192.

KÁŚIKÁ, 1, 65, 129, 193, 257, 321, 385, 449, 513, 577, 641, 705.

MÁNAVÍYAJNÁNAVISHAYAKAŚASTRÁVATÁRA, A TRANSLATION OF THE THIRD BOOK OF LOCKE'S ESSAY CONCERNING HUMAN UNDERSTANDING, 54, 102, 166, 230, 359.

NYÁYADARŚANA, TRANSLATED INTO ENGLISH, 60, 109, 311, 363.

SANSKRITASAMAJÁBHIDHASABHÁVṚITTÁNTA VARṆANA, 238, 293.

SARVADARŚANA-SANGRAHA, TRANSLATED INTO ENGLISH, 174, 381, 497, 562, 614, 691.



## ॥ काशिकायाः ॥

### ॥ अष्टमाध्यायस्य चतुर्थः पादः ॥

### रषाभ्यां नो णः समानपदे ॥ १ ॥

रेफषकाराभ्यामुत्तरस्य नकारस्य णकारादेशो भवति, समानपदस्थौ चेन्निमित्तनिमित्तिनौ भवतः । आस्तीर्णम् । विस्तीर्णम् * । षकारात् । कुष्णाति । पुष्णाति । मुष्णाति । षग्रहणमुत्तरार्थं, ष्टुत्वेनैव हि सिद्धमेतत् । समानपदइति किम् । अग्निर्नयति । वायुर्नयति ॥ ऋवर्णाच्चेति वक्तव्यम् ॥ * ॥ तिसृणाम् । चतसृणाम् । मातॄणाम् । पितॄणाम् । रश्रुतिसामान्यनिर्देशात्सिद्धम् । वर्णभक्त्या च व्यवधानेपि णत्वं भवतीति क्षुभ्नादिषु नृनमनतृप्नोतिग्रहणं ज्ञापकम् । अथ वा ऋवर्णादपि णत्वं भवतीत्येतदेवानेन ज्ञाप्यते ॥

### अट्कुप्वाङ्नुम्व्यवायेपि ॥ २ ॥

अट् कु पु आङ् नुम् इत्येतैर्व्यवायेपि रेफषकाराभ्यामुत्तरस्य नकारस्य णकार आदेशो भवति । अड्व्यवाये तावत् । करणम् । हरणम् । किरिणा । गिरिणा । कुरुणा । गुरुणा । कवर्गव्यवाये । अर्केण । मूर्खेण । गर्गेण । अर्घेण । पवर्गव्यवाये । दर्पेण । रेफेण । गर्भेण । चर्म्मणा । वर्म्मणा । आङ्व्यवाये । पर्याणद्धम् । निराणद्धम् । अड्व्यवायइति सिद्धे आङ्ग्रहणं पदव्यवायइत्यस्य प्रतिषेधस्य बाधनार्थम् । नुम्व्यवाये । बृंहणम् । बृंहणीयम् । नुम्ग्रहणमनुस्वारोपलक्षणार्थं द्रष्टव्यम् । तेन तृंहणं तृंहणीयमित्यत्रानुस्वारव्यवाये नुमभावेपि णत्वं भवति । सत्यपि च नुमि यत्रानुस्वारो न श्रूयते तत्र न भवति । प्रेन्वनम् । प्रेन्वनीयमिति । व्यवायोपलक्षणार्थत्वादडादीनामिह व्यस्तैः समस्तैश्च व्यवायेपि णत्वं भवति ॥

---

* अवगूर्णमित्यधिकं पुस्तकान्तरे ।

## पूर्वपदात्संज्ञायामगः ॥ ३ ॥

पूर्वपदस्थान्निमित्तादुत्तरस्य गकारवर्जितात् नकारस्य णकार आदेशो भवति संज्ञायां विषये । द्रुणसः । वार्ध्रीणसः । खरणसः * । शूर्पणखा । संज्ञायामिति किम् । चर्मनासिकः । अग इति किम् । ऋगयनम् । केचिदेतन्नियमार्थं वर्णयन्ति । पूर्वपदात्संज्ञायामेव णत्वं नान्यत्रेति । समासपदेऽपि हि समानपदे निमित्तनिमित्तिनोर्भावादस्ति पूर्वेण प्राप्तिरिति । स च नियमः पूर्वपदसंबन्धादुत्तरपदस्यस्यैव णत्वं निवर्त्तयति चर्मनासिक इति । न तद्धितपूर्वपदस्थस्य । खारपायणः । मातृभोगीणः । करणप्रिय इति । अग इति योगविभागेन णत्वप्रतिषेधो न नियमप्रतिषेध इति । अपरे तु पूर्वसूत्रे समानमेव यद् नित्यं पदं तत्समानपदमित्याश्रयन्ति समानग्रहणात् । तेषामप्राप्तमेव णत्वमनेन विधीयते । समासे हि पूर्वपदोत्तरपदविभागादसमानपदत्वमप्यस्तीति ॥

## वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः ॥ ४ ॥

पूर्वपदात्संज्ञायामिति वर्त्तते । पुरगा मिश्रका सिध्रका शारिका कोटरा अग्रे इत्येतेभ्य पूर्वपदेभ्य उत्तरस्य वननकारस्य णकारादेशो भवति संज्ञायां विषये । पुरगावणम् । मिश्रकावणम् । सिध्रकावणम् । शारिकावणम् । कोटरावणम् । अग्रेवणम् । सिद्धे सत्यारम्भो नियमार्थः । एतेभ्य एव परस्य वननकारस्य णकारादेशो भवति, नान्येभ्य इति । कुबेरवनम् । शतधारवनम् । असिपत्त्रवनम् ॥

## प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि ॥ ५ ॥

प्र निर् अन्तर् शर इक्षु प्लक्ष आम्र कार्ष्य खदिर पीयूक्षा इत्येतेभ्य उत्तरस्य वननकारस्य संज्ञायामसंज्ञायामपि णकारादेशो भवति । प्र । प्रवणे यष्टव्यम् । निर् । निर्वणे प्रतिधीयते । अन्तर् । अन्तर्वणो । शर । शरवणम् । इक्षु । इक्षुवणम् । प्लक्ष । प्लक्षवणम् । आम्र । आम्रवणम् । कार्ष्य । कार्ष्यवणम् । खदिर । खदिरवणम् । पीयूक्षा । पीयूक्षावणम् ॥

* क्व चित्खरणस इति नास्ति ।

## विभाषौषधिवनस्पतिभ्यः ॥ ६ ॥

वनमित्येव । ओषधिवाचि यत्पूर्वपदं वनस्पतिवाचि च तत्स्थान्निमित्तादुत्तरस्य वननकारस्य णकार आदेशो भवति विभाषा । ओषधिवाचिभ्यस्तावत् । दूर्वावणम् । दूर्वावनम् । मूर्वावणम् । मूर्वावनम् । वनस्पतिभ्यः । शिरीषवणम् । शिरीषवनम् । बदरीवणम् । बदरीवनम् ॥ द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम् ॥ * ॥ इह मा भूत् । देवदारुवनम् । भद्रदारुवनम् ॥ इरिकादिभ्यः प्रतिषेधो वक्तव्यः ॥ * ॥ इरिकावनम् । तिमिरकावनम् । सत्यपि भेदे वृक्षवनस्पत्योरिहाभेदेन ग्रहणं द्रष्टव्यम् ।

फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः ।
ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः ॥

## अह्नोऽदन्तात् ॥ ७ ॥

अदन्तं यत्पूर्वपदं तत्स्थान्निमित्तादुत्तरस्याह्नो नकारस्य णकार आदेशो भवति । पूर्वाह्णः । अपराह्णः । अदन्तादिति किम् । निरह्नः । दुरह्नः । अह्नाह्न एतेभ्य इत्यह्नादेशः । अन्ह इत्यकारान्तग्रहणाद् दीर्घाह्नी शरदित्यत्र न भवति ॥

## वाहनमाहितात् ॥ ८ ॥

आहितवाचि यत्पूर्वपदं तत्स्थान्निमित्तादुत्तरस्य वाहननकारस्य णकार आदेशो भवति । इक्षुवाहणम् । शरवाहणम् । दर्भवाहणम् । वाहने यद् आरोपितमुह्यते तदाहितमुच्यते । आहितादिति किम् । दाक्षिवाहनम् । दाक्षिस्वामिकं वाहनमित्यर्थः ॥

## पानं देशे ॥ ९ ॥

पाननकारस्य पूर्वपदस्थान्निमित्तादुत्तरस्य देशाभिधाने णकार आदेशो भवति । पीयतइति पानम् । कृत्यल्युटो बहुलमिति कर्म्मणि ल्युट् । क्षीरं पानं येषां ते क्षीरपाणा उशीनराः । मनुष्याभिधानेपि देशाभिधानं गम्यते । सुरापाणाः प्राच्याः । सौवीरपाणा बाह्लीकाः । कषायपाणा गान्धाराः । देशइति किम् । दाक्षीणां पानं दाक्षिपानम् ॥

## नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपति-वहतिशाम्यतिचिनोतिदेग्धिषु च ॥ १७ ॥

निरित्येतस्योपसर्गस्य निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति गद नद पत पद घु मा स्यति हन्ति याति वाति द्राति प्साति वपति वहति शाम्यति चिनोति देग्धि इत्येतेषु परतः । गद । प्रणिगदति । परिणिगदति । नद । प्रणिनदति । परिणिनदति । पत । प्रणिपतति । परिणिपतति । पद । प्रणिपद्यते । परिणिपद्यते । घु । प्रणिददाति । परिणिददाति । प्रणिदधाति । परिणिदधाति । माङ् । प्रणिमिमीते । परिणिमिमीते । मेङ् । प्रणिमयते । परिणिमयते ॥ मा इति माङ्मेङोर्ग्रहणमिष्यते ॥ स्यति । प्रणिष्यति । परिणिष्यति । हन्ति । प्रणिहन्ति । परिणिहन्ति । याति । प्रणियाति । परिणियाति । वाति । प्रणिवाति । परिणिवाति । द्राति । प्रणिद्राति । परिणिद्राति । प्साति । प्रणिप्साति । परिणिप्साति । वपति । प्रणिवपति । परिणिवपति । वहति । प्रणिवहति । परिणिवहति । शाम्यति । प्रणिशाम्यति । परिणिशाम्यति । चिनोति । प्रणिचिनोति । परिणिचिनोति । देग्धि । प्रणिदेग्धि । परिणिदेग्धि ॥ अड्व्यवायेपि नेर्गदादिषु णत्वमिष्यते ॥ प्रण्यगदत् । परिण्यगदत् ॥

## शेषे विभाषाकखादावषान्तउपदेशे ॥ १८ ॥

नेरिति वर्त्तते उपसर्गादिति च । अककारखकारादिरषकारान्तश्च उपदेशे यो धातुः शेषस्तस्मिन्परत उपसर्गस्थान्निमित्तादुत्तरस्य नेर्नकारस्य विभाषा णकार आदेशो भवति । प्रणिपचति । प्रनिपचति । प्रणिभिनत्ति । प्रनिभिनत्ति । अकखादाविति किम् । प्रनिकरोति । प्रनिखादति । अषान्तइति किम् । प्रनिपिनष्टि । उपदेशग्रहणं किम् । इह च प्रतिषेधो यथा स्यात् । प्रनिचकार । प्रनिचखाद । प्रनिपेक्ष्यतीति । इह च मा भूत् । विशः । प्रणिवेष्टा । प्रणिवेक्ष्यति ॥

## अनितेः ॥ १९ ॥

अनितेर्नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति । प्राणिति । पराणिति ॥

### अन्तः ॥ २० ॥

अनितेरिति वर्त्तते । उपसर्गस्थान्निमित्तादुत्तरस्यानितिनकारस्य पदान्ते वर्त्तमानस्य णकारादेशो भवति । हे प्राण् । हे पराण् । पदान्तस्येति प्रतिषेधस्यापवादोयम् । अन्तश्च पदापेक्षो गृह्यते । के चित्तु पूर्वसूत्रएवैतदन्तग्रहणं सामीप्यार्थमभिसंबध्नन्ति । निमित्तसमीपस्यैकवर्णव्यवहितस्यानितिनकारस्य पदान्ते वर्त्तमानस्य णकारादेशो यथा स्यात् । इह मा भूत् । पर्यनितीति । तैर्द्वितीयमपि पदान्तस्य णत्वार्थमन्तग्रहणमाश्रयितव्यमेव । येषां तु पर्यणितीति भवितव्यमिति दर्शनम् । तेषां पूर्वसूत्रे नार्थोन्तग्रहणेन ॥

### उभौ साभ्यासस्य ॥ २१ ॥

साभ्यासस्यानितेरुपसर्गस्थान्निमित्तादुत्तरस्योभयोर्नकारयोर्णकार आदेशो भवति । प्राणिणिषति । प्राणिणत् । पराणिणिषति । पराणिणत् पूर्वत्रासिद्धीयमद्विर्वचनइत्येतस्मिन्सति पूर्वमेव कृतणत्वस्य द्विर्वचने कृते सिद्धमेतदन्तरेणापि वचनं तत्तु नाश्रयितव्यमिति सूत्रमिदमारभ्यते । तेन औजढदिति सिद्धं भवति * ॥

### हन्तेरत्पूर्वस्य ॥ २२ ॥

अकारपूर्वस्य हन्तिनकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकार आदेशो भवति । प्रहण्यते । परिहण्यते । प्रहणनम् । परिहणनम् । अत्पूर्वस्येति किम् । प्रघ्नन्ति । परिघ्नन्ति । तपरकरणं किम् । चिणि प्राघानि । पर्यघानि ॥

### वमोर्वा ॥ २३ ॥

हन्तेरिति वर्त्तते । वकारमकारयोः परतो हन्तिनकारस्योपसर्ग-

* तेनेत्यारभ्येतावत्पर्यन्तं क्व चित्पुस्तके नास्ति ।

स्यान्निमित्तादुत्तरस्य वा णकारादेशो भवति । प्रहण्वः । परिहण्वः । प्रहन्वः । परिहन्वः । प्रहण्मः । परिहण्मः । प्रहन्मः । परिहन्मः * ॥

अन्तरदेशे ॥ २४ ॥

अन्तःशब्दादुत्तरस्य हन्तिनकारस्यात्पूर्वस्य णकारादेशो भवति अदेशाभिधाने । अन्तर्हण्यते । अतर्हणनं वर्त्तते । आदेशइति किम् । अन्तर्हननो देशः । अत्पूर्वस्येत्येव । अन्तर्घ्नन्ति । तपरकरणं किम् । अन्तर्घ्नानि ॥

अयनं च ॥ २५ ॥

अन्तरदेशइति वर्त्तते । अयननकारस्य चान्तः शब्दादुत्तरस्य णकारादेशो भवति अदेशाभिधाने । अन्तरयणं वर्त्तते । अन्तरयणं शोभनम् । अदेशइत्येव । अन्तरयनो देशः ॥

छन्दस्यृदवग्रहात् ॥ २६ ॥

पूर्वपदादिति वर्तते । ऋकारान्तादवग्रहात्पूर्वपदादुत्तरस्य णकारादेशो भवति छन्दसि विषये । नृमणाः । पितृयाणम् । अत्र हि नृमणा पितृयाणमिति ऋकारोवगृह्यते । अवग्रहग्रहणं किमर्थमुच्यते । यावता संहिताधिकार आध्यायपरिसमाप्तेरित्युक्तम् । विषयोपलक्षणार्थमवग्रहग्रहण,मवगृह्यमाणाद्यथा स्यादनवगृह्यमाणान्मा भूत् । अपदान्ते चावग्रहो नास्ति ॥

नश्च धातुस्थोरुषुभ्यः ॥ २७ ॥

नस् इत्येतस्य नकारस्य णकारादेशो भवति धातुस्थान्निमित्तादुत्तरस्योरुशब्दात्षुशब्दाच्चच्छन्दसि विषये । धातुस्थात्तावत् । अग्ने रक्षा णः । शिक्षाणो अस्मिन् । उरुशब्दात् । उरुणस्कृधि । षुशब्दात् । अभी षु णः सखीनाम् । ऊर्ध्व ऊ षु ण ऊतये । अस्मदादेशोयं नस्शब्दो बहुवचनस्य वस्नसाविति ॥

* पूर्वेण नित्ये प्राप्ते विकल्प इत्यधिकमन्यत्र ।

## उपसर्गाद्बहुलम् ॥ २८ ॥

उपसर्गस्थान्निमित्तादुत्तरस्य नसो नकारस्य णकारादेशो भवति। प्रणः शूद्रः। प्रणसः प्रणो राजा। न च भवति। प्र नो मुञ्चतम्। बहुलग्रहणाद्भाषायामपि भवति। प्रणसं मुखम् *। उपसर्गाच्चेति नासिकाया नसादेशः ॥

## कृत्यचः ॥ २९ ॥

कृत्स्थो यो नकारो ऽच उत्तरस्तस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति। अन मान अनीय अनि इनि निष्ठादेश एते णत्वं प्रयोजयन्ति। अन। प्रयाणम्। परियाणम्। प्रमाणम्। परिमाणम्। मान। प्रयायमाणम्। परियायमाणम्। अनीय। प्रयाणीयम्। परियाणीयम्। अनिः। अप्रयाणिः। अपरियाणिः। इनि। प्रयायिणौ। परियायिणौ। निष्ठादेशः। प्रहीणः। परिहीणः। प्रहीणवान्। परिहीणवान्। अच इति किम्। प्रभुग्नः। परिभुग्नः। भुजो कौटिल्ये। अस्य निष्ठाप्रत्ययः। ओदितश्चेति निष्ठानत्वम्। चोः कुरिति कुत्वे सिद्धं परिभुग्न इति * ॥ कृत्स्थस्य णत्वे निर्विण्णस्योपसंख्यानं कर्त्तव्यम् ॥ * ॥ निर्विण्णोऽस्मि खलसङ्गेन। निर्विण्णोहमत्र वासेन ॥

## णेर्विभाषा ॥ ३० ॥

ण्यन्ताद्यो विहितः कृत्प्रत्ययः तत्स्थस्य नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य विभाषा णकारादेशो भवति। प्रयापणम्। प्रयापनम्। परियापणम्। परियापनम्। प्रयाप्यमाणम्। प्रयाप्यमानम्। प्रयापणीयम्। प्रयापनीयम्। अप्रयापणिः। अप्रयापनिः। प्रयापिणौ। प्रयापिनौ। विहितविशेषणं किम्। प्रयाप्यमाणमित्यत्र यका व्यवधानेपि यथा स्यादिति ॥

## हलश्चेजुपधात् ॥ ३१ ॥

कृत्यच इति वर्त्तते। हलादिर्यो धातुरिजुपधस्तस्मात्परो यः

* क्वचित्पुस्तके छन्दसीति निवृत्तं तेन भाषायामपि भवतीति पाठः।

कृत्प्रत्ययः तत्स्थस्य नकारस्याच उत्तरस्योपसर्गस्थान्निमित्तादुत्तरस्य विभाषा णकारादेशो भवति । प्रकोपणम् । प्रकोपनम् । परिकोपणम् । परिकोपनम् । हल इति किम् । प्रेहणम् । प्रोहणम् । इजुपधादिति किम् । प्रवपणम् । परिवपणम् । कृत्यच इति नित्ये प्राप्ते विकल्पः । अच इत्येव । परिभुग्नः । इजुपधस्य सर्वस्य हलन्तत्वादिह हलग्रहणमादिविशेषणम् ॥

## इजादेः सनुमः ॥ ३२ ॥

हल इति वर्त्तते । तेनेह सामर्थ्यात्तदन्तविधिः । इजादेः सनुमो हलन्ताद्धातोर्विहितो यः कृत्तस्थस्य नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारो भवति । प्रेङ्खणम् । परेङ्खणम् । प्रेङ्गणम् । परेङ्गणम् । प्रोम्भणम् । परोम्भणम् । सिद्धे सत्यारम्भो नियमार्थं इजादेरेव सनुमो नान्यस्मादिति । प्रमङ्गनम् । परिमङ्गनम् । हल इत्यधिकाराद् णयन्ते नित्यं विध्यर्थमेतन्न भवति ॥

## वा निंसनिक्षनिन्दाम् ॥ ३३ ॥

उपसर्गादिति वर्त्तते । निंस निक्ष निन्द इत्येतेषां नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति । प्रणिंसनम् । प्रनिंसनम् । प्रणिक्षणम् । प्रनिक्षणम् । प्रणिन्दनम् । प्रनिन्दनम् । णोपदेशत्वादेतेषां नित्ये प्राप्ते विकल्पः ॥

## न भाभूपूकमिगमिप्यायिवेपाम् ॥ ३४ ॥

भा भू पू कमि गमि प्यायि वेप इत्येतेषामुपसर्गस्थान्निमित्तादुत्तरस्य कृत्स्थस्य नकारस्य णकारादेशो न भवति । भा । प्रभानम् । परिभानम् । भू । प्रभवनम् । परिभवनम् । पू । प्रपवनम् । परिपवनम् । पूञ्ग्रहणं द्रष्टव्यम् । पूङो हि भवत्येव णत्वम् । प्रपवणं सोमस्येति । कमि । प्रकमनम् । परिकमनम् । गमि । प्रगमनम् । परिगमनम् । प्यायि । प्रप्यायनम् । परिप्यायनम् । वेप । प्रवेपनम् । परिवेपनम् । णयन्तानां भादीनामुपसंख्यानं कर्त्तव्यम् ॥ * ॥ प्रभापनम् । परिभापनम् ।

## षात्पदान्तात् ॥ ३५ ॥

षकारात्पदान्तादुत्तरस्य नकारस्य णकारादेशो न भवति । निष्पानम् । दुष्पानम् । सर्पिष्पानम् यजुष्पानम् । षादिति किम् । निर्णयः । पदान्तादिति किम् । कुष्णाति । पुष्णाति । पदे अन्तः पदान्त इति सप्तमीसमासोयं तेनेह न भवति । सुसर्पिष्केण । सुयजुष्केण । शेषाद्विभाषेति कप् ॥

## नशेः षान्तस्य ॥ ३६ ॥

नेति वर्त्तते । नशेः षकारान्तस्य णकारादेशो न भवति । प्रनष्टः । परिनष्टः । षान्तस्येति किम् । प्रणश्यति । परिणश्यति । अन्तग्रहणं षान्तभूतपूर्वमात्रस्यापि यथा स्यात् । प्रनङ्क्ष्यति । परिनङ्क्ष्यति ॥

## पदान्तस्य ॥ ३७ ॥

पदान्तो यो नकारस्तस्य णकारादेशो न भवति । वृक्षान् । प्लक्षान् । अरीन् । गिरीन् ॥

## पदव्यवायेपि ॥ ३८ ॥

पदेन व्यवायः पदव्यवायः । पदव्यवधानम् । पदेन व्यवायेपि सति निमित्तनिमित्तिनोर्नकारस्य णकारादेशो न भवति । माषकुम्भवापेन । चतुरङ्गयोगेन । प्रावनद्धम् । पर्यवनद्धम् । प्रगाचयामः । परिगाचयामः ॥ पदव्यवाये ऽतद्धितइति वक्तव्यम् ॥ * इह मा भूत् । आर्द्रगोमयेण । शुष्कगोमयेण । गोश्च पुरीषइति मयट् । स्वादौ पूर्वं पदमिति गोशब्दः पूर्वपदं तेन व्यवायः ॥

## क्षुभ्नादिषु च ॥ ३९ ॥

नेति वर्त्तते । क्षुभ्ना इत्येवमादिषु शब्देषु नकारस्य णकारादेशो न भवति । क्षुभ्नाति । अजादेशस्य स्थानिवद्भावादिहापि प्रतिषेधो भवति । क्षुभ्नीतः । क्षुभ्नन्ति । नृनमनः । पूर्वपदात्संज्ञायामिति प्राप्तिः ।

* क्व चिद् भुजो कौटिल्यइत्यारभ्येतत्पर्यन्तं नास्ति ।

कृत्प्रत्ययः तत्स्थस्य नकारस्याच उत्तरस्योपसर्गस्थान्निमित्तादुत्तरस्य विभाषा णकारादेशो भवति । प्रकोपणम् । प्रकोपनम् । परिकोपणम् । परिकोपनम् । हल इति किम् । प्रेहणम् । प्रोहणम् । इजुपधादिति किम् । प्रवपणम् । परिवपणम् । कृत्यच इति नित्ये प्राप्ते विकल्पः । अच इत्येव । परिभुग्नः । इजुपधस्य सर्वस्य हलन्तत्वादिह हलग्रहणमादिविशेषणम् ॥

## इजादेः सनुमः ॥ ३२ ॥

हल इति वर्त्तते । तेनेह सामर्थ्यात्तदन्तविधिः । इजादेः सनुमो हलन्ताद्धातोर्विहितो यः कृत्तत्स्थस्य नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारो भवति । प्रेङ्खणम् । परेङ्खणम् । प्रेङ्गणम् । परेङ्गणम् । प्रोम्भणम् । परोम्भणम् । सिद्धे सत्यारम्भो नियमार्थं इजादेरेव सनुमो नान्यस्मादिति । प्रमङ्गनम् । परिमङ्गनम् । हल इत्यधिकाराद् ण्यन्ते नित्यं विकल्पार्थमेतच्च भवति ॥

## वा निंसनिक्षनिन्दाम् ॥ ३३ ॥

उपसर्गादिति वर्त्तते । निंस निक्ष निन्द इत्येतेषां नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति । प्रणिंसनम् । प्रनिंसनम् । प्रणिक्षणम् । प्रनिक्षणम् । प्रणिन्दनम् । प्रनिन्दनम् । णोपदेशत्वादेतेषां नित्ये प्राप्ते विकल्पः ॥

## न भाभूपूकमिगमिप्यायिवेपाम् ॥ ३४ ॥

भा भू पू कमि गमि प्यायि वेप इत्येतेषामुपसर्गस्थान्निमित्तादुत्तरस्य कृत्स्थस्य नकारस्य णकारादेशो न भवति । भा । प्रभानम् । परिभानम् । भू । प्रभवनम् । परिभवनम् । पू । प्रपवनम् । परिपवनम् । पूञ्ग्रहणं द्रष्टव्यम् । पूङो हि भवत्येव णत्वम् । प्रपवणं सोमस्येति । कमि । प्रकमनम् । परिकमनम् । गमि । प्रगमनम् । परिगमनम् । प्यायि । प्रप्यायनम् । परिप्यायनम् । वेप । प्रवेपनम् । परिवेपनम् ॥ ण्यन्तानां भादीनामुपसंख्यानं कर्त्तव्यम् ॥ * ॥ प्रभापनम् । परिभापनम् ॥

## षात्पदान्तात् ॥ ३५ ॥

षकारात्पदान्तादुत्तरस्य नकारस्य णकारादेशो न भवति । निष्पानम् । दुष्पानम् । सर्पिष्पानम् यजुष्पानम् । षादिति किम् । निर्णयः । पदान्तादिति किम् । कुष्णाति । पुष्णाति । पदे अन्तः पदान्त इति सप्तमीसमासोयं तेनेह न भवति । सुसर्पिष्केण । सुयजुष्केण । शेषाद्विभाषेति कप् ॥

## नशेः षान्तस्य ॥ ३६ ॥

नेति वर्त्तते । नशेः षकारान्तस्य णकारादेशो न भवति । प्रनष्टः । परिनष्टः । षान्तस्येति किम् । प्रणश्यति । परिणश्यति । अन्तग्रहणं षान्तभूतपूर्वमात्रस्यापि यथा स्यात् । प्रनङ्क्ष्यति । परिनङ्क्ष्यति ॥

## पदान्तस्य ॥ ३७ ॥

पदान्तो यो नकारस्तस्य णकारादेशो न भवति । वृक्षान् । प्लक्षान् । अरीन् । गिरीन् ॥

## पदव्यवायेपि ॥ ३८ ॥

पदेन व्यवायः पदव्यवायः । पदव्यवधानम् । पदेन व्यवायेपि सति निमित्तनिमित्तिनोर्नकारस्य णकारादेशो न भवति । माषकुम्भवापेन । चतुरङ्गयोगेन । प्रावनद्धम् । पर्यवनद्धम् । प्रगाचयामः । परिगाचयामः ॥ पदव्यवाये ऽतद्धितइति वक्तव्यम् ॥ * इह मा भूत् । आर्द्रगोमयेण । शुष्कगोमयेण । गोश्च पुरीषइति मयट् । स्वादौ पूर्वं पदमिति गोशब्दः पूर्वपदं तेन व्यवायः ॥

## क्षुभ्नादिषु च ॥ ३९ ॥

नेति वर्त्तते । क्षुभ्ना इत्येवमादिषु शब्देषु नकारस्य णकारादेशो न भवति । क्षुभ्नाति । अजादेशस्य स्थानिवद्भावादिहापि प्रतिषेधो भवति । क्षुभ्नीतः । क्षुभ्नन्ति । नृनमनः । पूर्वपदात्संज्ञायामिति प्राप्तिः ।

---

* क्व चिद् भुजो कौटिल्यइत्यारभ्येतत्पर्यन्तं नास्ति ।

छन्दस्यृदवग्रहादिति च प्राप्नोति । नन्दिन् । नन्दन । नगर । एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति । हरिनन्दी । हरिनन्दनः । गिरिनगरम् । नृतिर्यङि प्रयोजयति । नरीनृत्यते । तृप्नु । तृप्नोति । नर्तन । गहन । नन्दन । निवेश । निवास । अग्नि । अनूप । एतान्युत्तरपदानि प्रयोजयन्ति । परिनर्त्तनं परिगहनमिति संज्ञायां पूर्वपदात्संज्ञायामिति प्राप्नोति । परिनन्दनमित्यत्रोपसर्गादसमासेऽपीति प्राप्नोति । शरनिवेशः । शरनिवासः । शराग्निः । दर्भानूपः । इत्येताः संज्ञाः ॥ आचार्यादणत्वं च ॥ आचार्यभोगीनः । आचार्यानी * ॥ इरिकादिभ्यो वनोत्तरपदेभ्यः संज्ञायाम् ॥ इरिका । तिमिर । समीर । कुबेर । हरि ॥ कर्म्मार इत्युत्तरपदवनशब्दस्यास्य संज्ञायाम् ॥ क्षुभ्नादिराकृतिगणः । अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः ॥

## स्तोः श्चुना श्चुः ॥ ४० ॥

सकारतवर्गयोः शकारचवर्गाभ्यां सन्निपाते शकारचवर्गावादेशौ भवतः । स्तोः श्चुनेति यथासंख्यमत्र नेष्यते । सकारस्य शकारेण चवर्गेण द्वाभ्यामपि संनिपाते शकारो भवति । तवर्गस्यापि च शकारेण चवर्गेण च संनिपाते चवर्गो भवति । आदेशे तु यथासंख्यमिष्यते । सकारस्य शकारस्तवर्गस्य च चवर्ग इति । सकारस्य शकारेण संनिपाते । वृक्षश्शेते । प्लक्षश्शेते । तस्यैव चवर्गेण । वृक्षश्चिनोति । प्लक्षश्चिनोति । वृक्षश्छादयति । प्लक्षश्छादयति । तवर्गस्य शकारेण । अग्निचिच्छेते । सोमसुच्छेते । तस्यैव चवर्गेण । अग्निचिच्चिनोति । सोमसुच्चिनोति । अग्निचिच्छादयति । सोमसुच्छादयति । अग्निचिज्जयति । सोमसुज्जयति । अग्निचिज्झकारम् । सोमसुज्झकारम् । अग्निचिञ्ञकारः । सोमसुञ्ञकारः । मस्जेः मज्जति । भ्रस्जेः भृज्जति । व्रश्चेर्वृश्चति । यज्ञः यज्ञः । याचेर्याञ्चा । शादिति प्रतिषेधो ज्ञापकः संख्यातानुदेशाभावस्य । स्तोः

* तथा हायनस्य नेष्यते । त्रिहायनः चतुर्हायनः कर्मार इति चोत्तरपदस्य संज्ञायाम् । इत्यधिकं पुस्तकान्तरे ।

श्चाविति सप्तमीनिर्द्देशो न कृतः । पूर्वेण परेण च श्चुना संनिपाते श्चुत्वं यथा स्यादिति ॥

ष्टुना ष्टुः ॥ ४१ ॥

स्तोरिति वर्त्तते । सकारतवर्गयोः षकारटवर्गाभ्यां संनिपाते षकारटवर्गावादेशौ भवतः । अत्रापि तथैव संख्यातानुदेशाभावः । षकारेण सकारस्य । वृक्षष्षण्डे । प्लक्षष्षण्डे । तस्यैव टवर्गेण । वृक्षष्टीकते । प्लक्षष्टीकते । वृक्षष्ठकारः । प्लक्षष्ठकारः । तवर्गस्य षकारेण । पेष्टा । पेष्टुम् । पेष्टव्यम् । कृषीष्ट । कृषीष्ठाः । तस्यैव टवर्गेण । अग्निचिट्टीकते । सोमसुट्टीकते । अग्निचिट्ठकारः । सोमसुट्ठकारः । अग्निचिड्डीनः । सोमसुड्डीनः । अग्निचिट् ढौकते । सोमसुट् ढौकते । अग्निचिण्णकारः । सोमसुण्णकारः । अतट्ट । अट्टति । अदड्ड । अड्डति ॥

न पदान्ताट्टोरनाम् ॥ ४२ ॥

पदान्ताट्टवर्गादुत्तरस्य स्तोः ष्टुत्वं न भवति नामित्येतद्वर्जयित्वा । श्वलिट्साये । मधुलिट् तरति । पदान्तादिति किम् । ईड स्तुतौ । ईट्टे । टोरिति किम् । सर्पिष्टमम् । अनामिति । किम् । षण्णाम् । अत्यल्पमिदमुच्यते ॥ अनाम्नवतिनगरीणामिति वक्तव्यम् ॥ * ॥ षण्णाम् । षण्णवतिः । षण्णगरी ॥

तोः षि ॥ ४३ ॥

नेति वर्त्तते । तवर्गस्य षकारे यदुक्तं तन्न भवति । अग्निचित्षण्डे । भवान्षण्डे । महान्षण्डे ॥

शात् ॥ ४४ ॥

तोरिति वर्त्तते । शकारादुत्तरस्य तवर्गस्य यदुक्तं तन्न भवति । प्रश्नः । विश्नः ॥

यरोनुनासिकेनुनासिको वा ॥ ४५ ॥

पदान्तग्रहणमनुवर्त्तते । यरः पदान्तस्यानुनासिके परतो वानुनासिकादेशो भवति । वाग्नयति । वाङ्नयति । श्वलिण्नयति । श्वलिड्नयति ।

अग्निचिद्व्यति । अग्निचिद्व्यति । त्रिष्टुब्भ्यति । त्रिष्टुब्भ्यति । पदान्तस्येत्येव । वेद्मि । लुम्पति ॥ यरोऽनुनासिके प्रत्यये भाषायां नित्यवचनं कर्त्तव्यम् ॥ * ॥ वाङ्मात्रम् * । किंयन्मात्रम् । व्यवस्थितविभाषाविज्ञानात्सिद्धम् ॥

## अचो रहाभ्यां द्वे ॥ ४६ ॥

यर इति वर्त्तते । अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे भवतः । अर्क्कः । मर्क्कः । ब्रह्म्मा । अपह्नुते । अच इति किम् । ह्नुते । ह्लयति ॥

## अनचि च ॥ ४७ ॥

अच इति वर्त्तते । यर इति च । अच उत्तरस्य यरो द्वे भवतोऽनचि परतः । दद्ध्यत्र । मद्ध्वत्र । अच इत्येव । स्मितम् । ध्मातम् । यणो मयो द्वे भवत इति वक्तव्यम् ॥ * ॥ के चिदत्र यण इति पञ्चमी मय इति षष्ठीति व्याचक्षते । तेषामुल्क्का वाल्म्मीक इत्युदाहरणम् । अपरे तु यण इति षष्ठी मय इति पञ्चमीति तेषां दध्य्यत्र मध्व्वत्रेत्युदाहरणम् ॥ शरः खयो द्वे भवत इति वक्तव्यम् ॥ * ॥ अत्रापि यदि शर इति पञ्चमी खय इति षष्ठी स्थाल्स्थ स्थालेत्युदाहरणम् । अथ वा खय उत्तरस्य शरो द्वे भवतः । वत्स्सरः । अप्स्सराः ॥ अवसाने च यरो द्वे भवत इति वक्तव्यम् ॥ * ॥ वाक्क् । वाक् । त्वक्क् । त्वक् । षट्ट् । षट् तत्त् । तत् ॥

## नादिन्याक्रोशे पुत्रस्य ॥ ४८ ॥

आदिनी परत आक्रोशे गम्यमाने पुत्रशब्दस्य न द्वे भवतः अनचि चेति प्राप्तिः प्रतिषिध्यते । पुत्रादिनी त्वमसि पापे । आक्रोश इति किम् । तत्त्वकथने द्विर्वचनं भवत्येव । पुत्रानत्तीति पुत्त्रादिनी शिशुमारी व्याघ्री ॥ तत्परे चेति वक्तव्यम् ॥ * ॥ पुत्रपुत्रादिनी त्वमसि पापे ॥ वा हतजग्धपरइति वक्तव्यम् ॥ * ॥ पुत्त्रहती । पुत्रहती । पुत्त्र

* वाङ्ग्मयमिति क्व चित्पाठः ।

जग्धी । पुत्रजग्धी ॥ चयो द्वितीयाः शरि पैाष्करसादेः ॥ * ॥ चयो द्वितीया भवन्ति शरि परतः पैाष्करसादेराचार्यस्य मतेन । तकारस्य थकारः । वथ्सः । ककारस्य खकारः । अख्षरम् । पकारस्य फकारः । अफ्स्सराः ॥

शरोऽचि ॥ ४९ ॥

नेति वर्त्तते । शरोऽचि परतो न द्वे भवतः । अचो रहाभ्यामिति प्राप्तिः प्रतिषिध्यते । कर्षति । वर्षति । आकर्षः । अक्षदर्शः । अचीति किम् । दर्श्र्यते ॥

त्रिप्रभृतिषु शाकटायनस्य ॥ ५० ॥

त्रिप्रभृतिषु वर्णेषु संयुक्तेषु शाकटायनस्याचार्यस्य मतेन न भवति । इन्द्रः । चन्द्रः । उष्ट्रः । राष्ट्रम् । भ्राष्ट्रम् ॥

सर्वत्र शाकल्यस्य ॥ ५१ ॥

शाकल्याचार्यस्य मतेन सर्वत्र द्विर्वचनं न भवति । अर्कः । मर्कः । ब्रह्मा । अपह्नुते ॥

दीर्घादाचार्याणाम् ॥ ५२ ॥

दीर्घादुत्तरस्याचार्याणां मतेन न द्वित्वं भवति । दात्रम् । पात्रम् । मूत्रम् । सूत्रम् ॥

झलां जश्झशि ॥ ५३ ॥

झलां स्थाने जशादेशो भवति झशि परतः । लब्धा । लब्धुम् । लब्धव्यम् । दोग्धा । दोग्धुम् । दोग्धव्यम् । बोद्धा । बोद्धुम् । बोद्धव्यम् । झशीति किम् । दत्तः । दत्थः । दध्मः ॥

अभ्यासे चर्च्च ॥ ५४ ॥

अभ्यासे वर्त्तमानानां झलां चरादेशो भवति चकाराज्जश्च । चिखनिषति । चिच्छित्सति । टिठकारयिषति । तिष्ठासति । पिफकारयिषति । बुभूषति । जिघत्सति । डुढौकिषते । प्रक्षतिचरां प्रक्षतिचरो

भवन्ति । विर्चीयति । टिटीक्रियते । तिततियति । प्रकृतिजशां प्रकृति जशो भवन्ति । जिजनियति । बुबुधे । ददौ । दिद्ये ॥

खरि च ॥ ५५ ॥

खरि च परतो झलां चरादेशो भवति । झल्ग्रहणं नानुवर्त्तं पूर्वसूत्रे चानुक्रष्टत्वात् । भेत्ता । भेत्तुम् । भेत्तव्यम् । युयुत्सते । आरि प्सते । आलिप्सते ॥

वावसाने ॥ ५६ ॥

झलां चरिति वर्त्तते । अवसाने वर्त्तमानानां झलां वा चरादेशो भवति । वाक् । वाग् । त्वक् । त्वग् श्वलिट् । श्वलिड् । त्रिष्टुप् त्रिष्टुब् ॥

अणोऽप्रगृह्यस्यानुनासिकः ॥ ५७ ॥

अणः अप्रगृह्यसंज्ञस्यावसाने वर्त्तमाने वानुनासिकादेशो भवति दधि २ । मधु २ । कुमारी २ । अण इति किम् । कर्तृ । हर्तृ । अप्रगृह्यस्येति किम् । अग्नी । वायू ॥

अनुस्वारस्य ययि परसवर्णः ॥ ५८ ॥

अनुस्वारस्य ययि परतः परसवर्ण आदेशो भवति । शङ्किता शङ्कितुम् । शङ्कितव्यम् । उञ्छिता । उञ्छितुम् । उञ्छितव्यम् । कुण्डिता । कुण्डितुम् । कुण्डितव्यम् । नन्दिता । नन्दितुम् । नन्दितव्यम् । कम्पिता । कम्पितुम् । कम्पितव्यम् । इह कुर्वन्ति वृषन्ति इत्यत्र णत्वस्या-सिद्धत्वात्पूर्वं नकारस्यानुस्वारः क्रियते । तस्यापि परसवर्णेन पुनर्नकार एव भवति । तस्याप्यसिद्धत्वात्पुनर्णत्वं न भवति । एवमनुस्वारीभूतो णत्वमतिक्रामतीति । ययीति किम् । आक्रंस्यते । आचिक्रंस्यते ॥

वा पदान्तस्य ॥ ५९ ॥

पदान्तस्यानुस्वारस्य ययि परतो वा परसवर्णादेशो भवति । तङ् कथञ्चित्रपक्षण्डयमानन् नभःस्थम्पुरुषो वधीत् । तं कथं चित्रपक्षं डयमानं नभःस्थं पुरुषोऽवधीत् ॥

## तोर्लि ॥ ६० ॥

तवर्गस्य लकारे परतः परसवर्णादेशो भवति । अग्निचिल्लुनाति । सोमसुल्लुनाति । भवाँल्लुनाति । महाँल्लुनाति ॥

## उदः स्थास्तम्भोः पूर्वस्य ॥ ६१ ॥

सवर्ण इति वर्त्तते । उद उत्तरयोः स्था स्तम्भ इत्येतयोः पूर्वसवर्णादेशो भवति । उत्थाता । उत्थातुम् । उत्थातव्यम् । स्तम्भेः खल्वपि । उत्तम्भिता । उत्तम्भितुम् । उत्तम्भितव्यम् । स्थास्तम्भोरिति किम् । उत्स्नातः ॥ उदः पूर्वसवर्णत्वे स्कन्देश्छन्दस्युपसंख्यानम् ॥ * ॥ अग्ने दूरमुत्कन्दः ॥ रोगे चेति वक्तव्यम् ॥ * ॥ उत्कन्दको नाम रोगः । कन्दतेर्वा धात्वन्तरस्यैतद्रूपम् ॥

## झयो होऽन्यतरस्याम् ॥ ६२ ॥

झय उत्तरस्य हकारस्य पूर्वसवर्णादेशो भवति अन्यतरस्याम् । वाग्घसति । वाग् हसति । श्वलिड्ढसति । श्वलिड् हसति । अग्निचिद्धसति । अग्निचिद् हसति । सोमसुद्धसति । सोमसुद् हसति । त्रिष्टुब्भसति । त्रिष्टुब् हसति । झय इति किम् । प्राङ् हसति । भवान्हसति ॥

## शश्छोऽटि ॥ ६३ ॥

झय इति वर्त्तते । अन्यतरस्यामिति च । झय उत्तरस्य शकारस्याटि परतश्छकारादेशो भवति अन्यतरस्याम् । वाक्छेते । वाक् शेते । अग्निचिच्छेते । अग्निचित् शेते । सोमसुच्छेते । सोमसुत् शेते । श्वलिट्छेते । श्वलिट् शेते । त्रिष्टुप्छेते । त्रिष्टुप् शेते ॥ छत्वममीति वक्तव्यम् ॥ * ॥ किं प्रयोजनम् । तच्छ्लोकेन तच्छ्मश्रुणेत्येवमर्थम् ॥

## हलो यमां यमि लोपः ॥ ६४ ॥

अन्यतरस्यामिति वर्त्तते । हल उत्तरेषां यमां यमि परतो लोपो भवति अन्यतरस्याम् । शय्या इत्यत्र द्वौ यकारौ क्रमजस्तृतीयस्तत्र मध्यमस्य वा लोपो भवति । शय्या । शय्य्या । अदितेरपत्यमादित्य

इत्यत्र तकारात्पर एको यकारो यणो मय इति क्रमजो द्वितीयः । तत्र मध्यमस्य वा लोपो भवति । आदित्यो देवता अस्य स्थालीपाकस्येति आदित्यः । आदित्य्य इत्यत्रापि द्वौ यकारौ क्रमजस्तृतीयः । तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति । हल इति किम् । अच्यम् । यमामिति किम् । अग्निः । यमीति किम् । शार्ङ्गम् ॥

झरो झरि सवर्णे ॥ ६५ ॥

हल इति वर्त्तते । हल उत्तरस्य झरो झरि सवर्णे परतो लोपो भवति अन्यतरस्याम् । प्रत्तमवत्तमित्यत्र त्रयस्तकाराः । क्रमजश्चतुर्थः । तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति । मरुत्त इत्यत्र चत्वारस्तकाराः क्रमजः पञ्चमस्तत्र मध्यमस्य मध्यमयोर्मध्यमानां वा लोपो भवति । मरुच्छब्दस्य ह्युपसंख्यानसामर्थ्यादच उपसर्गात्त इति तत्वं भवति । झर इति किम् । शार्ङ्गम् । झरीति किम् । शिण्ड्ढि । अल्लोपस्य च पूर्वत्रासिद्धे न स्थानिवदिति स्थानिवद्भावप्रतिषेधाच्च शकारस्य अकारे लोपः स्यात् । सवर्णइति किम् । तप्ता । तप्तुम् । तप्तव्यम् । सवर्णग्रहणसामर्थ्यादिह संख्यातानुदेशो न भवति । सवर्णमात्रे लोपो विज्ञायते । तेन शिण्ढि पिण्ढि इति ढकारे डकारस्य लोपो भवति ॥

उदात्तादनुदात्तस्य स्वरितः ॥ ६६ ॥

उदात्तादुत्तरस्यानुदात्तस्य स्वरितादेशो भवति । गार्ग्यः । वात्स्यः । पचति । पठति । अस्य स्वरितस्यासिद्धत्वादनुदात्तं पदमेकवर्जमित्येतन्न प्रवर्त्तते । तेनोदात्तस्वरितावुभावपि श्रूयेते ॥

नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ॥ ६७ ॥

उदात्तोदयस्य स्वरितोदयस्य चानुदात्तस्य स्वरितो न भवति । पूर्वेण प्राप्तः प्रतिषिध्यते । अगार्ग्यकाश्यपगालवानां मतेन । उदात्त उदयो यस्मात्स उदात्तोदयः । उदात्तपर इत्यर्थः । एवं स्वरितोदयः । उदात्तोदयस्तावत् । गार्ग्यस्तत्र । वात्स्यस्तत्र । तत्रशब्द आद्युदात्तः । तस्मिन्नुदात्ते परतो गार्ग्यशब्दः स्वरितो न भवति । स्वरितोदयः । गार्ग्यः

क्व । वास्यः क्व । क्वशब्दः स्वरितः तस्मिन्परतो ऽनुदात्तः स्वरितो न भवति । अगार्ग्यकाश्यपगालवानामिति किम् । गार्ग्यस्तत्र । गार्ग्यः क्व । तेषां हि मतेन स्वरितो भवत्येव । उदात्तपरस्येति वक्तव्यउदयग्रहणं मङ्गलार्थम् । अनेकाचार्यसंकीर्तनं पूजार्थम् ॥

## अ अ इति ॥ ६८ ॥

एकोऽत्र विवृतो ऽपरः संवृतस्तत्र विवृतस्य संवृतः क्रियते । अकारो विवृतः संवृतो भवति । वृक्षः । प्लक्षः । इह शास्त्रे कार्यार्थमकारो विवृतः प्रतिज्ञातस्तस्य तथाभूतस्यैव प्रयोगो मा भूदिति संवृतप्रत्यापत्तिरियं क्रियते ॥ दीर्घप्लुतयोश्चानेन विवृतेनाकारेण ग्रहणं नेष्यते ॥ तेन तयोः संवृतो न भवति ॥ संवृतेन च सर्वगुणस्य मात्रिकस्य ग्रहणमिष्यते ॥ तेन सर्वगुणः प्रत्यापद्यते ॥

इष्ट्युपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था ।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम ॥
व्याकरणस्य शरीरं परिनिष्ठितशास्त्रकार्यमेतावत् ।
शिष्टः परिकरबन्धः क्रियते ऽस्य ग्रन्थकारेण ॥

इति श्रीवामनकृतकाशिकावृत्तावष्टमाध्यायस्य तुरीयः पादः ॥ समाप्तश्चायमध्यायो ग्रन्थश्च ॥ * * * *

---

## ॥ काशिकाया उपसंहारः ॥

इयं काशिकाख्या पाणिनीयसूत्राणां वृत्तिः परमेश्वरप्रसादेन समाप्तमुद्रणा ऽभूत् । प्रागहमस्या मुद्रणे ऽनासादितशुद्धपुस्तको ऽपि प्रभुवरश्रीग्रिफिथसाहिबादेशेन विदेशीयमहाशयप्रोत्साहनेन च खण्डितैरशुद्धैश्च द्वित्रैःपुस्तकैः संकलितसमग्रप्रबन्धः कथमिदं कार्यं समाप्स्येतेति साशङ्क एव प्रावर्त्तिषि । अत्रान्तरे मिलितेन गुर्जरप्रान्तस्थसकलपाठशालाध्यक्षपदवीमलंकुर्वता श्रीमता ब्यूलरसाहिबमहाशयेन

प्रयासेनापि सूचाक्षरैरेव रूपाणि साधयितुं यतेत तथाप्यशक्नुवन्नसाध्वे-तदित्यभिदधीत न तु शास्त्रं कल्पयेदन्यथयेद्वा । एवं संमाननो-त्सञ्जनेतिसूत्रे संमाननोदाहरणं नयते चार्वी लोकायते इत्यप्यत्र प्रमाणं चार्वी बुद्धः तत्संबन्धादाचार्योऽपि चार्वी स लोकायते शास्त्रे पदार्थान्नयते उपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयति युक्तिभिः स्थाप्यमानाः संमानिताः पूजिता भवन्ति इति हि लिखितमनेन । आस्तिको हि साङ्ख्ये योगे ऽन्यस्मिन्वा ऽऽस्तिकशास्त्रे शिष्याणां व्युत्पादनेन संमाननमभिप्रेयान्न तु नितरां विरुद्धे लोकायते व्युत्पा-दनेन । आसंश्च तस्मिन्त्समये भूयांसो जैनाः पाणिनीयतन्त्रे नि-ष्णाता न्यासकारप्रभृतयः । न्यासकारस्य जैनत्वं हि ॥

जयन्ति ते सदा सन्तः सर्वोपायैरुपार्जितम् ।
गुणानां सुमहद् वृन्दं दोषाणां च विवर्जनम् ॥
अन्यतः सारमादाय कृतैषा काशिका यथा ।
वृत्तिस्तस्या यथाशक्ति क्रियते पञ्जिका तथा ॥

इति ग्रन्थारम्भस्थपद्यद्वयेन इति श्रीबोधिसत्त्वदेशीयाचा-र्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां प्रथमा-ध्यायः इत्युपसंहारेण च व्यक्तमेव । मन्ये चेदमेव निरीक्ष्य नास्ति-ककृतनिबन्धपठनपाठनाभ्यामास्तिकजनानां दुरितमाशङ्कमानैरार्षप्र-माणैकबद्धादरैरास्तिकशिरोमणिभिर्भट्टोजिदीक्षितहरिदीक्षितनागेशभ-ट्टप्रभृतिभिः पण्डितवरैरपसार्याप्रामाणिकानि वचनानि तादृशा उत्तमतमा निबन्धा व्यधीयन्तावर्यन्त चासाधवः क्वाचित्काः प्रयोगास्तथात्वेनैव यत्र कृतादराणामर्वाचां शास्त्ररसिकानां स्मृति-पथादपि दूरापेता बभूवुस्तात्कालिकाः कतिपये ऽप्रामाणिकाः प्रब-

न्याः । अस्त्वेतत्तथापि गुणा अपि बहवोऽस्यां भूयांसः सन्ति सर्वेषु
पूर्वपूर्वसूचनपदसमन्वयप्रदर्शनेन सरलशब्दनिबन्धेन बहुतरोदा
याप्रत्युदाहरणदानेन च सूत्रार्थप्रस्फुटीकरणमुखेन विषयविवेचनप्र
यश्च येषु भृशं तुष्यन्तो रसिका विपश्चितोऽतिप्राचीनां व्युत्पत्ति
मानां महान्तमुपयोगमादधानां वृत्तिमिमां पठनपाठनाभ्यासयो
कृत्य सफलयेयुर्मामकीनमिमं परिश्रममिति मुहुरर्थये परमेश्वरमिति

काशीस्थराजकीयप्रधानपाठशालायां धर्मशास्त्राध्या

बालशा

॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

॥ एकोनविंशस्तबकावशेषः ॥

अभिमुखमवलोक्य कापि भृङ्गं
करकमलेन सलीलमुद्धुनाना ।
सललितमवगुण्ठनाञ्चलेन
व्यधित वधूरधरोष्ठसंपिधानम् ॥ ८० ॥

अधरोष्ठसंपिधानमिति कृष्णकर्तृकस्याधरपानाभियोगः ॥ ८

काचिन्नोपससार नान्तरमुदं व्यानञ्ज [१]कञ्जेक्षणा
नोचे किंचन किंतु कान्तवदनं दृष्ट्वा शिरो धुन्वती ।
लीलाकूणितकोणशोणनयनं हेलाभ्रमद्भ्रूलतं
सीमन्तोपरि बद्धपाणिपुटकं सासूयमेवानमत् ॥ ८१ ॥

शिरो धुन्वतीति, भद्रेण मया त्वं ज्ञातोऽसीति भावः । कू
कोणेति, तादृशकष्टदातरि त्वयि दृष्टिमाधातुमहं लज्जे इति भ
शोणेति, तदपि मां पुनरपि दुःखयितुमधुना किमिति संनिधत्से

१ संधिः प्राग्वत् । कमिति मान्तमव्ययं जलार्थे ।

रोषः । हेलेति, तेन किं मम यद्दहम्· अतः परं विज्ञा·अभवमित्यवज्ञा । सासूयमेवानमदिति,अतः परं त्वत्समीपमपि मया त्यक्तमेवेति भावः ॥ ८१॥

काचित् कृष्णमुखं सकृत् कुटिलितापाङ्गेन हेलालसं
दृष्ट्वा वामभुजालतां सहचरीस्कन्धान्तिके बिभ्रती ।
आमन्दस्मितमुत्सवालसलसद्भ्रूभङ्गमल्पाक्षरं
जल्पन्ती प्रतिपाद्य शून्यमपि तद्बह्वर्थमेवामनत् ॥ ८२ ॥

स्कन्धान्तिके ननु स्कन्धोपरीति, कृष्णेन तर्कयिष्यमाणस्वाभियोग-शङ्कयेति भावः । कुटिलितापाङ्गेनेत्यमर्षः । हेलालसमिति गर्वः । मन्द-स्मितमिति हर्षः । उत्सवेत्यौत्सुक्यम् । अल्पाक्षरं जल्पन्तीति, सखि·अ-खण्डश्रीखण्डालम्बिनी नीलोत्पलमाला स्पृहणीया भवादृशीभिरिति । बह्वर्थं वाच्यव्यङ्ग्यवस्तुबाहुल्ययुक्तम् । आमनत्·अभ्यस्तवती ॥ ८२ ॥

स्वीयोत्तरीयशकलेन सलीलमन्या
पाण्यम्बुजेन कलकङ्कणझङ्कृतेन ।
प्राणेश्वरं प्रणयतः परिवीजयन्ती
स्रस्तेऽपि तत्र करधूननमेव चक्रे ॥
भ्रान्तं मुहुर्वनरुहोदरखेदरेणा
हा हन्त पादयुगलेन कथं ह्यनेन ।
इत्येकिका स्वकरपङ्कजकोरकाभ्यां
संवाहनं व्यधित पादयुगस्य शौरेः ॥ ८३ ॥

दासीनां चेष्टितमाह द्वाभ्यां स्वीयेति, तत्र· उत्तरीयशकले स्रस्ते सतीति, भाववैवश्यादिति भावः ॥ ८३ ॥

एवं सहजसमुल्लसदलावलावण्यसुधासरसीसरसीभवदवयवाना-मपि तत्कालोदयितदयितविलोकनकनदेवंविधविविधविशिष्टप्रभावभा-वशवलवलमानमाननीयमाधुरीधुरीणतया तदा यदविरामरामणीयक-मासामासामास ॥ ८४ ॥

सवेचमाणं। केचिदनुभावरूपाः स्तम्भकम्पादयः केचिद्वाचकमनो-मोहनार्थाः कर्णकण्डूयनगात्रमोटनादयः केचित् संभोगविशेषस्फुरणसूचनायो नीलाकमलाघ्राणकण्ठोपरिरम्भादयः सर्व एव भावाः सान्द्रिकनाग्रतयमया युङ्क्त्युपसंहरति· एवमिति । विशिष्टाः प्रभावाः कृष्णवशीकाररूपा येषां, यद्वा विशिष्टां प्रभाम् अवन्तीति तथा तेषां भावानां शबलेन वैचित्र्या चलमाना च माननीया च या माधुरी तस्या धुरीणतया । चासामास-वास्ते स्म,"दयायामश्चे"त्याम् ॥ ८४ ॥

तदनुवदितुं का वाणी वाणीयसी मन्दधिषणो धिषणो वा को वराकः ॥ ८५ ॥

वाणी सरस्वती वा का, अणीयसी, अतितुच्छेत्यर्थः । धिषणो बृहस्पतिः ॥ ८५ ॥

ततश्च ततश्चरमरमणीयतापरिपाकेन केनचिन्मधुरिम्णा व्रज-राजतनयो राजतनयोपपन्नेन मधुरिम्णा परस्परविमर्दशाभ्यां हिम-किरणकिरणकन्दलीमृदुलमेदुरदुरवसेयसिकतानिचयाभ्यां लोचनलोभ-नीयमुपर्युपरि परिमललालसालिकुलकोलाहलकाहलकान्तध्वनि-ध्वनितं कुवलयवलयहल्लकहल्लीशकगिरावद्वेण दक्षिणमरुता चारुता-चारं तपनतनयापुलिनमासाद्य पुरुतरशोभावलिभावलिर्वलितो यामि-नीनाथ इव ॥ ८६ ॥

व्रजराजतनयस्तपनतनयापुलिनमासाद्य व्रजरमणीमणीभिः सह विजह्रे·इत्यन्वयः । ततो विस्तृतः । राजतस्य रजतविकारस्येव नये नीतिः स्वाभाव्यं तेनोपपन्नेन । हिमकिरणस्य चन्द्रस्य किरणकन्दलं च मृदुलः कोमलो मेदुरो निविडो दुरवसेयः· कणिकाबाहुल्येन दुःशकनिश्चयो यः सिकतानिचयस्ताभ्याम् । परिमललालसाभिलंसतीति तस्या लिकुलस्य कोलाहल एव काहलस्य वाद्यभेदस्य कान्तो ध्वनिस्तेन ध्वनितम् । हल्लीशकं मण्डलनृत्यम् । चारुतामाचरतीति तथा तत् । भावलिवलितो नक्षत्रश्रेण्या विराजितः ॥ ८६ ॥

प्रमदमदनमोदप्रसरसरसमानसमानसर्वस्वाभिः स्वाभिः शक्तिभिरिवानन्दमयीभिराभिराभिरामाभ्यावधिभूताभिर्व्रजरमणीमणीभिर्विरुरुचे ॥ ८७ ॥

प्रकृष्टो नवयौवनोत्थो मदश्च मदनश्च मोदप्रसरश्च तैः सरसं मानसं यासां ताश्च मान एव सर्वस्वं यासां ताश्च तथा ताभिः ॥ ८७ ॥

स्वकामितरमितरहस्यलाभासन्नतया श्रुतयो लब्धतदनुरूपरूपसंपद्विशिष्टतनवो नवोदितभाग्यवशाद्यया मनोरथसिद्धिमवापुस्तथा नित्यसिद्धा अपि तदा तदा तदालोकाह्लादविधुताधिं स्वमहिमानमजानत्य इव स्वात्मानमभिमन्यन्ते स्म ॥ ८८ ।

नित्यसिद्धाः श्रीराधाद्याः, तन्नित्यसङ्गित्वमपि तासां कदाचित् स्वानुभवासाधितमस्तीति भावः ॥ ८८ ॥

ततश्च तस्मिन्नेव पुलिनेऽलिनेतृपरिशीलितविविधोत्पलपलत्पलपलाशपेशलसमीरसमीरणशीतले विलसत्कामहेला महेलावितत्तयो विततयोयुज्यमानकुचकुङ्कुमारुणसुगन्धिभिरुत्तरीयैरुपर्युपरि परिपातितैर्मृदुहसितसितदशनमरीचिवीचिविकाशपुरःसरमिहोपविश्यतामिति त्रिभुवनकमनीयासनमासनमाकल्पयामासुः ॥ ८९ ॥

अलय एव नेतारो नायकास्तैः परिशीलितानां विविधोत्पलानां पलत्पलानि चलद्दंशानि पलाशानि पत्राणि यतस्तथाभूतो यः पेशलः समीरस्तस्य सम्यगीरणेन शीतले । त्रिभुवनकमनीयम्‌· आसनं दीप्तिर्यस्य तत् ॥ ८९ ॥

ततश्च ।

तत्र प्रीत्योपविश्य व्यजयत स यथा काममुद्दामधामा
योगीन्द्राणां न तद्वद्विमलतममनःपुण्डरीकासनेऽपि ।
नापि त्रैलोक्यलक्ष्मीकृतललितमहारत्नसिंहासनान्तर्नाप्येवाधारशक्तिप्रभृतिभृतमहायोगपीठोदरेऽपि ॥ ९० ॥

आधारशक्तिप्रभृतिभिः शेषकमठाद्यैर्भृतं भुवनम् ॥ ९० ॥

किंच ।

तस्मिन् कान्ताकदम्बस्तनकलशलसत्कुङ्कुमामोदमुग्ध-
स्निग्धे दुग्धेन्दुकुन्दद्युतिपुलिनगते चारुवेलावने यः ।
आसीनः पीनवक्षास्त्रिभुवनरमणीरत्नसंमोहलीला-
राज्ये त्रैलोक्यलक्ष्म्या गमित इव स मे यौवराज्याभिषेकम् ॥ ९१ ॥

गमितः प्रापितः ॥ ९१ ॥

अथ तथोपविष्टवति भगवति भगणपरिवृते चन्द्रमसीव मसीवद्सितपयसो यमुनायाः पुलिनपरिसरे परितः परिनम्युषीषु रमणीमणीषु काश्चन सरसचातुरीतुरीयदशाकुशलाः सुरततरमृदुलमेदुरदुरवगाहमनोरागखेदस्वेदसलिलकणमञ्जुलेन करकमलदलेन कृतकरचरणसंवाहनाः सादरदरमदरज्यमानमानसं मृदुमधुरेण वचसा च साकूतेन हृद्गतं किमपि पिपृच्छिषवः प्रथमं प्रथमञ्जसा प्रासङ्गिकत्वेन प्रश्नोत्तरसमादिवचनरचनाविशेषं निर्मिमते स्म ॥ ९२ ॥

मनोरागहेतुको यः खेदस्तत एव स्वेदसलिलम् । सादरदरं सगौरवं सभयं च, मदरमदेन· अनल्पमत्ततया रज्यमानमाक्रम्यमाणं मानसमेव यत्र तद्यथा स्यादेवम् । मृदुमधुरेणेति, अवहित्थया कृत्रिमहर्षप्रकाशनम् ॥ ९२ ॥

तत्र प्रश्नोत्तरसमं यथा, प्रश्नः सीमन्तिनीनाम्-उत्तरं कृष्णस्येति प्रथमः क्रमः ।

कोऽमलधीः कोमलधीः का-महिता हन्त कामहिता ।
कोऽपचयः कोपचयो मधुरा-का पश्य मधुराका ॥ ९३ ॥

अमलधीः कः, महिता श्रेष्ठा का, अपचयः कः, मधुरा माधुर्यवती का, इति तासां प्रश्नचतुष्टये, तथैव प्रत्युक्तवति श्रीकृष्णे, इह

भवानेव कठोरधीः, वयं तु कामे हिता भवाम एव, कोपसमूहेऽपि न पारयेऽहं चलितुमित्युक्तिमात्र एव भवता कृतः, वसन्तराकातोऽप्यतिमधुरा अद्यतनी शारदी राका, दुःखदानेन विरसीकृतैवेति, स्ववचनेनैव बद्धो भवानिति तासां कटाक्षकूणनं ज्ञेयम् ॥ ९३ ॥

किंच ।

केवलभाजः केवलभाजः के सन्त एव के सन्तः ।
कासाररसविलासा विलसति कासाररसविलासैव ॥ ९४ ॥

बलभाजो बलवन्तः के इति प्रश्ने, के बलभाजः के बलं ये भजन्ति ते इत्युत्तरे, तथाभूता गोप्य एवेत्यायातम् । सन्तः पण्डिताः के इति प्रश्ने, के सुखे सन्तो वर्तमानाः केनाप्युद्वेजयितुमशक्या इत्युत्तरे, गोप्यो वयं मुग्धास्त्वयोद्वेजिता भवेमैवेत्यपण्डिता इति स्वाभिमतम् । सारे रसे विलासो यस्याः सा केति प्रश्ने, कासारस्य तडागस्य रसे जले विलासो यस्याः सा पद्मिनीत्युत्तरे, गोप्यः पद्मिनीजातय एवेति स्वेषामेव पूर्ववज्जय इति ॥ ९४ ॥

एवं कृष्णस्य प्रश्ने उत्तरं तासां यथा ।

क उपास्यो यो रसवान् कः सरसो यः पदं प्रेम्णः ।
किं प्रेम यद्वियोगं कः स वियोगो न येन जीवन्ति ॥ ९५ ॥

पदम् आश्रयः । न येन जीवन्तीत्यस्माद्वियोगेऽपि तव दुःखलेशाभावलिङ्गेन प्रेमशून्यत्वप्रमत्त्या त्वत्प्रश्नेनैव तवारसवत्त्वं स्फुटीकृतमिति तासां तस्मिन् पूर्ववदत्तिनिकोचः ॥ ९५ ॥

किं दुःखं प्रियविरहः किं प्रियमतिदुर्लभं यदिह ।
किं दुर्लभं प्रकारैरखिलैरपि लभ्यते नहि यत् ॥ ९६ ॥

अतिदुर्लभमिति, स्पृहणीयमथ चातिदुर्लभमित्यर्थः, लब्धुमशक्यमित्युक्तौ स्पृहाया अन्तर्भावावगमात्, ततश्च द्वीपान्तरस्थतृणशर्करादि-

आधारशक्तिप्रभृतिभिः शेषकमठाद्यैर्धृतं ध्रुवम् ॥ ९० ॥

किञ्च ।

तस्मिन् कान्ताकदम्बस्तनकलशलसत्कुङ्कुमामोदमुग्ध-
स्निग्धे दुग्धेन्दुकुन्दद्युतिपुलिनगते चारुवेलावने सः ।
आसीनः पीनवक्षास्त्रिभुवनरमणीरञ्जसंमोहलीला-
राज्ये त्रैलोक्यलक्ष्म्या गमित इव बभौ यौवराज्याभिषेकम् ॥ ९१ ॥

गमितः प्रापितः ॥ ९१ ॥

अथ तथोपविष्टवति भगवति भगणपरिवृते चन्द्रमसीव मसी बद्धसितपयसो यमुनायाः पुलिनपरिसरे परितः परितस्थुषीषु रमणी मणीषु काश्चन सरसचातुर्गीतुरीयदशाकुलाः सुरसतरमृदुलमेदुरदुर वगाहमनोरागखेदस्वेदसलिलकणमञ्जुलेन करकमलदलेन कृतकरच रणसंवाहनाः सादरदरमदरमदरज्यमानमानसं मृदुमधुरेण वचसा च साकूतेन हृद्गतं किमपि पिपृच्छिषवः प्रथमं प्रथमञ्जसा प्रासङ्गिकत्वे प्रश्नोत्तरसमादिवचनरचनाविशेषं निर्मिमते स्म ॥ ९२ ॥

मनोरागहेतुको यः खेदस्तत एव स्वेदसलिलम् । सादरदरं स गौरवं सभयं च, अदरमदेन· अनल्पमत्ततया रज्यमानमाक्रम्यमाणं मान समेव यत्र तद्यथा स्यात्तथा । मृदुमधुरेणेति, अवहित्थया रुचिमदर्थ प्रकाशनम् ॥ ९२ ॥

तत्र प्रश्नोत्तरसमं यथा,प्रश्नः सीमन्तिनीनाम्·उत्तरं कृष्णस्ये

प्रथमः क्रमः ।

कोऽमलधीः कोमलधीः का·महिता हन्त कामहिता ।
कोऽपचयः कोपचयो मधुरा·का पश्य मधुराका ॥ ९३ ॥

अमलधीः कः, महिता श्रेष्ठा का, अपचयः कः, मधुरा माधुर्य वती का, इति तासां प्रश्नचतुष्टये, तथैव प्रत्युक्तवति श्रीकृष्णे, इह

भवानेव कठोरधीः, वयं तु कामे हिता भवाम एव, कोपसमूहोऽपि न पारयेऽहं चलितुमित्युक्तिमात्र एव भवता कृतः, वसन्तराकातोऽप्यतिमधुरा अद्यतनी शारदी राका, दुःखदानेन विरमीकृतैवेति, स्ववचनेनैव बद्धो भवानिति तासां कटाक्षकूणनं ज्ञेयम् ॥ ९३ ॥

किंच ।

केवलभाजः केवलभाजः के सन्त एव के सन्तः ।
कासाररसविलासा विलसति कासाररसविलासैव ॥ ९४ ॥

बलभाजो बलवन्तः के इति प्रश्ने, के बलभाजः के बलं ये भजन्ति ते इत्युत्तरे, तथाभूता गोप्य एवेत्यायातम् । सन्तः पण्डिताः के इति प्रश्ने, के सुखे सन्तो वर्तमानाः केनाप्युद्वेजयितुमशक्या इत्युत्तरे, गोप्यो वयं मुग्धास्त्वयोद्वेजिता भवेमैवेत्यपण्डिता इति स्वाभिमतम् । सारे रसे विलासो यस्याः सा केति प्रश्ने, कासारस्य तडागस्य रसे जले विलासो यस्याः सा पद्मिनीत्युत्तरे, गोप्यः पद्मिनीजातय एवेति स्वेषामेव पूर्ववज्जय इति ॥ ९४ ॥

एवं कृष्णस्य प्रश्ने उत्तरं तासां यथा ।

क उपास्यो यो रसवान् कः सरसो यः पदं प्रेम्णः ।
किं प्रेम यद्वियोगं कः स वियोगो न येन जीवन्ति ॥ ९५ ॥

पदम् आश्रयः । न येन जीवन्तीत्यस्मद्वियोगेऽपि तव दुःखलेशाभावलिङ्गेन प्रेमशून्यत्वप्रमत्त्या त्वत्प्रश्नेनैव तवारसवत्त्वं स्फुटीकृतमिति तासां तस्मिन् पूर्ववदतिनिक्षोचः ॥ ९५ ॥

किं दुःखं प्रियविरहः किं प्रियमतिदुर्लभं यदिह ।
किं दुर्लभं प्रकारैरखिलैरपि लभ्यते नहि यत् ॥ ९६ ॥

अतिदुर्लभमिति, स्पृहणीयमथ चातिदुर्लभमित्यर्थः, लब्धुमशक्यमित्युक्तौ स्पृहाया अन्तर्भावावगमात्, ततश्च द्वीपान्तरस्थतृणशर्करादि-

वस्तुनि नातिव्याप्तिः, ततश्च सर्वप्रकारैर्दुर्लभस्य कृष्णस्य वियोगेनैव ता दुःखिन्य एव गोप्य इति भावः ॥ ९६ ॥

एवमितरेतरतारतम्यभावेन शब्दार्थवैचित्र्येण प्रश्नोत्तरचातुरीतुरी-निःश्रेण्या विलसत् कपटं पटं वर्णमयमिव रचयित्वा पुनः प्रकृतमेव मनोगतमगतमदा मनसीषत्कुपिता अपि ता अतितरतरं वहिरवहि-तमनसो हि तमनसो भञ्जकमूचुः ॥ ९७ ॥

इतरेतरं परस्परं तारतम्येन या प्रश्नोत्तरचातुरी सैव तुरी माकु इति ख्याता । प्रथमश्लोके कृष्णस्य दोषाः स्वेषां गुणाः, द्वितीये स्वेषां गुणा एव तृतीये कृष्णस्यानुपास्यत्वप्रसक्त्या दोषाधिक्यमेव, चतुर्थे तु तस्य दुःखदत्वेन तदतीव व्यञ्जितमिति तारतम्यं तेन. तत्र प्रथमयोः शब्दवैचित्र्यं चरमयोरर्थवैचित्र्यं तेन, विलसत् प्रकाशमानमेव यत् कपटं तदेव वर्णमयं पटं वस्त्रं रचयित्वा । अवहितमनसः सावधानाः । हि· एवार्थे । तं श्रीकृष्णम्, अनसः शकटस्य भञ्जकम् ॥ ९७ ॥

आकर्णय नो नयनोत्सव सबहुवितर्कं किमपि ।

केचिद्व्रजन्ति भजतोऽभजतोऽपि हन्त
केचिद्व्रजन्ति भजतोऽभजतोऽपि नैव ।
केचिद्व्रजन्ति तदिदं वद नो विविच्य
पीताम्बर त्वमखिलस्य विदां वरोऽसि ॥ ९८ ॥

केचिद्व्रजतो भजन्ति, न त्वभजत इत्यर्थः । तदन्ये केचित्· अभज-तोऽपि भजन्ति, किं पुनर्भजत इत्यर्थः । तदन्ये केचित् भजतोऽपि नैव भजन्ति, अभजतोऽपि नैव । इति त्रिविधा जनास्ते के· इति प्रश्नः ॥ ९८ ॥

अथ रमणीमणीसभासभाजनभाजनचमत्कारकार एष व्रजपुर-पुरंदरनन्दनस्तामिमं प्रियतमायतमानपिशुनं प्रश्नमात्मनिष्ठप्रणयासूया-सूयातयामं विदित्वा मधुमधुरतरं तरङ्गिणा नयनकमलाञ्चलेन निरी-क्षमाणो मृदुहसितामृतमृतसंजीवनरसविशेषेण सरसयन्नुवाच ॥ ९९ ॥

भा कान्तिस्तस्या जननेन चमत्कारकारः । प्रियतमानाम्· आयतस्य मानस्य पिशुनं सूचकम् । आत्मनिष्ठेन प्रणयेन· असूयायाः सूरुद्भवस्तया यातयामं विरसं, कठोरमित्यर्थः ॥ ९९ ॥

प्रियाः प्रतिभजन्ति ये भजत एव तेषामहो
ऋणस्य परिशोधनप्रतिममेव तत् केवलम् ।
भजन्त्यभजतोऽपि ये सहजजन्तुमाचस्निहो
भवन्ति पितरःविव स्वतनयेषु ते वत्सलाः ॥ १०० ॥

भजतो जनान् । तत् प्रतिभजनम् ॥ १०० ॥

एवं प्रश्नद्वयस्योत्तरं दत्त्वा तृतीयप्रश्नस्य समुचितमुत्तरं मुत्तरङ्गभङ्ग्याह ।

भजन्ति भजतो न ये त्वभजतः कथं ते भज-
न्त्वहो बत भवन्ति ते भुवि चतुर्विधाः सुभ्रुवः ।
परात्मनि लसद्धियो निजसुखेन पूर्णान्तराः
कृतोपकृतिविद्रुहः सुकठिनाः कृताघ्ना अपि ॥ १०१ ॥

परात्मनीत्यात्मारामाः । निजसुखेनेत्याप्तकामाः । कृता·उपकृतिर्येन तस्मै द्रुह्यन्ति न भजन्ति, प्रत्युत पीडयन्तीत्यर्थः, अत एव सुकठिना इति, अस्यैव विशेषणं कृतघ्नाः, कृतमुपकारं घ्नन्ति, न मन्यन्त इत्यर्थः ॥ १०१ ॥

एवमुत्तमत्वेन द्वौ· अधमत्वेन द्वावित्युक्ते सस्मितकूणितापाङ्गपाङ्गव्यचटुलमितरेतरमालोकयन्तीरालोक्य दयिता दयिताचरं पुनरुवाच ॥ १०२ ॥

एवमुत्तमत्वेनेति । चतुर्ष्वमीषु द्विश एव· उत्तमत्वाधमत्वाभ्यां यथापूर्वमाधिक्यं बोध्यम् । सस्मितं कूणितो योऽपाङ्गस्तस्य पाङ्गव्येन पङ्गुतया श्रीकृष्णमुखाभिमुखगमनाशक्तिमय्या चटुलं चञ्चलं यथा स्यादेवं परस्परमेवालोकयन्तीर्दयिताः प्रेयसीरालोक्य । अयं भावः । अस्य कृत·

प्रत्यापादनार्थमस्माभिर्गूढमन्त्रणया पृष्टोऽयं मत्तोऽप्याधिकं स्वान्तर्धानेना-स्मद्वृत्ताचरणाद् भवज्ज्ञानशङ्काहितं त्वमुत्रैवाङ्गीकुरुते स्म, यतः स्व-कथेन दुर्बोधकं स्मितं, तत्र स्वाङ्गनिज्ञानमिव चेष्टे किमिति मन्युः कृत इति लज्जया· अपाकृत्य कूपानम्, यतोऽस्मिन् संपति प्रमादं प्रवो-धितः, तमज्ञातवतीनां लज्जयैव· अपाकृत्य तस्मिन् पद्भुना ॥ १०२ ॥

किमहो महोन्नतधियः सुहृदा हृदा परस्परं परं तर्कमीहध्वे प्रश्नत्रयेणापि वो नाहमपराध्यामि ।

तथाहि ।

भवतीर्न भजामि यद्भजन्ती-
रभजन्तीर्भवतीश्च नो भजामि ।
अत एव गतं भवद्विधाना-
मफलं प्रश्नयुगं पमूहनेषाः ॥ १०३ ॥

प्रश्नयुगं गतं, मयि न फलितमित्यर्थः, तेन नाहं स्वार्थपरो नापि लौकिककृपालुरिति व्यञ्जितम् ॥ १०३ ॥

तृतीयप्रश्नेऽपि यच्चातुर्विध्यं तथाप्यहमतिचत्वा एव । यतो-ऽहं नात्मारामो यद्भवतीनां करुणालापेनाकृष्टोऽस्मि, नापि निजसु-खेनैव पूर्णः पूर्वोक्तयुक्तेरेव, नापि कृतोपकारध्रुक् कठिनस्तेनैव हेतुना, नापि कृतघ्नः· तस्यैव हेतोः, तर्हि कथमेवं भजन्तीरस्मान् न भजसी-ति चेदुच्यते तदाकर्णयन्तु निर्णयन्तु निर्भरमस्मदुदितम् ॥ १०४ ॥

अतिचत्वाः, चतुर एवैतानतिक्रम्य वर्तमान इत्यर्थः । पूर्वोक्तयुक्ते-रिति, करुणालापेनाकृष्टोऽस्मीत्यतः । एवं सर्वत्र । अस्मदुदितं मद्वा-क्यम् । निर्णयन्तु निःशेषेण नयन्तु भवत्यः ॥ १०४ ॥

अहमनुभजतो भजामि नो यत्
तदिह तदुत्कलिकाभिवृद्धिहेतोः ।

उपनतधनहानितो यथार्तं
भजति जनस्तदनुस्मृतौ निमग्नः ॥ १०५ ॥

अनुभजतोऽनुवृत्त्या भजतो जनान् ॥ १०५ ॥

इत्युक्तेऽपि विम्लानकमला कमलाकरलक्ष्मीपरिषदिव दिवस-नाथसमक्षं विप्रसन्नवदना वदनालक्षितहृदयमालिन्या वनमालिन्या-बद्धनयननलिनदामा यद्दि समजनि वधूराजी राजीवनयनोऽपि स तदा पुनरूचे ॥ १०६ ॥

दिवसनाथसमक्षमिति, नहि दिवसनाथः कमलानि म्लापयितुम-र्हतीति भावः ॥ १०६ ॥

इदं यदुदितं तत् सामान्याश्रयं, मान्याश्रयं तु नैतत् ।
यतः ।

न परममहतः परास्ति वृद्धि-
र्न भगवतः परतः परात् परोऽस्ति ।
नहि भवति रतेरितोऽतिभूमि-
श्चरमदशा न दशान्तरं प्रयाति ॥ १०७ ॥

मान्याः आदरणीयाः श्रेष्ठाः, भवद्विधा इत्यर्थः । तदाश्रयं तु न । अतिभूमिरुत्कर्षः ॥ १०७ ॥

किंच ।

अयमवधिमियाय वोऽनुरागः
क्रमपरमेतु मृगेक्षणाः प्रकर्षम् ।
उपरि परिचितः सितोपलाया
भवति नहीक्षुरसस्य कोऽपि पाकः ॥ १०८ ॥

अवधिं महाभावपर्यन्तम् ॥ १०८ ॥

किंच ।

स्थितमनुभजतेव वः समीपे
नयनपथान्तरितेन मादृशेन ।
अथ किमपरथा यियासवो वः
परमसवो न निवारिता बभूवुः ॥ १०९ ॥

नयनपथान्तरितेन युष्मच्चक्षुष्पथमात्रव्यवहितेन, युष्मांस्तु स्पष्टम-वलोकयतेव सतेत्यर्थः । एतन्मद्वाक्यं स्वानुभवेनापि प्रमाणीकर्तुमर्हथे-त्याह- अथ किमिति ॥ १०९ ॥

तदपि यदतिसाहसं मयैतत्
कृतमिह तत् सुदृशो मम क्षमध्वम् ।
क्वचन च समये ह्यसेव्यमानं
न घनममूयति विद्युतां समाजः ॥ ११० ॥

न घनं न मेघम्, परम्परितश्लेषेण न निबिडं,नातिशयमित्यर्थः, अतः संप्रत्यपि प्रसीदतेति भावः ॥ ११० ॥

किंच ।

दयितरचितमुच्चैः प्रातिकूल्यं च काले
जनयति दयितानामानुकूल्यप्रकारम् ।
अतिमुदमभितापो मर्ममर्मप्रसक्तां
रचयति नलिनीनां घर्मजो घर्मभासः ॥ १११ ॥

घर्मभासः सूर्यस्य घर्मजोऽभितापो मर्मणि मर्मणि प्रसक्तामतिमुदं रचयति ॥ १११ ॥

किंतु ।

अयि मयि भवतीभिर्यः क्षणेनानुरागः
समतनि न मयासौ हन्त देवाद्युतापि ।

प्रतिविधिमुपनेतुं शक्यते तेन यूयं
स्वयमुपकृतभावं स्वैर्गुणैः संप्रयात ॥ ११२ ॥

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे रासलीलायां प्रादुर्भावभावुको नामैकोनविंशः स्तवकः ॥ १९ ॥ :: ::

उक्तनतगं सर्वमिदं वाक्चातुर्यमात्रं मया स्वपराजयापह्नवायैवोपनीतम्, परमार्थं तु शृणुतेति भगवानिदमाह किं त्विति, । असौ॰ अनुरागः प्रतिविधिम्॰ उपनेतुं प्रापयितुं न शक्यते, तत्प्रतिरूपो मम नास्त्येवानुराग इति भावः । उपकृतभावम्॰ उपकृतत्वम्, उपकारमित्यर्थः । संप्रयात प्राप्नुत, अनेनोपकृतमिति स्वयमेवाङ्गीकुरुतेत्यर्थः ॥ ११२ ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्तिन्यामेकोनविंशस्तवकसंगमनम् ॥ १९ ॥ :: ::

## ॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

### ॥ विंशस्तवकारम्भः ॥

---

अथ प्राणप्रिया प्राणप्रियाननचन्द्रगलितेन ललितेन लपितसुधारसेन निर्वापितहृदयतापानला पानलालित्यमन्तरेणापि मत्तेव यदि समुज्जृम्भमाणे मधुरिमणि रमणिरत्नसभा सभाजिता सती विजयते स्म ॥ १ ॥

हल्लीशकभ्रमणहस्तकतालरागवाद्यस्वरोद्धुटननर्तननतद्विरामम् ।
स्निग्धः पुनर्नटनरत्यमलाम्बुखेलामाध्वीकपानशयनं विवृनानि विंशे ॥ १ ॥

अथ यदि रमणीरत्नसभा लपितसुधारसेन सभाजिता सती विजयते स्म तदनन्तरं तस्य वपुषे स्पृहावती च बभूव तदा तेन कान्तेन स दयितासमाजः किमपि निजगदे॰ इत्यन्वयः । प्राणेभ्योऽपि प्रियस्य कृष्णस्याननचन्द्रगलितेन । प्राणप्रिया कृष्णप्राणतुल्या ॥ १ ॥

जयति स्मरकोटिलावण्यं दयितस्य तस्य नयनोत्सववपुषे वपुषे स्पृहावती च बभूव भूवलयस्य सौभाग्यवती तदनन्तरम् ॥ २ ॥

जयति तिरस्कुर्वति ॥ २ ॥

तरङ्गितकौतुकेन केनचिदपि क्वचन च न चमत्कारकारिणापि नटेनाविष्कृतं शुभरतेन भरतेन मुनिना निनायितं हल्लीशकतयेव यत् तदेव तदा तालबन्धमण्डलभेदेन स्वयमेव रासत्वेन सृज्यमानमानन्दकन्दकमनाविलासलास्यविशेषं विधित्सुनाधित्सुना च तासां मनसि चमत्कारं कमपि निजगदे जगदेकविस्मापकेन तेन रमणीयमणीयशःपताकानिकर इव दयितासमाजः ॥ ३ ॥

केनचिदपि नटेन यत् नाविष्कृतम्, अशक्तेरिति भावः । न चाभूतचरत्वेन निर्मूलत्वादप्रामाण्यं शङ्कनीयमित्याह शुभरतेनेति । निनायितं नितरामभिनायितम् । हल्लीशकतयेति, यदुक्तं "बहुस्त्रीकर्तृकं नृत्यं हल्लीशकमिति स्मृत"मिति । न आविलस्य दोषस्य आसः स्थितिर्यत्र स चासौ लास्यविशेषश्चेति तम् । रमणीयानां मणीनां माल्यावयवानां यानि यशांसि श्लाघास्तेषां पताकानिकर इव, कनकमणिमालातुल्याकार इत्यर्थः ॥ ३ ॥

शृणु तावदयि दयितामण्डल मण्डलतया स्थीयतामास्थीयतामानन्दकारिणि मदुदिते ॥ ४ ॥

आस्थीयतां विश्वस्यताम् ॥ ४ ॥

इदमतिप्रकृष्टकृष्णमदीकृतघनसारसारकेदारसदृशमतिविसारितरं सारितरंहसा रामणीयकेन यमुनयानया नद्यादिव प्रकाशितं निरङ्कुशकुशलमयं स्वहृदयमिव पुलिनमवलोक्य मण्डलीभूय भूयसीषु भवतीषु स्थितवतीषु स्थितमस्य विलोकयितुं युज्यते भवतीनां परिमण्डलोऽत्र भाति न वेति ॥ ५ ॥

अतिप्रकृष्टं यथा स्यात् तथा कृष्टः कर्षणेन दूरीकृतो मन्दः काठिन्यभागो यस्य तथाभूतीकृतं घनसारसारं श्रेष्ठकर्पूरमयं यत् केदारं क्षेत्रं तत्सदृशम् । सारितं विस्तारितं रंहो येन तादृशेन रामणीयकेन ॥ ५ ॥

तत्र अचिरेऽचिरेणैव ताः, प्रभाप्रभावर्जितकुवलयवलयसदृशावस्थानेन स्थानेन भवन्ति भवद्दूरवर्तित्वमस्माकं स्माकम्पते हृदयं नापरं दूरीभवितुमुत्सहामहे सहामहे नापरं दुःखमिति ॥ ६ ॥

स्मेति यमकार्थमनधिकार्थम् । हृदयम् आकम्पते ॥ ६ ॥

स पुनरुवाच, पश्यत मे शिक्षाकौशलं कौ शलन्तु के तत्, यदहमन्तरा वर्तमानोऽपि सरसखेलाविभ्रमभ्रमणलाघवेन सर्वासामेव वो जनं जनं रञ्जयन् प्रकटमेव सदा निकटवर्ती भवामीति, तथा गदितेन दितेन संदेहेन तदद्भुतावलोकनकनत्कौतुकया कृष्णमभितोऽभितोषेण परस्परकरकमलदलकलितबन्धानुबन्धानुक्रमेण क्रमेण मण्डलीभावभावनयापसर्पन्तीनां तनुभिः संभूय भूयस्तया पुलिनमेव विसारितरं तरङ्गपटलीभिरिव चान्द्रिकाम्भोनिधेरानशे ॥ ७ ॥

शलन्तु प्राप्नुवन्तु । आनशे व्याप्तम् ॥ ७ ॥

ततश्च तत्कृष्णमनोरथतरोर्महामूलस्य लभ्यमानप्रणयसुधासेकसलिलनिर्गमनिवारि कनकालवालमिव ॥ ८ ॥

लभ्यमानः काम्यमानः प्रणयः प्रेमैव सुधाभिषेकस्तत्संबन्धिसलिलानां निर्गमं निवारयितुं शीलमस्येति । अनेन तासां तथाभूतानां कृष्णाभिलाषपोषकनिश्चलप्रेमवत्त्वं व्यञ्जितम् ॥ ८ ॥

कृष्णमहामदकलभबन्दीकरणाय विलाससरससम्राजा वितानितं कनकवागुरावलयमिव ॥ ९ ॥

कृष्णमहामदकलभेति तदीयभावहेलादीनां चेष्टानामपि कृष्णवशीकारित्वम् ॥ ९ ॥

कृष्णमनोमीनग्रहाग्रहाकुलेन कुसुमशरजालिकेन विस्तारितं कुचकोरकतुम्बीफलफलितलालित्यं वलयाकृति काञ्चनजालमिव ॥ १० ॥

कृष्णमनोमीनेति तदीयाद्भुतसमाश्रयस्य कन्दर्पस्यापि कृष्णमनोव्याकुलीकारिविक्रमत्वम् । कुचकोरका एव तुम्बीफलानि जातिभेदेन वर्तुलाकाराणि तानि ज्ञेयानि, अत एव कोरकैः प्रथममुपमा ॥ १० ॥

कृष्णदुर्गमताकारि वदनतुहिनकिरणबिम्बनिकरकनककुम्भविशेषशोभमानं चपलवेणीदण्डतिमिरपताकाकुलाकुलायमानं कौमुदीदुर्गमिव ॥ ११ ॥

कृष्णस्य दुर्गमता, निःसरणासामर्थ्यमित्यर्थः । वदनान्येव चन्द्रबिम्बसमूहा उपरिभागे येषां तथाभूतैः कनककुम्भविशेषैः शोभमानम् । कौमुदीदुर्गमिवेति पूर्वोक्तयोर्वशीकरणोपमानयोर्वागुराजालयोर्वशीकार्यकष्टदायित्वरूपो दोषः प्रसक्त आसीदिति तद्वारणार्थमुत्प्रेक्षेयम् ॥ ११ ॥

भूवलयविलासलक्ष्म्या विलासकनकमहाताटङ्कमण्डलमिव ॥ १२ ॥

भूवलयेत्यूर्ध्वाधोवर्तिसमस्तलोकेभ्योऽपि भूर्लोकस्य तदानीं सौभाग्यं सूचितम् ॥ १२ ॥

मिहिरदुहितृपुलिनलक्ष्मीवक्षसो वलयाकारं चम्पकमाल्यमिव ॥ १३ ॥

मिहिरेति, तत्रापि यमुनापुलिनप्रदेशस्य नितराम् ॥ १३ ॥

कृष्णरत्नसानुमभितः[1] कनकमयमानसोत्तरगिरिवरवलयमिव । १४ ।

तादृशाकारकान्तागणवेष्टितं नृत्योचितस्थानविमर्शार्थं क्षणं स्थिरतया तिष्ठन्तमुत्प्रेक्षते कृष्णरत्नसानुमिति । रत्नसानुः सुमेरुः ॥ १४ ॥

संपूर्णमहसः कृष्णकलानिधेर्महापरिधिरिव ॥ १५ ॥

ततश्च विचारितस्थानं प्रति तथाभूततयैव मन्दं मन्दं गच्छन्तमुत्प्रेक्षते संपूर्णमहस इति ॥ १५ ॥

---

१ अभितः परित इति द्वितीया ।

रतिरसकलाकलापकुलालस्य लालस्यमाननटनघटघटनाचक्रमिव ॥ १६ ॥

गत्वा च तत्र प्रथमं चक्रभ्रमिनाट्यमारभमाणमुत्प्रेक्षते रतिरसेति ॥ १६ ॥

यमुनापुलिनकर्पूरकेदारतलतो निर्बीजमेव तत्समग्रसमुद्भिन्नं परस्परशोभायमंश्लेषविशेषदर्शनीयं हिमकणगणगुणितशोभं वलयाकारं कनककल्पलतानिकुरम्बमिव ॥ १७ ॥

ततश्च नाट्यमानसमाप्तौ विश्रामार्थं क्षणं तथा भूततया तिष्ठन्तमुत्प्रेक्षते यमुनापुलिनेति । हिमकणगणेति श्रमबिन्दूनामुपमा ॥ १७ ॥

चित्रकाव्यमिव सदा सुकरसर्वतोभद्रं प्रतिलोमानुलोमपादक्रमं च एकाक्षरचरणं च सुललितभाषासमं च ॥ १८ ॥

सर्वतोभद्रं तन्नामा संदर्भविशेषः, पक्षे सुकरं सर्वत एव भद्रं सुखं यत्र तत् । प्रतिलोमानुलोमाभ्यां पादक्रमो यत्र तत्, यत्र श्लोके तेषामेवाक्षराणां प्रतिलोमपाठेनैकश्चरणस्तेषामेवानुलोमपाठेनान्यश्चरण इत्यर्थः, पक्षे कदाचित् प्रतिलोमेन कदाचिदनुलोमेन च नृत्यवशात् पादक्रमो यत्र तत् । एकैरेवाक्षरैश्चरणः पादो यत्र तत्, पक्षे एकं तुल्यमेव अक्षरं स्खलनहीनं चलनं गतिर्यत्र तत् । सुललिताभ्यां भाषाभ्यां प्राकृतसंस्कृतमयीभ्यां समं तुल्यम्, पक्षे भाषा उक्तिप्रत्युक्तिमयवाणी तया समं शोभनम्, "सर्वसाधुसमानेषु समं स्यादभिधेयव"दिति मेदिनी ॥ १८ ॥

शब्दालंकरणमिव सदाश्लेषं छेकवृत्त्यानुप्रासं पुनरुक्तवदाभासभासुरम् ॥ १९ ॥

सदैव श्लेषः, पक्षे सदाश्लेष आलिङ्गनं यत्र तत् । छेक इति वृत्तिरिति अनुप्रासो यत्र तत्, यदुक्तं "वर्णसाम्यमनुप्रासश्छेकवृत्तिगतो द्विधे"ति, पक्षे छेको विदग्धो वृत्तेः करचरणादिचालनव्यापारस्य अनुकूलः प्रासः प्रकृष्टविन्यासो यत्र तत् । पुनरुक्तवदाभासनाम्ना अलंकारेण भासुरं दीप्तम्, पक्षे पुनरुक्तवदाभासते तथा तच्च भासुरं च तत्, एक-

ग्रापि तन्मण्डलस्य गतिलाघवेन द्रुतयथितयवत् तदा भानमभूदि-
त्यर्थः ॥ १९ ॥

नयनमिव मध्यकृष्णं छन्द इव सदा विषमसमभावरमणीय-
भावं रमणीमण्डलमाभाति स्म ॥ २०

विषमभावेन भिन्नचित्रचतुष्पादत्वेन समभावेन तुल्यमात्राकचतु-
ष्पादत्वेन च रमणीयो भावः सत्ता यस्य तत्, पक्षे गतिभेदेन मण्डलस्य
कदाचिद् वैषम्यं कदाचित् साम्यं चेति ॥ २० ॥

तस्मिन्नेव समये देव्या योगमायया तत्समयोचितवेषभूषाभि-
रेदलंकृतं तत्र तासां गोचर आसीदपितु कृष्णस्यातिमनोहरमभूद-
हो तस्याः कृष्णहृदयानुरञ्जकत्वं तच्च प्रथममेव रमणीमणीभावेना-
सामान्यतया मान्यतया च सर्वानुमत्या कृष्णेन सहैव मध्यमध्यव-
स्थिता वृषभानुपुत्री चित्रीभूता सतीव परितोषवतीं रमणीमण्डली-
मालोकयांचकार ॥ २१ ॥

रमणीषु मणीभावेन, श्रेष्ठत्वेनेत्यर्थः ॥ २१ ॥

तदनु सा मण्डली बहुविस्तारभियाभियातशङ्का परस्परसंसक्त-
तया कविनागतशिथिलबन्धदोषामिव दूरीचिकीर्षुर्गाढं बन्धमङ्गीकर्तु-
मितरेतरेषामंसविन्यस्तबाहुमूलं स्थितवती राजति स्म ॥ २२ ॥

अंसे स्कन्धे विन्यस्तं बाहुमूलं यत्र तद्यथा स्यात् तथा ॥ २२ ॥

तच्च मध्यमध्यवस्थितस्य तस्य रसिकशेखरस्य सारस्यदैन्-
स्यदेन प्रवेशसमकालमेव मुक्तपरस्परांसतटयोर्द्वयोर्द्वयोर्मध्ये पुरःप-
श्चाद्भावेन प्रविश्य कण्ठतटं भुजवलयाभ्यामवगृह्य विभ्रमतो भ्रम-
तोऽलातचक्रमिव तद्भ्रमणं चित्रकाव्यमिव गोमूत्रिकाबन्धप्रायं प्रति-
लोमानुलोमक्रमेण भवदत्यद्भुतं तदासीत् ॥ २३ ॥

पुरःपश्चाद्भावेन प्रविश्येति, मण्डलमध्यस्थां राधिकां परित्यज्यैवातिलाघवेन मण्डलस्थयोर्द्वयोर्द्वयोरेकं मध्यं तयोः पुरोभावेन प्रविश्य तत्पृष्ठतः परावृत्यान्यं मध्यं पश्चाद्भावेन तयोः प्रविश्य तदनन्तरं च तदग्रतः परावृत्य· अपरं मध्यं पुनः पुरोभावेन प्रविश्य पुनरपि तत्पृष्ठतः परावृत्यापरं च मध्यं पश्चाद्भावेनेत्येवं संपूर्णमण्डलभ्रमणानन्तरं मण्डलमध्यस्थराधिकांसं वामभुजेनाश्लिष्य पुनर्मण्डलस्थानामुक्तन्यायेन मध्यमध्यप्रवेश इत्येवमग्रिमश्लोके स्पष्टं भावि। विभ्रमतो विलासेनेत्यर्थः। गोमूत्रिकाबन्ध इति, स यथा· अक्षरपङ्क्तेः प्रत्यक्षरं प्रतिमध्यमेव पुरः पश्चात् परिवर्तनवेष्टनरेखाविन्यासेन भवति तथैवेत्यर्थः॥ २३॥

येन तं सकला एव कलावन्त्य एव स्वस्वनिकटस्थमेव मन्यन्ते स्म, एवमेव तस्य भ्रमणलाघवम्॥ २४॥

सकला एव कलावन्त्य एव स्वनिकटस्थमेवेति पूर्वं मण्डलमध्ये तस्य राधासाहित्यदर्शनात् कथंचित् प्रसक्ताया ईर्ष्याया अपगमः सूचितः॥ २४॥

तेन च।

एकस्या दक्षिणांसे वरभुजवलयं वाममन्यं परस्या<br>
वामांसे न्यस्य गाढं युगपदभिमुखे द्वे समाश्लिष्य कान्ते।<br>
ताभ्यां दत्तप्रवेशस्त्वरितमनुगतः पृष्ठमेकां विमुञ्चन्नन्यां<br>
गृह्णन् पुरस्तात् स पुनरुपसरत्येवमेव क्रमेण॥ २५॥

पुनः पुरस्तादुपसरतीति, अग्रदेशं गत्वा विवृत्येति ज्ञेयम्॥ २५॥

एवं प्रतिलोमानुलोमाभ्यां स्पष्टमेव गोमूत्रिकाबन्धमुपपादयता प्रत्येकमेव तासां पुरःपश्चाद्भागपरिष्वङ्गेण लाघवकौशलेन भ्रमता तासां तस्याश्च मध्यगताया मुख्यायाः परमकौतुकमाततान॥ २६॥

उक्तमेवार्थमुक्तपौनरुक्त्यायेनाह· एवमिति॥ २६॥

एतस्मिन्नेव समये मुक्तावलोकनागया निकटमानमिवं ज्यो-तिश्चक्रमिव विमानश्रेणिभिराकुलमपि निर्विमानं लेखावलिवलितमपि निर्लेखं सदा सदारचारणकिंनरमनुष्यगन्धर्वविद्याधरप्रभृतिभूत-निरन्तरसमाजं विभ्रमुम्बरतलं रराज ॥ २७ ॥

निःशेषेण विगतं मानं परिमाणं यत्र तत् । लेखावलिर्देवश्रेणी । निर्लेखं निर्गता लेखा देवता यतस्तत् ॥ २७ ॥

ततश्च चित्रकाव्यमिव ललितमुरजबन्धं पार्थिवशंकरकदम्ब-मिव निर्दोषमृदङ्गं कर्णविजयशीलनमिव पणवाहितं बन्धुजनवपुरिव ललितालिङ्गं नाटकमिव विलसदङ्कं यदुकुलमिव श्लाघ्यमानक-दुन्दुभि गगनमिव विततं वर्षानभ इव सुघनं सूचीमुखमिव सशुषिरं महार्णवमिव सदानद्धं देवताभिवाद्यं वाद्यं नदति स्म ॥ २८ ॥

मुरजबन्धो मुरजाकृतिघटितश्लोकाक्षरः, पक्षे ललितो मुरजस्य बन्धो वाद्यप्रबन्धो यत्र तत् । निर्दोषाभिः शर्करातुषादिरहिताभिर्मृद्भि-रङ्गं यस्य तत्, पक्षे स्पष्टम् । पणैर्मूल्यैराहितम्, पक्षे पणवेन आहितम् । ललितं यथा स्यात् तथा आलिङ्गम् आलिङ्गनम्, पक्षे ललित आलिङ्गो मृदङ्गभेदो यत्र तत् । विलसतः शोभमानानङ्कानङ्कतीति तत्, पक्षे अङ्को-ऽपि मृदङ्गभेदः, यदुक्तं "हरीतक्याकृतिस्त्वङ्को यवमध्यस्तथोर्ध्वकः । गोपु-च्छाकृतिरालिङ्गो मध्यदक्षिणवामगाः" ॥ इति । आनकदुन्दुभिर्वसुदेवः, पक्षे आनकदुन्दुभी वाद्यभेदौ । गगनमित्यादि स्पष्टम्, पक्षे "ततं वीणा-दिकं वाद्यमानद्धं मुरजादिकम् । वंश्यादिकं तु शुषिरं कांस्यतालादिकं घनम्" ॥ इत्यमरः ॥ २८ ॥

नन्दनवनवनदेवताभिरेव ताभिरेवमनवरतं क्षिप्यमाणानि स-मधुकराणि दिवः साञ्जनहर्षनयनजलबिन्दुनिकुरम्बाणीव निपतन्ति स्म कुसुमानि यशो यशोदानन्दनस्य तस्य ललितकलस्वरं स्वरङ्ग-नाभिः सह सहर्षं गन्धर्वाश्च गायन्ति स्म ।

ततश्च ।

मुखरनूपुरकङ्कणकिङ्किणी-
कलकलः सुदृशां च हरेश्च सः ।
समकिरद्रसनारसनाशनः ।
श्रवणयोरमृतान्यमृतान्धसाम् ॥ २९ ॥

अमृतान्धसाम्· अमृतभोजिनां देवानां श्रवणयोः कर्णद्वये· अमृतानि समकिरत्· निचिक्षेप । रसनया जिह्वया यो रस आस्वादस्तं नाशयतीति सः, अतः परं न ते· अरोचकम्· अमृतमास्वादयिष्यन्तीति भावः ॥ २९ ॥

ततश्च ।

तस्यैवं भ्रमतो जवेन सुदृशां द्वे द्वे समालिङ्गतो
मध्यं मध्यमनुप्रविश्य वपुषा तेनैव सा मण्डली ।
किं ज्योत्स्नातिमिरैः किमु स्थिरतडिन्मेघैरथो चम्पक-
श्यामाब्जैरुत काञ्चनेन्द्रमणिभिः क्लृप्तामजैषीत् स्रजम् ॥ ३० ॥

तेनैव· एकेनैव वपुषा सा मण्डली ज्योत्स्नातिमिरादिभिः क्लृप्तामपि स्रजम्· अजैषीत् । ज्योत्स्नातिमिरयोः कान्तितारल्यं परस्परवैरं चेति, अतस्तडिन्मेघयोः कान्तिनैविड्येन परस्परसख्येन चोत्कर्षः, किंतु तडिता मेघकान्त्याच्छादनरूपो दोष इति चम्पकश्यामाब्जाभ्यामुपमा, पुनरपि निविडाश्लेषलक्षणसख्यप्राप्त्यर्थं काञ्चनेन्द्रमणिभ्यामिति ॥ ३० ॥

कदाचिदपि तथाविधगोपीचिकाबन्धं विहाय स्वच्छभूमावेव चक्राकारचित्रकाव्यमिव नर्तनमावर्तयति ।

तद्यथा ।

वल्गद्वल्गवतंसमंसविलसन्मन्दारमालं नद-
त्काञ्चीकिङ्किणिकङ्कणादि विगलत्संव्यानकं भ्राम्यति ।

विष्वद्रोचि मरीचिवीचिनिचये बांमूलचक्राकृतौ।
सर्वाः पुष्पविरे स्थिरा नवतडिन्माला इवैणीदृशः ॥ ३१ ॥

बल्गादित्यादि क्रियाविशेषणचतुष्टयम् । भ्राम्यति भ्रमणे ॥ ३१ ॥

ततश्चातिचित्रम् ।

ह्रस्वावर्तं सरति सरसं राधिकामन्तरस्थां
दीर्घावर्तं निकटमयते मण्डलीस्थप्रियाणाम् ।
गुप्तो वेगान्मरकतमयः सूत्रबन्धप्रमुक्तो
लीलाचक्रीपुट इव हरिर्विभ्रमी बंभ्रमीति ॥ ३० ॥

तच्च चक्रभ्रमिनाट्यमन्तर्बहिर्नीलमणिमण्डलद्वयनिर्माणक्रमिव ज्ञा- मित्याह ह्रस्वावर्तं इति । अन्तरस्थां मध्यस्थितां राधिकां कनकमणि- कर्णिकामिव सरति मण्डलीभावेन परिक्राम्यति । दीर्घावर्तं इति, पुनश्च बृहन्मण्डलीभावेन तासां निकटेऽपि भ्राम्यति । एवं च युगपदेव नील- मणिमण्डलद्वयीभाव इत्यतिचित्रता, प्रकाशभेदस्वीकारे सा न स्यादिति लाघवकलातिकौशलमेवात्र व्यवस्थापितम्, तच्चान्तर्मण्डले भ्रमणानन्तर- मपि तदीयमयूखपरिधिस्तदाकारो यावन्न विरमति तावदेव बहिर्मण्डले परिभ्रम्यैवान्तर्मण्डले तत्र प्रविश्यैव पुनर्भ्रमणं तस्य, एवमेव बहिर्मण्डले पुनरपीति परामृश्यम् ॥ ३२ ॥

ततस्तदवेक्षणेन तासामपि मनसि समुदि समुदितायां निन- र्तिषायां तत्क्षणादेव देवताभिस्तौर्यत्रिकाधिष्ठात्रीभिस्तनुमतीभिरुप- तस्थे ॥ ३३ ॥

तौर्यत्रिकं नृत्यगीतवाद्यम् । उपतस्थे उपस्थितम्, तत्रागतमि- त्यर्थः ॥ ३३ ॥

तथा सति नृत्यगीतवाद्याध्यायोपाध्यायोपासितचरणास्ताः पूर्वपूर्वतरसुचिराभ्यासाभ्यासादितकौशलमिवात्मानं प्रत्येकमेव मन्य- माना न्यमानानन्दवृत्तिमासाद्य ॥ ३४ ॥

तथा मति ता अधिष्ठात्र्यो देवता हस्ताध्यायदेवतामनुगृह्य गान-देवतां रागरागिणीगणदेवतादिं च स्वयमागतामनुजगृहुरित्यन्वयः। नित-राम्-असमानाम्-अपरिमितामानन्दभूमिम् ॥ ३४ ॥

धनिकमणिकमनीयगृहपटलीमिव ललितपताकाम् ॥ ३५ ॥

ललितपताकामित्यादिषु पताकादयोऽर्धचन्द्रान्ताः संयुतासंयुत-नृत्यभेदेन त्रिविधेषु हस्तकेष्वसंयुतहस्तकभेदाः संगीतशास्त्रतो ज्ञेयाः, यदुक्तं "नर्तने रक्तिजनकः पदार्थाकृतिकारकः। पदेतराङ्गुलिन्यासविशेषो हस्तकः स्मृतः" ॥ इति हस्तकसामान्यलक्षणम्। "यत्रैकहस्ततश्चार्थप्र-काशः स्यादसंयुत" इत्यसंयुतहस्तकलक्षणम्। "हस्तद्वययुतेरर्थप्रकाशे संयुतो भवे"दिति संयुतहस्तकलक्षणम्। "हस्ताभ्यां विप्रयुक्ताभ्यां क्रियया नृ-त्यहस्तक" इति नृत्यहस्तकलक्षणम्। अत्र संयुतनृत्यहस्तका अनुल्लि-खिता अपि विशुद्धमदसहस्ता इत्यनेनोपलक्षयिष्यन्ते। धनिका धनिनः, अन्यत् स्पष्टम्, पक्षे ललितः पताको हस्तकभेदो यत्र ताम्, "कुञ्चिताङ्गु-ष्ठकः सम्यक् तर्जनीमूलमाश्रितः। पताको यत्र सुहितप्रसारितकराङ्गु-लिः" ॥ इति ॥ ३५ ॥

होमधूमावलीमिव सत्रिपताकाम् ॥ ३६ ॥

सत्रिपताकां सत्रिणां याज्ञिकानां पताकातुल्याम्, पक्षे त्रिपताकेन सहिताम्, "त्रिपताकः पताकस्तु वक्रितानामिकाङ्गुलि"रिति ॥ ३६ ॥

मृणालवल्लीमिव हंसास्यलुलिताम् ॥ ३७ ॥

हंसास्येन लुलितां मर्दितां मृदुलीकृतां च, "तर्जनीमध्यमाङ्गुष्ठा-मिलितायाः परे पुनः। अङ्गुल्योविरले चोर्ध्वे हंसास्यो हस्तकस्तु सः" ॥ इति ॥ ३७ ॥

द्वितीयाचन्द्रलेखामिव कर्तरीमुखशोभाम् ॥ ३८ ॥

कर्तर्या मुखस्य शोभेव शोभा यस्यास्ताम्, पक्षे कर्तरीमुखनामा हस्तकः, "तर्जनीमध्यमे भिन्ने वक्रितानामिका पुनः। पताकस्य यदा स स्यात् कर्तरीमुखहस्तकः" ॥ इति ॥ ३८ ॥

पलाशकुसुमश्रेणिमिव शुकतुण्डाभाम् ॥ ३९ ॥

पलाशेति स्पष्टम्, "तर्जन्यनामिकाङ्गुष्ठा वक्रा मध्या प्रसारिता। पताकस्य यदा तु स्याच्छुकतुण्डकहस्तकः" ॥ इति ॥ ३९ ॥

तप्तसुवर्णादिसूत्रावलिमिव संदंशाकृष्टाम् ॥ ४० ॥

संदंशः सांडशीति ख्याता, पक्षे हस्तकभेदः, "तर्जन्यङ्गुष्ठकौ चेत्र मिलिताग्रान्यकुञ्चितौ। विरलोर्ध्वाः पराङ्गुल्यः संदंशः स तु कथ्यते" ॥ इति ॥ ४० ॥

हरमूर्तिमिव विलसत्खटकामुखाम् ॥ ४१ ॥

खटका वाद्यभेदः, पक्षे खटकामुखो हस्तकः, "वक्रिते मध्यमाङ्गुल्यौ विरलोर्ध्वे परे पुनः। तर्जन्यङ्गुष्ठकौ चापि मिलितौ खटकामुख": ॥ इति ॥ ४१ ॥

मधुकरश्रेणीमिव पद्मकोशोत्कण्ठिताम् ॥ ४२ ॥

मधुकरेति स्पष्टम्,"धनुर्नतावमिलिताङ्गुलीकः पद्मकोशकः" । इति ॥ ४२ ॥

आहितुण्डिकव्यवसितिमिव खेल्यमानाहितुण्डाम् ॥ ४३ ॥

आहितुण्डिको व्यालग्राही, "पताको निम्नमध्यो यः स तु स्यादाहितुण्डिकः" । इति ॥ ४३ ॥

सीवनशिल्पकलामिव सदोपयुक्तसूचीमुखाम् ॥ ४४ ॥

सीवनेति स्पष्टम्, "अङ्गुष्ठमध्यमे संयुक्तावि चोर्ध्वाथ तर्जनी। कनिष्ठानामिके चोर्ध्वे सूचीमुख इति स्मृतः" ॥ इति ॥ ४४ ॥

मार्गशीर्षपूर्णिमामिव मृगशीर्षयुक्ताम् ॥ ४५ ॥

मार्गेति स्पष्टम्, "अङ्गुष्ठानामिकामध्या मिलितायाः परेऽङ्गुली[1] । ऊर्ध्वे यत्र पुनः स्यातां मृगशीर्षः स हस्तकः" ॥ इति ॥ ४५ ॥

---

१ प्रकृतिभावाभावश्छान्दसः।

अष्टमीतिथिमिव विलसदर्धचन्द्राम् ॥ ४६ ॥

अष्टमीति स्पष्टम्, "पताकाङ्गुष्ठकश्चेत् तु स्यादाक्रष्टोऽन्यतः पुनः। अर्धचन्द्र इति प्रोक्तो भरतादिमुनीश्वरैः" ॥ इत्यर्धचन्द्रलक्षणम् ॥ ४६॥

किं बहुना कार्तवीर्यमूर्तिमिव विशुद्धसहस्रहस्तां हस्ताध्याय-देवतामनुगृह्य तदनुगामिनीं चच्चत्पुटचाचपुटहंसलीलगजलीलसिंह-नन्दनादिमहातालैरादितालैकतालीरूपकप्रतिमठनिसारुयतित्रिपुटा-डुक्कप्रभृतिभिरपरैश्च तदितरैः ॥ ४७ ॥

तदनुगामिनीं प्रबन्धध्रुवगानदेवतामिति संबन्धः। तदितरैर्महा-तालेतरैः, क्षुद्रतालैरित्यर्थः। चच्चत्पुटचाचपुटौ मार्गतालौ। हंसलीलग-जलीलसिंहनन्दनास्त्रयो देशीतालाः। आदिशब्दात् षट्पितापुत्रकसंपक्के-ष्टकोद्घट्टास्त्रयोऽन्ये मार्गतालाश्च ज्ञेयाः। आदितालादयोऽष्टौ अल्प-मात्राका देशीतालाः। एतेषां लक्षणानि, "गुरुद्वयं लघुश्चैकः प्लुतश्चच्च-त्पुटो मतः," "गुरुरेको लघू मध्ये गुरुश्चाचपुटो मतः," "हंसलीले विरा-मान्तं लघुद्वयमुदाहृतम्," "चत्वारो लघवो यत्र गजलीलः स उच्यते," "गुरुद्वयं लघुश्चैकः प्लुतो लश्च गुरुस्तथा। द्रुतौ गुरू लप्लुतौ च लप्लुतौ गुरुरेककः ॥ लघू पुनश्च चत्वारो निःशब्दा लघवो यदा। तदा तालोऽयमाख्यातः सिंहनन्दनसंज्ञकः" ॥ "लघुनैकेनादिताल"इति, "एको द्रु-तश्चैकताली"ति, "द्रुतौ लौ रूपकः स्मृत"इति, "लघुर्गुरुर्लघुश्चैकः प्र-तिमठः प्रकीर्तित"इति, "लघुद्वयं विरामान्तं निसारो परिकीर्तित"मि-ति,"द्रुतद्वयं लघुश्चैव यतितालः प्रकीर्तित"इति, "द्रुतत्रयं विरामान्तं त्रिपुटः परिकीर्तित" इति, "द्रुतौ लघू भवेतां चेत् तदासावडुतालक" इति ॥ ४७ ॥

हरिविलासस्वरार्थादिस्वरपाठविरुदादिवलितनानाप्रबन्धध्रुव-गानदेवतां द्रविडतैलङ्गपाश्चात्यादिदेशीयगानदेवतां च ॥ ४८ ॥

हरिविलासस्वरार्थौ प्रबन्धभेदौ तदादयो ये स्वरपाठविरुदादि-भिर्वलिता नानाप्रबन्धा ध्रुवाश्च तदीयगानदेवताम्। "यत्रैकखण्ड उद्गा-

हस्तथैव ध्रुवसंज्ञकः । रचितान्यपदाभोगः स स्याद्दुरिविलासकः" ॥ "यत्र सप्तान्तरैरेव षड्जादिस्वरवाचकैः । क्रमव्युत्क्रमव्यस्तैश्च समस्तैर्वाञ्छितार्थकैः ॥ उद्ग्राहध्रुवकौ स्यातामाभोगोऽन्यपदैः पुनः । स्वरार्थः स्यादिष्टतालो मोक्ष उद्ग्राहके भवेत्" ॥ इति । स्वरपाठबिरुदादीनि प्रबन्धाङ्गानि षट् । "स्वरः सरिगमेत्यादिर्बिरुदं गुणकीर्तनम् । शौर्यदानद्वयस्यापि पदं तदितरत् स्मृतम् ॥ तेनकस्तेन तेनेति पाठो वाद्याक्षरोत्करः । तालश्चच्चत्पुटादिः स्यादिति ज्ञेयं मनीषिभिः" ॥ इति तल्लक्षणानि । प्रबन्धोऽतिसुद्रो द्रविडभाषाबद्धश्चिन्दुनामा यथा यथा च तैलङ्गभाषाबद्धो धवनामा तथैव पाश्चात्यप्रजाविभाषाबद्धो ध्रुवविष्णुपदसंज्ञः ॥ ४८ ॥

मालवमल्लारभैरवकेदारसारङ्गनटकर्णाटकामोदसामदेशागगान्धारवङ्गालवसन्तादिरागनिकरगुर्जरीबहुलगुर्जरीवराटीदेशिकाभैरवीवेलावलीरामक्रिरीधन्नासिकाश्रीपालीगौरीतोडीगौडगिरीकल्याणिकापौरवीसैन्धवीशोभनवत्याशावरीदेशवराडीगौडापठमञ्जरीललितादेवक्रीमागधीकौशिकीप्रभृतिरागरागिणीगणदेवतां च सप्तस्वरैकविंशतिमूर्छनाग्रामत्रयजात्यष्टादशकश्रुतिद्वाविंशतिकमातुधातुदेवतां चेति गानाध्यायलक्ष्मीं मूर्तिमतीं चानुकम्प्य ॥ ४९ ॥

सप्त स्वराः षड्जादयः, यदुक्तं "षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा । धैवतश्च निषादश्च स्वराः स्युः श्रुतिसंभवाः" ॥ "मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः । मातङ्गश्च स्वरानाहुः क्रमेणैतान् सुदुर्गमान्" ॥ इति । एकविंशतिमूर्छनाः स्वरारोहावरोहरूपाः, यदुक्तं "क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम् । मूर्छनेत्युच्यते ग्रामत्रये ताः सप्त सप्त च" ॥ इति । ग्रामत्रयं षड्जग्राममध्यमग्रामगान्धारग्रामाः, तदुक्तं "स्वराणां सूच्यवस्थानां समूहो ग्राम उच्यते । षड्जग्रामः पञ्चमे स्वचतुर्थश्रुतिसंस्थिते । स्वोपान्त्यश्रुतिसंस्थेऽस्मिन् मध्यमग्राम इष्यते ॥

रिमयोः श्रुतिमेकैकां गान्धारश्चेत् समाश्रितः । पश्रुतिं धो निषादस्तु धश्रुतिं मश्रुतिं श्रितः ॥ गान्धारग्राममाचष्ट तदा तं नारदो मुनि''रिति । "गान्धारः सपरीवारो ग्रामस्तु दिवि गीयते" । इति च । जातयोऽष्टादश,यदुक्तं "याभ्यो रागाः संभवन्ति जातयस्ताः समीरिताः । ताः सप्त शुद्धा विकृता एकादश उदाहृताः" ॥ इति । श्रुतयो द्वाविंशतिः, यदुक्तं "पञ्चस्थानोद्भवो नादो विभक्तो मारुताहतः । द्वाविंशतिः स्युः श्रुतयः श्रवणाच्छ्रुतयो मता"इति । तत्र षड्जस्य चतस्रः श्रुतयः, ऋषभस्य तिस्रः, गान्धारस्य द्वे, मध्यमस्य चतस्रः, पञ्चमस्यापि चतस्रः, धैवतस्य तिस्रः, निषादस्य द्वे,एवं द्वाविंशतिः । पदानि वाक्यानि च तालादिनिबद्धानि चेन्मातुः,तत्र निबद्धो रागस्तु धातुः,यदुक्तं "वाङ्मातुरुच्यते गेयं धातुरित्यभिधीयते" । इति ॥ ४९ ॥

वंशीमुरलिकापाविकापाङ्गादिविविधशुषिरं वीणामहतीकत्रिलासिकाविपञ्चीस्वरमण्डलिकाकच्छपीरुद्रवीणाकिंनरीप्रभृतिततविततिमृदुमृदङ्गडमरुडम्फादिविविधानद्धं मन्दिरादि घनं चेति चतुर्विधवाद्याध्यायदेवतां च ॥ ५० ॥

वंश्यादयो लोकत एव प्रसिद्धा इति न लक्षिताः ॥ ५० ॥

द्रुतविलम्बितमध्यलयलक्ष्मीमङ्गहारश्रियं च स्वयमागतामनुजगृहुः ॥ ५१ ॥

द्रुतविलम्बितमध्यभेदेन त्रिविधो लयः, यदुक्तं "क्रियानन्तरविश्रान्तिर्लयः स त्रिविधो मतः । द्रुतो मध्यो विलम्बश्च द्रुतः शीघ्रतमो मतः ॥ द्विगुणाद्द्विगुणौ ज्ञेयौ तस्मान्मध्यविलम्बिता" इति । "अङ्गहारोऽङ्गविक्षेपविशेषः परिकीर्तितः" । इति ॥ ५१ ॥

ततश्च तासामेव मध्ये ।

स्वरमण्डलिकां विपञ्चिकां
महतीं रूपवतीं च तुम्बुरीम् ।

कविलासिक्रया समं समा-

दधतीभिः क्रियतीभिरुच्चये ॥ ५२ ॥

क्रियतीभिर्वैणिकीभिः, उच्चये· उन्नतं, तत्रापूर्नामिति यावत् ॥ ५२॥

ततश्च ।

मूर्ताः संगीतशास्त्रोपनिषद इव ताश्चित्रमेवाविरास-

न्नासन्ने रासलीलारहसि सहसितश्रीमुखाम्भोजकोशाः ।

वैणिक्यो वैणविक्यः सरसमुदभवन् मौरजिक्या समेता

गायन्त्यस्तालधारिण्यपि करकलितोपाङ्गमौपाङ्गिकी च ॥ ५३ ॥

सहसितं सहासं श्रीयुक्तं मुखमेवाम्बुजकोशो यासां ताः, वैणिक्यो वीणाधारिण्यः, वैणविक्यो वेणुवादिन्यः, करकलितोपाङ्गं यथा स्यात् तथा· औपाङ्गिकी च ॥ ५३ ॥

वाग्गेयकारकगुणैरुपलक्षितानां

संगीततन्त्ररहसामपि पारगाणाम् ।

शुद्धाङ्गशुद्धतरककर्कशमार्गलास्य-

नेत्री व्यरोचत ततिर्वरनर्तकीनाम् ॥ ५४ ॥

वाग्गेयेति, तदुक्तं "वाच्यं गेयं च कुरुते यः स वाग्गेयकारक" इति,तस्य गुणैः ॥ ५४ ॥

तच्च च ।

गीतं द्वेधा मार्गदेशीयभेदात्

त्रिंशच्चत्वारश्च मार्गप्रभेदाः ।

तेषां तालाः पञ्च चच्चत्पुटाद्या-

श्चत्वारिंशद् द्वौ च देश्यां प्रसिद्धाः ॥ ५५ ॥

गीतं द्वेधेति, गानवाद्यनृत्येषु ब्रह्मविरचितनियमयुक्तं यत् तन्मार्गसंज्ञकम् । तत्तद्देशप्रियत्वात् तत्तद्देशरीत्या कल्पितं यत् तद्देशीनाम-

कम् । चच्चत्पुटाख्यश्चच्चत्पुटश्चाचपुटषट्पितापुत्रकसंपक्वेष्टकोद्घट्टाः· इति पञ्च प्रसिद्धाः, संगीतशास्त्रत एवेत्यर्थः ॥ ५५ ॥

ततश्च तालपाठः स्वयमुल्लास ।

थेया तथतथथेया तथतथथेया तथत्तितथथेया ।
थेया तथतथथेया थगथगथगतत्तिथदिगणथे: ॥

ततश्चैनं शब्दं गृहीत्वा ।

स्वरं लघुगुरुप्लुतद्रुतादिसममात्राविधौ
सशब्दकमशब्दकं कलितकांस्यतालोत्तमम् ।
कराग्रमपसव्यसव्यत उपर्यधो निक्षिप-
न्त्यथाष्टममुपारटत् किमपि तालधारिण्यसौ ॥ ५६ ॥

तालधारिणी कलितकांस्यतालोत्तमं गृहीतकांस्यमयकरतालं कराग्रम्· अपसव्यसव्यतो दक्षिणवामतः· उपर्यधो निक्षिपन्ती सती किमप्यनिर्वचनीयं यथा स्यात् तथा· अष्टमं स्वरम्· उपारटत्, षड्जाद्याः सप्त स्वरा इव तस्यास्तालोऽप्येकः स्वर एवाभवदित्यर्थः । कीदृशम्, लघ्वादिविधौ सशब्दकमशब्दकं च, यदुक्तं "पञ्चलघ्वक्षरोच्चारमिता मात्रेह कथ्यते । एकमात्रो लघुर्ज्ञेयो द्विमात्रो दीर्घ उच्यते ॥ त्रिमात्रस्तु प्लुतो ज्ञेयो मात्रार्धं द्रुतमुच्यते । लघुद्रुतद्वयार्धे तु विरामः परिकीर्तितः" ॥ इति । "क्रिया तु द्विविधा प्रोक्ता निःशब्दा च सशब्दिका" । इति ॥ ५६ ॥

ततश्च ।

शब्दास्ते मौरजिक्या मुरजवरमुखे पाणिनोद्घाट्यमाना-
श्चोपाङ्गिक्याप्युपाङ्गं स्फुरदधरदलं निन्यिरे कम्प्रकण्ठम् ।
गायन्त्यो रागराजीः समयसमुचिता हूंक्रियाभिः कलाभि-
र्यन्त्रे झङ्कारयन्त्योऽखिलरवमिलने दत्तकर्णा विरेजुः ॥ ५७ ॥

मौरजिक्या मुरजवादिन्या पाणिनैव· उद्घाट्यमानाः शब्दा उपाङ्ग-

धारिण्या· उपाङ्गं निन्यिरे, उपाङ्गं उद्घाटयामासिरे· इत्यर्थः । स्फुरदध-रदलं कम्प्रकण्ठमिति· उपाङ्गविशेषणं क्रियाविशेषणं वा ॥ ५७ ॥

सप्त स्वराः सदनुवादिविवादिवादि-
संवादिनः स्थलवशेन चतुर्विभेदाः ।
तास्वेकविंशतिरपि श्रुतयो यथास्वं
ग्रामास्त्रयः श्रुतिसमा अथ मूर्छनाश्च ॥ ५८ ॥

सप्त स्वरा इत्यस्यानन्तरश्लोकस्थेन प्रादुरभवन्नित्यनेनान्वयः । सन्तश्च ते· अनुवाद्यादयश्चेति तथा ते,तदुक्तं "चतुर्विधाः स्वरा वादी संवादी च विवाद्यपि । अनुवादी च वादी तु प्रयोगे बहुलः स्वरः ॥ राजरूपः स विज्ञेयोऽनुवादी भृत्यवन्मतः । विवादी शत्रुवज्ज्ञेयो राग-भङ्गकरो मतः ॥ संवादी मन्त्रिवत् प्रोक्तः स्वरशास्त्रविशारदैः" । इति । श्रुतिसमाः· तत्तच्छ्रुत्युचिता ग्रामाः ॥ ५८ ॥

त्रिलक्षी तानानां नवशतयुतैः सप्तदशभिः
सहस्रैर्युक्ताष्टादश परिचिता जातिरपि च ।
त्रिधा रागाः पञ्चाशदथ परिपूर्णादिभिदया
विशुद्धाः संकीर्णा अपि बहुविधाः प्रादुरभवन् ॥ ५९ ॥

तानानामेकोनपञ्चाशत्संख्यत्वेन प्रसिद्धानामपि त्रिलक्षीति, त-दुक्तं "मूर्च्छना एव तानाः स्युः शुद्धा आरोहणं श्रिताः । तेषां भूरितरा भेदाः कस्तान् कार्त्स्न्येन वक्ष्यति" ॥ इति । परिपूर्णादिभिदया रागाः पञ्चाशन्मुख्याः, त्रिधा प्रथमं त्रिविधाः, ततश्च विशुद्धाः संकीर्णाः, अपि· कारात् सालगाश्चेति बहुविधाः, यदुक्तं "स च रागस्त्रिधा पूर्णषाडवौ· डवभेदतः । तत्र सप्तस्वरः पूर्णः षट्स्वरैः षाडवो मतः ॥ पञ्चस्वरैरौ· डवः स्यात् प्रत्येकं त्रिविधस्तु सः । शुद्धसालगसंकीर्णभेदैर्भरतसंमतः ॥ अन्योपजीविताशून्यः शुद्धोऽन्यस्योपजीवनात् । सालगः स तु विज्ञेयः संकीर्णो द्व्युपजीवनात्" ॥ इति ॥ ५९ ॥

तत्र श्रुतिजातिमूर्छनानां
गमकानां चापि पञ्चदशकानाम् ।
व्यक्तिर्न कण्ठतट इति
विधिना विहिते चलाचले वीणे ॥ ६० ॥

गमकानां स्वरकम्पनानाम्, यदुक्तं "स्वरस्य कम्पो गमक" इति । चलाचले इति, यदुक्तम्, "स्वराणां चालनाद्वीणा चलवीणेति कथ्यते । अचला शुद्धविकृतस्वरैर्युक्ताच संमता" ॥ इति । तयोरेव श्रुत्यादीनां व्यक्तिरित्यर्थः ॥ ६० ॥

चित्रं विषमहो मह-
द्विहरासारम्भलीलायाम् ।
कण्ठैरेव हि तासां
तयोः परीक्षा परस्परं चक्रे ॥ ६१ ॥

तयोर्वीणयोः, चलवीणायाम् अचलवीणायां च तासां श्रुत्यादीनां परीक्षा कण्ठैरेव कर्तृभिश्चक्रे कृता । कण्ठोद्गीतश्रुत्यादिदृष्ट्यैव ते वीणे प्रमाणीक्रियेते इत्यर्थः । परस्परमिति, कदाचित् ताभ्यामपि स्वप्रमाण्यं प्रौढ्या संस्थाप्य कण्ठेषु परीक्षा चक्रे इति, विधिसर्गदूरवर्तिन्यस्ता गोप्य इति भावः ॥ ६१ ॥

ततश्च ।

आदिर्यतिर्निःसारुस्तथाड्डुतालस्तथा त्रिपुटसंज्ञः । रूपकझम्प-कमण्ठास्तथैकताली च रञ्जकः सूडः ॥ ६२ ॥

अथ तत्र प्रबन्धगानमनुकथयिष्यन् सूडाख्यप्रबन्धलक्षणस्य मतभेदेन वैविध्यात् तं स्वयमेव लक्षयति आदिरिति, आदितालः, तदादिभिरेव ताल्यन्तैर्नवभिस्तालैः सूडो भवति । रञ्जयतीति रञ्जकः ॥ ६२ ॥

ध्रुवलक्षणमण्ठलक्षणा-
वथ सूडावपि शुद्धसालगौ ।

त्रिविधा विषमा गतिस्तयो-
स्तत एतावपि रेजतुस्तदा ॥ ६३ ॥

ध्रुवस्य लक्षणं यत्र मण्ठस्य लक्षणं यत्र स च स च तावपि शुद्ध-सालगौ सूडौ ततः कण्ठत एव रेजतुः । अथ तयोः सूडयोर्त्रिविधा गति-रपि रराजेति वचनविपरिणामेन संबन्धः । "एलाकरणढङ्कीभिर्वर्तन्या गोवड्डेन च । लम्भरासैकतालीभिरष्टभिः सूड उच्यते" । इति शुद्धसूडल-क्षणम्,"आद्यो ध्रुवस्ततो मण्ठः प्रतिमण्ठो निसारुकः । अड्डतालस्ततो रास एकतालीति सप्त ते" । इति सालगसूडलक्षणं च रत्नाकराद्युक्तं ग्रन्थकृतां न संमतमित्यवसीयत इति ॥ ६३ ॥

ततश्च प्रबन्धगानानुबन्धे ।
थैथैथैथै तिगडतिगथै थेति पाठानुकृत्या
विन्यस्यन्त्यो भुवि पदतलं दोर्लतामन्तरिक्षे ।
वामावर्तं सकृदथ सकृद्दक्षिणावर्तमेवं
नृत्यन्त्यस्ताः सरसमधुरं मण्डलस्था विरेजुः ॥ ६४ ॥

सकृदेकवारं वामावर्तं, अथ तथैवैकवारं दक्षिणावर्तं चेत्येवम् ॥ ६४ ॥

वक्त्रे गानं तदभिनयनं पाणिपद्मे पदाब्जे
तालो ग्रीवाभुवि विधुवनं दोलनं नेत्रयुग्मे ।
वामावामस्खलनवलना तारकायां दृगन्तः
कृष्णे प्रेमा मनसि युगपत् तुल्यमासामथासीत् ॥ ६५ ॥

नृत्याङ्गभूतानां गानाभिनयादीनां पृथक् पृथगवस्थितिपरिपाटीमाह वक्त्र इति । । ग्रीवाभुवि ग्रीवाप्रदेशे विधुवनं वाद्यात्रैर्गीतार्थस्य वास्वा-दनसूचकं कम्पनम् । नेत्रयोर्दोलनं सभ्यकृतास्वादनतारतम्यावधानार्थम् । वामावामयोः सव्यदक्षिणयोः स्खलनस्य गतिलाघवानुकूलपरिवर्तनस्य वलना सुवलितत्वम् ॥ ६५ ॥

जानूत्क्षेपभुजावधूननपदन्यासैः सगर्भभ्रमै-
रत्युल्लासवशाद् द्रुतेऽपि नटने सा सुभ्रुवां मण्डली ।
अन्तर्वर्तिमुकुन्दकान्तिलहरीसूत्रेष्विवागुम्फिता
नो भग्ना न च वक्रतामुपगता सव्यापसव्यक्रमैः ॥ ६६ ॥

सगर्भभ्रमैः गर्भेऽन्तरा भ्रमो घूर्णनं तत्सहितैः । नो भग्ना न भङ्गं प्राप्ता ॥ ६६ ॥

पादन्यासैः सशब्दैर्मृदुमुखरमणीनूपुरध्वानरम्यै-
र्धींधींधींधींतधींधींधीत्यनुपममधुरैस्तालपाठैश्च मिश्रैः ।
सव्यासव्याङ्गदोलैः स्पन्दितकुचपटं मध्यभङ्गापशङ्कं
धुन्वाना बाहुवल्लीं ननृतुरतिमुदावर्तयोरेव तुल्यम् ॥ ६७ ॥

मध्यस्यातिकार्श्याद्भङ्ग इवाप्युपगता शङ्का यत्र तद्यथा स्यात् तथा ननृतुः । आवर्तयोर्वामदक्षिणयोः ॥ ६७ ॥

वैणिक्यो वैणविक्यो मृदु मृदु ननृतुः पादविन्यासमात्रै-
र्गायन्त्यस्तालधारिण्यपि किमपि तथा गीततालानुकृत्या ।
शङ्खानुद्वादयन्त्यो विदधुरथ तथा मौरजिक्योऽपि नृत्यं
देहं किन्त्वेकसूत्रग्रथितमिव दधुस्ताः समं नर्तकीभिः ॥ ६८ ॥

नृत्यानुरोधवशान्नर्तकीरनुसृत्य भ्रमन्तीनां वैणिक्यादीनामपि दैवात् तथैव नृत्यमेवाभूदित्याह वैणिक्य इति, उपलक्षणमेतत्, श्रमापनोदनार्थं व्यजनधारिणीनां ताम्बूलादिसमर्पिकाणां चानुचरीणामपि ॥ ६८ ॥

एवं सव्यापसव्यभ्रमणकौतुके ।

वामावर्तेन कृष्णो भ्रमति यदि तदा दक्षिणावर्तरीत्या
तन्वङ्ग्यो मण्डलस्था विदधति नटनं संमुखीनाः क्रमेण ।
इत्थं ताः सोऽपि शश्वत् सरससकुतुकं प्रातिलोम्यानुलोम्य-
स्वीकारेणैव नैव भ्रमिनटनकलाकेलिपारं स्म गाते ॥ ६९ ॥

तन्वङ्ग्यः कथंभूताः, कृष्णस्य संमुखीनाः । क्रमेणेति, यदि दक्षिणावर्तेन कृष्णो भ्रमति तदा ता वामावर्तेरीत्येत्यर्थः । नैव गाते स्म नैव प्रापुः, तत्तत्कौशलोद्गमस्याविरामादिति भावः ॥ ६९ ॥

दीपालोके प्रसरति यथा वामभागे पुरस्ताद्
ध्वान्तस्तोमः सरति सहसा दक्षिणेनैव पश्चात् ।
इत्यन्योन्यं प्रकटमुभयोर्व्यत्यये व्यत्ययः स्यात्
तासां तस्यापि च तनुमहःपूरयोस्तद्वदासीत् ॥ ७० ॥

पुरस्तादग्रप्रदेशे वामभागे प्रसरति सति दीपालोके ध्वान्तस्तोमः तच्छायारूपस्तत्पश्चात्प्रदेश एव तद्दक्षिणभाग एव सरति यथा तद्वत् ॥ ७० ॥

वाद्यादि मण्डलविलासि विलासिनीनां
नृत्यानुगं च हरिनृत्यसहायमासीत् ।
गानं तु भिन्नमभवत् सुदृशो जगुस्तं
चन्द्रादिकं स तु जगौ ललितानि चासाम् ॥ ७१ ॥

मण्डलविलासि मण्डलस्थं वाद्यादि हरिनृत्यसहायं सत् विलासिनीनां नृत्यानुगं च आसीत् । सुदृशः स्त्रियः तं श्रीकृष्णं जगुः । स तु श्रीकृष्णः चन्द्रादिकम् । तच्च क्वचित् श्लेषेण क्वचिद् द्विजाक्षरपरिवर्तेन च सह गानं ज्ञेयम् ।

यथा ।

अखिलरसामृतमूर्तिः प्रसृमररुचिरुद्धतारकापालिः ।
कलितश्यामाललितो राधाप्रेयान् विधुर्जयति ॥
यामिनीकृतरुचिः शुचिकान्तिश्चन्द्रिकावलिविभाविकचश्रीः ।
षट्पदालिकलितैः कलगीतैः पश्य भाति कुमुदाकर एषः ॥ इति

आसां ललितानि चेति । यथा ।

वदनं मधुरिमसदनं चलनं दलनं करीन्द्रकीर्तीनाम् । हसितं सुदृगभिलषितं तव सवयो वर्ण्यतां केन ॥ इति ॥ ७१ ॥

तासां तालविमोक्तनिर्भरहतिक्षोभेण निःसारिणा
पादाम्भोरुहशीधुनेव पुलिनं तत् सिक्तमासीदिव ।
यत् तादृश्यतिमात्रचित्रनटनावेगेऽपि नैकं रजो
धूतं किंतु रजांसि तान्यपि तदानन्देन जाड्यं ययुः ॥ ७२ ॥

शीधुनेति, प्रस्वेदरूपमधुनेत्यर्थः ॥ ७२ ॥

किंच ।

प्रत्येकं सुदृशां कपोलफलके बिम्बोद्गतं नृत्यतः
श्रीकृष्णस्य वपुः सनृत्यमपि तद् ब्रूते स्म तं किंचन ।
तासामाननपद्मधूननविधिव्याधूतमासां यथा
नानानासुरसा तथाच भवतो नृत्यस्य लक्ष्मीरिति ॥ ७३ ॥

बिम्बोद्गतं, प्रतिबिम्बितमित्यर्थः । तत् कृष्णस्य सनृत्यं वपुः कर्तृ तं श्रीकृष्णं नृत्यन्तं किंचन ब्रूते स्म । आसां यथा नृत्यस्य लक्ष्मीः सुरसा तथा भवतः । नानाना इति प्रौढ्या निषेधत्रयम् ॥ ७३ ॥

नृत्यन्त्यः कतिचित् सरोरुहदृशः प्रारब्धनृत्यान्तरे
कृष्णालिङ्गनमङ्गलोत्सवनवप्रोद्भूतरोमोद्गमाः ।
जातोत्कण्ठमकुण्ठकण्ठकुहरं प्रोन्नीय रागान्तरं
गायन्ति स्म निशम्य यत् प्रमुमुहुः संगीतदेव्योऽपि च ॥ ७४ ॥

उत्सवेन नवं नवं यथा स्यात् तथा प्रोद्भूतो रोमोद्गमो यासां ताः ॥ ७४ ॥

असंकीर्णान् जातिश्रुतिगमकवर्गेण सरसान्
सगान्धारग्रामान् विशकलितभेदान् स्वरगणान् ।
समुन्निन्ये काचित् सममघभिदा तेन च मुहुः
पुपूजे सा साध्वित्यनुपममुदा मोदितहृदा ॥ ७५ ॥

विशकलिता अखण्डिताः संपूर्णा एव भेदा येषां तान् ॥ ७५ ॥

सगरिमपधनिषु सकलालंकृतिमणिभिः सुमञ्जुलश्रुतिषु ।
स्वरसमुदयेषु तासां धामसु च प्रीतिमाययौ कृष्णः ॥ ७६ ॥

तासां स्वरसमुदयेषु धामसु रूपेषु च कृष्णः प्रीतिम्• आययौ प्राप्तः । उदयेषु कथंभूतेषु, सगरिमपधनिषु षड्जगान्धारर्षभमध्यमपञ्चमधैवतनिषादेषु । पक्षे स इति कृष्णविशेषणं, गौरवं पाति रक्षति यद्गुनं लावण्यमाधुर्यादि तद्वत्सु । सकलाः कलसहिताः सकौशला वा• अलंकृतिमणयः• आलप्यङ्गभूतमुख्यालंकाराः• तैः सुमञ्जुलाः श्रुतयो द्वाविंशतिर्येषां तेषु, पक्षे स्पष्टम् । श्रुतिः श्रोत्रं ख्यातिः श्रवणं वा ॥ ७६ ॥

ताधिक् ता.धिगिति ननाद यन्मृदङ्ग-
स्तच्छ्रुत्वा सुरपुरनर्तकीसमाजः ।
आश्वासं समलभत स्वकीयनिन्दा-
वादोऽपि श्रवणरसायनः स तासाम् ॥ ७७ ॥

ता नर्तकी धिक् ॥ ७७ ॥

एवं स्वातन्त्र्येण नर्तित्वा समनन्तरमनन्तरसोऽन्तरसोद्भयमाणमदमदनानन्दो मुकुन्दो नृत्यन्तीषु वादयन्तीषु मण्डलस्थासु रमणीमणीषु ।

वैदग्ध्येवास्य देव्या स्वयमिव रचितां सर्वखेदापनुत्त्यै
सौहित्योपायसिद्धौषधिमिव सरसां प्रेमपीयूषवर्षैः ।
दोर्भ्यामालिङ्ग्य राधां सतडिदिव घनो हेमवल्ल्येव रुद्ध-
स्तापिच्छः पिच्छमौलिः सह नटनकलाकौतुकेनाननर्त ॥ ७८ ॥

एवं स्वातन्त्र्येण नर्तित्वा दोर्भ्यां राधामालिङ्ग्य ननर्त । कीदृशीम्, अस्य श्रीकृष्णस्य सर्वखेदापनुत्त्यै वैदग्ध्या देव्येव स्वयं रचिताम् । सौहित्यं तृप्तिः । सतडिदित्यादिदृष्टान्तद्वयेन सौन्दर्यसुवलितत्वे उक्ते ॥ ७८ ॥

भग्नाधम्मिल्लमनन्मथेषुकलिकाकृष्टेर्मणिस्त्वम्बके।
राधा तेन समं ननर्त यदिदं तद्वीक्ष्य ताः सुभ्रुवः ।
तस्याः लास्यकलानुकूल्यकलने जातस्पृहा अप्यमू-
र्गातुं वादयितुं तथानुनटितुं नैश्वर्यमापेदिरे ॥ ७६ ॥

ऐश्वर्यं न· आपेदिरे, न शक्ता बभूवुरित्यर्थः ॥ ७९ ॥

गुणसंप्रसारणविकारदीर्घह्रस्वभावाः किल येऽभ्यासधर्मास्ते किल न सर्वेषेति नैतदाश्चर्यम्, अभ्यासमन्तरेणापि तस्यास्तद्गुणानां स्वभावसिद्धत्वात् ॥ ८० ॥

बोभूयते विविद्युते चकार ददौ पापच्यते· इत्यादिषु क्रमेण ये "गुणो यङ्लुकोः" रित्यादिलक्षणैर्गुणादयोऽभ्यासधर्माः· द्विरुक्तस्य पूर्वोऽभ्यासस्तदीया धर्मास्ते न सर्वत्र न सार्वत्रिकाः, क्वचिद्व्यभिचरन्त्यपीत्यर्थः, यदुक्तम्, "अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्त" इति । पक्षे गुणानां नृत्यगीतवाद्यित्यादीनां सम्यक् प्रसारणमाविष्करणं तच्च, विकाराणाम्· औत्सुक्यमदचापल्यावेगादीनां मनोविकाराणां दीर्घह्रस्वभावा दैर्घ्यह्रस्वत्वानि, कदाचिद्वृद्धत्वं कदाचिदल्पत्वमित्यर्थः, ते च ते तथा· अभ्यासः पौनःपुन्येनानुशीलनं तद्धर्माः, तत्र भवा इत्यर्थः, तथाभूता अपि न सर्वत्र, नहि सर्वेषु जनेष्वेवाभ्यासमात्रेणैव ते भवन्तीत्यर्थः, तस्या राधायास्तद्गुणानां तेषां गुणानां स्वभावसिद्धत्वात्, अभ्यासं विनापि नित्यं सत्ता वर्तत एवेत्यर्थः ॥ ८० ॥

यदालोक्य· उर्वशी वशीभूता· अपरा अप्सरसः सरसस्त्रपामयस्य पयोऽवललम्बिरे इव गताश्चारण्यश्चारणसीमानं मानं जहुः सिद्धनार्यो नार्योचितचरिता गन्धर्वा देवमुनिवध्वश्च केवलं कुसुमानि किरन्ति स्म स्मरन्ति स्म स्मरगरिमसौभाग्यम् ॥ ८१ ॥

यत् स्वभावसिद्धत्वम्· आलोक्य, पर्यालोच्येत्यर्थः, त्रपामयस्य सरसस्तडागस्य पयोऽवललम्बिरे,त्रपामग्ना बभूवुरित्यर्थः, चारण्यः· चारण-

स्त्रियः· अरण्यसीमानं लज्जया वनान्तम् । कुसुमानि किरन्ति स्मेति, तच्च वर्पणार्थमिति भावः ॥ ८१ ॥

राधाकृष्णौ स्वरौघं गरिमनिरिगमं धैवतांसग्रहाभ्या-
मारोहेणावरोहेण च गमकमयं रम्यमुल्लासयन्तौ ।
तेना तेनेति नानारसमथ नटनं गानमप्यूरुरागौ
तेनाते नेतिलोकं सरभसकुतुकोल्लासमन्योन्यजिष्णू ॥ ८२ ॥

धैवतस्य· अंशश्च ग्रहश्च ताभ्यां सह, तदुक्तम्· "अंशस्तु व्यञ्जको गेये यस्य सर्वेऽनुगामिनः । यः स्वयंग्रहतां याति न्यासादीनां प्रयोगतः" ॥ इति, "ग्रह आग्रह इत्युक्तो यो गीतादौ समर्पितः" इति, "न्यासः स्वरस्तु स प्रोक्तो यो गीतस्य समाप्तिकृत्" इति । तेना तेना· इत्यालापे मङ्गलसूचकम् । तेनाते विस्तृतवन्तौ । न· इतिलोकं, लौकिकप्रकाशरहितं यथा स्यात् तथेत्यर्थः, शब्दप्रादुर्भावेऽव्ययीभावः ॥ ८२ ॥

तालावसानसमये करपद्मकोश-
न्यासं हरिः प्रियतमोरसि संविधत्ते ।
वामेन पाणिसरसीरुहकोरकेण
सापि प्रियस्य विनिरस्यति बाहुदण्डम् ॥ ८३ ॥

तयोर्नाट्याङ्गसंपादनेनैव शृङ्गारविलासचातुरीमाह तालावसानेति ॥ ८३ ॥

एवंच वञ्चनरहितप्रणयोन्मुखेन मुखेन निखिलसुन्दरीहृदयदरीहृदयमतिसहृदयो हृदयोदितमदनमोदामोदातिलालसोऽलसोऽपि क्षणमपि ताभिर्मण्डलगताभिराभीरभीरुभिः सार्धं क्षणमपि मध्यस्थितया समं निःसमं नटति ॥ ८४ ॥

हृदयदरीं हरतीति "क्विप्" । अयम्· श्रीकृष्णोऽतिसहृदयः ॥ ८४ ॥

एवमाहितवलयसलयसरसनृत्यविलासेन रुचिरं चिरं समयं गमयित्वा प्रतिव्यक्ति व्यक्तिमापत्स्यमानं पृथक् पृथक् तरतमभावेन

भावेन चाक्षिकेन सुकोमलकरकमलकमनीयामलास्यं लास्यं दिदृक्षुरु-वाच ॥ ८५ ॥

आक्षिप्तोऽर्पितो वलये रासमण्डले सलयः सरसश्च यो नृत्यविलासस्तेन । प्रतिव्यक्ति जने जने व्यक्तिं प्राकट्यमापत्स्यमानं प्राप्स्यमानम्, सुकोमलाभ्यां करकमलाभ्यां कमनीयं च तद्· अमलम्· आस्यं यत्र तच्चेति तथा तत् ॥ ८५ ॥

अये क्षणमधुना विरम्यतां रम्यतां पुनरालोकयिष्ये तदुचितं विश्रमणमिति सर्वासु हिमवालुकासमहिमवालुकासमवेते पुलिनोदरे दरोहितालस्यलस्यमानतया सलीलमुपविष्टासु तासु तस्मिन्नपि ॥ ८६ ॥

हिमवालुका कर्पूरः । लस्यमानतया काम्यमानत्वेन । तस्मिन्नप्यु-पविष्टे सति ॥ ८६ ॥

समयकोविदा विदामग्रणीः सपरिजनवृन्दा वृन्दा वृन्दावनदेवता योगमाया च मा·याचमाना तस्य च तासां च प्रीतिविशेषमशेषमतिमनोहरं मणिमयचषकतिरस्कारि पलाशपलाशपुटकपटलोपनीतमतिशीतमतिमधुरफलफलरसकुसुमरसादिकं रसादितमपरिमितमितरानिर्वाह्यमतिरम्यताम्बूलमाल्यानुलेपसहितं हितं तत्समयस्य समुपनिन्यतुः ॥ ८७ ॥

पलाशस्य किंशुकवृक्षस्य पलाशपुटकानां दलपुटकानाम् । अतिमधुरं फलं परिणामो यस्य तादृशं फलरसम्, रसादितं रसैः स्वादैरदितमखण्डितम्, अतिरस्कृतमित्यर्थः ॥ ८७ ॥

तदवलोक्य वयस्यगणैः सह कृतं पुलिनजेमनमनवरतानन्दतुन्दिलेन वयस्याजनैः सह करिष्यमाणपुलिनजेमनमनसा मनसा विस्मारयतेव तेन ताभिः सग्धिवैदग्धिकया कमपि समयं गमयितुमारम्भे विधीयमाने दिवि दिविषदो भाविकौतुकदिदृक्षयाक्षयाभिलाषा नाप-

सस्नुः, नापि सापराधतया तत् पुनरहो रहोजेमनं च दद्रुगुरवि
स्वस्वपटैरेव तिरस्करिणीं विस्तारयामासुः ॥ ८८ ॥

वयस्यगणैः सह कृतं पुलिनजेमनं विस्मारयतेव मनसा करणेन तेन कृष्णेन कर्त्रा सगिधवैदग्धिकया सहभोजनवैदग्ध्येन समयं गमयितु-मारम्भे क्रियमाणे सति । तेन कथंभूतेन, वयस्याजनैः सह करिष्यमाणे पुलिनजेमने मनो यस्य तेन । तिरस्करिणीमन्तः पटम्, "प्रतिसीरा जवनिका स्यात् तिरस्करिणी च से"त्यमरः ॥ ८८ ॥

एवमतिकौतुकेन केनचिद् रहसि हसितोपहसितादिना मदन-मदनटनतरसा रसान्तरप्राप्ताविव विवर्जितह्रीसंकोचे बलवत्तरतरङ्गे प्रेमानन्दसरस्वति स्वतिसहजे सह-जेमनं फलफलरसपानकादेर्विधाय वनदेवताभिरपिहितादराभिराभिराम्यतः समुपनीतशीतसलिलमाच-म्य घनसारसारस्यमूलताम्बूलवीटिकामितरेतरतरलतरकौतुकोपनी-यमानामास्वाद्य ॥ ८९ ॥

प्रेमानन्द एव सरस्वान् समुद्रस्तस्मिन् बलवत्तरतरङ्गे सति । कथं भूते, सुष्ठु- अतिसहजे, निरुपाधिके- इत्यर्थः, मदनमदेनैव नटनतरो ना-ट्यवेगस्तेन रसान्तरप्राप्ताविव सत्यां विवर्जितो ह्रीसंकोचो यत्र तस्मिन् । अपिहितादराभिः- अनाच्छादितसंमानाभिः । अभिरामस्य भाव आभि-राम्यम् ॥ ८९ ॥

तरणितनयया नययापितेन कुमुदगन्धिना मरुता कृतानि दीर्घीकुर्वता मदकलकलहंससारसानां मृदुमधुरेण मन्दमुपवीज्यमानो-ऽज्यमानोऽतिसारस्येन पुनरपि वीरपानानन्तरं कामसंग्रामकलामिव लास्यलीलामारभमाणो लीलापवेशमपहाय समुत्तस्थौ ॥ ९० ॥

तरणितनयया नयेन नीत्या यापितेन प्रस्थापितेन ॥ ९० ॥

उत्थाय च ।

[1]पूर्वं गानाद्यकृत यदहो हन्त तस्यातिरिक्तं
रागं वंश्या स्वयमथ जगौ दुर्गमं गीतविद्भिः ।
ग्रामं गान्धारकमुपनयन्नेष तस्यानुगाने
गायन्त्यस्ताः पुनरनुययुर्मौरजिक्यादियुक्ताः ॥ ६१ ॥

तन्त्रीकण्ठादिसर्वस्वरमिलनविधौ चारुसंपन्नमात्रे
पङ्क्तीभूय स्थितानां कनकदलरुचां गायनीनां पुरस्तात् ।
स्थित्वा तालावसाने झटिति झणझणत्कारि संगीतविद्यो-
द्गीर्णं धामेव काचिन्नटनरसकलाचार्यवर्याविरासीत् ॥ ६२ ॥

तासां परःसहस्राणां परस्परवैलक्षण्येन प्रत्येकमेव पर्यायेण नृत्यं कार्त्स्न्येन वर्णयितुमशक्नुवन् दिग्दर्शनार्थमेकस्याः कस्याः कस्याश्चन राधासख्या नृत्यं वर्णयति तन्त्रीत्यादिना । कनकदलरुचामित्यनेन तासां मण्डलीभावमभिव्यज्य तन्मध्ये संगीतविद्योद्गीर्णं धामेवेत्यनेनास्याः कर्णिकायमानत्वं व्यञ्जितम् ॥ ९२ ॥

आकुञ्च्यज्जानु कृत्वा पृथुनि कटितटे वाममर्धेन्दुमन्य-
द्व्याकोशं पद्मकोशं मृदुललितमथोन्नीय कुञ्चत्कफोणि ।
वीणावीणावलम्बं हसितवलिसमुच्छूनवक्षोजभारं
तस्थौ सव्यापसव्यस्खलदलसलसत्तारकैर्दृष्टिपातैः ॥ ६३ ॥

वामं जानु· अर्धेन्दुम्· अर्धेन्दुमिव· आकुञ्चत् कृत्वा· अन्यद् दक्षिणं जानु व्याकोशं प्रफुल्लं पद्मकोशमिव कृत्वा तस्थौ । यद्वा, अर्धेन्दुपद्मकोशौ हस्तकविशेषौ । वामदक्षिणाभ्यां पाणिभ्याम्· उन्नीय, अभिनीयेत्यर्थः । ललितमित्यादीनि पञ्च क्रियाविशेषणानि ॥ ९३ ॥

---

१ स्पष्टार्थं पद्यमवगम्य परित्यक्तं व्याख्यात्रा ।

अङ्गैः प्रस्वेदमेदाज्जतुभिरिव नवैरङ्गमङ्गं स्पृशद्भि-
र्दुःसाध्यां नृत्यकृद्भिर्विषमगतिभिदां हेलयोल्लासयन्ती ।
लीलोत्सर्पापसर्पक्रमविधुतभुजा सारयाकुञ्चनाभ्यां
हस्तैर्हंसास्यमुख्यैरभिनयकुशला मन्दमन्दं ननर्त ॥ ९४ ॥

प्रकृष्टेन स्वेदेन मेदुरैः क्लिन्नैर्जतुभिरिवेत्यनेन कटिललाटयोः धाजान्वाद्यङ्गानामाकुञ्चनेनान्योन्यस्पर्शासंभाव्यं तस्या नास्तीति द्योतितम् । हस्तैर्हंसकैर्हंसास्यकर्तरीमुखपद्मकोशादिभिः ॥ ९४ ॥

क्षीणक्षीणोदरमतिशयस्फारवक्षोजभारं
पार्ष्णिद्वन्द्वोपरि परिलुठद्वेणि शाम्यद्वलीकम् ।
पृष्ठे भुग्ना व्यजयत करौ धुन्वती तालमोक्षे
स्मारं सज्जीकृतमिव धनुश्चाम्यकं व्युत्क्रमेण ॥ ९५ ॥

क्षीणादपि क्षीणमुदरं यत्र तद्यथा स्यात् तथेति पूरकश्वासेन पृष्ठवक्रिम्णा तथाभावात्, शाम्यद्वलीकमिति तथाभावे त्रिवलिविलोपात् ॥ ९५ ॥

सा जानुभ्यां क्षितितलमवष्टभ्य विस्फार्य बाहू
वक्त्रामोदभ्रमदलिकुलं लोलहारावतंसम् ।
राजत्तेजःपरिधि फणितालंकृति व्याजुघूर्णी
वेगक्षिप्ता कुसुमधनुषः काञ्चनी चक्रिकेव ॥ ९६ ॥

वक्त्रामोदेत्यादीनि व्याजुघूर्णी· इति क्रियाविशेषणानि चत्वारि भ्रमदलीति, मुखस्य चतुर्दिक्षु भ्रमतोऽनुगमनात् । राजन्तस्तेजसां कान्तीन गात्रगौरिमहारादिश्वेतिमबिम्बाधरादिरक्तिमभ्रमरादिश्यामलिम्नां परिधयो मण्डलानि यतस्तद्यथा स्यात् तथा ॥ ९६ ॥

पादाङ्गुल्यावलम्ब्य क्षितितलमलघुस्फारवक्षोजजानुः
पार्ष्णिद्वन्द्वोपविष्टा ह्रसितवलिनमत्त्रीवि विस्तीर्णवक्षाः ।

अङ्गुष्ठौ बद्धमुष्ट्योः कुचभुवि करयोर्न्यस्य तालानुकृत्या-
लंकारान् कूजयन्ती गदति तथतथे थेतथे थेतथेति ॥ ६० ।

पार्ष्णिद्वन्द्वे· उन्नतीकृते· उपविष्टा कृतोपवेशा, आसञ्जितश्रोणि देशेत्यर्थः । ह्रसितवलीति, वक्षस उन्नमने त्रिवलिह्रासात् । नमद्ग्रीवेति, पूरकश्वासेन ग्रीव्याः किंचिच्छैथिल्यात् । बद्धमुष्ट्योः करयोः· अङ्गुष्ठौ कुचभुवि कुचाग्रे विन्यस्य ॥ ९७ ॥

युक्तानां कण्ठतन्त्रीचयशुषिरघनानद्धवाद्यैकतायां
पश्चात् ·सख्यंसराजद्भुजलतमदती चारु ताम्बूलवीटीम् ।
भ्रश्यन्मञ्जीरबन्धे प्रणयिपरिजनोपात्तपादा समन्ता-
दङ्गुल्या वीज्यमाना श्वसितचलकुचा सा विशश्राम रामा ॥ ६८ ॥

ततश्च गानसमाप्तौ सहसैव मण्डलमध्यादन्तर्धाय तत्पश्चात्प्रदेशे तिष्ठन्त्यास्तस्या विश्रामप्रकारमाह युक्तानामिति । कण्ठेन सह तन्त्र्यादिवाद्यानामेकतायाम्· एकीभावे युक्तानाम्· उद्युक्तानां गायन्त्यादीनां पश्चात् पृष्ठदेशे स्थित्वा । चलकुचेति, कुचशब्देन कञ्चुलिका लक्षिता ॥ ९८ ॥

विश्रम्य च चणं पुनर्गायन्त्यादिषु गीतान्तरावतारमेलनालापलालित्यं संपादयन्तीषु प्रविश्य· अभिरूपज्येष्ठा ज्येष्ठा मदनगर्वतर्जनी तर्जनी भुवनसौरूप्यसारमध्यमा मध्यमा रतिमदनामिकानामिका वैचित्र्यैकनिष्ठा कनिष्ठा चेति ललितकरशाखामधुरिमा ॥ ६६ ॥

अभिरूपमाभिरूप्यम् । भुवनेषु यत् सौरूप्यसारं श्रेष्ठसौन्दर्यं तस्यापि मध्ये मा शोभा यस्याः सा । रतेः कामपत्न्या अपि मदं नमयतीति तथा सा । इति हेतोर्ललितः करशाखानां वर्णितवैशिष्ट्यानां ज्येष्ठादीनां मधुरिमा यस्याः सा ॥ ९९ ॥

कराभ्यां कराभ्यां दर्शितगीतपदार्थौ पदार्थावलीव मनोभवस्य मनो·भवस्य च निर्नर्तिषापरं कुर्वतीव नर्तितुमारेभे ॥ १०० ॥

भवस्य महादेवस्यापि मनश्चेतः ॥ १०० ॥

तिर्यक्कृत्योन्नमितनमितस्फारवक्षोरुहस्फिक्
भं कुर्वद्भिः कनकवलयैर्धुन्वती पाणिपद्मे ।
तत्ता तत्थे तिक्किडतिक्किथे तालमुत्थापयन्ती
पर्यायेणोत्क्षिपति सुदती जानुनी दोर्लते च ॥ १०१ ॥

तिर्यक्कृत्य तिरश्चीनीकृत्य· उन्नमितौ· आरोहणमार्गेण· उत्तुङ्गीकृतौ नमितौ पुनस्तत्र एवावरोहणमार्गेण नम्रीकृतौ स्फारौ वक्षोरुहौ स्फिचौ च यया सा ॥ १०१ ॥

ऊर्ध्वोर्ध्वभ्रमिभिरुपर्युपर्युदीर्णै-
र्गौरिम्णां परिधिभिरुल्ललास गौरी ।
गायन्त्यादिकनलिनीवनादिवोच्चै-
र्वात्याभिः किमपि धुता परागराजी ॥ १०२ ॥

ऊर्ध्वोर्ध्वभ्रमिभिरिति, उपवेशमारभ्याति शनैः शनैः सामान्यलवितेन देहोन्नमनेनोर्ध्वावस्थितिपर्यन्तं भ्रमणैरित्यर्थः, अत एव· उदीर्णैः· उद्गतीभूतैः परिधिभिर्मण्डलैः ॥ १०२ ॥

तेजोवल्लीमिव तनुलतामन्तरिक्षे धुनाना
सेयं नाना गतिमतितरां दुष्करां व्याततान ।
नेदं शिक्षाप्रकटनमहो किंतु लावण्यदेव्याः
पादावस्या भुवि न पततः केवलं हेलयैव ॥

किंच ।

विद्युद्वल्ली यदि चिरतरस्थेयसी निष्प्रयोदा
हस्तप्राप्या मृदुलमरुता तादृशं धूयमाना ।
तालोल्लासध्वननमुखरा जायते दैवयोगात्
तर्ह्येवासौ नटनविदुषी सोपमत्वं बिभर्ति ॥ १०३ ॥

तालानां तत्ता थैया· इत्यादीनाम्· उल्लासपूर्वकध्वननेन मुखरा । नटनविदुषी नृत्यपण्डिता ॥ १०३ ॥

॥ शेषमग्रे ॥

श्रीगणेशाय नमः ।

## ॥ श्लोकवार्त्तिकम् ॥

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्द्धधारिणे ॥ १ ॥
अभिवन्द्य गुरूनादौ शिष्यधीपद्मिनीरवीन् ।
तत्प्रसादात्करिष्ये ऽहं मीमांसाश्लोकवार्त्तिकम् ॥ २ ॥
तद्विद्वांसो ऽनुगृह्णन्तु चित्तस्रोतैः प्रसादिभिः ।
सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः ॥ ३ ॥
न चात्रातीव कर्त्तव्यं दोषदृष्टिपरं मनः ।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥ ४ ॥
कुतो वा गृह्णते दोषं सूरयो मद्विधोक्तिषु ।
नेष्यते यः परस्योपि स स्वयं गृह्यते कथम् ॥ ५ ॥
निर्दोषत्वैकवाक्यत्वं क्व वा लोकस्य दृश्यते ।
सापवादा यतः केचिन्मोक्षस्वर्गावपि प्रति ॥ ६ ॥
आगमप्रवणश्चायं नापवाद्यः स्खलन्नपि ।
न हि सद्वर्त्मना गच्छन्स्खलितेष्वप्यपोद्यते ॥ ७ ॥
यथाकथंचिदारब्धा त्रयीमार्गानुसारिणी ।
वाग्वृत्तिरल्पसारापि श्रद्दधानस्य शोभते ॥ ८ ॥
मीमांसाशास्त्रतेजोभिर्विशेषेणोज्ज्वलीकृते ।
वेदार्थज्ञानरत्ने मे तृष्णातीव विजृम्भते ॥ ९ ॥
प्रायेणैव हि मीमांसा लोके लोकायतीकृता ।
तामास्तिकपथे कर्तुमयं यत्नः कृतो मया ॥ १० ॥

## ॥ अथातोधर्मजिज्ञासा ॥ १ ॥

अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम् ।
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥ ११ ॥
सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्य चित् ।
यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ॥ १२ ॥
मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता ।
न शुश्रूषयितुं शक्या प्रागनुक्त्वा प्रयोजनम् ॥ १३ ॥
विद्यान्तरेषु नाप्येतद्यद्यपीष्टं प्रयोजनम् ।
अनर्थप्रापणं तावत्तेभ्यो नाशङ्क्यते क्वचित् ॥ १४ ॥
मीमांसायां त्विहाज्ञाते दुर्ज्ञाते वाऽविवेकतः ।
न्यायमार्गे महान्दोष इति यत्नोपपद्यते ॥ १५ ॥
तस्मात्प्रयोजनं पूर्वमुक्तं सूत्रकृता स्वयम् ।
यत्तेनोक्तं[1] वदेयुस्तद्भाष्यकारादयः कथम् ॥ १६ ॥
सिद्धार्थं ज्ञातसंबन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन कर्तव्यः[2] संबन्धः सप्रयोजनः ॥ १७ ॥
शास्त्रं प्रयोजनं चैव संबन्धस्याश्रयावुभौ ।
तदुक्त्यन्तर्गतस्तस्माद्भिन्नो नोक्तः प्रयोजनात् ॥ १८ ॥
सिद्धिः श्रोतृप्रवृत्तीनां संबन्धकथनाद्यतः ।
तस्मात्सर्वेषु शास्त्रेषु संबन्धः पूर्वमुच्यते ॥ १९ ॥
यावत्प्रयोजनेनास्य संबन्धो नाभिधीयते ।
असंबद्धप्रलापित्वाद्भवेत्तावदसंगतिः ॥ २० ॥

---

१ यत्स्वेनोक्तमिति पाठान्तरम् ।
२ द्रष्टव्य इति वक्तव्य इति वा पाठः ।

इह त्वाक्षिप्य संबन्धं भाष्यएवाभिधास्यते ।
धर्मप्रसिद्ध्यसिद्धिभ्यां तस्मान्नान्योऽभिधीयते ॥ २१ ॥
न चाप्यथाथशब्देन शास्त्रसंबन्ध उच्यते ।
संबन्धं क्रिययोर्ह्येष ब्रूते शास्त्राच्च ते पृथक् ॥ २२ ॥
यो ऽप्ययं शास्त्रसंबन्धो वर्ण्यते कैश्चिदादितः ।
क्रियानन्तर्यरूपो वा गुरुपर्वक्रमोपि वा ॥ २३ ॥
तदतद्भावयोस्तस्य विशेषो नोपलभ्यते ।
श्रोतुर्विधौ निषेधे वा ज्ञाने वा शास्त्रगोचरे ॥ २४ ॥
तस्माद्व्याख्याङ्गमिच्छद्भिः सहेतुः सप्रयोजनः ।
शास्त्रावतारसंबन्धो वाच्यो नान्यस्तु निष्फलः ॥ २५ ॥
लोक इत्यादिभाष्यस्य षडर्थान्संप्रचक्षते ।
भाष्यकारानुसारेण प्रयुक्तः स्यादितः पृथक् ॥ २६ ॥
सर्वव्याख्यामुपालम्भं प्रत्याख्यानं तथा परे ।
परिसंख्यास्तुती केचिदथ शब्दस्य दूषणम् ॥ २७ ॥
साधारणी विशिष्टा च सूत्रव्याख्या द्विधा मता ।
विशिष्टा प्रतिसूत्रं या सर्वार्था त्वियमुच्यते ॥ २८ ॥
प्रवृत्तिस्तु पदेष्वेव निवृत्तिः सूत्रसंश्रया ।
वेदवाक्याविरुद्धेषु न तु सर्वेषु केषु चित् ॥ २९ ॥
अध्याहारस्य वाक्येषु व्यत्यासस्य च संभवः ।
तेनैषामितिसूत्राणां पारार्थ्ये सत्यपि ग्रहः ॥ ३० ॥
एवशब्दोल्पवाच्यत्वादस्यावृत्तौ तु गौरवम् ।
प्रसिद्धत्वादवाच्यं चेन्न दोषः पुंगिरामयम् ॥ ३१ ।
व्याख्याङ्गत्वाभिमानेन योध्याहाराद्यपेक्षते ।
स्वसंज्ञां वापि तस्येदं शास्त्ररूपं निरूप्यते ॥ ३२ ॥

वृत्त्यन्तरेषु केषांचिल्लौकिकार्थव्यतिक्रमः ।
शब्दानां दृश्यते तेषामुपालम्भो ऽयमुच्यते ॥ ३३ ॥
अथातः इत्ययं लोके नानन्तर्ये प्रयुज्यते ।
तस्मात्तादर्थ्यमेतस्य परिभाषादिभिर्भवेत् ॥ ३४ ॥
प्रसिद्धहानिः शब्दानामप्रसिद्धे च कल्पना ।
न कार्या वृत्तिकारेण सति सिद्धार्थसंभवे ॥ ३५ ॥
सूत्रार्थे क्रियते चैवं दूरे वेदार्थनिर्णयः ।
तत्र यत्नस्य भारत्वं वक्तृश्रोत्रोः प्रसज्यते ॥ ३६ ॥
न व्याख्यास्यति सूत्राणि चोदनार्थपरत्वतः ।
यत्तस्य परिहारो ऽयं प्रत्याख्यानेन वोच्यते ॥ ३७ ॥
प्रयासो वेदवाक्येषु कार्यः सूत्रेष्वनेन किम् ।
फलवत्त्वाफलत्वाभ्यामेभिः कारणसंमतैः ॥ ३८ ॥
चोदनार्थ उपेतव्यो नोभयं यत्नगौरवात् ।
पदार्थानां प्रसिद्धत्वाद्व्याख्येयं नावशिष्यते ॥ ३९ ॥
एवंशब्दादिको यन्थः पक्षे चास्मिन्समर्थ्यते ।
पदच्छेदाद्यभावेन प्रत्याख्यानमतिस्त्वियम् ॥ ४० ॥
अधीत्यैव हि सूत्रार्थमतिरिक्तादि चेष्यते ।
नत्वशक्तमिदं सूत्रं सम्यक्सूचितमित्यपि ॥ ४१ ॥
सूत्रे चागमकत्वादि प्रत्याख्याने विरुध्यते ।
न चोपायानभिज्ञेन शक्योपेयावधारणा ॥ ४२ ॥
नान्यतो वेदविद्भ्यश्च सूत्रवृत्तिक्रियेष्यते ।
प्रत्याख्यानस्य हेतुश्च पदार्थानां प्रसिद्धता ॥ ४३ ॥
योक्ता सा वेदवाक्यानां तुल्यार्थत्वान्निवारयेत् ।
वाक्यार्थे तत्र संदेहाद् व्याख्यानं चेत्प्रवर्तते ॥ ४४ ॥

सूत्रेष्वपि समानत्वात्प्रत्याख्यानं न युज्यते ।
न व्याख्यातव्यमित्येवं प्रत्याख्याने च सिध्यति ॥ ४५ ॥
दुष्टव्याख्यानिषेधेन तदपेता न वार्यते ।
अस्य दुष्टविरुद्धत्वात्फल्गुत्वाच्चापि पूर्वयोः ॥ ४६ ॥
मध्यमे चातिदौर्जन्यात्परिसंख्यैव युज्यते ।
वैदिकं जैमिनीयं च यत्र वाक्यं विरुध्यते ॥ ४७ ॥
यथाश्रुतगृहीतेऽर्थे तत्रेदमुपदिश्यते ।
अध्याहारादिभिः सूत्रं व्याख्येयं च यथाश्रुतम् ॥ ४८ ॥
नेयं विरोधेन्योन्यस्य वैदिकानां भवन्तु ते ।
यथाधर्मावबोधस्य प्रमाणं वैदिकं वचः ॥ ४९ ॥
तदर्थनिर्णये हेतुर्जैमिनीयं तथैव नः ।
वाक्यसामर्थ्यतुल्यत्वात्तथा पदतदर्थयोः ॥ ५० ॥
अध्याहारादिभिर्मुक्ता व्याख्या सर्वत्र युज्यते ।
असंभवादवश्यं या विरोधेन्यतरस्य तु ॥ ५१ ॥
अन्यायकल्पना सापि विकल्पेन प्रसज्यते ।
प्राथम्येनावरुद्धत्वादुपायवशगोऽथ वा ॥ ५२ ॥
यथाश्रुतेन सूत्रेण न्याय्यं बाधेत चोदनाम् ।
तेन वेदाविरोधस्य सति संभव इत्ययम् ॥ ५३ ॥
विधीयते ऽर्थः शेषं तु यथाप्राप्तमनूद्यते ।
शेषभाजां भवेल्लोप इत्यध्याहारकल्पना ॥ ५४ ॥
विप्रकर्षात्पशोश्चेति विभक्तिः परिणम्यते ।
पदेन व्यवधानं तु लोके संनियमादिति ॥ ५५ ॥
सूत्रेण व्यवधानं तु पानव्यापदि कल्पितम् ।
पशुसामान्यविध्यादौ सूत्रमेवान्यथा कृतम् ॥ ५६ ॥

अग्नयश्च स्वकालत्वाद्द्वैयधर्मापयातनम् ।
व्याख्यातं वाक्यभेदेन गुणकल्पास्त्वमी कृताः ॥ ५७ ॥
औत्पत्तिकस्तु गव्यस्य तथोप्यिकक्रुभोरिति ।
दर्शनाच्च विशेषस्य तथाभ्युदय इत्यपि ॥ ५८ ॥
सूत्रकारप्रशंसा वा लोक इत्यादिनोच्यते ।
प्रसिद्धेरभिधानाद्धि न शिष्याः क्लेशिता यतः ॥ ५९ ॥
भवितव्यं तु तेनेति प्रागस्मादेकवाक्यता ।
वेदाध्ययनवाक्याद्वा तेनार्थेत्यस्य दूषणम् ॥ ६० ॥
प्रसिद्धार्थपदैः शक्यः सूत्रैर्वेदार्थनिर्णयः ।
न च सोस्त्यथशब्दस्य विना ते पूर्वकर्मणा ॥ ६१ ॥
प्रसिद्धार्थपदं युक्तं तच्च नास्तीति दूषणम् ।
प्रसिद्धोप्यथशब्दादेः किंपदार्थोत्र वर्ण्यते ॥ ६२ ॥
प्रदर्शनार्थमित्येके के चिन्नानार्थवाचिनः ।
समुदायादवच्छिद्य भवदासेन कल्पितात् ॥ ६३ ॥
शक्तितोवयवं चैव वर्णयन्त्यष्टमादिवत् ।
नचात्र चोदना व्याख्या गौरवं तत्र चोदितम् ॥ ६४ ॥
यद्वाक्षेपो यथोक्तस्य वृत्ताभावादसंभवात् ।
यदि लोकप्रसिद्धार्थग्रहणं क्रियते पदे ॥ ६५ ॥
स नास्त्यत्राथशब्दस्येत्यध्याहारादिकल्पनम् ।
वेदाध्ययनवृत्तत्वं स्नानस्योत्कर्षकल्पना ॥ ६६ ॥
नाव्याख्यातेथशब्दार्थे ज्ञायते तेन वर्ण्यते ।
अनर्थकेथ वान्यार्थे प्रसिद्धिर्बाध्यते ध्रुवम् ॥ ६७ ॥
तस्मात्कृतार्थसिध्यर्थं वृत्तं किमपि गम्यते ।
विशिष्टलिङ्गविज्ञानाद्विशिष्टे लिङ्गिनीक्षिते ॥ ६८ ॥

सूत्रेणासंभवं मत्वा नैतदित्यब्रवीत्परः ।
आनन्तर्योपदेशेन तद्दृष्टार्थतयापि च ॥ ६९ ॥
वेदाध्ययनमाक्षिप्तं किमसूचितचोदना ।
येन वृत्तेन जिज्ञासा विना नैवोपपद्यते ॥ ७० ॥
तदानन्तर्यमुक्तं हि दृष्टार्थमवकल्पते ।
क्रियमाणा च जिज्ञासा नियमाद्यस्य कस्य चित् ॥ ७१ ॥
क्रियेतानन्तरैवेति व्यर्थं तदुपदेशनम् ।
संकल्पादिभिरप्येषा विना सत्यं न सिध्यति ॥ ७२ ॥
साधारण्यात्तु तेप्यत्र नोपदेश्याः कथं चन ।
तस्माद्धर्मबुभुत्सायामसाधारणकारणम् ॥ ७३ ॥
निर्वृत्तं सूत्रकारेष्टं तच्च नाध्ययनादृते ।
अन्यस्यापीत्यनेनैव वेदपाठे प्रबाधिते ॥ ७४ ॥
प्रागपीति न वक्तव्यं तत्राप्यन्यस्य संभवात् ।
पूर्वेणैव हि लब्धार्थे तादृशीं त्वित्यनेन किम् ॥ ७५ ॥
वक्ष्यमाणमनालोच्य संभवेत्परिचोदना ।
न तावत्साध्यतेद्यापि चोदना धर्मसाधनम् ॥ ७६ ॥
इह वा कानि वाक्यानि विवरिष्यति जैमिनिः ।
धर्ममात्राभिधानाद्धि बुद्धादिवचनान्यपि ॥ ७७ ॥
पठित्वा धर्मजिज्ञासेत्यन्यस्यापीति चोदना ।
यद्वा भवतु नामेदृक् सूत्रं वेदमधीत्य तु ॥ ७८ ॥
जिज्ञासानन्तरं कार्यंत्यत्रापि द्वयमीप्सितम् ।
नानधीत्य न चाप्यन्यत्कृत्वेत्येतन्न लभ्यते ॥ ७९ ॥
वक्ष्यमाणवचोभङ्ग्योर्वाक्यभेदप्रसंगतः ।
अधीत्यैवेति हि विधौ स्नानादेरप्यनन्तरा ॥ ८० ॥

भवेद्धर्मस्य जिज्ञासा नानन्तर्यविधिस्तदा ।
आनन्तर्यविधाने तु या वेदाध्ययने कृते ॥ ८१ ॥
इत्येवमनुवादत्वात् प्रागप्येषा प्रसज्यते ।
बुद्धवाक्यादिपाठस्य तादृशीं त्वित्यपाक्रिया ॥ ८२ ॥
प्रागपीति च चोद्यस्य सामर्थ्याद्वेदलाभतः ।
नैवैतयोर्वचोभक्त्योरेकोऽप्यर्थो विधीयते ॥ ८३ ॥
अपि चेत्यादिकेनोक्तं किं त्वित्येतद्विधीयते ।
आनन्तर्यं पुरस्ताच्च नापि शिष्म इतीह तु ॥ ८४ ॥
के चिदध्याहरन्त्यस्य सूत्रस्यान्यपरत्वतः ।
नै वार्यतेनधीतत्वं नानन्तर्यं विधीयते ॥ ८५ ॥
सामर्थ्यासिध्यदृष्टार्थप्रसंगातेन लक्षणा ।
आनन्तर्यवचोव्यक्तिराश्रितैवात्र लक्ष्यते ॥ ८६ ॥
श्रुतार्थे तु परित्यज्य लक्षणार्थो विधीयते ।
प्रतीता धर्मजिज्ञासा वेदाध्यायादनन्तरा ॥ ८७ ॥
तत्कालस्यावरुद्धत्वात्स्नानाभावं हि लक्षयेत् ।
विरोधो युगपत्प्राप्तेर्दौर्बल्यं वेदबाधनात् ॥ ८८ ॥
स्नानस्य तेन बाधः स्याद्धर्मजिज्ञासया बलात् ।
दृष्टार्थत्वादिसंयुक्तं वाक्यं लक्षणया त्विति ॥ ८९ ॥
पुनरुक्तया गतार्थत्वात्त्यक्तं कैश्चित्तदुच्यते ।
यद्यप्यस्यभवेद्वाच्यमानन्तर्यमसंशयम् ॥ ९० ॥
तथापि पूर्वतामात्रं लक्षयेदविरोधतः ।
ग्रन्थग्रहणमात्रे च कृते स्नानं विरुध्यते ॥ ९१ ॥
अधीत्येत्यधिगम्येति व्याख्याने त्वविरोधिता ।
यस्त्वेवमविरोधित्वं कुर्वन्नाप्लवनं वदेत् ॥ ९२ ॥

अदृष्टायाथ वाप्यन्यः संस्कारस्तस्य चोत्तरम् ।
इह स्नानादिनियमो यः कृतो ब्रह्मचारिणः ॥ ९३ ॥
अवधित्वमनाश्रित्य सोऽवसानमपेक्षते ।
ततोऽपेक्षावशात्स्नानमस्नानादिनिवर्तनम् ॥ ९४ ॥
विरोधसाहचर्याभ्यां दृष्टार्थत्वेन लक्षयेत् ।
तस्मादध्ययनस्नानजिज्ञासा क्रमवाचिनाम् ॥ ९५ ॥
दृष्टार्थत्वाय शब्दानामेवं व्याख्येयमाश्रिता ।
स्नात्वा जिज्ञासमानोऽपि ननु वेदं न बाधते ॥ ९६ ॥
तेनाविरोधिता तस्येत्येवं वदत उत्तरम् ।
यथैवाध्ययनात् स्नानं स्मर्यते समनन्तरम् ॥ ९७ ॥
तथा ततः परो ऽप्यन्यः पदार्थो ऽन्यः परस्ततः ।
ततश्चावश्यकर्तव्ये बाधे स्मार्तस्य कस्य चित् ॥ ९८ ॥
योग्यत्वादागते काले प्राथम्यात्स्नानबाधनम् ।
ज्ञेयं पाठक्रमस्यार्थाद्बाध इत्यवगम्यते ॥ ९९ ॥
गुणप्रधानयोर्वापि विरोधाद्गुणबाधनम् ।
स्नानोपलक्षिता चात्र निवृत्तिर्गुरुवेश्मतः ॥ १०० ॥
विरोधित्वेन बाध्येत न तु मध्वादिभक्षणम् ।
तस्माद्गुरुकुले तिष्ठन्मधुमांसाद्यवर्जयन् ॥ १०१ ॥
जिज्ञासेताविरुद्धत्वाद्धर्ममित्यवगम्यते ।
गुरुगेहनिवृत्त्यंशो यावच्च न समाप्यते ॥ १०२ ॥
तावत्सकलवाचित्वान्न स्नानं पर्यवस्यति ।
गुरुगेहादनावृत्तः स्नातको हि न कथ्यते ॥ १०३ ॥
तत्परत्वविधानाच्च न तावद्द्वारसंग्रहः ।
व्याख्याथ कीर्तिता चात्र स्नायादिति पुनः स्मृतिः ॥ १०४ ॥

समावर्तिष्ट मेत्यादिस्मृतेर्यद्याप्यनन्तरम्।
विपरीतार्थमित्यस्मात्तद्वाक्यादपनीयते ॥ १०५ ॥
अथशब्देन यो बाधः पुरस्तादुपवर्णितः।
तन्मात्रस्यैव बाधोच दृष्टार्थत्वात्प्रदर्शितः ॥ १०६ ॥
स्मृतिप्राप्तमिदानीं तु मधुमांसाद्यवर्जनम्।
प्रतिषेधन्नदृष्टार्थे सूत्रकारो न शोभते ॥ १०७ ॥
निवृत्य गुरुगेहाच्च जिज्ञासोर्यः पुनर्भवेत्।
प्रवेशः सोप्यदृष्टार्थ इति नैवेह सूचितः ॥ १०८ ॥
निर्गमो हि कृतार्थस्य दृष्टार्थो गुरुवेश्मतः।
स्मर्यते तस्य नार्थः स्यादकृतार्थस्य निर्गमे ॥ १०९ ॥
अथशब्दप्रसिद्धैव वेदग्रहणहेतुता।
आनन्तर्योपदेशित्वादतः शब्देन किं पुनः ॥ ११० ॥
योग्यत्वमथशब्देन यद्यपि प्रतिपादितम्।
तदेव हेतुरत्रेति नातः शब्दाद्विना भवेत् ॥ १११ ॥
लक्षणं पुरुषस्यैव तदा तद्धि प्रसज्यते।
जिज्ञासायाश्च हेतुत्वे फलार्थत्वादि संभवेत् ॥ ११२ ॥
अतः शब्दगृहीतं वा तत्राध्ययनमाश्रितम्।
हेतावकथ्यमानेहि मङ्गलाद्यप्यसौ वदेत् ॥ ११३ ॥
स्नानबाधस्य वा हेतुरत इत्युच्यते पुनः।
योग्यस्याधीतवेदत्वान्नावस्थातुं हि शंक्यते ॥ ११४ ॥
सन्वाच्येच्छान्तरं कर्म ज्ञानं व्याप्नोति तावता।
ज्ञानोपसर्जना सैव न तु विध्यादिगम्यते* ॥ ११५ ॥

* लभ्यते इति वा पाठः।

इषेस्तु कर्म बाह्यं स्याद्धर्मः सा वाथ वा द्वयम्।
समानकर्तृकत्वं तु तुमुनोक्तं लिङा विधिः॥ ११६॥

एवं विषयनानात्वान्न का चित्पुनरुक्तता।
सूचितेच्छाभिनिर्वृत्त्यै द्वितीयेच्छात्र सूचिता॥ ११७॥

प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्ता समस्यते।
तादृशेयूपदार्वादौ तेनास्मिन्न समासता॥ ११८॥

सा हि तस्येत्यनेनोक्तो धर्मस्येत्येष विग्रहः।
धर्मायेति तु तादर्थ्ये षष्ठी वृत्तेति कथ्यते॥ ११९॥

प्राप्नोत्यत्र चतुर्थ्येव विशेषश्चेद्विवक्षितः।
सामान्यस्य विवक्षायां तादृशं कथ्यते कथम्॥ १२०॥

संबन्धमात्र एवैषा षष्ठ्युत्पन्ना तथापि तु।
विशेषनिष्ठता तस्य भाष्यकारेण वर्ण्यते॥ १२१॥

साधनाभासता चात्र पूर्वपक्षार्थगोचरा।
अन्यत्साधनमन्यस्य साधनाभास उच्यते॥ १२२॥

क्रत्वर्थं पुरुषार्थस्य तदर्थं च क्रतोरिति।
शेषलक्षणशब्दश्च कृत्स्नशास्त्रविवक्षया॥ १२३॥

प्रसिद्धः शक्यते ज्ञातुं प्रसिद्धत्वात्तु नेष्यते।
अप्रसिद्धस्त्वशक्यत्वान्नतरामित्यतो ब्रवीत्॥ १२४॥

जिज्ञास्यः संशयाद्धर्मः श्रेयस्करतयापि च।
असंदिग्धो ह्यजिज्ञास्यो यो वा स्यान्निष्प्रयोजनः॥ १२५॥

स्वरूपादिषु धर्मस्य द्विधा विप्रतिपद्यते।
पूर्वं प्रमाणरूपाभ्यां पादेनाद्यस्य निर्णयः॥ १२६॥

स्थिते वेदप्रमाणत्वे पुनर्वाक्यार्थनिर्णये ।
मतिर्बहुविदां पुंसां संशयान्नोपजायते ॥ १२७ ॥
केचिदाहुरसावर्थः केचिन्नासावयं त्विति ।
तन्निर्णयार्थमप्येतत् परं शास्त्रं प्रणीयते ॥ १२८ ॥

इति प्रतिज्ञासूत्रं प्रथमम् ॥ १ ॥



## ॥ चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

धर्मे सामान्यतः सिद्धं प्रमाणं चोदनोच्यते ।
स्वरूपादेस्ततः सिद्धिः स्वरूपं चेह सूच्यते ॥ १ ॥
द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते ।
स्वरूपे ऽपि हि तस्योक्ते प्रमाणं कथ्यतेऽर्थतः ॥ २ ॥
क्रियाद्युपेक्षितेः पूर्णः समर्थः प्रत्ययो विधौ ।
तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिन् चोदनोच्यते ॥ ३ ॥
चोदनैव प्रमाणं चेत्येतद्धर्मेऽवधारितम् ।
साकाङ्क्षमिति मन्वानो युक्तिलेशं द्वयेऽस्पृशत् ॥ ४ ॥
संभाव्यते प्रमाणत्वं शब्दस्यैवंविधेष्वपि ।
इन्द्रियादेरसामर्थ्यं वक्ष्यमाणमदीदिशत् ॥ ५ ॥
अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि ।
तेनोत्सर्गे स्थिते तस्य दोषाभावात्प्रमाणता ॥ ६ ॥
चोदनेत्यब्रवीच्चात्र शब्दमात्रविवक्षया ।
नहि भूतादिविषयः कश्चिदस्ति विधायकः ॥ ७ ॥
इन्द्रियादिव्युदासेन शब्दो यावन्न साध्यते ।
तावन्न तद्विशेषस्य कुतो वा ऽवसरो भवेत् ॥ ८ ॥

निमित्तमात्रं चोच्येत प्रमाणं चेह लक्षणम् ।
प्रमाणं वापि शब्दो वा तज्ज्ञानं वा निरूप्यते ॥ ९ ॥
पदार्थस्तन्मतिर्वा स्याद्वाक्यार्थाधिगमोऽपि वा ।
पूर्वेषां तु प्रमाणत्वे फलत्वं तस्य गम्यते ॥ १० ॥
ज्ञाने लक्षणशब्दोऽयं यदि नाम प्रयुज्यते ।
चोदनोक्तिस्तदा कार्यं तत्कार्यं वापि लक्षयेत् ॥ ११ ॥
निमित्तमात्रे शब्दे च प्रमाणे मुख्यवृत्तयोः ।
सामानाधिकरण्यं स्याच्चोदनालक्षणत्वयोः ॥ १२ ॥
द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ॥ १३ ॥
श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥ १४ ॥
प्रदर्शनार्थमप्योक्तमिन्द्रियं सूत्रकारवत् ।
नान्यत्किंचेति वा छेदः सामान्यार्थः प्रयुज्यते ॥ १५ ॥
तदसामर्थ्यसिध्यै च पुनरिन्द्रियकीर्तनम् ।
किं चेति मध्यमच्छेदो हेतुप्रश्ने प्रयुज्यते ॥ १६ ॥
यद्यपि त्वनुमानस्याप्येवमादौ समर्थता ।
विना संबन्धबोधेन न तु तस्योद्भवः क्वचित् ॥ १७ ॥
न सामान्यविशेषाभ्यां धर्मसंबन्धदर्शनम् ।
लिङ्गस्य कस्य चित्सिद्धं येन स्यादनुमानता ॥ १८ ॥
ननु शब्दोऽपि संबन्धबोधान्नर्ते प्रवर्तते ।
पदं तन्न च तद्वाच्यो धर्मो वाक्यार्थ एव सः ॥ १९ ॥
वाक्यस्यावाचकत्वं च पदार्थानां च हेतुता ।
संबन्धेचानपेक्षाणां वाक्यार्थे स्थापयिष्यते ॥ २० ॥

नित्यत्वादेरसिद्धत्वादभ्युपेत्योच्यतेथ वा।
सुतरामप्रमाणत्वं वक्तृप्रामाण्यवर्जनात् ॥ २१ ॥
प्रमाणान्तरदृष्टं हि शब्दोऽर्थं प्रापयेत्सदा।
स्मृतिवच्च स्वयं तस्य प्रामाण्यं नोपपद्यते ॥ २२ ॥
नूनं तत्रानुभूतोसावित्याप्तोक्तिनिबन्धना।
बुद्धिः साक्षाददृष्टेपि युक्तार्थे पुरुषोक्तितः ॥ २३ ॥
नात्मीयादन्यदीयाद्वा प्रत्यक्षादेर्विना क्वचित्।
वचसः सत्यता दृष्टा तथास्याच्चोदनास्वपि ॥ २४ ॥
तेन सत्यपि विज्ञाने प्रतिभादेर्यथैव हि।
स्वातन्त्र्यान्न प्रमाणत्वं तथा वेदेपि दृश्यताम् ॥ २५ ॥
स्वर्गयागादिसंबन्धविषया चोदना मृषा ॥
प्रत्यक्षाद्यगतार्थत्वादीदृग्बुद्धादिवाक्यवत् ॥ २६ ॥
यद्वाप्तेनाप्रणीतत्वाद्बालोन्मत्तादिवाक्यवत्।
व्योमादिवच्च नित्यत्वात्प्रामाण्यस्य निराकृतिः ॥ २७ ॥
यदि वा पुरुषाधीनप्रामाण्याः सर्वचोदनाः।
स्वतो वा न प्रमाणं स्युर्वाक्यत्वात्पुरुषोक्तिवत् ॥ २८ ॥
प्रामाण्यं वा नरापेक्षं सर्वशब्देषु गम्यताम्।
शब्दैः संबध्यमानत्वादप्रामाण्यं यथैव हि ॥ २९ ॥
न स्याद्वक्तृगुणानां चेद्वचःप्रामाण्यहेतुता।
तद्दोषैरप्रमाणत्वं किमित्यस्य भविष्यति ॥ ३० ॥
एवं स्थिते तु वेदस्य सति वाऽसति वा नरे।
प्रामाण्यं दुर्लभं मत्वा नन्वित्येतदचूचुदत् ॥ ३१ ॥
तच्च विप्रतिषिद्धत्वं बुद्धवाक्येपि युज्यते।
ततोपि प्रत्ययोत्पत्तेस्तस्माज्जात्युत्तरं त्विदम् ॥ ३२ ॥

सर्वविज्ञानविषयमिदं तावत्प्रतीक्ष्यताम् ।
प्रमाणत्वाप्रमाणत्वे स्वतः किं परतोथ वा ॥ ३३ ॥
स्वतोसतामसाध्यत्वात्केचिदाहुर्द्वयं स्वतः ।
अपरे कारणोत्पन्नगुणदोषावधारणात् ॥ ३४ ॥
स्वतस्तावद् द्वयं नास्ति विरोधात्परतो न च ।
निःस्वभावत्वमेवं हि ज्ञानरूपे प्रसज्यते ॥ ३५ ॥
कथं ह्यन्यानपेक्षस्य विपरीतात्मसंभवः ।
किमात्मकं भवेत्तच्च स्वभावद्वयवर्जितम् ॥ ३६ ॥
विज्ञानव्यक्तिभेदेन भवेच्चेदविरुद्धता ।
तथाप्यन्यानपेक्षत्वे किं क्वेति न निरूप्यते ॥ ३७ ॥
तस्मात्स्वाभाविकं तेषामप्रमाणत्वमिष्यताम् ।
प्रामाण्यं च परापेक्षमत्र न्यायेभिधीयते ॥ ३८ ॥
अप्रामाण्यमवस्तुत्वान्न स्यात्कारणदोषतः ।
वस्तुत्वात्तु गुणैस्तेषां प्रामाण्यमुपजन्यते ॥ ३९ ॥
प्रामाण्यं हि यदोत्सर्गात्तदभावोथ कृत्रिमः ।
तदा स्वप्नादिबोधेपि प्रामाण्यं केन वार्यते ॥ ४० ॥
मत्पक्षे कारणाभावात् प्रामाण्यं नोपजायते ।
हेतुमत्वप्रसंगोतो न भविष्यत्यवस्तुनः ॥ ४१ ॥
इन्द्रियादिगुणाश्चास्य कारणं तदसद्विधा ।
दुष्टत्वादिन्द्रियादीनामभावेन्यतरस्य वा ॥ ४२ ॥
अतएव वचोभ्रान्तिदोषैर्मिथ्यात्वधीरिति ।
तद्व्याप्तेस्तु गुणाभावस्तत्कृता ह्यप्रमाणता ॥ ४३ ॥
तस्मात्कारणशुद्धत्वं ज्ञानप्रामाण्यकारणम् ।
स्वभावतोप्रमाणत्वं तदभावे न लक्ष्यते ॥ ४४ ॥

नित्यत्वादेरसिद्धत्वादभ्युपेत्योच्यतेऽथ वा ।
सुतरामप्रमाणत्वं वक्तृप्रामाण्यवर्जनात् ॥ २१ ॥
प्रमाणान्तरदृष्टं हि शब्दोऽर्थं प्रापयेत्सदा ।
स्मृतिवच्च स्वयं तस्य प्रामाण्यं नोपपद्यते ॥ २२ ॥
नूनं तत्रानुभूतोऽसावित्याप्तोक्तिनिबन्धना ।
बुद्धिः साक्षाददृष्टेऽपि युक्तार्थे पुरुषोक्तितः ॥ २३ ॥
नात्मीयादन्यदीयाद्वा प्रत्यक्षादेर्विना क्वचित् ।
वचसः सत्यता दृष्टा तथास्याच्चोदनास्वपि ॥ २४ ॥
तेन सत्यपि विज्ञाने प्रतिभादेर्यथैव हि ।
स्वातन्त्र्यान्न प्रमाणत्वं तथा वेदेऽपि दृश्यताम् ॥ २५ ॥
स्वर्गयागादिसंबन्धविषया चोदना मृषा ॥
प्रत्यक्षाद्यगतार्थत्वादीदृग्बुद्धादिवाक्यवत् ॥ २६ ॥
यद्वाप्तेनाप्रणीतत्वाद्बालोन्मत्तादिवाक्यवत् ।
व्योमादिवच्च नित्यत्वात्प्रामाण्यस्य निराकृतिः ॥ २७ ॥
यदि वा पुरुषाधीनप्रामाण्याः सर्वचोदनाः ।
स्वतो वा न प्रमाणं स्युर्वाक्यत्वात्पुरुषोक्तिवत् ॥ २८ ॥
प्रामाण्यं वा नरापेक्षं सर्वशब्देषु गम्यताम् ।
शब्दैः संबध्यमानत्वादप्रामाण्यं यथैव हि ॥ २९ ॥
न स्याद्वक्तृगुणानां चेद्वचःप्रामाण्यहेतुता ।
तद्दोषैरप्रमाणत्वं किमित्यस्य भविष्यति ॥ ३० ॥
एवं स्थिते तु वेदस्य सति वाऽसति वा नरे ।
प्रामाण्यं दुर्लभं मत्वा नन्वित्येतदबूबुदत् ॥ ३१ ॥
तत्र विप्रतिषिद्धत्वं बुद्धवाक्येऽपि युज्यते ।
ततोऽपि प्रत्ययोत्पत्तेस्तस्माज्ज्यात्युत्तरं त्विदम् ॥ ३२ ॥

सर्वविज्ञानविषयमिदं तावत्प्रतीक्ष्यताम् ।
प्रमाणत्वाप्रमाणत्वे स्वतः किं परतोऽथ वा ॥ ३३ ॥
स्वतोऽसतामसाध्यत्वात्केचिदाहुर्द्वयं स्वतः ।
अपरे कारणोत्पन्नगुणदोषाश्रयाणात् ॥ ३४ ॥
स्वतस्तावद् द्वयं नास्ति विरोधात्परतो न च ।
निःस्वभावत्वमेवं हि ज्ञानरूपे प्रसज्यते ॥ ३५ ॥
कथं ह्यन्यानपेक्षस्य विपरीतात्मसंभवः ।
किमात्मकं भवेत्तच्च स्वभावद्वयवर्जितम् ॥ ३६ ॥
विज्ञानव्यक्तिभेदेन भवेच्चेदविरुद्धता ।
तथाप्यन्यानपेक्षत्वे किं क्वेति न निरूप्यते ॥ ३७ ॥
तस्मात्स्वाभाविकं तेषामप्रमाणत्वमिष्यताम् ।
प्रामाण्यं च परापेक्षमत्र न्यायेऽभिधीयते ॥ ३८ ॥
अप्रामाण्यमवस्तुत्वान्न स्यात्कारणदोषतः ।
वस्तुत्वात्तु गुणैस्तेषां प्रामाण्यमुपजन्यते ॥ ३९ ॥
प्रामाण्यं हि यदोत्सर्गात्तदभावोऽथ कृत्रिमः ।
तदा स्वप्नादिबोधेऽपि प्रामाण्यं केन वार्यते ॥ ४० ॥
मत्पक्षे कारणाभावात् प्रामाण्यं नोपजायते ।
हेतुमत्त्वप्रसंगोऽतो न भविष्यत्यवस्तुनः ॥ ४१ ॥
इन्द्रियादिगुणाश्चास्य कारणं तदसद्द्विधा ।
दुष्टत्वादिन्द्रियादीनामभावेऽन्यतरस्य वा ॥ ४२ ॥
अतएव वचोभ्रान्तिदोषैर्मिथ्यात्वधीरिति ।
तद्व्याप्तेस्तु गुणाभावस्तत्कृता ह्यप्रमाणता ॥ ४३ ॥
तस्मात्कारणशुद्धत्वं ज्ञानप्रामाण्यकारणम् ।
स्वभावतोऽप्रमाणत्वं तदभावे न लक्ष्यते ॥ ४४ ॥

अन्वयव्यतिरेकाभ्यामप्रामाण्यं न दोषतः ।
नाज्ञाते दृश्यते ह्येतत्करणाभावहेतुके ॥ ४५ ॥
ततश्च पुरुषाभावात्सति वा शुद्धसंभवात् ।
निर्मूलत्वात्प्रमाणत्वं चोदनायां न युज्यते ॥ ४६ ॥
स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।
नहि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते ॥ ४७ ॥
आत्मलाभे च भावानां कारणापेक्षता भवेत् ।
लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥ ४८ ॥
जातेऽपि यदि विज्ञाने तावन्नार्थोऽवधार्यते ।
यावत्कारणशुद्धत्वं न प्रमाणान्तराद्भवेत् ॥ ४९ ॥
तत्र ज्ञानान्तरोत्पादः प्रतीक्ष्यः कारणान्तरात् ।
यावद्धि न परिच्छिन्ना शुद्धिस्तावदसत्समा ॥ ५० ॥
तस्यापि कारणे शुद्धे तज्ज्ञाने स्यात्प्रमाणता ।
तस्याप्येवमितीत्थं च न क्वचिद्व्यवतिष्ठते ॥ ५१ ॥
यदा स्वतः प्रमाणत्वं तदान्यन्नैव गृह्यते ।
निवर्त्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः ॥ ५२ ॥
तस्माद् द्वेधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥ ५३ ॥
अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः ।
वस्तुत्वाद्द्विविधस्यात्र संभवो दुष्टकारणात् ॥ ५४ ॥
अविज्ञाने तु दोषाणां व्यापारो नैव कल्पते ।
कारणाभावतस्त्वेव तत्सिद्धं नस्त्वदुक्तिवत् ॥ ५५ ॥
दोषतश्चाप्रमाणत्वे स्वतःप्रामाण्यवादिनाम् ।
गुणज्ञानानवस्थावन्न दोषेषु प्रसज्यते ॥ ५६ ॥

साक्षाद्विपर्ययज्ञानाल्लब्ध्यैव त्वप्रमाणता ।
पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति ॥ ५७ ॥
दुष्टकारणबोधे तु सिद्धेऽपि विषयान्तरे ।
अर्थात्तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत् ॥ ५८ ॥
तत्र दोषान्तरज्ञानं बाधधीर्वा परा न चेत् ।
तदुद्भूतौ द्वितीयस्य मिथ्यात्वादाद्यमानता ॥ ५६ ॥
स्वत एव हि तत्रापि दोषाज्ञानात्प्रमाणता ।
दोषज्ञाने त्वनुत्पन्ने नाशङ्का निष्प्रमाणिका ॥ ६० ॥
एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः ।
प्रार्थ्यतेतावतैवैके स्वतः प्रामाण्यमश्नुते ॥ ६१ ॥
शब्दे दोषोद्भवस्तावद्वक्त्रधीन इति स्थितिः ।
तदभावः क्वचित्तावद्गुणवद्वक्तृकत्वतः ॥ ६२ ॥
तद्गुणैरपकृष्टानां शब्दे संक्रान्त्यसंभवात् ।
यदा वक्तुरभावेन न स्युर्दोषा निराश्रयाः ॥ ६३ ॥
पौरुषेये द्वयं दृष्टं दोषाभावो गुणास्तथा ।
प्रामाण्यं तत्र गुणतो नैव स्यादित्युदाहृतम् ॥ ६४ ॥
तस्माद्गुणेभ्यो दोषाणामभावस्तदभावतः ।
अप्रामाण्यद्वयासत्वं तेनोत्सर्गोनपोदितः ॥ ६५ ॥
प्रत्ययोत्पत्तिहेतुत्वात्प्रामाण्यं नापनीयते ।
दोषाभावो गुणेभ्यश्चेन्ननु सैव स्थितिर्भवेत् ॥ ६६ ॥
तदा न व्याप्रियन्ते हि ज्ञायमानतया गुणाः ।
दोषाभावे तु विज्ञेये सत्तामात्रोपकारिणः ॥ ६७ ॥
तत्रापवादनिर्मुक्तिर्वक्त्रभावाल्लघीयसी ।
वेदितेनाप्रमाणत्वं नाशङ्कामपि गच्छति ॥ ६८ ॥

अतो वक्त्रनधीनत्वात्प्रामाण्ये तदुपासनम् ।
न युक्तमप्रमाणत्वे कल्प्ये तत्प्रार्थना भवेत् ॥ ६९ ॥
ततश्चाप्तप्रणीतत्वं न दोषायात्र जायते ।
प्रयोगाणां तु सर्वेषां वक्ष्यामः प्रतिसाधनम् ॥ ७० ॥
पौरुषेये तु वचने प्रमाणान्तरमूलता ।
तदभावे हि तद्दुष्येदितरन्न कदाचन ॥ ७१ ॥
तेनेतरप्रमाणैर्या चोदनानामसंगतिः ।
तयैव स्यात्प्रमाणत्वमनुवादित्वमन्यथा ॥ ७२ ॥
अन्यस्यापि प्रमाणत्वे संगतिर्नैव कारणम् ।
तुल्यार्थानां विकल्प्यत्वादेकं तत्र हि बोधकम् ॥ ७३ ॥
यत्रापि स्यात्परिच्छेदः प्रमाणैरुत्तरैः पुनः ।
नूनं तत्रापि पूर्वेण सोऽर्थो नावधृतस्तथा ॥ ७४ ॥
संगत्या यदि चेष्येत पूर्वपूर्वप्रमाणता ।
प्रमाणान्तरमिच्छन्तो न व्यवस्थां लभेमहि ॥ ७५ ॥
कस्य चित्तु यदीष्येत स्वत एव प्रमाणता ।
प्रथमस्य तथाभावे प्रद्वेषः किंनिबन्धनः ॥ ७६ ॥
अाप्तधीश्चाप्रमाणं स्यादितराभिरसंगते ।
स्याच्चेत्तज्जनितेनैव ज्ञानेनान्येन संगतिः ॥ ७७ ॥
वेदेपि शतकृत्वः स्यात् बुद्धिरुच्चारणानुगा ।
साधनान्तरजन्या तु बुद्धिर्नास्ति द्वयोरपि ॥ ७८ ॥
यथा त्वेकेन्द्रियाधीनज्ञानान्तरनिबन्धना ।
संगतिः कारणं क्लृप्ता तथा वेदेपि कल्प्यताम् ॥ ७९ ॥
तस्माद्दृढं यदुत्पन्नं नापि संवादमृच्छति ।
ज्ञानान्तरेण विज्ञानं तत्प्रमाणं प्रतीयताम् ॥ ८० ॥

न चानुमानतः साध्या शब्दादीनां प्रमाणता ।
सर्वस्यैव हि सा प्राप्तपरप्रमाणान्तरसाध्यता ॥ ८१ ॥
ननु प्रमाणमित्येवं प्रत्यक्षादि न गृह्यते ।
न चेत्थमगृहीतेन व्यवहारोऽवकल्पते ॥ ८२ ॥
प्रमाणं ग्रहणात्पूर्वं स्वरूपेणैव संस्थितम् ।
निरपेक्षं स्वकार्येषु गृह्यते प्रत्ययान्तरैः ॥ ८३ ॥
तेनास्याज्ञायमानत्वे प्रामाण्येनोपयुज्यते ।
विषयानुभवो ह्यत्र पूर्वस्मादेव लभ्यते ॥ ८४ ॥
अप्रमाणं पुनः स्वार्थग्राहकं स्यात्स्वरूपतः ।
निवृत्तिस्तस्य मिथ्यात्वेनागृहीते परैर्भवेत् ॥ ८५ ॥
न ह्यर्थस्यातथाभावः पूर्वेणाभस्तयात्ववत् ।
तच्चाप्यर्थान्यथाभावे धीर्यद्वा दुष्टकारणे ॥ ८६ ॥
तावतैव च मिथ्यात्वं गृह्यते नान्यहेतुकम् ।
उत्पत्त्यवस्थमेवेदं प्रमाणमिति मीयते ॥ ८७ ॥
अतो यत्रापि मिथ्यात्वं परेण प्रतिपाद्यते ।
तत्राप्येतद्द्वयं वाच्यं न तु साधर्म्यमात्रकम् ॥ ८८ ॥
चोदनार्थान्यथाभावं कुर्वतश्चानुमानतः ।
तज्ज्ञानेनैव यो बाधः स कथं विनिवार्यते ॥ ८९ ॥
तन्मिथ्यात्वादबाधश्चेत् व्याप्तमन्योन्यसंश्रयम् ।
नानुमानादतोन्यद्धि बाधकं किं चिदस्ति ते ॥ ९० ॥
न चान्यैरग्रहेऽर्थस्य स्यादभावो रसादिवत् ।
तेषां जिह्वादिभिर्यस्मान्नियमो ग्रहणेऽस्ति हि ॥ ९१ ॥
तद्विनैवार्थबोधश्चेत्तादृग्धर्मे भविष्यति ।
ममासिद्धमितीदं तु वेदाज्जातेवबोधने ॥ ९२ ॥

वक्तुं न द्वेषमात्रेण युज्यते सत्यवादिना।
द्वेषादसंमतत्वाद्वा न च स्यादप्रमाणता ॥ ९३ ॥
न चात्मेच्छाभ्यनुज्ञाभ्यां प्रामाण्यमवक्लृप्यते।
अग्निदाहादिदुःखस्य न ह्यप्रत्ययतेष्यते ॥ ९४ ॥
न चाभिलाषिकं ज्ञानं प्रामाण्येनावधार्यते।
तस्मादालोकवद्वेदे सर्वसाधारणे सति ॥ ९५ ॥
नैव विप्रतिपत्तव्यं बौद्धादेर्वक्ष्यतेऽन्तरम्।
पुरुषाशक्तितस्तत्र सापवादत्वसंभवः ॥ ९६ ॥
वेदस्यापौरुषेयत्वे सिद्धा त्वेवं प्रमाणता।
कर्तृमत्त्वे तु वेदस्य सम्यङ्मिथ्यात्ववादिभिः ॥ ९७ ॥
कर्ता गुणाश्च दोषाश्च महाजनपरिग्रहः।
एवमादि विना युक्त्या कल्प्यं मीमांसकैः पुनः ॥ ९८ ॥
इदानीमिव सर्वत्र दृष्टान्नाधिकमिष्यते ॥
एवंभूतस्य वेदस्य ज्ञानोत्पत्तिं प्रकुर्वतः ॥ ९९ ॥
स्वरूपविपरीतत्वसंशयौ भाष्यवारितौ।
निवारयिष्यते चापि दुष्टकारणकल्पना ॥ १०० ॥
पुरुषाभावतस्तेन तद्द्वारेणाप्यशङ्कितौ।
तथा सत्यतथाभावो बुद्ध्यनुत्पत्तिमाश्रितः ॥ १०१ ॥
तच्च विप्रतिषिद्धत्वं ब्रवीतीत्येवमादिना।
यथा दृष्टार्थवादित्वं तच्चेत्प्रत्ययितादिति ॥ १०२ ॥
इन्द्रियेति तु मूलं चेदस्यास्तीत्येवमब्रवीत्।
द्रष्टृत्वसत्यवादित्वे तच्चेत्प्रत्ययितादिति ॥ १०३ ॥
दृश्यमानार्थवादित्वे स्यादनाप्तोक्तिसत्यता।
एवं त्वेकाङ्गवैकल्यात्प्रत्युदाहरणस्थितिः ॥ १०४ ॥

एकैकाभावमात्रे स्यादाप्तत्वैन्द्रियकत्वयोः ।
अप्रत्ययितपक्षे स्यादैन्द्रियस्याप्यसत्यता ॥ १०५ ॥
अनिन्द्रियत्वपक्षे वाऽसत्प्रत्ययितभाषितम् ।
व्याहन्यतान्यथैवं स्यात्तस्मात्पूर्वैव सत्यता ॥ १०६ ॥
परेण मूलसद्भाव इन्द्रियेति तु दर्शितः ।
अप्रामाण्यनिवृत्त्यर्थं दोषाभावोपवर्णनम् ॥ १०७ ॥
गुणात्प्रामाण्यमित्येवं तत्पूर्वं सुनिराकृतम् ।
पूर्वेण प्रतिषिद्धत्वान्नैतत्प्रामाण्यकारणम् ॥ १०८ ॥
समुच्चयार्थो वाशब्दः पूर्वस्मिन्नुत्तरत्र च ।
विकल्पेनोभयोराह प्रत्युदाहरणे पृथक् ॥ १०९ ॥
शक्येप्यसत्ये मिथ्यात्वं दृष्टं सत्येप्यशक्तिके ।
नानेन वचनेनेह सर्वज्ञत्वनिराक्रिया ॥ ११० ॥
वचनादृत इत्येवमपवादो हि संश्रितः ।
यदि षड्भिः प्रमाणैः स्यात्सर्वज्ञः केन वार्यते ॥ १११ ॥
एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते ।
नूनं स चक्षुषा सर्वान् रसादीन्प्रतिपद्यते ॥ ११२ ॥
यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम्[1] ।
भवेदिदानीं लोकस्य यथा कालान्तरेप्यभूत् ॥ ११३ ॥
यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥ ११४ ॥
भविष्यति न दृष्टं च प्रत्यक्षस्य मनागपि ।
सामर्थ्यं नानुमानादेर्लिङ्गादिरहिते क्वचित् ॥ ११५ ॥

१ यज्जातीयार्थबोधर्नामति वा पाठः ।

सर्वज्ञकल्पनान्यैस्तु वेदे चापौरुषेयता ।
तुल्यता कल्पिता येन तेनेदं संप्रधार्यताम् ॥ ११६ ॥
सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।
निराकरणवच्छक्या न चासीदिति कल्पना ॥ ११७ ॥
न चागमेन सर्वज्ञस्तदीयेन्योन्यसंश्रयात् ।
नरान्तरप्रणीतस्य प्रामाण्यं गम्यते कथम् ॥ ११८ ॥
न चाप्येवं परो नित्यः शक्यो लब्धुमिहागमः ।
नित्यश्चेदर्थवादत्वं तत्परे स्यादनित्यता ॥ ११९ ॥
आगमस्य च नित्यत्वे[१] सिद्धे तत्कल्पना वृथा ।
यतस्तं प्रतिपद्यन्ते धर्ममेव ततो नराः ॥ १२० ॥
योपीन्द्रियार्थसंबन्धविषये सत्यवादिताम् ।
दृष्ट्वा तद्वचनत्वेन श्रद्धेयेर्थेपि कल्पयेत् ॥ १२१ ॥
तेनापि पारतन्त्र्येण साधिता स्यात्प्रमाणता ।
प्रामाण्यं चेत्स्वयं तस्य कापेक्षान्येन्द्रियादिषु ॥ १२२ ॥
यथैवाचेन्द्रियादिभ्यः परिच्छेदात्प्रमाणता ।
श्रद्धेयेपि तथैव स्यान्न स्वातन्त्र्येण लभ्यते ॥ १२३ ॥
यथा च तेषां सत्यत्वं सिध्यत्येतेन हेतुना ।
तथान्यानवबुद्धार्थप्रामाण्याभावसाधनम् ॥ १२४ ॥
अश्रद्धेयार्थे सत्यत्वं श्रद्धेये चाप्यसत्यता ।
पूर्वज्ञानानुवादित्वं दृष्टान्तवदिहेष्यताम् ॥ १२५ ॥
अपिचालौकिकार्थत्वे सति पुंवाक्यहेतुकम् ।
मिथ्यात्वं वेदवाक्यानां स्यादन्योन्यं सपक्षतः ॥ १२६ ॥

१ आगमस्य प्रसिद्धत्वे इति वा पाठः ।

धर्माधर्मातिरिक्तार्थे प्रामाण्यं च प्रसज्यते।
सांख्यादिषु च जीवत्सु दृष्टान्तो दुर्लभोस्य च॥ १२७॥
[१]अलौकिकार्थवाचित्वं नृवाक्यत्वे सतीति च॥
परस्परमपेक्ष्यैव बौद्धादेः स्यान्मृषार्थता॥ १२८॥
वदेदेवं च यो नाम वादी प्रथमसंगतः।
तस्यापि हेतुः स्यादेष भवन्तं प्रत्यसंशयम्॥ १२९॥
बुद्धादीनामसार्वज्ञ्यमिति सत्यं वचो मम।
मदुक्तत्वाद्यथैवाग्निरुष्णो भास्वर इत्यपि॥ १३०॥
प्रत्यक्षं च मदुक्तत्वं त्वया साध्या तदुक्तता।
तेन हेतुर्मदीयः स्यात्संदिग्धासिद्धता तव॥ १३१॥
प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य च।
सद्भाववारणे शक्तं को नु तं कल्पयिष्यति॥ १३२॥
न चापि स्मृत्यविच्छेदात्सर्वज्ञः परिकल्प्यते।
विगानाच्छिन्नमूलत्वात्कैश्चिदेव परिग्रहात्॥ १३३॥
सर्वज्ञोसाविति ह्येव तत्काले तु बुभुत्सुभिः।
तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम्॥ १३४॥
कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव।
य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते॥ १३५॥
सर्वज्ञोनवबुद्धश्च येनैव स्यान्न संप्रति।
तद्वाक्यानां प्रमाणत्वं मूलाज्ञानेन्यवाक्यवत्॥ १३६॥
रागादिरहिते चास्मिन्निर्व्यापारे व्यवस्थिते।
देशनान्यप्रणीतैव स्यादृतेप्रत्यवेक्षणात्॥ १३७॥

१ अलौकिकार्थवादित्वात्पुंवाक्यत्वे सतीति चेति वा पाठः।

सान्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव ।
निःसरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥ १३८ ॥
एवमाद्युच्यमानं तु श्रद्दधानस्य शोभते ।
कुड्यादिनिःसृतत्वाच्च नाश्वासो देशनासु नः ॥ १३९ ॥
किं तु बुद्धप्रणीताः स्युः किमु कैश्चिद्दुरात्मभिः ।
अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः ॥ १४० ॥
एवं यैः केवलं ज्ञानमिन्द्रियाद्यनपेक्षिणः ।
सूक्ष्मातीतादिविषयं जीवस्य परिकल्पितम् ॥ १४१ ॥
नर्ते तदागमात्सिध्येन्न च तेनागमो विना ।
दृष्टान्तोऽपि न तस्यान्यो नृषु कश्चित्प्रवर्तते ॥ १४२ ॥
नित्यागमावबोधोऽपि प्रत्याख्येयोऽनया दिशा ।
न हि तत्रापि विस्रम्भो दृष्टोऽनेन कृतोऽथ वा ॥ १४३ ॥
सर्वदा चापि पुरुषाः प्रायेणानृतवादिनः ।
[1]यथाद्यत्वे न विस्रम्भस्तथातीतार्थकीर्तने ॥ १४४ ॥
स्वप्नादिज्ञानवच्चापि प्रत्ययोऽस्यागमार्थयोः ।
भवेदिति सशङ्कानां प्रामाण्यं गम्यते कथम् ॥ १४५ ॥
पुरुषातिशयश्चेष्टः सैव चागमनित्यता ।
कल्पितं स्मरणं चास्य जन्मान्तरनिबन्धनम् ॥ १४६ ॥
ग्राह्यत्वे चागमस्यैवं द्वेषोऽर्थग्रहणे वृथा ।
यो ह्यनुच्चरितं शब्दं गृह्णात्यर्थेऽस्य का कथा ॥ १४७ ॥
पुमांस्तावत्स्वतन्त्रः स्यादर्थग्रहणवादिनाम् ।
आगमप्रतिभावे तु पारतन्त्र्यं द्वयोरपि ॥ १४८ ॥

१ यथाद्यत्वे न विस्रम्भस्तथा कालान्तरेऽप्यभूदिति वा पाठः ।

अनेकपुरुषस्थत्वादेकस्यैव च जन्मनि।
ग्रहणस्मरणाद्वेदे न स्वातन्त्र्यं विहन्यते ॥ १४९ ॥
अन्यथा करणे चास्य बहुभिः स्यान्निवारणम्।
एकस्य प्रतिभानं तु कृतकान्न विशिष्यते ॥ १५० ॥
अतश्च संप्रदाये च नैकः पुरुष इष्यते।
बहवः परतन्त्राः स्युः सर्वे ह्याद्यत्ववन्नराः ॥ १५१ ॥
एवं च कल्पयन्त्यन्ये यावदागमसिद्धये।
तावन्न कल्पयत्येतत्समत्वं जैमिनेः परैः ॥ १५२ ॥
न हि दृष्टाधिकं किं चित्प्रामाण्ये तेन कल्प्यते।
अप्रामाण्यनिमित्तेषु परस्यादृष्टकल्पना ॥ १५३ ॥
दृष्टप्रामाण्यबाधश्च नास्तिकस्य प्रसज्यते।
उत्पन्ने सति विज्ञाने बलाद्बाधप्रकल्पना ॥ १५४ ॥
साधिते पुरुषाभावे निर्दोषज्ञानजन्मनः।
प्रत्यक्षान्नास्तिकैर्वाच्यो विशेष श्चोदनाधियः ॥ १५५ ॥
उपदेशो ऽन्यथा न स्यादतीन्द्रियनिबन्धनः।
तस्य कर्त्ता न चेद्दृष्टः सोर्थ इत्यर्थकल्पना ॥ १५६ ॥
यद्वानुमानमेवेदमुपदेशत्वमुच्यते।
दृष्टार्थपूर्वता व्याप्तं व्यतिरेकोस्य नन्विति ॥ १५७ ॥
अन्यथाप्युपपन्नत्वं व्यामोहादिति कथ्यते।
लिङ्गस्य व्यभिचारो वा बालवाक्ये निदर्शनात् ॥ १५८ ॥
वेदात् ज्ञात्वोपदिष्टं चेदित्येवं सिद्धसाधनम्।
वेदादपीत्यनेनोक्तं मन्वादेश्चैतदिष्यते ॥ १५९ ॥
अन्यथा संविदानोपि विवक्षत्यन्यथा यतः।
तस्मादेकान्ततो नास्ति पुंवाक्यात्तद्धियां गतिः ॥ १६० ॥

भ्रान्तस्यान्यविवक्षायामन्यद्वाक्यं च दृश्यते ।
यथाविवक्षमप्येतत्तस्मान्नैव प्रवर्तते ॥ १६१ ॥
वक्तृधीराप्तवाक्येषु गम्यतेऽन्यत्र विप्लुतिः ।
तेनोत्सर्गापवादाभ्यां वचसः शक्तिरुच्यते ॥ १६२ ॥
पदार्थरचनायत्तो वाक्यार्थप्रत्ययोद्भवः ।
विवक्षापूर्वविज्ञानवशाच्च रचनाकृतिः ॥ १६३ ॥
विवक्षान्तरयुक्ता हि कुर्वाणा रचनान्तरम् ।
आवापोद्वापयोगेन दृश्यन्तेऽर्थेषु मानवाः ॥ १६४ ॥
तेनार्थप्रत्ययोत्पादे श्रोतुर्जातेऽपि वाक्यतः ।
ज्ञातो नूनमनेनेति वक्तृज्ञाने मतिर्भवेत् ॥ १६५ ॥
आप्तोक्तिकारणं कं चिदनुयुक्ते नरं यदा ।
तदा च निर्दिशत्याप्तं स जानात्येतदित्यसौ ॥ १६६ ॥
तज्ज्ञानान्तरितत्वाच्च शब्दास्तावदुदासते ।
प्रामाण्यस्यापनं तु स्याद्वक्तृधीहेतुसंभवात् ॥ १६७ ॥
अर्थे पूर्वप्रतीतेऽपि निश्चयो हि तदाश्रयः ।
तेनार्थज्ञानगम्यापि प्रामाण्ये सैव पूर्वभाक् ॥ १६८ ॥
अतोऽत्र पुंनिमित्तत्वादुपपन्ना मृषार्थता ।
ननु स्यात्तत्स्वभावत्वं वेदे वक्तुरभावतः ॥ १६९ ॥
तद्बुध्यन्तरयोर्नास्तीत्यर्थोऽर्थैश्च प्रतीयते ।
अतो न ज्ञानपूर्वत्वमपेक्ष्यं नायथार्थता ॥ १७० ॥
अप्रमाणत्वसिद्धौ वा दृष्टान्तो य उदाहृतः ।
बुद्धादिवचनं तस्य साध्येनासंगतोच्यते ॥ १७१ ॥
तेषामपि हि यत्कार्यं पूर्वत्र प्रतिपादितम् ।
तत्र सम्यक्त्वमर्थे तु व्यापारो नैव विद्यते ॥ १७२ ॥

स्वव्यापारातिरिक्तेऽर्थे वेदस्यापि मृषार्थता ।
पूर्वपक्षार्थवत्त्वेन प्रसक्ता सिद्धसाध्यता ॥ १७३ ॥
अज्ञात्वैवमभिप्रायं कृतकाकृतकत्वयोः ।
सत्यमिथ्यात्वहेतूक्तिमाचक्षाणात्परोऽब्रवीत् ॥ १७४ ॥
ननु सामान्यतोदृष्टं नान्यत्वादित्यदूषणम् ।
एतस्मादेव दृष्टान्तो न हि पक्षे सपक्षता ॥ १७५ ॥
तस्मादयमभिप्रायो भाष्यकारस्य वर्ण्यते ।
अभ्युपेत्यार्थविषयं वाक्यव्यापारमुच्यते ॥ १७६ ॥
यदिस्याद्व्यवधानेऽपि वाक्यार्थापेक्षयानृतम् ।
दृष्टान्तो नृवचोचापि हेतुः साधारणो भवेत् ॥ १७७ ॥
सत्येष्वपि हि दृष्टैव पौरुषेयेषु वाक्यता ।
अतीन्द्रियेऽपि किं चिद्धि सत्यं दृष्टं यदृच्छया ॥ १७८ ॥
नान्यत्वादितिचानेन परोक्तादन्यतोच्यते ।
अन्योह्येष तदाभासो विपक्षं चान्यमब्रवीत् ॥ १७९ ॥
यद्वान्यस्माद्विसंवादात् मिथ्यात्वं तच्च न त्विह ।
विषयस्यापि चान्यत्वात्साधनासंगतेव सा ॥ १८० ॥
न ह्यन्यस्येति नैकस्मिन्मृषार्थेऽन्यमृषार्थता ।
विवक्षाया मृषार्थत्वे न च वाक्ये मृषार्थता ॥ १८१ ॥
श्यामत्वे पुंस्त्ववच्चैतत् साधारण्ये निदर्शनम् ।
परोक्तेर्वापि दुष्टत्वाद्विकल्पसममुच्यते ॥ १८२ ॥
यद्वा प्रमाणमेवेदं सम्यक्त्वेऽन्यत्वमुच्यते ।
विरुद्धाव्यभिचारित्वं बाधो वाप्यनुमानतः ॥ १८३ ॥
चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः ।
कारणैर्जन्यमानत्वाल्लिङ्गाप्तोक्त्यक्षबुद्धिवत् ॥ १८४ ॥

तथा नाप्तप्रणीतोक्तिजन्यत्वाद्बाधवर्जनात् ।
देशकालादिभेदेन चाप्तोक्तिप्रत्ययो यथा ॥ १८५ ॥
[1]अकृत्रिमत्वसिद्ध्या च हेतुत्वं साधयिष्यते ।
एवमाद्यवबुध्यायं नान्यत्वादित्यवोचत ॥ १८६ ॥
प्रत्यक्षस्त्विति दार्ढ्यं वा प्राथम्यं वापि लक्षयेत् ।
स्वरूपतः प्रमाणत्वं मिथ्यात्वं पररूपतः ॥ १८७ ॥
ज्ञानाभावश्च मिथ्यात्वं द्वयस्यासंभवाद्यदि ।
प्रत्यक्षं तत्परेषां च सिद्धमस्यानुमानतः ॥ १८८ ॥
[2]यथा च तव मिथ्यात्वं साधनं साधयेदिदम् ।
तथा च बाधकाधीनं मिथ्यात्वमपि साधयेत् ॥ १८९ ॥
धर्म इत्युपसंहार्ये यच्छ्रेयस्करभाषणम् ।
तद्धर्मपदवाच्यार्थनिरूपणविवक्षया ॥ १९० ॥
श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः ।
चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मता ॥ १९१ ॥
अन्यत्साध्यमदृष्ट्वैव यागादीननुतिष्ठतः ।
धार्मिकत्वसमाख्यानं तद्योगादिति गम्यते ॥ १९२ ॥
पश्वादीनि च धर्मस्य फलानीति व्यवस्थितम् ।
चित्रागोदोहनादीनां तान्युक्तानि फलानि च ॥ १९३ ॥
तस्मात्तेष्वेव धर्मत्वं धर्मोणीति च दर्शनात् ।
लिङ्गसंख्याविनिर्मुक्तो धर्मशब्दो निदर्शनम् ॥ १९४ ॥
अन्तःकरणवृत्तौ वा वासनायां च चेतसः ।
पुष्कलेषु च पुण्येषु नृगुणैः पूर्वजन्मनि ॥ १९५ ॥

१ अकर्तृकत्वसिद्ध्येति वा पाठः ।
२ यथाच साधयत्येतन्मिथ्यात्वं साधनं तवेति वा पाठः ।

प्रयोगो धर्मशब्दस्य न दृष्टो न च साधनम् ।
पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिः ॥ १९६ ॥
न च वस्त्वन्तरं शक्यमपूर्वं स्वर्गयागयोः ।
ज्ञातुं साधनभूतं वा साध्यं वा नाप्यतोन्यथा ॥ १९७ ॥
श्रुतसाधनसाध्यत्वत्यागेनाश्रुतकल्पना ।
प्रसज्येतास्य तादूप्ये व्यतिरेके त्वरूपता ॥ १९८ ॥
तस्मात्फले प्रवृत्तस्य यागादेः शक्तिमात्रकम् ।
उत्पत्तो वापि पश्वादेरपूर्वं न ततः पृथक् ॥ १९९ ॥
शक्तयः सर्वभावानां भावशब्दैर्विशेषिताः ।
नोपाख्यायन्त इत्येवं नापूर्वे धर्मशब्दता ॥ २०० ॥
पुरस्ताच्चोदनाशब्दो विधावेव व्यवस्थितः ।
न च तल्लक्षणा हिंसा प्रत्युदाहरणं कथम् ॥ २०१ ॥
चोदनालक्षणो यश्च श्येनादिरिह गम्यते ।
निषेधाभावतस्तस्य कथं ब्रूयादनर्थताम् ॥ २०२ ॥
यद्यपि स्याद्विधिस्पृष्टे निषेधो नैव तादृशः ।
विज्ञायते ह्यनर्थत्वं षोडशिग्रहणादिवत् ॥ २०३ ॥
चोदनालक्षणं चोक्त्वा निषिद्धत्वाद्विरुध्यते ।
श्येनादावुपदिष्टे च हिंसा हीति न युज्यते ॥ २०४ ॥
हिंसा हि फलमेतेषां भिन्ना तेभ्यः स्वरूपतः ।
सा हि प्राणवियोगात्मा श्येनस्तत्त्वासिवत्पृथक् ॥ २०५ ॥
उपदेशाभिधानं च नाविधेयेवकल्पते ।
श्येनादेरविधाने च कस्यान्यस्य विधेयता ॥ २०६ ॥
सर्वत्रावस्थितो न्यायो भावनांशद्वये विधिः ।
स बाध्येतेह ये चामी ज्योतिष्टोमादयो मताः ॥ २०७ ॥

धर्मत्वेन न तेपि स्युर्हिंसासाधनका हि ते ।
न चाविधीयमानस्य फलतत्साधनाङ्गता ॥ २०८ ॥
साधकत्वेन विहितं न चाविहितमुच्यते ।
साध्यत्वेन विधानं तु नैवेष्टं लोकवेदयोः ॥ २०९ ॥
तेनैवमर्थशब्दस्य प्रयोजनमिहोच्यते ।
प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः ॥ २१० ॥
सा चोदनेति सामान्यं लक्षणं हृदये स्थितम् ।
प्रवर्तकगृहीतैस्तु स्यादुदाहरणार्थता ॥ २११ ॥
तात्पर्यं ह्यर्थशब्दस्य नेयं व्याख्योपपद्यते ।
अर्थग्रहणलभ्यं वा तत्प्रवर्तकभाषणम् ॥ २१२ ॥
धर्मं प्रमाणभूतायास्तद्वालक्षणमुक्तवान् ।
एवं सति विधिभ्यः स्याद्विधेयार्थावधारणम् ॥ २१३ ॥
निषेधेभ्यो निषेध्यानामनर्थत्वेन निर्णयः ।
तेनार्थग्रहणेनोक्ता विधेयस्येह धर्मता ॥ २१४ ॥
निषेध्यानामनर्थत्वमर्थसिद्धं न सूचितम् ।
तस्मादुभयमित्यत्र विधेयप्रतिषेध्ययोः ॥ २१५ ॥
यागादिब्रह्महत्यादिवर्गयोः स्यान्निदर्शनम् ।
श्येनादीनां विधेयत्वादिष्टस्यापि च साधनात् ॥ २१६ ॥
उपचारादनर्थत्वं फलद्वारेण वर्ण्यते ।
प्रतिषिद्धा हि सेत्यत्र स्फुटमेतत्करिष्यते ॥ २१७ ॥
हिंसा हीति च यच्चापि ब्रूते नाभिचरेदिति ।
श्येनादीनां स्वरूपे तु नोत्तरग्रन्थसंगतिः ॥ २१८ ॥
विहितत्वान्निषेधस्य प्रवृत्ति स्तेषुदुर्लभा ।
यदा तु चोदनाशब्दो विधावेव व्यवस्थितः ॥ २१९ ॥

तदोभयादिको ग्रन्थः साध्यसाधनसंश्रितः ।
साध्यसाधनसंबन्धे विधिना प्रतिपादिते ॥ २२० ॥
लक्ष्यमःणत्वमुभयोर्द्विविधं च फलं क्रतोः ।
स्वर्गो हि प्राप्यते तच्च प्रतिषेधानतिक्रमात् ॥ २२१ ॥
अतिक्रमेण हिंसादिशास्त्रान्तरनिरीक्षया ।
फलांशे भावनायाश्च प्रत्ययो न विधायकः ॥ २२२ ॥
वक्ष्यते जैमिनिश्चाह तस्य लिप्सार्थलक्षणा ।
तेन सामान्यतः प्राप्तो विधिना च निवारितः ॥ २२३ ॥
फलांशेऽपि निपातिन्या हिंसायाः प्रतिषेधकः ।
अनर्थप्राप्तिहेतुत्वं बाध्यते तच्च यद्यपि ॥ २२४ ॥
श्येनस्वरूपं नानर्थस्तत्फलस्य त्वनर्थता ।
परस्तूभयमित्यादेः फलस्यापि विधेयताम् ॥ २२५ ॥
भावनान्तर्गतत्वाद्वा मत्वानर्थत्वमाक्षिपत् ।
नैवेत्येतावता चास्य विधेयत्वनिराक्रिया ॥ २२६ ॥
किं विधेयमिदानीं स्यादाह श्येनादयस्त्विति ।
प्रश्नापाकरणे चात्र तव्यो विधिविवक्षया ॥ २२७ ॥
प्रयुक्तो न तु साध्येर्थे द्वयेप्यनुपयोगतः ।
अनर्थस्यापि साध्यत्वमविधेयस्य हीष्यते ॥ २२८ ॥
साध्यत्वरहिते चेष्टा विधेये नित्यमर्थता ।
शतुश्च लक्षणार्थत्वं तेषां चाप्युपदेशनम् ॥ २२९ ॥
ब्रुवन् स्फुटीकरोतीष्टमुपदेशो हि नान्यथा ।
विधित्वमादिशब्दात्स्यादितिकर्तव्यतास्वपि ॥ २३० ॥
तस्मात्फलांशे या हिंसा वैदिकी सा निषिध्यते ।
अंशद्वये तु या नाम तन्निषेधाभिधायिनाम् ॥ २३१ ॥

धर्मत्वेन न तेऽपि स्युर्हिंसासाधनका हि ते।
न चाविधीयमानस्य फलतत्साधनाङ्गता॥ २०८॥
साधकत्वेन विहितं न चाविहितमुच्यते।
साध्यत्वेन विधानं तु नैवेष्टं लोकवेदयोः॥ २०९॥
तेनैवमर्थशब्दस्य प्रयोजनमिहोच्यते।
प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः॥ २१०॥
सा चोदनेति सामान्यं लक्षणं हृदये स्थितम्।
प्रवर्तकगृहीतेस्तु स्यादुदाहरणार्थता॥ २११॥
तात्पर्यं ह्यर्थशब्दस्य नेयं व्याख्योपपद्यते।
अर्थग्रहणलभ्यं वा तत्प्रवर्तकभाषणम्॥ २१२॥
धर्मे प्रमाणभूतायास्तद्वालक्षणमुक्तवान्।
एवं सति विधिभ्यः स्याद्विधेयार्थावधारणम्॥ २१३॥
निषेधेभ्यो निषिध्यानामनर्थत्वेन निर्णयः।
तेनार्थग्रहणेनोक्ता विधेयस्येह धर्मता॥ २१४॥
निषेध्यानामनर्थत्वमर्थसिद्धं न सूचितम्।
तस्मादुभयमित्यत्र विधेयप्रतिषेध्ययोः॥ २१५॥
यागादिब्रह्महत्यादिवर्गयोः स्यान्निदर्शनम्।
श्येनादीनां विधेयत्वादिष्टस्यापि च साधनात्॥ २१६॥
उपचारादनर्थत्वं फलद्वारेण वर्ण्यते।
प्रतिषिद्धा हि सेत्यत्र स्फुटमेतत्करिष्यते॥ २१७॥
हिंसा हीति च यच्चापि ब्रूते नाभिचरेदिति।
श्येनादीनां स्वरूपे तु नोत्तरग्रन्थसंगतिः॥ २१८॥
विहितत्वान्निषेधस्य प्रवृत्ति स्तेषुदुर्लभा।
यदा तु चोदनाशब्दो विधावेव व्यवस्थितः॥ २१९॥

तद्वोभयादिको ग्रन्थः साध्यसाधनसंश्रितः ।
साध्यसाधनसंबन्धं विधिना प्रतिपादितम् ॥ २२० ॥
तत्रासाध्यमुभयोर्द्विविधं च फलं क्रतोः ।
स्वर्गो हि प्राप्यते तत्र प्रतिषेधानतिक्रमात् ॥ २२१ ॥
अतिक्रमेण हिंसादिशास्त्रान्तरनिरीक्षया ।
फलांशे भावनायाश्च प्रत्ययो न विधायकः ॥ २२२ ॥
वक्ष्यते जैमिनिश्चाह तस्य लिप्सार्थलक्षणा ।
तेन सामान्यतः प्राप्तो विधिना च नियारितः ॥ २२३ ॥
फलांशेऽपि निपातिन्या हिंसायाः प्रतिषेधकः ।
अनर्थप्राप्तिहेतुत्वं बाध्यते तत्र यद्यपि ॥ २२४ ॥
श्येनस्वरूपं नानर्थस्तत्फलस्य त्वनर्थता ।
परस्तूभयमित्यादेः फलस्यापि विधेयताम् ॥ २२५ ॥
भावनान्तर्गतत्वाद्वा मत्वानर्थत्वमाक्षिपत् ।
नैवेत्येतावता चास्य विधेयत्वनिराक्रिया ॥ २२६ ॥
किं विधेयमिदानीं स्यादाह श्येनादयस्त्विति ।
प्रश्नापाकरणे चात्र तव्यो विधिविवक्षया ॥ २२७ ॥
प्रयुक्तो न तु साध्येऽर्थे द्वयेप्यनुपयोगतः ।
अनर्थस्यापि साध्यत्वमविधेयस्य ह्रीष्यते ॥ २२८ ॥
साध्यत्वरहिते चेष्टा विधेये नित्यमर्थता ।
शतुश्च लक्षणार्थत्वं तेषां चाप्युपदेशनम् ॥ २२९ ॥
ब्रुवन् स्फुटीकरोतीष्टमुपदेशो हि नान्यथा ।
विधित्वमादिशब्दात्स्यादितिकर्तव्यतास्वपि ॥ २३० ॥
तस्मात्फलांशे या हिंसा वैदिकी सा निषिध्यते ।
अंशद्वये तु या नाम तन्निषेधाभिधायिनाम् ॥ २३१ ॥

अविशेषेण यच्छास्त्रं शिरोवदिति चोत्तरम् ।
निषेधेनानवष्टब्धे विषये न ह्यनर्थता ॥ २३२ ॥
प्रत्यक्षादेरशक्यत्वात्कल्प्यते निष्प्रमाणता ।
न हि हिंसाद्यनुष्ठाने तदानीं दोषदर्शनम् ॥ २३३ ॥
बाह्येपि विचिकित्सा तु शास्त्रादेवोपजायते ।
हिंस्यमानस्य दुःखित्वं दृश्यते यन्न तावता ॥ २३४ ॥
कर्तुर्दुःखानुमानं स्यात्तदानीं तद्विपर्ययः ।
विषयोस्याः फलं यादृक् प्रेत्य कर्तुस्तथाविधम् ॥ १३५ ॥
हिंसा क्रियाविशेषत्वात्सूते शास्त्रोक्तदानवत् ।
य एवमाह तस्यापि गुरुस्त्रीगमनादिभिः ॥ २३६ ॥
सुरापानादिभिश्चापि विपक्षैर्व्यभिचारिता ।
विरुद्धता च यादृग्घि दानैस्तादृक् फलं भवेत् ॥ २३७ ॥
विधिगम्यफलावाप्तिर्दुःखात्मकता तथा ।
न च या संप्रदानस्य प्रीतिस्तादृक् फलं श्रुतम् ॥ २३८ ॥
दातुस्तेन हि दृष्टान्तः साध्यहीनः प्रतीयते ।
संप्रदानं च दाने ते विषयः कर्म हिंसने ॥ २३९ ॥
वैषम्यं संप्रदाने तु पक्षस्त्वेतद्विरुद्धता ।
प्रीयते संप्रदानं हि देवतेति मतं तव ॥ २४० ॥
दृष्टान्ते कर्म दानं चेत्तस्य कीदृक् फलं भवेत् ।
जपहोमादिदृष्टान्तात् परपीडादिवर्जनात् ॥ २४१ ॥
चोदितत्वस्य हेतुत्वाद्विरुद्धा व्यभिचारिता ।
विहितप्रतिषिद्धत्वे मुक्त्वान्यन्न च कारणम् ॥ २४२ ॥
धर्माधर्मावबोधस्य ते न युक्तानुमानगीः ।
अनुग्रहाच्चाधर्मत्वं पीडातश्चाप्यधर्मता ॥ २४३ ॥

वदतो जपसीध्वादिपानादौ नोभयं भवेत् ।
क्रोशता हृदयेनापि गुरुदाराभिगामिनाम् ॥ २४४ ॥
भूयान् धर्मः प्रसज्येत भूयसी ह्युपकारिता ।
अनुमानप्रधानस्य प्रतिषेधानपेक्षिणः ॥ २४५ ॥
हृदयक्रोशनं कस्मात् दृष्टां पीडामपश्यतः ।
पीडातश्चाप्यधर्मत्वं तथा पीडामधर्मतः ॥ २४६ ॥
अन्योन्याश्रयमाप्नोति विना शास्त्रेण साधयन् ।
एवमादावशास्त्रज्ञो म्लेच्छो नोद्विजते क्व चित् ॥ २४७ ॥
तस्य नाधर्मयोगः स्यात्पूर्वोक्ता यदि कल्पना ।
तस्मादनुग्रहं पीडां तदभावमपास्य च ॥ २४८ ॥
धर्माधर्मार्थिभिर्नित्यं मृग्यौ विधिनिषेधकौ ।
क्वचिदस्यानिषिद्धत्वाच्छक्तिः शास्त्रेण बोधिता ॥ २४९ ॥
प्रत्यवायनिमित्तत्वे विधिना नापगच्छति ।
शास्त्रेण न हि शक्तीनामावापोद्वापनक्रियाः ॥ २५० ॥
विद्यमाना हि कथ्यन्ते शक्तयो द्रव्यकर्मणाम् ।
तदेव चेदं कर्मेति शास्त्रमेवानुधावति ॥ २५१ ॥
हिंसादीनामधर्मत्वं कथ्यते नानुमानतः ।
एवं ये निपुणं प्राहुस्तैरप्येतत्परीक्ष्यताम् ॥ २५२ ॥
सुरापानादिभिः शूद्रः किं याति नरकं कृतैः ।
वैश्यस्तोमेन वा किं स्याद्विप्रराजन्ययोः फलम् ॥ २५३ ॥
पञ्चम्यामिष्टिकरणान्मध्याह्ने चाग्निहोत्रतः ।
तस्माद्यद्यादृशं कर्म यत्फलोत्पत्तिशक्तिकम् ॥ २५४ ॥
शास्त्रेण गम्यते तस्य तादृशस्यैव तत्फलम् ।
हिंसा चाशद्वयादन्या या तस्याः प्रतिषेधजम् ॥ २५५ ॥

प्रत्यवायार्थता ज्ञानं विधिनान्यच्च वार्यते।
ज्ञानमेव च शक्तीनां नावापोद्वापनक्रियाः॥ २५६॥
ज्ञायन्ते शास्त्रतस्तास्तु क्रियाभेदव्यवस्थिताः।
व्यवस्थाः शक्तिभेदानां दृष्टार्थेष्वपि कर्मसु॥ २५७॥
अभिन्नत्वेपि दृश्यन्ते भुजेः स्वस्थातुरेष्वपि।
रूपाभेदेपि हिंसादेर्भेदोऽङ्गानङ्गकारितः॥ २५८॥
तथाप्येकफलत्वं चेत्क्रियात्वात्सर्वसंकरः।
यजित्वाद्यविशेषाच्च चित्रादिफलतुल्यता॥ २५९॥
भेदात्तत्र व्यवस्था चेदिहाप्येवं भविष्यति।
विधीनां वापि सर्वेषां साक्षाद्व्यवहितोपि वा॥ २६०॥
पुरुषार्थः फलं तेन नानार्थोऽतः प्रतीयते।
नचेषु श्रूयते नार्थो निषेधान्न च कल्प्यते॥ २६१॥
न च प्रकरणस्थत्वात्पुरुषार्थः फलं भवेत्।
कर्मोपकारः कल्प्यस्तु दृष्टोऽदृष्टोथ वा पुनः॥ २६२॥
कल्पनावसरस्तत्र नानार्थस्यानपेक्षणात्।
क्रत्वर्थश्चापि संस्कारः पशोर्नाराद्दुपक्रिया॥ २६३॥
दृष्टैव त्ववदानानां निष्पत्तिः क्रत्वपेक्षिता।
अभिचारेप्युपायस्था हिंसा नाधर्म उच्यते॥ २६४॥
तस्मादनङ्गभूतायां हिंसायामेतदुच्यते।
उद्देशाच्च फलत्वेन श्येनादौ न विधीयते॥ २६५॥
भावनाविधिरप्येष फलांशाद्विनिवर्तते।
अतः स्वतो न धर्मत्वं श्येनादेर्नाप्यधर्मता॥ २६६॥
फलानर्थानुबन्धित्वात्तद्वारेणोपचर्यते।
निराकाङ्क्षस्य चैकेन श्येनस्य न फलद्वयम्॥ २६७॥

तस्मात्क्रियान्तरादेवो हिंसातो नार्थ उच्यते ।
फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते ॥ २६८ ॥
केवलप्रीतिहेतुत्वात्तद्धर्मत्वेन हीष्यते ।
ननु चेष्टाभ्युपायत्वात् श्येनादेर्धर्मता भवेत् ॥ २६९ ॥
फलं तावदधर्मोऽस्य श्येनादेः संप्रधार्यते ।
यदि येनेष्टसिद्धिः स्यादनिष्टाननुबन्धिनी ॥ २७० ॥
तस्य धर्मत्वमुच्येत ततः श्येनादिवर्जनम् ।
यदा तु चोदनागम्यः कार्याकार्यानपेक्षया ॥ २७१ ॥
धर्मः प्रीतिनिमित्तं स्यात्तदा श्येनेपि धर्मता ।
यदि त्वप्रीतिहेतुर्यः साक्षाद्व्यवहितोऽपि वा ॥ २७२ ॥
सोऽधर्मश्चोदनार्थः स्यात्तदा श्येनेप्यधर्मता ।
यस्तु हिंसात्वसाधर्म्याद्ब्रूयादत्राचोदितास्वपि ॥ २७३ ॥
वदेदनर्थहेतुत्वं तस्याप्यागमबाधनम् ।
तमनादृत्य यो ब्रूयाद्यागादेरप्यसौ वदेत् ॥ २७४ ॥
स्वर्गादिसाधनाशक्तिं क्रियात्वाद्भोजनादिवत् ।
गीतामन्त्रार्थवादैर्या कल्प्यतेऽनर्थहेतुता ॥ २७५ ॥
प्रत्यक्षश्रुतिबाध्यत्वात्सान्यार्थत्वेन नीयते ।
शिष्याऽप्रत्यविशिष्टत्वात्सूत्रवैदिकवाक्ययोः ॥ २७६ ॥
अशक्तेश्चोभयोः साम्यान्न सूत्रेष्वित्यनुत्तरम् ।
प्रागुक्तपरिसंख्यायाः फलमेतत्प्रकाश्यते ॥ २७७ ॥
सूत्रेषु ह्यनया युक्त्या गतिरेषापि युज्यते ।
तस्मादावर्तते सूत्रं तन्त्रं वा शक्तिभेदतः ॥ २७८ ॥
एकदेशानुमानाद्वा द्वे सूत्रे परिकल्प्यते ।
इतरेतरसामीप्यादेतावेव परस्परम् ॥ २७९ ॥

कल्प्यते वाक्यशेषाय नान्यावयवकल्पना ।
विशिष्टार्थानुवादित्वादथवेत्यपि भाषिते ॥ २८० ॥
वाक्यभेदः स एवेति संज्ञातन्त्रत्वमुत्तरम् ।
अर्थे वा प्रत्युपादानात् संज्ञालक्षणशब्दयोः ॥ २८१ ॥
तन्त्रं लक्षणशब्दो वा वाच्यो धर्मार्थशब्दयोः ।
धर्मं सामान्यतः सिद्धं प्रमाणं कथ्यते यदा ॥ २८२ ॥
वृत्तमेव तदार्थत्वे किमर्थं पुनरुच्यते ।
चोदनालक्षणत्वस्य धर्मं प्रति विधेयता ॥ २८३ ॥
लभ्यतेऽर्थानुवादेन संशयो ह्यन्यथा भवेत् ।
तथा च येप्यनर्थस्य साधनत्वेन कल्पिताः ॥ २८४ ॥
निषेधैस्तेऽपि धर्माःस्युश्चोदनालक्षणत्वतः ।
तस्मादर्थापरित्यागादेकार्थग्रहणं यथा ॥ २८५ ॥
लभ्यते वचनव्यक्त्या सा स्यादर्थानुवादतः ।
विशेषणाद्विना चैतदर्थं सामर्थ्यकारिता ॥ २८६ ॥
कथ्यते भाष्यकारेण फलं हिंसादिवर्जनम् ॥

इति द्वितीयं सूत्रम् ॥

---

॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

॥ विंशस्तवकावशेषः ॥



नर्तित्वैवं लघुलघुपदं दोलयन्ती नितान्तं
तालोपान्ते कुचभरधुरा दुर्वहं पूर्वकायम् ।
वात्यावर्तैरिव कमलिनी हन्त हा हन्त मध्ये
भग्ना मा भूदिति परिजनैः सव्यथं सा शशङ्के ॥ १०४ ॥

पूर्वकायं कायस्य पूर्वभागं दोलयन्ती ॥ १०४ ॥

एवं लघुगुरुप्लुतद्रुतद्रुतार्धद्रुतपादभेदेन तालसमं चरणकमलं चालयन्ती नटनकौतुकातुला तुलाकोटिविवरवरकनककलापनिकरेषु लघ्वादिक्रमेण निनदत्सु कदाचित् सर्वेषामेव कदाचित् कियतामेव कदाचिद् द्विचाणामेव कदाचिन्नैकस्यापि निनदो यथा भवति तथा नृत्यन्ती साधु साध्विति प्रीयमाणेन कृष्णेन राधया च परिरेभे वियति वियति गर्वे सर्वेषामप्सरःसदसां स्वःसदां च विस्मयः स्मयवान् बभूव ॥ १०५ ॥

वियति· आकाशे । वियति, नश्यति सतीत्यर्थः ॥ १०५ ॥

एवं प्रत्येकमेव नृत्यमालोक्य पुनः सकलाभिः कलाभिः परीतः सकलाभिरेव ताभिः सह प्रकीर्णनटनक्रममारभमाणः सरसतरतरङ्गितमानसो नृत्यति नर्तयति गायति गापयति स्वेत्यायामिनीं यामिनीं निमेषमात्रमिव यापयन् क्रीडति स्म, ततः प्रकीर्णकनृत्ये कदाचिदेकीभूय कदाचिन्मण्डलीभूय कदाचिदेकैकशः कदाचित् संभूय च नृत्यन्तीनां गायन्तीनां च तासां काचित् कृष्णेन समं गायति नृत्यति स्म च ।

ततः ।

सह नर्तनगानतत्परा
श्रमजालस्यसुरस्यविग्रहा ।
श्लथमानकुचांशुका हरेः
पृथुमंसं भुजया समग्रहीत् ॥ १०६ ॥

अंसं भुजया समग्रहीदिति, सुसख्यमिदं स्खलनवारणार्थम् ॥ १०६ ॥

ततश्च ।

तमालस्य स्कन्धे श्लथपतितशाखेव पवन-
क्रमात् खिन्ना हैमी व्रततिरिव साशोभत भृशम् ।

वपुष्मत्या रत्या लसदलसभावोपहृतया
परिष्वक्तो मूर्तः समघटत शृङ्गार इव सः ॥ १०७ ॥

तमालस्येति, दृष्टान्तद्वयेन बाह्याभ्यन्तरशोभाविलासपरावधित्वं दर्शितम् । रत्या स्थायिभावरूपया, शृङ्गार आद्यो रसः ॥ १०७ ॥

काचित् कूजितकाञ्चिकिङ्किणि रणन्मञ्जीरमान्दोलता
हारेण श्रवणोत्पलेन ललिता चीनाञ्चलेनापि च ।
कृष्णांसे कृतवामबाहुवलया लीलाविलासालसं
गायन्ती नटति स्म तामनुनटन् कृष्णस्तदेवाजगौ ॥

कृष्णस्य पीतवसनाञ्चलमम्बुजाक्षी
वामेन पद्मललितेन करेण धृत्वा ।
शश्वत् प्रसर्पमपसर्पमपोहमाना
नृत्यन्त्यहो तमपि नर्तयति स्म काचित् ॥ १०८ ॥

कृष्णांसे कृतवामबाहुवलयेत्यनेन शृङ्गारे इव नाट्येऽप्यस्याः पुरुषायितत्वं सूचितम् ॥ १०८ ॥

काचित् तु ।

कृष्णप्रणीतमुरलीकलगानरीत्या
हेलावशेन लयतालसमं नटन्ती ।
लीलाकृतं स्खलनमस्य दृशाक्षिपन्ती
स्वं तालभङ्गमथ संवरयांबभूव ॥ १०९ ॥

लीलया कौतुकेन कृतं बुद्धिपूर्वकमेव स्खलनं गानस्य तालभङ्गरूपं दृशा दृष्ट्या आक्षिपन्ती, मामवमन्तुं मन्नृत्यतालभङ्गाय यतमानो भवान् स्वगानतालभङ्गमपि करोतीति भद्रेण मया ज्ञातं तदपि मत्स्खलनं त्वया कर्तुं दुःशकमेवेति संज्ञया ज्ञापयन्ती सतीत्यर्थः ॥ १०९ ॥

कांचिद्वीणां मधुरमृदुलं वादयन्तीं सलीलं
गायं गायं हरिमतिमुदा सस्मयं नर्तयन्तीम् ।

नान्यैर्गम्यां गतिमथ चलन् कौतुकादेव वाद्य-
भ्रंशे संभालनबहुतरव्यग्रचित्तां चकार ॥ ११० ॥

अथ, तदीयवाद्यानुसारेण तणां नर्तित्वेत्यर्थः । अन्यैर्न गम्यां दुर्ज्ञेयां गतिं चलन् सन्, कौतुकात् तद्वाद्यशिक्षापरीक्षणार्थमिति भावः । वाद्यभ्रंशे सम्यग्· भालनं मद्वाद्यभ्रंशो हन्तात्र मा भूदित्येवं तत्र बहुतरं व्यग्रं चित्तं यस्यास्तथाभूताम् ॥ ११० ॥

श्लिष्यति कांचन चुम्बति कांचन
कस्याश्चनाधरं पिबति ।
नृत्यन्नेव हि कृष्णो
रमयांचक्रे वधूरखिलाः ॥
आसीन्न सा तत्र ननर्त नो या
नृत्यं च तन्नो यदकृष्णदृष्टम् ।
कृष्णस्य दृष्टिश्च न सा न यस्या-
मेकैकशः श्लेषणचुम्बनादि ॥ १११ ॥

अखिला इत्यनेनोक्तमर्थं विवृण्वान आह· आसीदिति,तेन यूथेश्वरीसखीतत्परिवारवृन्दानां सर्वेषामेव साङ्गरासप्राप्तिरभूदिति दर्शितम् ॥ १११ ॥

ततश्च ।

मुक्तावलीमिव जुगुम्फ ललाटमूले
घर्माङ्कुरान् सहचरीव समस्तमङ्गम् ।
माध्वीकपीतिरिव सालसयांचकार
श्रान्तिः कुरङ्गकदृशां श्रियमापुपोष ॥ ११२ ॥

श्रान्तिः कर्त्री श्रियं शोभाम्· आपुपोष । श्रान्तिमेव द्विधोपमिमानः शोभां स्पष्टयति । सहचरी सखी·इव ललाटे घर्माङ्कुरान् मुक्ताव-

लीमिव जुगुप्स । माध्वीकपीतिरिव समस्तमङ्गम्· अलसयांचकार· इति ॥ ११२ ॥

ततः ।

दधाना दोर्युग्मं भुजशिरसि पार्श्वे विलसतो
हरेर्लीलालस्यादकृत तनुवल्लीविवलनाम् ।
ध्रुवं सौभाग्यानां भरमसहमानेव कतमा
यशां विश्रामाय व्यधित दयितस्योपरि वधूः ॥ ११३ ॥

विलसतो हरेर्भुजशिरसि· एकस्मिन्नेव स्कन्धे दोर्युग्मं बाहुयुगलं दधाना सती लीलया यदालस्यं तस्माद्धेतोस्तनुवल्लीविवलनां स्वगात्रलतामोटनम्· अकृत· अकरोत् । ततश्च तस्या अतिसुमख्यामृतसिक्तः श्रीकृष्णः स्वं कृतार्थं मन्यते स्मेत्याह ध्रुवमित्यादिना व्यक्तया· उत्प्रेक्षया ॥ ११३ ॥

तत्र तत्रपे न कापि कापिशायनमत्तेव तेवमाना मानाधिक्यवती ललितलावण्याश्रमेण श्रमेण विलुलिता कृष्णेन भुजशिरसि रसिकभावेन विन्यस्तं न्यस्तं रत्नदण्डमिव भुजदण्डं लसत्परिमलमलयजरसालिप्तमहो महोत्पलसौरभरभसं स्वभावतो भावतोऽपतरङ्गेण रङ्गेण समाघ्राय तदनुलोमलोमहर्षोत्कर्षोत्कमनाश्चुम्बनेनोपभुक्तवती ॥ ११४ ॥

कापिशायनं मधु तेन मत्ता· इव तत्र न तत्रपे न लज्जते स्म । तेवमाना क्रीडन्ती, "तेवृ देवने" । अत एव क्रीडाभरोत्थेन श्रमेण विलुलिता । कथंभूतेन, ललितं यल्लावण्यं तस्याश्रमभूतेन, अतिशोभासंपादकेनेत्यर्थः । रसिकभावेन रसिकतया कृष्णेन विन्यस्तं भुजशिरसि स्कन्धे भुजदण्डं न्यस्तं न्यासरूपेण स्थापितम्, "पुमानुपनिधिर्न्यास" इत्यमरः, चुम्बनेनोपभुक्तवती ॥ ११४ ॥

कृष्णोऽपि कस्याश्चन सालस्यलास्यलावण्यचलन्मणिकुण्डलताण्डवप्रतिकृतिकृतिनि गण्डे श्रमजनितालस्यलस्यमानतया

गण्डं निधाय वर्तमानाया मानायामवत्या वदनचन्द्रमसमसमोर्ध्वमालोक्य चिबुकमुन्नमय्य मधुमधुरिमधरेऽधरे ताम्बूलचर्वितं वितन्द्रचन्द्रानना वितताार ॥ ११५ ॥

कस्याश्चन वदनचन्द्रमसमालोक्य चिबुकमुन्नमय्य तस्या अधरे ताम्बूलचर्वितं वितताार ददौ । कथंभूतायाः, गण्डे कृष्णगण्डे गण्डं स्वगण्डं निधाय वर्तमानायाः, मानस्यादरस्य· आयामवत्याः । गण्डे कीदृशे, आलस्यलास्ययोर्लावण्येन सहिते चलन्ती ये मणिकुण्डले तयोस्ताण्डवस्य प्रतिकृतेः प्रतिमायाः कृतौ निर्माणे कृतिनि निपुणे ॥ ११५ ॥

काचन सौभगभगवत्तापरिमलानटन्ती नटन्ती गायन्ती श्रान्ता श्रान्ताभिरामा रामा ।

दीर्घोच्छ्वासप्रचलसिचये हारहिल्लोललीलं
हेलां बिभ्रत्युरसि कुचयोः कृष्णपाणिं न्यधत्त ।
तावप्येकाम्बुरुहपिहितस्वर्णकुम्भाविवास्ता·
मत्यासत्तेः फलमिदमहो यन्न पार्थक्यमेति ॥ ११६ ॥

सौभगमेव भगवत्ता· ऐश्वर्यं तस्याः परिमलान् विख्यातीः· अटन्ती प्राप्नुवती· उरसि वक्षसि द्वयोरपि कुचयोः· एकं कृष्णपाणिं न्यधत्त, तावपि कुचावपि· अत्यासन्नतायाः ॥ ११६ ॥

एवं तासां श्रमजलकणक्लिन्नकर्णोत्पलानां
मान्द्यं याते कुवलयदृशां नृत्यवेगे क्रमेण ।
तूष्णीकत्वं ययुरथ मणीकिङ्किणीनूपुराद्या
मन्ये तेषामपि समजनि श्रेयसी श्रान्तिबाधा ॥ ११७ ॥

श्रेयसी· अत्यधिका ॥ ११७ ॥

तथापि तेषां मन्दमन्दकलकोमलभङ्कारकाकलिकया सविभ्रमभ्रमणेन गानेन च सचमत्कारं काश्चन कृष्णेन समं ननृतुः ॥ ११८ ॥

तेषां किङ्किणीनूपुरादीनाम् ॥ ११८ ॥

आयामवती यामवती सा वरं व्यरंसीत्, न पुनरासां रासान्तरङ्गतरङ्गलीला इति स्थिते ॥ ११८ ॥

यामवती यामिनी ॥ ११९ ॥

आश्लेषाधरपानचुम्बनरसालापस्मितालोकनै-
रासां रासविलासकौतुकजुषां यूथैः सयूथाधिपैः ।
स्वच्छायावलिभिः स्वचेष्टितकलानैपुण्यभाग्भिर्यथा
बालः श्रीरमणोत्तमोऽप्यरमत प्रेम्णा स मुग्धो हरिः ॥ १२० ॥

आनन्दिनीभिः समं स्वाभिः शक्तिभिरित्यनेनवाक्येन स्वरूपभूतशक्तित्वेन निरूपयिष्यमाणानामपि तासां स्वच्छायावलिभिरुपमानं "रेमे रमेशो व्रजसुन्दरीभिर्यथार्भकः स्वप्रतिबिम्बविभ्रम" इति मूलवाक्यानुरोधेनैव, तच्च· अन्यदुर्धरतनृत्यगीतादिविलासवत्त्वस्यांशस्यैव विवक्षयेत्यत आह स्वचेष्टितेति । तथैव कृष्णस्य मुग्धेन बालेनोपमानं तत्प्रेममाधुर्यतिरोधायिमहैश्वर्यकत्वस्यांशस्य विवक्षयेत्यत आह श्रीरमणेति । श्रीरमणोत्तमः श्रीपतेरंश्यपि मुग्धो बाल इति व्यञ्जितेन तासां माहात्म्येन भङ्ग्या छायात्वं निषिध्य स्वरूपशक्तित्वमेवोपस्थापितमिति ॥ १२० ॥

कृष्णाङ्गसङ्गसुखमग्नधियस्तदिच्छा-
स्रोतोनिवेशिततनूलतिका मृगाक्ष्यः ।
नैवाम्बराणि कुचकञ्चुलिकाश्च केश-
पाशांश्च हन्त विविदुः स्खलितानि तानि ॥ १२१ ॥

तदेवमपि ताभिः प्रेमसुखमयः सर्वो विलासः स्वेच्छामय एवेत्याह कृष्णेति ॥ १२१ ॥

एवं विहरतो हरतो निखिलभुवनवनजाक्षीणां मनांसि तस्य निखिलसौभगवतो भगवतो व्रजराजपुत्रस्य विक्रीडितमीडितमीश्वरैरपि समालोक्य दिवि दिविषद्वध्वो मुमुहुर्मुहुरहो रहो निरुपमतद-

धिकरणकरणरणकपराहतधियः समनोरथावतारायां तारायां तत-यश्च हरिहरि हरिणाङ्कोऽपि रासारम्भमारभ्य गतिवैक्लव्येन निष्पन्द एवाभवदत एवोचितमायामिनी यामिनीति ॥ १२२ ॥

रहो गूढमेव, मनोरथस्यावतारः प्रादुर्भावस्तत्सहितानाम्, आयामिनी दैर्घ्यवती ॥ १२२ ॥

ततश्च ।

यावत्यो या मदनमदतः सुभ्रुवो रागवत्यः
श्रीकृष्णेन स्वयमपि तथा तावता रागिणेव ।
संपूर्णार्थाः प्रतिजनमहो कारयामासिरे ता
मर्यादा हि प्रणयरहसां सैव सन्नायकस्य ॥ १२३ ॥

ततश्च परःसहस्रेषु निभृतनिकुञ्जेषु प्रत्येकमेव ताः संप्रयोगादि-लीलया रमयामासेत्याह यावत्य इति, मदनमदतो हेतोः संपूर्णार्थाः कारयामासिरे, "रामो राज्यमकारय"दितिवत्, चक्रिरे इत्यर्थः ॥ १२३ ॥

श्रान्तानां रमणकलाभिरङ्गनानां
स्वेदाम्भः स्मितसुभगान्मुखेन्दुबिम्बात् ।
प्रेमार्द्रः करकमलेन कोमलेन
प्रत्येकं हरिरपसारयांचकार ॥

स्पर्शेन पाणिकमलस्य पुनः प्रकामं
स्विद्यत्सु वक्त्रकमलेषु मृगेक्षणानाम् ।
स्वेदापनोदकुशलो यदि नैष आसीत्
ता एव चेलशकलैर्ममृजुर्मुखानि ॥ १२४ ॥

पुनः स्विद्यत्सु, तत्स्पर्शात्यहर्षेणेति भावः ॥ १२४ ॥

लावण्यसारसरसानि विलासलास्य-
वैदग्ध्यमुग्धमधुराणि तदीहितानि ।

कारुण्यमात्रपिशुनानि जगुः सुगीत-
बन्धेन ता निजनिजप्रतिभाकृतेन ॥ १२५ ॥

कारुण्यमात्रपिशुनानीति लावण्यविलासादिविशिष्टानां तदीहितानां प्रकाशिका तत्कृपैव, अतस्तामेव तानि पिशुनयन्ति, सूचयन्तीत्यर्थः ॥ १२५ ॥

एवं श्रमहतीरतिमहती रतिकलाकलापजनिता नितान्तालस्यदस्यदभाजः सलिललीलया लयावाप्तिविरताः कारयितुं ताभिः चिप्रमदाभिः प्रमदाभिः समं समन्ततो मृदु मधुरं मधुरञ्जिभिर्मधुकरगाथकैः सह गायन्तीभिर्विमलकुमुदकमला कमलाकरबन्धुनन्दिनीधारा ॥ १२६ ॥

श्रमहतीः॰ श्रमबाधाः॰ लयावाप्त्या विरताः कारयितुं ताभिस्तेन कृष्णेन कमलाकरबन्धुनन्दिनीधारा समवजगाहे । श्रमहतीः कथंभूताः, नितान्तमालस्यं ददाति यः स्यदो वेगस्तं भजन्ति धारयन्तीति तथा ताः । धारा कीदृशी, विमलानि कुमुदानि यस्मिंस्तथाभूतं कमलं जलं यस्यां सा ॥ १२६ ॥

धाराधरमहसा महसानन्देन तेन चिरपुलिनखेलाविलसत्करेणुभिः करेणुभिः सह मदकलकलभेनेव समवजगाहे ॥ १२७ ॥

धाराधरमहसा मेघरुचिना कृष्णेन, महे॰ उत्सवे सानन्देन । चिरं पुलिनखेलाभिर्विलसन्तः के मस्तके रेणवो यासां ताभिः ॥ १२७ ॥

ततश्च ।

वक्त्रैरम्भोरुहवरवनं दोर्लताभिर्मृणाली-
श्रेणिर्वक्षोरुहकलशकैश्चक्रनाम्नां समाजः ।
गत्या हंसीततिरतितरां हन्त जिग्ये वधूभि-
र्भास्वत्कन्यासलिलमलसं लम्बमानाभिराभिः ॥ १२८ ॥

कलशकैरित्यल्पार्थे कः ॥ १२८ ॥

वक्रैः स्वर्णसरोजमण्डलमयं नीरोपरिष्टान्नभो
वक्षोजैर्मदचक्रवाकमिथुनश्रेणीजुषो वीचयः ।
दोर्भिश्चारुमृणालवल्लिवलिता आपस्तदासन् वधू-
वृन्दे गच्छति चित्रभानुदुहितुस्तत्र क्वचिदघ्नं पयः ॥ १२९ ॥

चक्रवाकजुषो वीचय इति, क्वचिदघ्नेऽपि जले तरङ्गाणामुच्छूनत्वेन स्तनपर्यन्तस्पर्शादिति भावः ॥ १२९ ॥

ततश्च ।

लब्ध्वा तासां तनुपरिमलान् पद्मिनीः प्रोज्झ्य भृङ्गै-
रभ्युद्यातैस्तरणितनयैवादरादुज्जगाम ।
हंसैस्तुल्योड्डयनचपलैश्चामरत्वं प्रयातैः
श्रान्ताः सर्वाः प्रणयरभसाद्वीजयामास सैव ॥ १३० ॥

उज्जगाम·अभ्युत्थितवती ॥ १३० ॥

भृङ्गैस्तासामुपरि परितो मण्डलीभूय सद्भि-
स्तत्पर्यन्तेष्वपि दिविषदां पुष्पवर्षैः पतद्भिः ।
नीलं वातावधुतमभितः सारिमुक्तावलीकं
शोभाहेतोरतनुत किमु व्योमलक्ष्मीर्वितानम् ॥ १३१ ॥

सारिण्यो मुक्ता एव वलीकं पटलप्रान्तं यत्र तत् ॥ १३१ ॥

ततश्च ।

अन्योन्यात्तैः करसरसिजैस्ताडयन्तीषु तोयं
मध्ये कृत्वा दयितमभितो मण्डलत्वं गतासु ।
तासूद्भूतास्तरणिदुहितू रोमहर्षा इव श्री-
कृष्णस्योरःपरिसरमयुस्तोकतुङ्गास्तरङ्गाः ॥
अन्योन्यग्रथिताङ्गुलीकलिकयोः कृत्वाम्बु पाण्योः समा-
पीड्योच्चैर्जलयन्त्रवत् करभयोः प्रान्तेन निक्षिप्यता ।

धाराभिर्मुहुरायताभिरबलावृन्देन सिक्तो हरि-
र्मन्ये मन्मथवारुणास्त्ररहसा मूर्नेन विद्धो बभौ ॥ १३२ ॥

अबलावृन्देन कर्तृभूतेन पाण्योरम्बु कृत्वा· उच्चैः समापीड्य जलयन्त्र इव जलयन्त्रेणेव निक्षिप्यता निक्षेपकेण करभयोः प्रान्तेन निर्मितेन सतीभिर्धाराभिः सिक्तः, "क्षिपतेर्दैवादिकस्य शत्रा रूपम्," "मणिबन्धादाकनिष्ठं करस्य करभो बहि"रित्यमरः ॥ १३२ ॥

ततश्च ।

निःसंहारं तदिदमतनोर्वारुणास्त्रं विदित्वा
शक्तोऽप्यस्य प्रतिकृतिविधौ लीलया वारि मग्नः ।
नीवीदाम्नां हरणकुतुकी तद्धृतिव्यग्रहस्तं
भग्नाः सर्वाः पुनरतितरामेक एवासिषेच ॥ १३३ ॥

तस्या नीवेर्धृतौ व्यग्रहस्तं यथा स्यात् तथा भग्ना विद्रुताः ॥ १३३ ॥

ततश्च ।

प्रत्येकं ताः सपदि पयसो द्वन्द्वयुद्धेन जित्वा
कृष्णेनास्मिन् पणितमखिलं हारमाकृष्य नीतम् ।
पृष्ठं याता लघुलघुतरां पीडयित्वास्य बाहू
राधा सर्वं यदि हृतवती तामधावत् तदासौ ॥ १३४ ॥

आकृष्य नीतं स्वकक्षदेशे स्थापितम्· अखिलमेव हारं पृष्ठं याता सती हृतवती । कथमित्यत आह, अस्य बाहू पीडयित्वा मृणाल्या वा· अङ्गुल्या वारिरेखां कनकरूपेण पीडनेन कण्डूतिमुत्पाद्य कक्षमुद्रायामुद्घाटितायां सत्यां स्वयमकस्मादेव जले पतितमित्यर्थः ॥ १३४ ॥

आचिन्वानां कमलममलं क्वापि गाधेऽपि नीरे
गम्भीरत्वाभिनयचकितां शङ्कया पङ्किलाक्षीम् ।
दोर्भ्यां वक्षोभुवि सुनिविडापीडमुत्थाप्यमानां
कान्तेनैनां सरसकुतुकं ताः समीक्षांबभूवुः ॥ १३५ ॥

गाधेऽपि नीरे गम्भीरत्वस्याभिनयेन-अयेतनं नीरमिदं नूनमगाधमेव भविष्यति कथमितो विद्रवामीति स्वाङ्गचेष्टया चकिताम्, स्वाकर्षणार्थमनुधावन्तं कृष्णमालोक्य शङ्कया पङ्किलार्तां व्याकुलितनेत्राम् ॥ १३५ ॥

ततश्च कदाचन ।

राधादेव्या चपलशफरीघट्टनाशङ्कितात्या
कण्ठग्राहं भयचकितया गाढमाश्लिष्यमाणः ।
प्रत्याश्लिष्यन्ननुपधि मुहुः श्लाघमानः शफर्या-
स्तत् सौहृद्यं हरिरतितरां सिष्मिये मोदमानः ॥ १३६ ॥

ततश्च कदाचनेति, तदाकर्षणपरिरम्भादिनिर्वाहान्ते सामञ्जस्येन द्वयोश्चलने वृत्ते सतीत्यर्थः । घट्टना फरफरात्कारेणोच्छलितत्वम् । अनुपधि· उपाधिशून्यं सौहृद्यम् ॥ १३६ ॥

एवं च कदाचन ।

पद्मैः पद्मैः स्वयमवचितैस्तन्मृणालैर्मृणाले-
र्लीलायुद्धं यदजनि मिथस्तत्र योषिन्मणीनाम् ।
तासां तस्मिन्नजनि कुतुकं पश्यतस्तत् प्रमोदात्
कृष्णस्यैव प्रहरणवशेनेव रुग्णं मनोऽभूत् ॥ १३७ ॥

मिथस्तासामेव परस्परं यद् युद्धमजनि तस्मिन् युद्धे तासां कुतुकमेवाजनि न तु पीडा, तत् पश्यतः कृष्णस्यैव मनो रुग्णं कामपीडितमासीत्, प्रहरणवशेनेवेत्युत्प्रेक्षा ॥ १३७ ॥

ततश्च ।

कृष्णे कर्षति कोकयुग्ममबला दोर्भ्यां व्यधुः स्वस्तिकं
कण्ठे चारुमृणालमर्पयति ताश्चक्रुर्भुजान् भङ्गुरान् ।
पद्मं जिघ्रति पाणिभिः पिदधिरे वक्त्रं जलक्रीडने
ताभिस्तस्य बभूव सौरतरसः कोऽपीङ्गितैरिङ्गितैः ॥ १३८ ॥

पाणिभ्यां कोकयुग्मं कर्षतीति स्तनालम्भनसूचनम्, स्वस्तिकमिति तद्वारणार्थं वक्षसि·आसनमुद्रया हस्तधारणम्, एवमेव कण्ठे· इत्यादिना व्यञ्जितयोः परिरम्भाधरपानयोर्वारणार्थं भङ्गुरानित्यादि ॥ १३८ ॥

ततश्च ।

निर्लेपः कुचमण्डलो मृगदृशां हारावली निर्गुणा
नेत्राम्भोरुहमञ्जनेन रहितं नीरागमोष्ठाधरम् ।
निर्ग्रन्थिर्मणिमेखला कचततिर्मोक्षं गता काचन
श्रीरासीद् द्विगुणेव सा घनरसे मग्नस्य योग्यं हि तत् ॥ १३९ ॥

घनरसे जले, पक्षे संभोगात्मकशृङ्गाररसे ॥ १३९ ॥

पद्मैः केशाभरणममलैरुत्पलैः कर्णभूषां
हारं कृत्वा बिसलतिकया मेखलां शैवलेन ।
क्रीडोपान्ते मणिमयशिरोभूषणादीनि तानि
प्रेम्णा नार्यो दिनमणिभुवे प्रीतिदेयानि चक्रुः ॥ १४० ॥

संभोगान्ते तासां स्वाधीनभर्तृकाभावेन प्रसाधनमाह पद्मैरिति । ननु ताभिः पूर्वसिद्धानि मणिमयमण्डनानि क्व धारितानीत्यत आह क्रीडोपान्त इत्यादि । दिनमणिभुवे यमुनायै ॥ १४० ॥

उल्लास्य वामकरवारिरुहेण वारि
भाङ्कारिकङ्कणकलेन च दक्षिणेन ।
संताड्य चारु जलमण्डुकवाद्यलीला-
मातेनुरुत्सवसमाप्तिफलामिवैताः ॥ १४१ ॥

उल्लास्येति, निर्याणसमये वाद्यं समुचितमेवेति भावः ॥ १४१ ॥

स्नानोत्तीर्णाः कनकनलिनीस्पर्धिभासो नितम्बं
क्रान्त्वा स्रस्तैरविरतपयोबिन्दुनिष्यन्दभाग्भिः ।

रेजुः केशैरथ हठहृतैरम्बु मुञ्चद्भिरुच्चै-
ध्वान्तैः पृष्ठानुसरणपरैरंशुमाला इवेन्दोः ॥ १४२ ॥

स्नानोत्तीर्णाः· अभ्यङ्गोद्वर्तनादिपूर्वकस्नानानन्तरमुत्तीर्णाः ॥ १४२ ॥

अथ समयसमयमानसेवातत्परया रयापादितादरया योगमा-ययागमायया समुपाहृतानि तत्कालोचितलोचितरमणीयानि यानि वसनालंकारानुलेपनादीनि स्वप्नोपलब्धानीव तानि सेवित्वावित्वा सकलसुन्दरता दरताण्डवितकुण्डलाः सरसकलावलावण्यश्रिय इव मूर्तिमत्यो मत्योढमहामहाधौता इव माधुर्यो धुर्योत्तमाः प्रणयभरस्य रस्यतमत्विषो ललितोपवनकुञ्जवराजिरेषु राजिरेषु मदकलकलहंसकारण्डवादिवादिवर्गस्य मण्डलीभूय भूय एव रसिकघटामुकुटालंकारनीलमणिवरेण कौस्तुभेन विलसदुरसा रसाम्बुधिनाधिनाथेन सह सहर्षमुपविविशुर्गोपरमणीमणिश्रेणयः ॥ १४३ ॥

अथ गात्रजलापसारणाद्यनन्तरं वसनालंकारादीनि सेवित्वा भूय एव· अधिनाथेन सह ललितोपवनकुञ्जवराणाम्· अजिरेषु·उपविविशु-रित्यन्वयः । अगमो दुर्लङ्घ्योऽयः शुभावहो विधिर्यस्यास्तया । लोचितं दृष्टिस्तस्य रमणीयानि । सरसकलाम्· अवन्ति रक्षन्तीति ताः । मत्या· ऊढेन महामहेन महोत्सवेन· आ सम्यक्· धौताः क्षालिता इव माधुर्यो मधुरताः· मूर्तिधारिण्यो धुर्योत्तमाः श्रेष्ठाधाराः । राजिं श्रेणीं रान्तीति तया तेषु ॥ १४३ ॥

तत्रानिन्ये मणिमयघटैर्देवताभिर्वनीनां
स्वादुः स्वच्छः पुरुपरिमलः कौसुमः शीधुपूरः ।
यद्गन्धान्धैर्मधुपनिकरैः सर्वतो घूर्णमानै-
र्ज्योत्स्नाजालेऽप्युपचित इव व्योम्नि गाढान्धकारः ॥ १४४ ॥

वनीनां क्षुद्रवनानाम् ॥ १४४ ॥

रजतजलवज्ज्योत्स्नाजालोज्ज्वले पुलिनोदरे
स्फटिकचषकश्रेण्यस्तासां पुरः परिरेजिरे ।
नयनविषयीभावं हित्वा परस्परसत्त्विषः
करकिशलयस्पर्शेनैव स्वबोधविभाविकाः ॥ १४५ ॥

परस्परसत्त्विषः· ज्योत्स्नास्फटिकचषकश्रेण्योस्तुल्यकान्तित्वात्, अत एव पार्थक्येनानुपलब्धेर्हेतोर्नयनविषयीभावं नेत्रेन्द्रियग्राह्यत्वं त्यक्त्वा त्वगिन्द्रियग्राह्यास्ता अभवन्नित्याह करकिशलयेति । करकिशलयानां स्पर्शेनैव स्वबोधं स्फटिकचषकश्रेण्य एवैता न ज्योत्स्ना इति स्वविषयकज्ञानं विशेषेण भावयन्ति· उत्पादयन्तीति ताः ॥ १४५ ॥

तामेतां मधुपानसामग्रीमग्रीयां सामग्रीमिव मनोभवामोदकमोदकदम्बस्य समालोकमानो मानोन्नतधीः सरसमना रसमनायासिद्धं तं बहु मानयन् नयन्नपि तत्र लालसां सालसां साधीयसीं मदमाधुरीमाधुरीणां चित्तविभ्रमैर्विभ्रमैरुपचितां चालोकयितुं मधूनि ॥ १४६ ॥

मनोभवामोदकस्य कामोद्दीपकस्य मोदकदम्बस्य हर्षसमूहस्य सामग्रीमिव समग्रतामिव, संपूर्णतामिवेत्यर्थः । चित्तस्य विविधा भ्रमो येषु तथा तैर्विभ्रमैरुपचितां मदस्य मत्तताया माधुरीं द्रष्टुम् ॥ १४६ ॥

एकैकस्यै स्फटिकचषकैः पूरयित्वा प्रदातुं
स्वेच्छापूर्वं नयत सुदृशो यूथपायै विभज्य ।
इत्येतासां प्रियसहचरीः कौतुकात् प्राह कृष्णा-
स्तास्तस्यांशं तदभिमुखतो न्यस्य चक्रुस्तथैव ॥ १४७ ॥

हे सुदृशः· एकैकस्यै यूथपायै विभज्य प्रदातुं स्फटिकचषकैः पूरयित्वा मधूनि नयत ॥ १४७ ॥

एवं सति ।

कर्पूराभे किरणसुधया प्रोक्षिते शीतधाम्नः
प्रत्यामृष्टे कमलकुमुदामोदिना मारुतेन ।
प्रादुर्भूतः स खलु शुशुभे सैकते भानुपुत्र्याः
प्रत्यासन्ने सुरतसमरे वीरपानप्रमोदः ॥ १४८ ॥

सैकते सिकतामयपुलिने ॥ १४८ ॥

प्रतिचषकं प्रतिबिम्बित-
शशिबिम्बं विलसदुत्पलामोदम् ।
उपरिभ्रमदलिललितं
पुरतस्तासां रराज माध्वीकम् ॥ १४९ ॥

उपरि भ्रमन्तोऽलयो यत्र तत् ॥ १४९ ॥

आदौ पाने नयनयुगयोः शोणिमानं द्वितीये
वाग्वैवश्यं व्यधिकरणतां हासभीत्योस्तृतीये ।
द्रष्टुं पश्चाद्विहसितुमपि प्राणनाथं तथान्याः
पानक्रीडापरिषदि दधे पातुमिच्छां न काचित् ॥ १५० ॥

काचिन्माध्वीकं पातुमिच्छां न दधे । किमर्थम्. आदौ प्रथमे पाने नयनयोः शोणिमानं द्रष्टुं, हासभीत्योर्व्यधिकरणतां हासोत्पादके वस्तुनि विषये भीतिं भीत्युत्पादके हासं द्रष्टुं पश्चाद्विहसितुं परिहसितुमिति। एतत् सुखं पानसुखतोऽप्यधिकमिति मन्वानेत्यर्थः। अपिकाराद् व्यजनाद्यैः परिचरितुम् ॥ १५० ॥

आतन्वाने अमृतमधुनोर्व्यत्ययेनैव मैत्रीं
चन्द्राम्भोजे इव वदनयोर्मण्डले कारयन्तौ ।
अन्योन्यश्रीवदनचषकोपात्तमस्योस्यदत्तं
राधाकृष्णौ सममपिवतां साधरोष्ठोपदंशम् ॥ १५१ ॥

कौसुममधुपानानन्तरमाधरमधुपानपीनःपुन्यमाह· आतन्वाते इति। श्रीवदनमेव चषकं पात्रं तत्र· उपात्तं धारितम्। अधरोष्ठावेव उपदंशो विदंशस्तदन्तरास्वादनीयं वस्तु तत्सहितम्। किं कुर्वन्तौ चन्द्राम्भोजे चन्द्रकमलरूपे वदनयोर्मण्डले अमृतमधुनोर्व्यत्ययेनैव मैत्रीम् आतन्वाते कारयन्तौ। अयमर्थः। राधामुखं चन्द्रः कृष्णमुखं कमलम् अतस्तयोः परस्पराधरपानतश्चन्द्रस्यामृतं कमले प्रविशति कमलस्य मधु चन्द्रे प्रविशतीति मधुमांश्चन्द्रोऽमृतमयं कमलमिति परस्परमैत्र्या धर्मविपर्यासः ॥ १५१ ॥

एवं प्रवृत्ते पानमहे महेभ्यो मधुरिममणिभिः संमदसिन्धुरसे मदसिन्धुरसौभाग्यः सिन्धुरीभिरिव ताभिर्मधुमदमदनमदतोऽनमदतोदमना मत्तलीलालीलाविनधीरधीर इव सन्नपि सन्नपिपासानां पूर्वं पानेनैव क्षिप्रमदानां प्रमदानां मदाविलविलसितां सखीभिः सह वाचं वाचंयम इव शुश्राव ॥ १५२ ॥

महेभ्यो महाढ्यः, "इभ्य आढ्यो धनी"त्यमरः। मदसिन्धुरस मत्तहस्तिन इव सौभाग्यं यस्य सः। अनमत्· अनम्रीभवत्· अत एव अतोदं निरङ्कुशं मनो यस्य सः। मत्तस्येव या लीलाली तया लावित छेदिता धीर्विचारो यस्य सः। सन्नपिपासानां गततृष्णानाम् ॥ १५२ ॥

आलीन्दुर्मे पिबति मधु किं पीयतामालि सार्धं
स्तेनोऽयं यत् तव मुखरुचां कण्ठलग्नेन भाव्यम्।
दन्तच्छेदोऽमृतमयतया सत्यमस्यावशिष्टं
नो पास्यामीत्यथ मधुमती पाणिना मध्वपास्यम् ॥ १५३ ॥

मधुचषके प्रतिबिम्बितं चन्द्रमालोक्याह·आलीन्दुरिति। अपीत माध्वीका सखी तामुपहसन्ती प्रत्याह हे· आलि तर्हि·इन्दुना सार्धमेव पीयतां, यद्यस्मात्·अयमिन्दुस्तव मुखरुचां स्तेनश्चोरः। पुनः सा प्राह कण्ठेति। सखी प्रत्याह तर्हि दन्तैश्छेद्यः। सा प्राह· अस्यावशिष्टम्·उच्छिष्टम् ॥ १५३ ॥

हा कष्टं द्यौः पपतति कथं हन्त घूघूर्णते भू-
र्नाथ त्वं मां धधर पतता कम्प मे गात्रयष्टिः ।
इत्थं वृद्धस्खलितह्रसितैरक्षरैर्व्याहरन्ती
चासात् काचिद्भुजलतिकया कृष्णकण्ठं दधार ॥ १५४ ॥

वृद्धं च स्खलितं च ह्रसितं च॰ इति तथाभूतैरक्षरैः । पपततीति वाक्यत्रये॰अक्षरवृद्धिः । मे मम गात्रयष्टिः पतितेत्यर्थे पपता॰अत्र विपर्यासरूपमक्षरस्खलनम् । कम्पते॰ इति वक्तव्ये कम्प इत्यक्षरह्रासः ॥ १५४ ॥

भ्राम्यतामुपरि भृङ्गगणानां
वीक्ष्य बिम्बमथ कल्कविकल्पात् ।
वल्लभाय ददती मधु निन्ये
स्वाञ्चलेन चषकाच्चषकान्तः ॥ १५५ ॥

बिम्बं मधुनि प्रतिबिम्बं कल्कविकल्पान्मधुनः कल्कोऽयं भविष्यतीति संदेहाद्धेतोर्वल्लभाय मधु ददती दातुं चषकात्॰एकस्माच्चषकात्॰ चषकान्तः॰ अन्यस्य चषकस्य मध्यं स्वाञ्चलेन संशोध्य निन्ये ॥ १५५ ॥

एवं मधुमदाधिका राधिका रामणीयकाधिकारा मत्तलीलां प्रथयतायतानन्देन सह वनमालिनालिनाम्ना संबोधितेन तेन च तदनुवदता किंचिदवादीत् ॥ १५६ ॥

मधुमदेन॰अधिका राधिका॰आलिनाम्ना सख्या एव नाम्ना संबोधितेन तेन वनमालिना सह किंचिदवादीत् । रामणीयके॰ अधिकारो यस्याः सा ॥ १५६ ॥

आलि प्रेयन् हरिरसि शठः कृष्ण मे संप्रसीद
श्यामे स त्वामभिसरति किं नाथ मे त्वं ह्युपास्यः ।
इत्यन्योन्यप्रकृतिविकृतीभावतोऽनन्विताथं
व्याजल्पन्तौ कुसुमधनुषं निन्यतुर्मूढभावम् ॥ १५७ ॥

हे·आलि हे सखि·इति प्रथमं राधया संबोधितः कृष्णः, ततो हे प्रेयन्· इति कृष्णेन संबोधिता राधा, ततश्च हरति चोरयतीति हरिः स्त्रीचोरस्त्वमालि शठोऽसीति मानाभासमालम्ब्य राधयोक्तम्, ततो हे राधे त्वं प्रसीदेति वक्तव्ये कृष्ण मे संप्रसीदेति कृष्णेनोक्तम्, ततो रुष्यन्त्या राधया हे श्याम सा त्वामभिसरति किमिति वक्तव्ये श्यामे स त्वामभिसरति किमित्युक्तम्, ततः कृष्णेन हे नाथे त्वमेव मे·उपास्या नान्या· इति वक्तव्ये नाथ मे त्वं ह्युपास्य इत्युक्तम्। नाथ दासी तथास्मी-"त्यलंकारकौस्तुभे"पाठः। मूढभावं निन्यतुः, मोहयामासतुरित्यर्थः ॥ १५७ ॥

पाकं याते मधुमदरसे प्राप्तसंस्कारशेषे
वृद्धिं याति स्मरभुजबले चोभयोर्मिश्रभावात् ।
रम्या रामाविततिरसको प्राणनाथेन साकं
दीर्घोद्रेकां सुरतकलया यापयामास रात्रिम् ॥ १५८ ॥

पाकं याते, जीर्णे सतीत्यर्थः, तथापि प्राप्तः संस्कारशेषो यत्र तथाभूते याथार्थ्येन स्वपरप्रत्यभिज्ञायां वृत्तायामपि सम्यङ्मत्तानपगम एवेत्यर्थः । अत एव स्मरस्य भुजबले वृद्धिं याति गच्छति सति, पूर्वमतिमधून्मादघूर्णालस्यादिभिः स्मरविलासो वैदग्धीरहितः शिथिल एवासीदिति भावः । उभयोर्मधुमदशेषकामावेशयोः ॥ १५८ ॥

सान्द्रानन्दकलेवरेण रसिकेनानन्दिनीभिः समं
स्वाभिः शक्तिभिराभिरेव परितो गोपाङ्गनानामभिः ।
इत्थं काव्यकथायथार्थविषये माध्वीकपानादिकां
साध्वीहां सुरतोत्सवं च दधता कामः कृतार्थीकृतः ॥ १५९ ॥

साङ्गोपाङ्गां रासक्रीडामुपसंहरति सान्द्रेति । स्वाभिः स्वरूपभूताभिः, आनन्दिनीभिर्ह्लादिनीत्यभिधानाभिः, "विष्णुशक्तिः परा प्रोक्ता"· इति "ह्लादिनी संधिनी संवित् त्वय्येका सर्वसंश्रये" इति· "आनन्दचिन्मयरसप्रतिभाविताभि"रिति "ह्लादिनी या महाशक्तिः सर्वशक्तिवरीयसी"ति विष्णुपुराणब्रह्मसंहितातन्त्रादिप्रामाण्यादेवेति भावः । काव्येषु

विविधकविकृतेषु कथाः प्राकृतनायकालम्बनत्वेन तेष्वसंभावितत्वेन च व्यर्था एव यास्तासामपि यथार्थीकृतये, ता यथार्थीकर्तुम्, तासां स्वयमेवालम्बनीभूयेति भावः ॥ १५९ ॥

अथ गगनविटङ्कपारावतेनेव पीयूषदीधितिना भुक्तावशिष्टासु कतिपयथीषु लाजास्विव दिविषद्वधूभिः कुसुमधिया कुसुमैः सह वृष्टपरिशिष्टासु ॥ १६० ॥

रात्रिविरामं वर्णयति। तारासु परिमेयतां गतासु सतीषु विभावरी शरीरपरित्यागाय कृतोद्यमेव यदा समजनिष्ट तदा खे·आकाशे देववधूततिरपि·अति· अतिशयेन रोपितहृदयशल्येव तिरोबभूव·अन्तरधात्, इत्यन्वयः। तारासु कास्विव, कुसुमैः सह वृष्टपरिशिष्टासु कतिपयथीषु कतिपयानां पूरणीषु लाजास्विव। तर्हि·अपरा बह्वो लाजाः क्व गता इत्यत आह,गगनमेव विटङ्कः कपोतपालिका तस्य पारावतेन श्वेतकपोतेनेव चन्द्रेण भुक्तावशिष्टासु ॥ १६० ॥

रजनिरमण्या रजनिरमणेन त्रोटितस्य देवच्छन्दस्य निपत्य विस्रमराणां मुक्तानां पुनर्ग्रथनाय समाहृतानां शेषभूतासु कियतीषु मुक्तास्विव परिमेयतां गतासु तारासु ॥ १६१ ॥

तेजस्वित्वमालक्ष्योत्प्रेक्षते रजनीति। रजनिरमण्या इति षष्ठ्यन्तं तृतीयान्तं च, रजनिरेव रमणी तस्या देवच्छन्दस्य हारविशेषस्य रजनिरमणेन चन्द्रेण विहारवशात् त्रोटितस्य मुक्तानां पुनर्ग्रथनाय तया समाहृतानां मध्ये कियतीषु, "देवच्छन्दोऽसौ शतयष्टिकः" इत्यमरः ॥ १६१ ॥

द्वीपाद् द्वीपान्तरं चलता कलधौतमयेन गगनपयोधिमध्ये चलनप्रातिकूल्यकारिणा मरुतेव तेन रासविलासेन चिरं विलम्बय्य रचितेन चन्द्रमःपोतेन चिरात् पुनश्चलता प्रतीचीदिग्द्वीपनिकटे समासाद्यमाने सति विभावरी वरीयसा भविष्यद्भगवद्विरहदुःखेनेव शरीरपरित्यागाय कृतोद्यमेव यद्यजनिष्ट तदा तदाकलनखेदेव खे.देववधूततिरपि तिरोऽतिरोपितहृदयशल्येव बभूव ॥ १६२ ॥

कलधौतमयेन रौप्यमयेन चन्द्रमा एव पोतो मण्डलाकारो नौका-विशेषस्तेन पुनः-रासविलासे समाप्ते सति चलता सता प्रतीचीदिग्द्वीपस्य निकटे प्राप्यमाणे सति वरीयसा-अतिबृहता, तदाकलनेन तद्दर्शनेन खेदो यस्याः सा ॥ १६२ ॥

एवं विलासविरतौ
निशोऽवसानेऽतिदीर्घदीर्घायाः ।
सपदि पतिंमन्यानां
पुनरगमन् योषितः सदनम् ॥ १६३ ॥

सपदि तत्क्षणादेव "लोकवल्लीलाकैवल्या"दिति न्यायेन प्रभाता-गमचकिता इति भावः ॥ १६३ ॥

[1] तेऽपि च न पतिंमन्या-
स्ताः सुदृशः स्माभ्यसूयन्ति ।
छायारूपतया ताः
पार्श्वस्था इत्यमंसताविरतम् ॥ १६४ ॥

परपुरुषत्वं तस्य न
परनारीत्वं च नो तासाम् ।
परपुरुषत्वं तस्मिन्
परनारीत्वं च तास्वेव ॥ १६५ ॥

लोकदृष्ट्या प्रसक्तं वैधर्म्यं सिद्धान्तरीत्या निरस्यंस्तस्य प्रयोजन-भूतां रसपुष्टिं च व्यञ्जयन्नाह परपुरुषत्वमिति । तस्य शक्तिमत्त्वात् तासां च ह्लादिन्याख्यस्वरूपशक्तित्वात् परत्वमेव तावन्नास्तीति भावः । लीलारसपुष्टिमय्या लोकरीत्या तु तस्मिन्नेव परपुरुषत्वं तास्वेव परनारी-त्वमिति, एवकारस्योभयत्रान्वयात् । द्वारकानाथवैकुण्ठनाथादिस्वरू-पेषु रुक्मिणीलक्ष्म्यादिह्लादिन्यंशेषु च निरुपधिगाढरागानभिव्यक्तेर्वशोका-

१ त्यक्तं स्पष्टार्थतया व्याख्यात्रा पद्यमिदम् ।

राभावदर्शनाच्च स्वीयात्वपतित्वलीलाविष्कारेण न तथा रसपुष्टिरिति सूचितम् । अत एवोक्तं "यत्र निषेधविशेषः सुदुर्लभत्वं च यन्मृगाक्षीणाम् । तत्रैव नागराणां निर्भरमासज्जते हृदय"मिति ।

यत् तु परकीयायामधर्महेतुकत्वेनानौचित्याद्रसाभासत्वमुक्तं तत् प्राकृतनायकमालम्ब्यैव न तु धर्माधर्माभ्यां नियन्तुमशक्यं नियन्तृचूडामणीन्द्रं कृष्णम्,यदुक्तं "लघुत्वमत्र यत् प्रोक्तं तत् तु प्राकृतनायके" इति, "नेष्टा यदङ्गिनि रसे कविभिः परोढास्तद्गोकुलाम्बुजदृशां कुलमन्तरेणे"ति ॥ १६५ ॥

विक्रीडितमिदममलं
तस्य च तासां च सर्वदा सिद्धम् ।
लोकानुग्रहहेतोः
केवलमवनौ प्रकाशमायातम् ॥ १६६ ॥

न चैषा रीतिः प्रकटप्रकाश एव केवलं किंत्वप्रकटप्रकाशेऽप्येषैव लीला नित्यसिद्धैवेत्याह विक्रीडितमिति ॥ १६६ ॥

आकर्णयति य एतत्
कर्णयुतः कर्णरमणीयम् ।
यो वर्णयति च न तयोः
सौभाग्यं स्याद्वचोविषयः ॥ १६७ ॥

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे रासविलासो नाम विंशस्तवकः ॥ २० ॥

अनिर्वाच्यं सौभाग्यं स्यादित्यनेन बल्लवीजनवल्लभस्तं स्वातिसौभगास्पदे पदे निवेशयतीति द्योतितम् ॥ १६७ ॥

वाङ्मयेषु मधुरा हरिगाथा-
स्तासु कृष्णचरितान्यमृतानि ।
तेष्वपि प्रमदद्दिव्यधुनौ मे
रासकेलिमनु मज्जतु चेतः ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्तिन्यां विंशस्तवकः ॥ २० ॥

## ॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

### ॥ एकविंशतितमस्तवकारम्भः ॥

अथ लोकाचारचारवोपपन्नमहोला होलाका नाम खेला खेलालसैर्दिविषद्भिरपि विलोकयितुमाकाङ्क्षणीया क्षणीया व्रजवलये जवलयेन यदि कदाचन ववले ॥ १ ॥

होलाकेल्यनुरागरागनिकरप्रोद्गानकौतूहले
रासारामधृताविरामरमणे रामे सरामे हरौ ।
वंशीचौर्यमनु प्रहासनपटौ जल्पत्यनल्पं वटौ
दैवादागतशङ्खचूडमवधीदत्रैकविंशे हरिः ॥

शारदीं रामलीलामुपवर्ण्य तादृशीं वासन्तीं होलाकालीलामनुवर्णयति-अथेति । होलाका नाम खेला यदि कदाचन फाल्गुनादिमासे ववले प्रावर्तत तदा स कृष्णो वेणुपाणिः कुतूहली हली च स्वस्वानुरागवतीजनेन पृथक् पृथगुपगीयमानौ विलेसतुरित्यन्वयः । लोकाचारस्य चारवेण चारुतया-उपपन्नं मह उत्सवं लातीति तथा सा, "महस्तूत्सवतेजसो"रिति नानार्थसान्तवर्गः । व्रजमण्डले क्षणीया प्रतिक्षणभवा, प्रातर्मध्याह्नप्रदोषनिशीथादिकालनियमोऽपि तत्र नास्तीति भावः । जवलयेन शीघ्रयोगेन ववले यदि प्रवला बभूव ॥ १ ॥

नववले तदा तस्मिन्नुत्सवे स वेणुपाणिः कुतूहली हली चानुवृन्दावनमहि महिम्ना तस्य महस्य विगतत्रपे तत्र-पेशलताशलता वैदग्ध्येन मुग्धे तादृशां सुदृशां सुभगानां मण्डले मण्डलेपेनेव चिक्कणे कौतुकपीयूषयूषस्य स्वस्वानुरागवतीजनेन पृथक् पृथगुपगीयमानौ ॥ २ ॥

अनुवृन्दावनमहि वृन्दावनभूमिं लक्ष्यीकृत्य, सुदृशां मण्डले पेशलतया सौन्दर्येण चातुर्येण वा शलता प्रचरता वैदग्ध्येन मुग्धे मनोहरे, कौतुकमेव पीयूषं तस्य यूषस्य द्रवस्य मण्डलेपेनेव चिक्कणे ॥ २ ॥

मानोचित्येन पृथक् पृथग् विहरन्तौ हरन्तौ निजनिजरमणीमनो मनोरमालेपमालामालावसनालंकारचमत्कृतिकृतिनौ सरागं रागं कमपि चालपन्तौ तत्स्वरग्रामग्राममूर्छनर्छनातिदक्षताक्षतानन्दौ देशाचारवशतोऽवशतोषतया सह सहचरैरपि प्रणयिभिः ॥ ३ ॥

स्वराणां ग्रामाणां ग्रामस्य समूहस्य मूर्छनायाश्च ऋच्छने गतौ· अतिदक्षतया· अक्षतानन्दौ· अनुपहतहर्षौ । अवशस्तोषो येषां तत्तया सहचरैरपि सह· अतिमहत्त्वात् प्राबल्याच्च हर्षो येषां न वशीभूतः· अत एव हर्षस्यैव ये वशास्तैरित्यर्थः ॥ ३ ॥

श्रवणसुखकरकरतालिकाचलवलयझङ्कारानुकूलमधुरतावादिवादित्रसमसमदचर्चचर्चरीद्विपदिकादिकान्तगानपरैरपरैरपि परिजनैः समं समन्ततो मधुरजनिमधुरजनिशोभातिशये हिमकरकरनिपातशातशावल्यवल्यसौभगे तरुतरुणिमाविरामरामणीयके काननोद्देशे केकाननोद्देशे चिरं विलेसतुः ॥ ४ ॥

मधुरतया मधुरतां वा वदितुं शीलं यस्य तथाभूतं यद्वादित्रं मृदङ्गादिवाद्यं तत्समा तदनुरूपा मदचर्चा कस्तूरीचर्चेव या चर्चरी तया सहितानां द्विपदिकादीनां कान्तगानपरैः । मधुरा जनिरुत्पत्तिर्यस्यास्तथाभूता या मधुरजनिर्वसन्तरात्रिस्तया शोभातिशयो यस्मिंस्तथाभूते काननोद्देशे, केकानां मयूरवाणीनाम्·अननोद्देशो जीवनोद्देशो यत्र तस्मिन्,हिमकरस्य करनिपातेन शातं सुखदं शावल्यं वैचित्र्यं तेन वल्यं सौभगं यस्य तस्मिन् ॥ ४ ॥

तत्र च ।

वारुणीमदविघूर्णितेक्षणो
गण्डमण्डलचलैककुण्डलः ।
स्वानुरागिरमणीभिराबभौ
गाननर्तनकुतूहली हली ॥

किंच ।

विश्लथेन वपुषो हिमगौरा-
द्वाससातिशितिना कृतशोभः ।
अर्धमर्धमुरसः स्खलतेव
भ्राजते स्म तिमिरेण शशाङ्कः ॥ ५ ॥

हिमगौराद्वपुषः सकाशाद्विश्लथेन· अतिशितिना· अतिश्यामेन वाससा· अन्तरीयेण च· अर्धम्· अर्धम्· उरसः सकाशात् स्खलतेव ॥ ५ ॥

किंच ।

[1]क्षणं नटति चर्चरीद्विपदिकादिगानक्रमे
वलः प्रमदविह्वलः स्वयमभून्मदो मूर्तिमान् ।
क्षणं हसति गायति क्षणमपि प्रियाभिः समं
रजः किरति कौङ्कुमं सुरभिकामसिन्दूरवत् ॥ ६ ॥

चन्द्रावली निजसखीनिकरेण राधा
प्राणप्रियेण ललितादिसखीजनेन ।
श्यामा निजालिनिचयेन निजेन भद्रा
स्वालीकुलेन निवहैः सह यूथपानाम् ॥
अन्योन्यहासपरिहासविलासपूर्वं
सैन्दूरकौङ्कुमरजोनिकरं किरन्त्यः ।
वीणादिवादनविधानरसेन मुक्त-
कण्ठं जगुर्द्विपदिकां मदिरायताक्ष्यः ॥ ७ ॥

स्वपक्षसुहृत्पक्षतटस्थपक्षप्रतिपक्षत्वरूपचातुर्विध्येऽपि तासां दोलाकोत्सवे मिथः सौहार्दमेवोदगादित्याह चन्द्रावलीति ॥ ७ ॥

१ अत्याजि व्याख्यात्रा पद्यमिदम् ।

किंच ।

कृष्ण: कलेन मुरलीनिनदेन तासां
विद्रावयन् सुचिरसंचितगानगर्वम् ।
काश्मीररेणुनिकरेण समं समन्तात्
ताभिः प्रमोदरभसेन विकीर्यते स्म ॥ ८ ॥

ताभिः कर्त्रीभिः कृष्णो विकीर्यते स्मेत्यन्वयः ॥ ८ ॥

अवाङ्मुखतया वरं सहत एव मुग्धभ्रुवां
सभङ्कुरणकङ्कणं करतलेन कीर्णं रजः ।
मदाविलकलाकुलः कलभराजवन्निश्चलः
समुज्झति न चर्चरीरुचिरवेणुगानं हरिः ॥ ९ ॥

कलभराजपक्षे मदेनाविलः कलेनाकुलश्चेति सः, हरिपक्षे मृगमदरसलिप्तो वैदग्धीपूर्णश्चेति सः ॥ ९ ॥

एवं खेलाविक्रमक्रमतः सविभ्रमभ्रमणवशाद् बलदेवालम्बिनीनां नितम्बिनीनां नितरामुन्मदानां दानान्ध्यबन्धुरसिन्धुरसिंहवत् कुतूहलिना हलिना सह तत्रैव सांनिध्ये सति ॥ १० ॥

दानान्ध्येन बन्धुरश्चासौ सिन्धुरसिंहो मत्तगजोत्तमश्चेति तथा तेनेव ॥ १० ॥

गायन्त्यो गोपयन्त्यश्चलवलयकरोत्तालतालानुकारं
नृत्यन्त्यो नर्तयन्त्यः पदकमललसन्मञ्जुमञ्जीरघोषैः ।
रामा रामानुरक्ता ऋजुसरसदृशो लौकिकेनोपहासेनादूराद्देवराङ्गे सकुतुकमकिरन् कौङ्कुमीः केलिधूलीः ॥ ११ ॥

ऋजुसरसदृश इत्यनेन भ्रातृजायात्वाभिव्यञ्जनोचितो भाव एव तासां कृष्णे दर्शितः ॥ ११ ॥

ततश्च ।

कृष्णापाङ्गेङ्गितज्ञैः सहचरनिकरैर्लोहितश्वेतपीतान्
पिष्टातानुत्किरद्भिर्युगपदुपचितैर्द्राव्यमाणासु तासु ।
गाम्भीर्यस्निग्धमुग्धोल्लसितविहसितैः कूजितेनेव वेणोः
कृष्णास्ताः पर्यहासीदथ परिजहसुः सुस्वनं कृष्णवध्वः ॥ १२ ॥

पिष्टातान् सुगन्धधूलीः, "पिष्टातः पटवासकः" इत्यमरः ॥ १२ ॥

एवं करकिशलयलयललितोत्तालतालपुरःसरं होहो होहोति हासपरिहासपरिपाट्या परितः परिसरत्सु कृष्णजनेषु तत्कुतूहलहलहलाशब्देन कुपितो मदकलकलभ इव मदमत्तप्रवरो हि रोहिणीसुतः केलिधूलीधूलीलया खेलाजित्वरो जित्वरो भवन्नभिधावति स्म ॥ १३ ॥

करकिशलययोर्लयेन श्लेषेण ललित उत्ताल उत्कटः श्रेष्ठो वा यस्तालस्तत्पुरःसरम्, "उत्ताल उत्कटे श्रेष्ठे" इति मेदिनी। हि यतो मदेन मत्तप्रवरः, अतः कुपितः, केलिधूलीनां धूश्चालनं तल्लीलया, खेलैव आजिर्युद्धं तत्र त्वरा यस्य सः ॥ १३ ॥

तदवसरे सिंहावलोकन्यायेन गतयाप्यागतयेव लज्जया जयाकाङ्क्षयेव हतप्रतिभाप्रतिभानास्वपसृतासु तासु कृष्णवनितासभासु भासुरतया समुपसर्पत्सु सहचरेषु स भगवानेककुण्डली कुण्डलीन्द्रभोगभुजो भुजोपपीडं हसन्नेव सहचरानापीड्य केलिधूलिभिर्धूसरयामास ॥ १४ ॥

कुण्डलीन्द्रभोगभुजः शेषनागशरीरसदृशभुजद्वयः, भुजोपपीडं भुजाभ्यामुपपीड्य ॥ १४ ॥

तैरथ च रथचरणपाणिसहचरैर्बलाद् बलात् स्वं मोचयित्वा संभूय भूयः सकलैरेव युगपदसाध्वसं साध्वसंभ्रान्तः स खलु खेलाकौतुकेन केनचिदगणितगौरवे रवैकमुखरमुखरम्यैः सिन्दूरपांशुभिरुदंशुभिरुदच्यमानैः पर्यभावि ॥ १५ ॥

रथचरणपाणेः कृष्णस्य सहचरैः स बलदेवः साध्वसंभ्रान्तोऽपि पर्यभावि॰ अजीयत ॥ १५ ॥

दरहसितसितदशनज्योत्स्नास्नानसरसदशनवसनं स नन्दकुमारो मा.रोचतेऽयं वोऽन्यायो मे यदेकाकिनमार्यमनार्यमनास्त्वादृशां गणः संभूय परिभवतीति यदि निवारयामास ॥ १६ ॥

वो युष्माकमयमन्यायो मे मह्यं मा रोचते ॥ १६ ॥

तदा कमलरागरागपरिष्वक्तं हीरकस्तम्भमिव जवारुचिजवारुचिरं महास्फटिकाङ्कुरमिव ॥ १७ ॥

कमलरागस्य रागेण रक्तिम्ना परिष्वक्तमित्यनेनातिकोमलानां सिन्दूररेणूनां काठिन्यं प्रसक्तमित्यन्यथोपमिमीते, जवानां रुचिजवेन कान्तिवेगेन॰ आ सम्यक्॰ रुचिरम् ॥ १७ ॥

बालारुणारुणायितं सुमहिमहिमगिरिशिखरमिव ॥ १८ ॥

तेनापि स्फटिकस्य स्वीयवर्णातिलोपावातिसारस्यमित्यत आह, बालारुणेन प्रातरुदितसूर्येण॰ अरुणायितम् ॥ १८ ॥

प्रचलकोककोकनदकाननाक्रान्तं पुण्डरीकखण्डमिव ॥ १९ ॥

अनेनाप्यतिशीतलानां तेषामौष्ण्यं प्रसक्तमित्यन्यथाह, प्रचलाः कोकाश्चक्रवाका यत्र तदित्युपमानस्यैव विशेषणं प्रक्रान्तयमकभङ्गभयाभावाय ॥ १९ ॥

संध्यारागपरभागपरभासुरं पूर्णचन्द्रमण्डलमिव ॥ २० ॥

अत्रापि कोकनदवर्णेनारुणीभावो नास्ति पुण्डरीकस्येत्यत आह संध्यारागेति, अत्र तेषां मृदुलत्वमनुष्णत्वं चन्द्रस्य स्वरूपातिरोधानं चेति सर्वं समञ्जसम् ॥ २० ॥

सिन्दूररेणुरूषितं मदकौतुकशबलं बलं विलोक्य तद्वनिता नितान्तरागिण्यः पुनस्तमभितोऽभितोषेण सह नृत्यगीतवाद्याभिनयेन विहारविक्रमतः क्रमतः कियदन्तरिता यदि बभूवुः ॥ २१ ॥

पूर्वानुवृत्तेन· अमर्षेण मदकौतुकाभ्यां च संचारिभ्यां शवलं जातशवलीभावम् । नृत्यगीतवाद्यैरभिवाद्येन· अत्यादरणीयेनाभिनयेन ॥ २१ ॥

तदा तदारात् कृष्णमहेला कामहेला कापि कापिशायनपानमत्तयेव महनीयमहनीयमानोत्कण्ठया समुल्ललास ॥ २२ ॥

कृष्णेन सार्धं यदि रामकान्ताः खेलन्त्य एवाचिरतो जिताः स्युः ।
कृष्णं सकान्तं ससखिव्रजं हली जिगीपुराधावति तर्हि मत्तः ॥
कृष्णः सर्वानेव नियोधयन् स्वयं तैस्तं विजित्यैव यदेति दूरम् ।
तदा बलः खेलति स प्रियाभिः कृष्णास्तदा स्वाभिरिति व्यवस्था ॥

अत एव तदा तदाराद्दूरे श्रीराधादिभिर्निजकान्ताभिः कृष्णेन खेलायां प्रक्रम्यमाणायां सत्यामित्यर्थः । कापिशायनं मधु । महनीया श्लाघनीया च महे· उत्सवे नीयमाना च या· उत्कण्ठा तया ॥ २२ ॥

कथं ह्रियतेऽस्य वंशिका वंशिकासुरभिर्भुजाभोगतो गतोल्लासश्च कथमयं संपद्यते तद्वियोगेन ॥ २३ ॥

अस्य कृष्णस्य भुजाया भुजस्य सर्पतुल्यस्य भोगः फणातुल्यो यः पाणिस्तस्मात्, वंशिकाया अगुरोरिव सुरभिर्यस्य तस्मात्, "वंशिकागुरुराजार्हलोहकृमिजजोङ्गक"मित्यमरः ॥ २३ ॥

योगेन यस्याः कूजितेनास्माकमेतावति गानकौशल्ये शल्येन विद्धमिव वैदग्ध्यं भवति । तदियमवश्यं वंशी वशीभावमापादनीयेति परस्परं मन्त्रणानैपुण्यपुण्यतामुद्भाव्य ॥ २४ ॥

मन्त्रणानैपुण्यस्य पुण्यतां चारुताम्, "पुण्यं तु चार्वपी"त्यमरः ॥२४॥

न साचादाकृष्या भवति मुरली नास्य करतो
विरामोऽस्या नास्याप्यवतरति वैवश्यसमयः ।
कथंकारं भूयादपहरणमस्या इति दर-
स्मितं कर्णे कर्णे निभृतमलपन् पङ्कजदृशः ॥ २५ ॥

कथंकारमिति, न साचादित्यादिना· अपहरणस्य त्रयाणामुपायानामुक्तानां मध्ये कः खल्वत्र फलिष्यतीति भावः ॥ २५ ॥

॥ शेषमग्रे ॥





## तस्य निमित्तपरीष्टिः ॥ ३ ॥

प्रतिज्ञाव्यतिरेकेण भाष्यकारेण यद्यपि ।
वक्ष्यमाणा स्वपक्षस्य युक्तिः पूर्वं निदर्शिता ॥ १ ॥
प्रतिज्ञामात्रमित्येतज्जैमिनेर्मतमुच्यते ।
वृत्तिकारो ऽधिकं वापि भूतादिद्वारमब्रवीत् ॥ २ ॥

इति निमित्तसूत्रं तृतीयम् ॥

## सत्संप्रयोगेषु रूपस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥

वर्ण्यते सूत्रभेदेन येन प्रत्यक्षलक्षणा ।
तेन सूत्रस्य संबन्धो वाच्यः पूर्वप्रतिज्ञया ॥ १ ॥
लक्षणस्याभिधानं तु केनांशेनोपयुज्यते ।
किमर्थं चानुमानादेर्लक्षणं नात्र कथ्यते ॥ २ ॥
न तावदप्रमाणत्वं तेषां वाप्यक्षबुद्धिषु ।
शक्यतेन्तर्गतिर्वक्तुं न च लक्षणतुल्यता ॥ ३ ॥
न चापि सिद्धिरेषां स्यादर्थात्प्रत्यक्षलक्षणात् ।
न हि तत्पूर्वकं सर्वं प्रमाणमिति निश्चितम् ॥ ४ ॥
प्रत्यक्षलक्षणोक्तिश्च नानुमानादिलक्षणात् ।
विना न सिध्यतीत्येवमर्थाक्षेपो न युज्यते ॥ ५ ॥
तदेतत्पूर्वकत्वे धीर्न च तल्लक्षणाद्भवेत् ।
तदुक्तेर्वानुमानादि किं न स्यात्तदपूर्वकम् ॥ ६ ॥
न च लक्षणभेदस्य स्वरूपे यत्तयोरपि ।
प्रत्यक्षलक्षणादेषां कथं चिदवधारणा ॥ ७ ॥

प्रसिद्धत्वादवाच्यत्वं प्रत्यक्षेपि प्रसज्यते ।
तेनान्यपरिसंख्यार्थं सूत्रं मूढेन वोच्यते ॥ ८ ॥
नन्वेवं लक्षयेदेषु बुद्धिपूर्वं कथं च न ।
संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते ॥ ९ ॥
न चाप्येतेन सूत्रेण प्रत्यक्षं लक्ष्यते स्फुटम् ।
तदाभासेपि तुल्यत्वाद् भ्रमज्ञानेकवर्जनात् ॥ १० ॥
तद्धीन्द्रियार्थसंबन्धव्यापारेण विना भवेत् ।
केन चित्संप्रयोगे तु भ्रान्त्यादि स्यान्नियोगतः ॥ ११ ॥
ग्राह्येणान्येन वेत्येतत्कृतं नैव विशेषणम् ।
संप्रयोगस्य येन स्याद्विशेषो वक्ष्यमाणवत् ॥ १२ ॥
असामर्थ्यं च मत्वास्य वृत्तिकारेण लक्षणे ।
तत्संप्रयोग इत्येवं पाठान्तरमुदाहृतम् ॥ १३ ॥
तेनान्येनापि संयोगे चक्षुरादेर्यदुत्थितम् ।
विषयान्तरविज्ञानं तत्प्रत्यक्षं प्रसज्यते ॥ १४ ॥
सत्संप्रयोगनिर्देशो व्यर्थश्चेदेतदेवहि ।
प्रतिपाद्यं परस्यापि लक्षणासिद्धिरेव च ॥ १५ ॥
स्वप्नादीनां निवृत्तिर्वा फलं तस्या भविष्यति ।
तस्माद्विध्यनुवादत्वं नानुक्ते लक्षणे भवेत् ॥ १६ ॥
तेन नैषा वचोव्यक्तिर्यत्सतीन्द्रियसंगमे ।
विज्ञानं जायते तस्य प्रत्यक्षत्वं प्रतीयताम् ॥ १७ ॥
प्रत्यक्षं यज्जने सिद्धं तस्यैवं धर्मकत्वतः ।
विद्यमानोपलम्भत्वं तेन धर्मे निमित्तता ॥ १८ ॥
एवं लक्षणकत्वं च न स्वरूपविवक्षया ।
एवंलिङ्गकमित्येतद्भाष्यकारेण वर्ण्यते ॥ १९ ॥

यतो ऽस्ति तत्र धर्मोयं विद्यमानोपलम्भनम् ।
तस्मात्तेनप्रसिद्धेन गम्यतामनिमित्तता ॥ २० ॥
प्रत्यक्षत्वमदो हेतुः शेषहेतुप्रसिद्धये ।
अस्मदादौ प्रसिद्धत्वाद्योग्यर्थमभिधीयते ॥ २१ ॥
प्रकृते न च संबन्धः शेषाप्रामाण्यदर्शनात् ।
तदप्रामाण्यसिद्धिश्च संबन्धादेरनीक्षणात् ॥ २२ ॥
शक्यमन्याप्रमाणत्वमिति सूत्रेण बद्ध्यते ।
न च पर्यनुयोगो ऽत्र लक्षणानुप्रयोगतः ॥ २३ ॥
न च न्यूनातिरेकादिप्रसङ्गो लक्षणं प्रति ।
सर्वथा लोकसिद्धत्वाद्धर्मोयं तावदिष्यते ॥ २४
ततश्च मृगतृष्णादि न प्रत्यक्षं प्रसज्यते ।
अनिमित्तप्रसंगस्तु तस्यापि निनिवार्यते ॥ २५ ॥
अतीतानागतेप्यर्थे सूक्ष्मे व्यवहितेपि च ।
प्रत्यक्षं योगिनामिष्टं कैश्चिन्मुक्तात्मनामपि ॥ २६ ॥
विद्यमानोपलम्भत्वमसिद्धं तत्र तान्प्रति ।
भविष्यत्यस्य वा हेतो स्तद्ग्राह्यैर्व्यभिचारिता ॥ २७ ॥
माभूतामिति तेनाह लोकसिद्धं सदित्ययम् ।
न लोकव्यतिरिक्तं हि प्रत्यक्षं योगिनामपि ॥ २८ ॥
प्रत्यक्षत्वेन तस्यापि विद्यमानोपलम्भनम् ।
सत्संप्रयोगजत्वं वाप्यस्मत्प्रत्यक्षवद्भवेत् ॥ २९ ॥
तेषामवर्तमानेर्थे या नामोत्पद्यते मतिः ।
प्रत्यक्षं सा ततस्त्वेव नाभिलाषस्मृतादिवत् ॥ ३० ॥
लोके चाप्यप्रसिद्धत्वात्प्रत्यक्षत्वप्रमाणतः ।
प्रतिभावाद्द्वयासत्वं सदित्येतेन कथ्यते ॥ ३१ ॥

लौकिकी प्रतिभा यद्वत्प्रत्यक्षाद्यनपेक्षिणी ।
न निश्चयाय पर्याप्ता तथा स्याद्योगिनामपि ॥ ३२ ॥
अविद्यमानसंयोगात्स्याच्चेत्प्रत्यक्षधीः क्वचित् ।
भविष्यत्यपिधर्मेस्याच्छक्तेत्याह सदित्ययम् ॥ ३३ ॥
प्रत्यक्षः प्रागनुष्ठानान्न धर्मोनुष्ठितो ऽपि वा ।
फलसाधनरूपेण तदानीं येन नास्त्यसौ ॥ ३४ ॥
अस्मत्प्रत्यक्षवच्चापि विद्यमानोपलम्भनम् ।
प्रत्यक्षं ध्यायिनां धर्मे प्रत्यक्षत्वाच्च नेष्यते ॥ ३५ ॥
अविद्यमानसंयोगात्प्रत्यक्षत्वनिराकृतिः ।
योगिनां केन लभ्येत नेष्टं सद्ग्रहणं यदि ॥ ३६ ॥
सप्तम्यापि तु लभ्येत सदर्थः कल्पना पुनः ।
परेषां वारणायेति यत्नोजैमिनिना कृतः ॥ ३७ ॥
सम्यगर्थे च संशब्दो दुःप्रयोगनिवारणः ।
प्रयोग इन्द्रियाणां च व्यापारोर्थेषु कथ्यते ॥ ३८ ॥
दुष्टत्वात् शुक्तिकायोगो वार्य्यते रजतेक्षणात् ।
एवं सत्यनुवादत्वं लक्षणस्यापि संभवेत् ॥ ३९ ॥
ततश्चाप्राप्यकारित्वाद्यद्बौद्धैः श्रोत्रचक्षुषोः ।
लक्षणव्याप्तिसिध्यर्थं संयोगो नेति कीर्त्यते ॥ ४० ॥
प्राप्यग्रहणपक्षेपि सान्तरा ग्रहणं किल ।
अधिष्ठानाधिकश्चार्थो न गृह्येत त्वगादिवत् ॥ ४१ ॥
व्यापारमात्रवाचित्वादविरुद्धं तदत्र नः ।
यदि वार्थार्जवस्थानं संप्रयोगो ऽत्र वर्ण्यते ॥ ४२ ॥
योग्यतालक्षणेनान्यः संयोगः कार्यलक्षितः ।
सांख्यादीन्वा विनिर्जित्य प्राप्तपक्षो ऽत्र दूष्यताम् ॥ ४३ ॥

तयोश्च प्राप्यकारित्वमिन्द्रियत्वात्त्वगादिवत् ।
केचित्तयोः शरीराच्च बहिर्वृत्तिं प्रचक्षते ॥ ४४ ॥
चिकित्सादिप्रयोगश्च योधिष्ठाने प्रयुज्यते ।
सोपि तस्यैव संस्कार आधेयस्योपकारकः ॥ ४५ ॥
तद्देशश्चापि संस्कारः सर्वव्याप्त्यर्थ उच्यते ।
चक्षुराद्युपकारश्च पादादावपि दृश्यते ॥ ४६ ॥
तस्मान्नैकान्ततः शक्यं संस्कारात्तत्त्ववर्जनम् ।
बहिर्वृत्तिस्तयोश्चेष्टा पृथ्व्यन्या संततापि च ॥ ४७ ॥
अधिष्ठानाधिकं तेन गृह्यते यच्च यादृशम् ।
पार्थिवो वृत्तिभागे स्यात् दूरेपि ग्रहणं तथा ॥ ४८ ॥
दीपप्रभा यथा तस्मिन्विनश्यति विनश्यति ।
तथा बहिर्गताप्येषा मूलभेदाद्विनश्यति ॥ ४९ ॥
अधिष्ठानपिधाने तु सत्यप्युच्छिन्नयत्नया ।
तथाऽर्थानुपनीतत्वादात्मना नानुभूयते ॥ ५० ॥
विच्छिन्न इति बुद्धिः स्यादधिष्ठानमपेक्ष्य च ।
शब्दे त्वाधिक्यविच्छेदौ भ्रान्त्यैवोक्तावसंभवात् ॥ ५१ ॥
पुरुषेन्द्रियशब्दौ च व्यवधानेन कल्पितौ ।
पुरुषो लौकिको वा स्याद्यो वास्मिन्साधयिष्यते ॥ ५२ ॥
विक्रियाज्ञानरूपास्य न नित्यत्वे विरोत्स्यते ।
बुद्धिजन्मेति वाप्याह जायमानप्रमाणताम् ॥ ५३ ॥
व्यापारः कारकाणां हि दृष्टो जन्मातिरेकतः ।
प्रमाणेऽपि तथा मा भूदिति जन्म विवक्ष्यते ॥ ५४ ॥
नहि तत् क्षणमप्यास्ते जायते वा प्रमात्मकम् ।
येनार्थग्रहणे पश्चाद्व्याप्रियेतेन्द्रियादिवत् ॥ ५५ ॥

तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते ।
तदेव च प्रमारूपं तद्वती करणं च धीः ॥ ५६ ॥
जन्मत्त्वाव्यतिरेकेण भाष्यकारेण वर्णितम् ।
तच्च भूतभविष्यत्वात् कृतं बुद्धेर्विशेषणम् ॥ ५७ ॥
यदाप्यौलूक्यसिद्धान्तात् समवायस्य जन्मता ।
बुद्धिस्तत्रेन्द्रियाधीना तेन प्रत्यक्षमुच्यते ॥ ५८ ॥
प्रमाणफलभावश्च यथेष्टं परिकल्प्यताम् ।
सर्वथाप्यनिमित्तत्वं विद्यमानोपलम्भनात् ॥ ५९ ॥
यद्वेन्द्रियं प्रमाणं स्यात्तस्य वार्थेन संगतिः ।
मनसो वेन्द्रियैर्योग आत्मना सर्व एव वा ॥ ६० ॥
तदा ज्ञानं फलं तत्र व्यापाराच्च प्रमाणता ।
व्यापारो न यदा तेषां तदा नोत्पद्यते फलम् ॥ ६१ ॥
न च सर्वात्मनाक्षेण संबन्धोऽर्थस्य विद्यते ।
येन सर्वार्थबोधः स्यात्तत्प्रमाणाभिधायिनाम् ॥ ६२ ॥
प्राप्तिमात्रं हि संबन्धो नेन्द्रियस्याभ्युपेयते ।
मा भूत्कारणमात्रेण त्वचा रूपावधारणम् ॥ ६३ ॥
यथा प्रमाणनिष्पत्तौ योग्यत्वादिन्द्रियार्थयोः ।
नियता संगतिर्हेतुः फलेप्येवं भविष्यति ॥ ६४ ॥
योगस्य ह्याश्रयत्वेपि भवत्यन्यतराश्रयः ।
व्यपदेशोथ वाप्यक्षं तथा (१) साधारणं भवेत् ॥ ६५ ॥
संयोगे त्वात्ममनसोः स्याच्चेद्विषयभिन्नता ।
प्रमाणफलयोर्नासावर्थे हि व्यापृतं द्वयम् ॥ ६६ ॥

(१) तस्या २।

अथाप्याश्रय इष्टस्ते विज्ञेयाद्विषयान्तरम् ।
आत्मस्थत्वेन विज्ञानं न भिन्नविषयं ततः ॥ ६७ ॥
प्रकृष्टसाधनत्वाच्च प्रत्यासत्तेः स एव नः ।
करणं तेन नान्यच्च कारके स्यात्प्रमाणता ॥ ६८ ॥
प्रमाणे सर्वसंयोगे दोषो नैकोऽपि विद्यते ।
प्रमाणं त्विन्द्रियं यस्य तस्यैको विषयः स्फुटः ॥ ६९ ॥
प्रमाणफलते बुद्ध्योर्विशेषणविशेष्ययोः ।
यदा तदापि पूर्वोक्ता भिन्नार्थत्वनिराक्रिया ॥ ७० ॥
विशेषणे तु बोद्धव्ये यदालोचनमात्रकम् ।
प्रसूते निश्चयं पश्चात्तस्य प्रामाण्यकल्पना ॥ ७१ ॥
निश्चयस्तु फलं तत्र नासावालोचितो यदा ।
तदा नैव प्रमाणत्वं स्यादर्थानवधारणात् ॥ ७२ ॥
ज्ञानादिबुद्धिफलता प्रमाणं चेद्विशेष्यधीः ।
उपकारादिसंस्मृत्या व्यवायश्चेदियं फलम् ॥ ७३ ॥
विषयैकत्वमिच्छंस्तु यः प्रमाणं फलं वदेत् ।
साध्यसाधनयोर्भेदो लौकिकस्तेन बाधितः ॥ ७४ ॥
छेदनेखदिरप्राप्ते पलाशेन छिदा यथा ।
तथैव परशोर्लोके छिदया सह नैकता ॥ ७५ ॥
भवत्यभेदहानेन सूचिता विषयैकता ।
तत्त्यागेन परेभ्यस्तु भेदो सूचिमुपागतः ॥ ७६ ॥
करणत्वोपचारस्तु फले चेत्कल्प्यते त्वया ।
कथं चिद्विषयैकत्वं परैर्वा किं न कल्प्यते ॥ ७७ ॥
परिच्छेदफलत्वेन वृत्तस्यानन्तरस्य नः ।
प्रमाणत्वं भवेत् ज्ञाने प्रमाणे तु परं फलम् ॥ ७८ ॥

स्वसंवित्तिफलत्वं तु तन्निषेधान्न युज्यते ।
प्रमाणे विषयाकारे भिन्नार्थत्वान्न युज्यते ॥ ७६ ॥
स्वाकारश्च स्वसंवित्तिं मुक्त्वा नान्यः प्रतीयते ।
प्रामाण्यं यस्य कल्प्येत स्वसंवित्तिफलं प्रति ॥ ८० ॥
स्वाकारस्य परिच्छेदो न चाकारान्तराद्विना ।
तस्याप्येवं तथा च स्यान्नाकारान्तः कदा चन ॥ ८१ ॥
न चासंचेतितः सत्तां स्वाकारः प्रतिपद्यते ।
ग्राह्ये च विषयाकारे ग्राहकोन्यो न लभ्यते ॥ ८२ ॥
मनसस्त्विन्द्रियत्वेन प्रत्यक्षाधीः सुखादिषु ।
मनसा संप्रयुक्तो हि नान्यात्मा प्रतिपद्यते ॥ ८३ ॥
संबद्धं वर्तमानं च गृह्यते चक्षुरादिना ।
सामान्यं वा विशेषो वा ग्राह्यं नातोऽत्र कल्प्यते ॥ ८४ ॥
लक्षणं यच्च यैरुक्तं प्रत्यक्षे लौकिके सति ।
विद्यमानोपलम्भित्वात्सर्वेस्यैवानिमित्तता ॥ ८५ ॥
निर्विकल्पकपक्षे तु सुतरामनिमित्तता ।
साध्यसाधनसंबन्धो नाविकल्प्य हि गृह्यते ॥ ८६ ॥
कथं प्रत्यक्षपूर्वत्वमनुमानादितो भवेत् ।
यदा स्मृत्यसमर्थत्वान्निर्विकल्पेन्द्रियस्य धीः ॥ ८७ ॥
न चाविकल्प्यलिङ्गस्य लिङ्गसंबन्धयोस्तथा ।
गृहीतिरुपमानेपि सादृश्यग्रहणात्स्मृतेः ॥ ८८ ॥
अर्थापत्तिः पुनः प्रायो नान्यदृष्टेर्थे इष्यते ।
प्रवर्तते च यं दृष्ट्वा सोप्यर्थः सविकल्पकः ॥ ८९ ॥
यच्च चानुमितं लिङ्गं सूर्यगत्यादिलिङ्गि च ।
तच्च प्रत्यक्षपूर्वत्वं कथमध्यवसीयते ॥ ९० ॥

प्रत्यक्षावगते चार्थे कुतस्तेषां प्रमाणता ।
तैर्यदा स प्रतीयेत तदा नाक्षस्य गोचरः ॥ ६१ ॥
अथ कस्य चिदर्थस्य ज्ञानानत्पूर्वता भवेत् ।
तदार्थस्य भविष्यत्वं न स्यादज्ञानकारणम् ॥ ६२ ॥
वर्तमाने हि कस्मिंश्चिद्विज्ञातेर्थेक्षबुद्धिभिः ।
लिङ्गादविद्यमानोपि धर्मो गम्येत तैस्तदा ॥ ६३ ॥
प्रत्यक्षेण गृहीत्वा च वर्णाद्भेदेपि गृह्यते ।
प्रमेयमिति सोपि स्यात्तत्पूर्वत्वादकारणम् ॥ ६४ ॥
के चित्तत्पूर्वकत्वं तु हेतुर्नैवेति मन्वते ।
तत्पूर्वकत्वाद्यत्तावत् प्रामाण्यं तदसंभवः ॥ ६५ ॥
प्रत्यक्षेण गृहीत्वा च लिङ्गाद्यन्यतदुद्भवम् ।
प्रवृत्तिरनुमानादेर्न च धर्मेस्ति तादृशम् ॥ ६६ ॥
अनुमानागमानादेर्न चाप्यस्तीह संभवः ।
संबन्धलिङ्गिलिङ्गानां पूर्वसिद्धेरसंभवात् ॥ ६७ ॥
सत्ता च नानुमानेन कस्य चित्प्रतिपद्यते ।
धर्मेणान्यद्विशेष्यं चेत्पक्षोसिद्धविशेषणः ॥ ६८ ॥
तस्माददृष्टपूर्वत्वात्केन चिद्वस्तुना सह ।
धर्मस्य नानुमेयत्वमसाधारणवस्तुवत् ॥ ६९ ॥
अदृष्टसदृशत्वाच्च स्वयं चानुपलम्भनात् ।
धर्मस्य नोपमेयत्वमसाधारणवद्भवेत् ॥ १०० ॥
नचार्थापत्तिरेवं स्याज्जगद्वैचित्र्यदर्शनात् ।
सुखिदुःख्यादिभेदो हि नादृष्टात्कारणादृते ॥ १०१ ॥
दृष्टस्य व्यभिचारित्वात्तदभावेपि संभवात् ।
सेवाध्ययनतुल्यत्वे दृष्टा च फलभिन्नता ॥ १०२ ॥

स्यादेवं यदि शक्येत स्वाभाविकनिवारणा ।
कर्मशक्तेश्च वैचित्र्ये हेतुरन्यो भवेद्यदि ॥ १०३ ॥
यथा च फलवैचित्र्ये कर्मणां शक्तता स्वतः ।
तथा विचित्रता लोके स्वभावादुपपत्स्यते ॥ १०४ ॥
अधर्मे धर्मरूपे वा ह्यविभक्ते फलं प्रति ।
किमप्यस्तीति विज्ञानं नराणां क्वोपयुज्यते ॥ १०५ ॥
किं नु यागादितो दुःखं हिंसादेः किं सुखोद्भवः ।
स्वर्गपुत्रादिभेदश्च कीदृशात्कर्मभेदतः ॥ १०६ ॥
इति यावदविज्ञानं तावन्नैव प्रवर्तते ।
प्रवृत्त्यङ्गं च यज्ज्ञानं तस्य मूलं प्रतीक्ष्यते ॥ १०७ ॥
तस्मात्सिद्धेपि सामान्ये विशेषो नागमादृते ।
विशेषस्य तु जिज्ञासा सूत्रकारेण सूचिता ॥ १०८ ॥
गम्यमाने विशेषे च तदन्तर्भावकारितः ।
सामान्यप्रत्ययोपि स्यात् शास्त्रादेवेत्यकारणम् ॥ १०९ ॥
यथार्थापत्तिरेवं च नानुमानोपमेष्यते ।
शास्त्रं चेत्तदपेक्षेत तस्यैव स्यात्प्रमाणता ॥ ११० ॥
प्रत्यक्षाग्रहणं यत्तु लिङ्गादेरविकल्पनात् ।
तन्नेष्टत्वाद्विकल्पस्याप्यर्थरूपोपकारिणः ॥ १११ ॥
अस्ति ह्यालोचना ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ ११२ ॥
न विशेषो न सामान्यं तदानीमनुभूयते ।
तयोराधारभूता तु व्यक्तिरेवावसीयते ॥ ११३ ॥
महासामान्यमन्यैस्तु द्रव्यं सदिति चोच्यते ।
सामान्यविषयत्वं च प्रत्यक्षस्यैवमाश्रितम् ॥ ११४ ॥

विशेषास्तु प्रतीयन्ते सविकल्पकबुद्धिभिः ।
ते च केचित्प्रतिद्रव्यं केचिद्बहुषु संश्रिताः ॥ ११५ ॥
तानकल्पयदुत्पन्नं व्यावृत्तानुगतात्मना ।
गव्यश्वे चोपजातं तु प्रत्यक्षं च विशिष्यते ॥ ११६ ॥
तदयुक्तं प्रतिद्रव्य भिन्नरूपोपलम्भनात् ।
न ह्याख्यातुमशक्यत्वाद्भेदो नास्तीति गम्यते ॥ ११७ ॥
निर्विकल्पकबोधेपि द्व्यात्मकस्यापि वस्तुनः ।
ग्रहणं लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते ॥ ११८ ॥
न च साधारणत्वेन परव्यावृत्यकल्पनात् ।
विशेषानुगमात्क्लृप्तेः सामान्यमिति नापि तत् ॥ ११९ ॥
ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता ॥ १२० ॥
करणं चेन्द्रियं बुद्धेर्न तत्र ज्ञानमाहितम् ।
तत्स्मृत्याद्यसमर्थत्वाद्विकल्पोतो न वार्यते ॥ १२१ ॥
आत्मन्येव स्थितं ज्ञानं स हि बोद्धात्र गम्यते ।
स्मरणे चास्य सामर्थ्यं संधानादौ च विद्यते ॥ १२२ ॥
तेनेन्द्रियार्थसंबन्धे विद्यमाने स्मरन्नपि ।
विकल्पयन् स्वधर्मेण वस्तुप्रत्यक्षवन्नरः ॥ १२३ ॥
तच्चैतदिन्द्रियाधीनमिति तैर्व्यपदिश्यते ।
तदसंबन्धजातं तु नैव प्रत्यक्षमिष्यते ॥ १२४ ॥
पुनः पुनर्विकल्पेपि सती जातिः प्रतीयते ।
न हि प्रविष्टमात्राणामुष्णाद्गर्भगृहादिषु ॥ १२५ ॥
अर्था न प्रतिभान्तीति गृह्यते नेन्द्रियैः पुनः ।
यथा त्वाभासमात्रेण पूर्वं ज्ञात्वा स्वरूपतः ॥ १२६ ॥

पश्चात्तेन वबुध्यन्ते तथा जात्यादिधर्मतः ।
यदि त्वालोच्य संमील्य नेत्रे कश्चिद्विकल्पयेत् ॥ १२७ ॥
न स्यात्प्रत्यक्षता तस्य संबन्धानुसारतः ।
असंबन्धविकल्पेपि तुल्यमात्मादिकारणम् ॥ १२८ ॥
तेनासाधारणत्वं स्यादक्षात्तस्यैव कल्प्यते ।
निर्विकल्पकबोधेपि नाक्षं केवलकारणम् ॥ १२९ ॥
तत्पारंपर्यजाते वा रूढिः स्यात् पङ्कजादिवत् ।
अनिमित्तैव वा रूढिः सुतरां सविकल्पकम् ॥ १३० ॥
प्रत्यक्षं संमतं लोके न तथा निर्विकल्पकम् ।
वृद्धप्रयोगगम्याश्च शब्दार्थाः सर्व एव नः ॥ १३१ ॥
तेन यत्र प्रयुक्तोयं न तस्मादपनीयते ।
सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः ॥ १३२ ॥
न सर्वलोकसिद्धस्य लक्षणेन विवर्तनम् ।
कल्पनायाः स्वसंवित्ताविन्द्रियाधीनता कथम् ॥ १३३ ॥
मनस्त्वेन्द्रियं चेत्स्याद्गोत्वाद्यावपि तत्समम् ।
स्वसंवित्तौ तदिष्टं चेल्लोको न ह्येवमिच्छति ॥ १३४ ॥
तस्माद्रूढित्वमेष्टव्यं पारिभाषिकतापि वा ।
मनसस्त्विन्द्रियत्वेन सुखदुःखादिबुद्धिषु ॥ १३५ ॥
यथा प्रत्यक्षतैवं नस्तदधीना भविष्यति ।
तदधीनत्वसाम्येपि कल्पनापोढशब्दनात् ॥ १३६ ॥
प्रत्यक्षं किं चिदेवेष्टं यथा तव तथैव नः ।
लिङ्गाद्यभावतश्चापि नानुमानादिधीरियम् ॥ १३७ ॥
बाधकप्रत्ययासत्त्वात् नाप्रामाण्यं च युज्यते ।
न च पूर्वमदृष्टत्वात् स्मृतित्वमुपपद्यते ॥ १३८ ॥

पश्चात्तत्र वबुध्यन्ते तथा जात्यादिधर्मतः ।
यदि त्वालोच्य संमील्य नेत्रे कश्चिद्विकल्पयेत् ॥ १२७ ॥
न स्यात्प्रत्यक्षता तस्य संबन्धाननुसारतः ।
असंबन्धविकल्पेपि तुल्यमात्मादिकारणम् ॥ १२८ ॥
तेनासाधारणत्वं स्यादक्षस्यैव कल्प्यते ।
निर्विकल्पकबोधेपि नाक्षं केवलकारणम् ॥ १२९ ॥
तत्पारंपर्यजाते वा रूढिः स्यात् पङ्कजादिवत् ।
अनिमित्तैव वा रूढिः सुतरां सविकल्पकम् ॥ १३० ॥
प्रत्यक्षं संमतं लोके न तथा निर्विकल्पकम् ।
वृद्धप्रयोगगम्याश्च शब्दार्थाः सर्व एव नः ॥ १३१ ॥
तेन यत्र प्रयुक्तोयं न तस्मादपनीयते ।
सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः ॥ १३२ ॥
न सर्वलोकसिद्धस्य लक्षणेन विवर्तनम् ।
कल्पनायाः स्वसंवित्ताविन्द्रियाधीनता कथम् ॥ १३३ ॥
मनस्त्वेन्द्रियं चेत्स्याद्दोत्वाद्दार्वपि तत्समम् ।
स्वसंवित्तौ तदिष्टं चेल्लोको न ह्येवमिच्छति ॥ १३४ ॥
तस्माद्रूढित्वमेष्टव्यं पारिभाषिकतापि वा ।
मनसस्त्विन्द्रियत्वेन सुखदुःखादिबुद्धिषु ॥ १३५ ॥
यथा प्रत्यक्षतैवं नस्तदधीना भविष्यति ।
तदधीनत्वसाम्येपि कल्पनापोढशब्दनात् ॥ १३६ ॥
प्रत्यक्षं किं चिदेवेष्टं यथा तव तथैव नः ।
लिङ्गाद्यभावतश्चापि नानुमानादिधीरियम् ॥ १३७ ॥
बाधकप्रत्ययासत्त्वात् नाप्रामाण्यं च युज्यते ।
न च पूर्वमदृष्टत्वात् स्मृतित्वमुपपद्यते ॥ १३८ ॥

तस्मात्प्रत्यक्षमेवेदं व्यवहारस्तथैव च।
जात्याद्यर्थान्तरं यस्मादतद्रूपेपि वस्तुनि ॥ १३९ ॥
भवत्यध्यस्य धीस्तस्मान्मृगतृष्णादिभिः समा।
नैतदश्वादिबुद्धीनामध्यारोपाद्यसंभवात् ॥ १४० ॥
स्थितं नैव हि जात्यादेः परत्वं व्यक्तितो हि नः।
यदि ह्येकान्ततो भिन्नं विशेष्यात्स्याद्विशेषणम् ॥ १४१ ॥
स्वानुरूपां सदाबुद्धिं विशेष्ये जनयेत् कथम्।
स्फटिकादौ तु लाक्षादिस्वरूपा या मतिर्भवेत् ॥ १४२ ॥
अव्युत्पन्नस्य सा मिथ्या व्युत्पन्नानां हि भेदधीः।
न हि जात्यादिनिर्मुक्तं वस्तु दृष्टं कदा चन ॥ १४३ ॥
तद्विमोकेन वा तानि लाक्षादिस्फटिकादिवत्।
अत्रापि चेन्न दृश्येत भेदः कैश्चित्कदा चन ॥ १४४ ॥
रक्तादिबुद्धिसम्यक्त्वं विनिवार्येत केन वा।
न चाप्ययुतसिद्धानां संबन्धित्वेन कल्पना ॥ १४५ ॥
नानिष्पन्नस्य संबन्धो निष्पत्तौ युतसिद्धता।
तथा सति च संबन्धे हेतुः कश्चिन्न विद्यते ॥ १४६ ॥
षण्णामपि न संबन्धः पदार्थानां प्रतीयते।
समवायनियोगाच्च विश्लेषः स्यात्परस्परम् ॥ १४७ ॥
तत्क्रमावव्यवस्था स्यात्तस्य तस्यान्यसंगतेः।
अथ तस्यात्मरूपत्वान्नान्यसंबन्धकल्पना ॥ १४८ ॥
अभेदात्समवायोस्तु स्वरूपं धर्मधर्मिणोः।
न हि संव्यतिरिक्तः सन् संबन्धं प्रतिपद्यते ॥ १४९ ॥
तस्मिंस्ताभ्यामभिन्नेतु न नानात्वं तयोर्भवेत्।
ननु धर्मातिरेकेण धर्मिणोनुपलम्भनात् ॥ १५० ॥

पश्चात्तच्च बुध्यन्ते तथा जात्यादिधर्मतः ।
यदि त्वालोच्य संमील्य नेत्रे कश्चिद्विकल्पयेत् ॥ १२७ ॥
न स्यात्प्रत्यक्षता तस्य संबन्धाननुसारतः ।
असंबन्धविकल्पेऽपि तुल्यमात्मादिकारणम् ॥ १२८ ॥
तेनासाधारणत्वं स्याद्बाह्यस्यैव कल्प्यते ।
निर्विकल्पकबोधेऽपि नाद्यं केवलकारणम् ॥ १२९ ॥
तत्पारंपर्यजाते वा रूढिः स्यात् पङ्कजादिवत् ।
अनिमित्तैव वा रूढिः सुतरां सविकल्पकम् ॥ १३० ॥
प्रत्यक्षं संमतं लोके न तथा निर्विकल्पकम् ।
वृद्धप्रयोगगम्याश्च शब्दार्थाः सर्व एव नः ॥ १३१ ॥
तेन यत्र प्रयुक्तोऽयं न तस्मादपनीयते ।
सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः ॥ १३२ ॥
न सर्वलोकसिद्धस्य लक्षणेन विवर्तनम् ।
कल्पनायाः स्वसंवित्ताविन्द्रियाधीनता कथम् ॥ १३३ ॥
मनस्त्वेन्द्रियं चेत्स्याद्रोत्वाद्यर्थापि तत्समम् ।
स्वसंवित्तौ तदिष्टं चेल्लोको न ह्येवमिच्छति ॥ १३४ ॥
तस्माद्रूढित्वमेष्टव्यं पारिभाषिकतापि वा ।
मनसस्त्विन्द्रियत्वेन सुखदुःखादिबुद्धिषु ॥ १३५ ॥
यथा प्रत्यक्षतैवं नस्तदधीना भविष्यति ।
तदधीनत्वसाम्येऽपि कल्पनापोढशब्दनात् ॥ १३६ ॥
प्रत्यक्षं किं चिदेवेष्टं यथा तव तथैव नः ।
लिङ्गाद्यभावतश्चापि नानुमानादिधीरियम् ॥ १३७ ॥
बाधकप्रत्ययासत्त्वात् नाप्रामाण्यं च युज्यते ।
न च पूर्वमदृष्टत्वात् स्मृतित्वमुपपद्यते ॥ १३८ ॥

तस्मात्प्रत्यक्षमेवेदं व्यवहारस्तथैव च ।
जात्याद्यर्थान्तरं यस्मादतद्रूपेऽपि वस्तुनि ॥ १३६ ॥
भवत्यध्यस्य धीस्तस्मान्मृगतृष्णादिभिः समा ।
नैतदश्वादिबुद्धीनामध्यारोपाद्यसंभवात् ॥ १४० ॥
स्थितं नैव हि जात्यादेः परत्वं व्यक्तितो हि नः ।
यदि ह्येकान्ततो भिन्नं विशेष्यात्स्याद्विशेषणम् ॥ १४१ ॥
स्वानुरूपां सदाबुद्धिं विशेष्ये जनयेत् कथम् ।
स्फटिकादौ तु लाक्षादिस्वरूपा या मतिर्भवेत् ॥ १४२ ॥
अव्युत्पन्नस्य सा मिथ्या व्युत्पन्नानां हि भेदधीः ।
न हि जात्यादिनिर्मुक्तं वस्तु दृष्टं कदा चन ॥ १४३ ॥
तद्विमोकेन वा तानि लाक्षादिस्फटिकादिवत् ।
अथापि चेन्न दृश्येत भेदः कैश्चित्कदा चन ॥ १४४ ॥
रक्तादिबुद्धिसम्यक्त्वं विनिवार्येत केन वा ।
न चाप्ययुतसिद्धानां संबन्धित्वेन कल्पना ॥ १४५ ॥
नानिष्पन्नस्य संबन्धो निष्पत्तौ युतसिद्धता ।
तथा सति च संबन्धे हेतुः कश्चिन्न विद्यते ॥ १४६ ॥
षण्णामपि न संबन्धः पदार्थानां प्रतीयते ।
समवायनियोगाच्च विश्लेषः स्यात्परस्परम् ॥ १४७ ॥
तदकृप्तावव्यवस्था स्यात्तस्य तस्यान्यसंगतेः ।
अथ तस्यात्मरूपत्वान्नान्यसंबन्धकल्पना ॥ १४८ ॥
अभेदात्समवायोऽस्तु स्वरूपं धर्मधर्मिणोः ।
न हि संव्यतिरिक्तः सन् संबन्धं प्रतिपद्यते ॥ १४९ ॥
तस्मिंस्ताभ्यामभिन्नेतु न नानात्वं तयोर्भवेत् ।
ननु धर्मातिरेकेण धर्मिणोऽनुपलम्भनात् ॥ १५० ॥

तत्संघमात्र एवायं गवादिः स्याद्वनादिवत् ।
आविर्भावतिरोभावधर्मकेष्वनुयायिवत् ॥ १५१ ॥
तद्धर्मि यत्र वा ज्ञानं प्राग्धर्मग्रहणाद्भवेत् ।
अतो जात्यादिरूपेण धर्मिवद्गृह्यते नरैः ॥ १५२ ॥
पारूप्यं न तस्यास्तीत्यप्रामाण्यं न युज्यते ।
यस्यापि व्यतिरेकः स्याद्धर्मेभ्यो धर्मिणः स्फुटः ॥ १५३ ॥
नित्यं तस्यापि तादूप्यान्न मिथ्यात्वं प्रसज्यते ।
यो ह्यन्यरूपसंवेद्यः संवेद्यो वान्यथा पुनः ॥ १५४ ॥
स मिथ्या न तु तेनैव यो नित्यमवगम्यते ।
न वानेकेन्द्रियग्राह्यं भिन्नतां प्रतिपद्यते ॥ १५५ ॥
मा भूद्भिन्नशरीरस्य ग्राह्यत्वात् भिन्नरूपता ।
जात्यभेदादभेदश्चेदिन्द्रियत्वेन तत्समम् ॥ १५६ ॥
तुल्यबुद्धेरतो भिन्ना न सतेन्द्रियभेदतः ।
बुद्धिभेदाच्च नैकत्वं रूपादीनां प्रसज्यते ॥ १५७ ॥
एकानेकत्वमिष्टं वा सत्ताद्रूपादिरूपतः ।
क्वचिच्च संकराज्ज्ञात्वमेकमित्यवसीयते ॥ १५८ ॥
दार्ढ्यं दौर्बल्यभेदेन व्यवस्थापि यतः क्व चित् ।
यथा हि मनसः सार्द्धं रूपादौ चक्षुरादिना ॥ १५९ ॥
प्रवृत्तिः सुखदुःखादौ केवलस्यैव गम्यते ।
न क्व चित्संकराभावात्सर्वत्रैव निवर्तते ॥ १६० ॥
क्व चिच्च संकरं दृष्ट्वा संकरोन्यत्र कल्प्यते ।
श्रोत्रादेरुपघातेपि शब्दादिस्मृतिदर्शनात् ॥ १६१ ॥
वर्तमानस्य वा ज्ञानाद्व्यवस्था संप्रतीयते ।
एकं यदि भवेदक्षं सर्वैर्गृह्येत वा न वा ॥ १६२ ॥

कल्प्यते शक्तिभेदश्चेच्छक्तिरेवेन्द्रियं भवेत् ।
शृणुयाद्बधिरः शब्दं संकरे चक्षुरादिना ॥ १६३ ॥
मनसो वा स्वतंत्रत्वे वर्त्तमानार्थबुद्धिषु ।
न स्मरेद्बधिरः शब्दं श्रोत्रं चेत्स्मृतिकारणम् ॥ १६४ ॥
स्मृतिवद्वा भवेदस्य वर्तमानार्थधीरपि ।
स्मृतिश्च न भवेत्पश्चाद्गृह्णीयात्तन्न चेन्मनः ॥ १६५ ॥
श्रोत्रग्रहणवेलायां न च सर्वा स्मृतिर्भवेत् ।
बोधात्मकतया पुंसः सर्वत्र ग्रहणं भवेत् । १६६ ॥
युगपद्विषयेप्यस्य करणापेक्षिता न चेत् ।
तस्माज् ज्ञानानुसारेण व्यवस्थासंकरौ क्व चित् ॥ १६७ ॥
ग्राह्यग्राहकशक्तिभ्यः कार्यद्वारेण कल्पितौ ।
चक्षूरूपादिभेदस्तु पञ्चधैव व्यवस्थितः ॥ १६८ ॥
तेन नीलादिभेदेपि नेन्द्रियानन्त्यकल्पना ।
तस्मात्पञ्चभिरप्यक्षैर्बोधः सत्तागुणत्वयोः ॥ १६९ ॥
द्रव्यमूर्तौ पुनर्द्वाभ्यां रूपादावेकशः स्थितिः ।
ननु जात्यादिरूपेपि शब्दाभेदोपचारतः ॥ १७० ॥
प्रवर्तमाना मिथ्या स्याद् बुद्धी रूपेषु बुद्धिवत् ।
न शब्दाभेदरूपेण बुद्धिरर्थेषु जायते ॥ १७१ ॥
प्राक् शब्दाद्यादृशी बुद्धिः शब्दादपि हि तादृशी ।
ननु गोत्वादिरूपेण गवाकारादिबुद्धयः ॥ १७२ ॥
न प्राक् शब्दार्थसंबन्धज्ञानात्सन्ति कदा चन ।
जात्यादेस्तत्स्वरूपं चेदशब्दज्ञोपि लक्षयेत् ॥ १७३ ॥
अन्वयव्यतिरेकाभ्यां शब्दरूपत्वनिश्चयः ।
यथा रूपादयो भिन्नाः प्राक् शब्दात्स्वात्मनैव तु ॥ १७४ ॥

गम्यन्ते तद्बुद्धेवैतत्संज्ञित्वं केवलं परम्।
न चाविकल्पितः शब्दादिति वाच्यो न गृह्यते ॥ १७५ ॥
तेनागृहीतशब्दोऽपि गोत्वादीन्प्रतिपद्यते।
श्रुतिसस्पर्शबोधेऽपि नैवाभेदोपचारता ॥ १७६ ॥
विवेकादर्थशब्दानां चक्षुःश्रोत्रधिया कृतात्।
अनन्तधर्मके धर्मिण्येकधर्मावधारणे ॥ १७७ ॥
शब्दोऽभ्युपायमात्रं स्यात् नात्माध्यारोपकारणम्।
न चोपेयेऽभ्युपायस्य रूपाध्यासः प्रसज्यते ॥ १७८ ॥
नहि दीपेन्द्रियादीनां रूपाध्यारोप इष्यते।
नित्यं यदि च गोत्वादिशब्दरूपेण गृह्यते ॥ १७९ ॥
रूपान्तरं न दृष्टं चेत् भेदाध्यासो कुतो न्विमो।
यद्यभेदो न मिथ्यात्वं भेदश्चेत्स्यात्स्वरूपतः ॥ १८० ॥
नाध्यारोपप्रसङ्गः स्यात् भ्रान्त्यात्वध्यासकल्पना।
शब्देनैव च निर्देशो गृहीतेर्थेवकल्पते ॥ १८१ ॥
गौरित्येव च निर्देशो वाच्यतद्बुद्धिवादिनाम्।
निर्देशतुल्यतायां च श्रोत्रवक्तृस्वरूपता ॥ १८२ ॥
शब्दज्ञानप्रमेयेषु विज्ञानस्यावसीयते।
भ्रान्तिहेतुसमानत्वेऽप्युपायत्वान्मतिश्रुती ॥ १८३ ॥
मन्यतेर्थे समध्यस्ते नार्थाध्यासं तयोः पुनः।
गोत्वे सास्नादिमद्रूपाङ्गादिरूपाभिधायके ॥ १८४ ॥
निराकारोभयज्ञाने संवित्तिः परमार्थतः।
यदि वा भेदरूपेण शब्देनार्थः प्रतीयते ॥ १८५ ॥
गवादिष्वपि तुल्यं चेन्नैकरूपस्य दर्शनात्।
चये बिभीतकादीनां नैकधर्मान्वयोऽस्ति हि ॥ १८६ ॥

शब्दः साधारणस्तेषां जातिशब्दाद्विलक्षणः।
परस्परविभिन्नं तु ज्ञायतेचाकृतिद्वयम् ॥ १८७ ॥
तदध्यासेन युज्येत तद्रूपस्याविभागतः।
भिन्नाः स्युरक्षशब्दाश्चेन्नार्थे संशयदर्शनात् ॥ १८८ ।
न सामान्यादृते स स्याद्रूपाभेदश्च गम्यते।
भवत्यादौ च भिन्नेपि नामाख्यातत्वसंज्ञया ॥ १८९ ॥
रूपैकत्वेन चाध्यासे तुल्यार्थत्वं प्रसज्यते।
शब्दनिष्पत्त्यभेदाच्च तिङन्तार्थस्य साध्यता ॥ १९० ॥
कथं कथं च मूर्तार्थो वाचके मूर्तिवर्जिते।
गवाश्वशुक्लशब्दादेर्वाच्यरूपानपेक्षणे ॥ १९१ ॥
वाचकत्वव्यवस्थानं कथं जातिगुणादिषु।
वृक्षप्लक्षादिशब्दानां तुल्ये भेदे घटादिभिः ॥ १९२ ॥
विशेषणविशेष्यत्वं कथमर्थानपेक्षया।
सामानाधिकरण्यं च न स्याद्वाचकबुद्धिवत् ॥ १९३ ॥
एकच चोपसंहारो न बुद्ध्योर्निर्विकल्पके।
वस्तुमात्रे स चेदेवं सर्वेषामेकवाच्यता ॥ १९४ ॥
भवेद्गवादिशब्दानां सर्ववस्तु हि गम्यते।
न चासाधारणे भेदे नीलोत्पलमितीष्यते ॥ १९५ ॥
न हि शब्दप्रवृत्तिः स्यादन्यचान्यच चेष्यते।
न च नीलोत्पलं नाम वस्त्वेकं किंचिदिष्यते ॥ १९६ ॥
शब्दार्थयोर्यतो भेदो गम्यते ऽवयवानुगः।
शब्दद्वयस्य चाध्यासः पर्यायेष्वपि दृश्यते ॥ १९७ ॥
एकाधिकरणास्तेन स्युस्ते नीलोत्पलादिवत्।
न चानवगते पूर्वं पदमर्थे प्रयुज्यते ॥ १९८ ॥

तच संबन्धवेलायां कीदृशोऽर्थः प्रतीयते ।
तदानीं नार्थरूपे हि शब्दरूपस्य संभवः ॥ १९९ ॥
न वा साधारणांशेन संबन्धानुगमः क्व चित् ।
तच पूर्वानपेक्षत्वे यद्यात्माध्यासशक्तता ॥ २०० ॥
शब्दस्य प्रथमेऽपि स्याद्रूपबोधोऽस्य तद्रूपता ।
मम वाच्यानभिज्ञत्वान्न भवेत्स्मरणं ततः ॥ २०१ ।
भवतस्त्वर्थरूपस्य वाचकेष्वपि दर्शनात् ।
यथा त्वज्ञानशब्दानां वाच्ये तद्धीर्न जायते ॥ २०२ ॥
तथैवाज्ञातवाच्यानामुपलब्धेऽपि वाचके ।
तस्मान्नातीव वाच्यानां वाचकाधीनता भवेत् ॥ २०३ ॥
स्मारकत्वाच्च तेष्वेव पारतन्त्र्यं प्रतीयते ।
तेन संबन्धवेलायामर्थात्मा योऽवसीयते ॥ २०४ ॥
शब्दादपि स एवेति नार्थरूपं प्रणश्यति ।
प्रवृत्तौ वा निवृत्तौ वा यः शब्दः सकृदुच्यते (१) ॥ २०५ ॥
तादात्म्यं तस्य (२) शब्दस्य न कथं चित्प्रतीयते ।
करहस्तादिशब्देभ्यः शब्दरूपस्य भेदतः ॥ २०६ ॥
भिन्नोऽर्थः संप्रतीयेत तदध्यारोपकल्पने ।
आत्माध्यासस्तु सादृश्यादुपरागाच्च दृश्यते ॥ २०७ ॥
न तावदर्थसादृश्यं शब्दस्येह प्रतीयते ।
न चानुरागः शब्देन भिन्नदेशस्य युज्यते ॥ २०८ ॥
दूरस्थप्रतिबिम्बं च नारूपस्य प्रतीयते ।
शब्दसर्वगतत्वेन यदार्थप्राप्तिरुच्यते ॥ २०९ ॥

(१) यां शब्दः कुरुते मतिम्, इति पाठान्तरम् ।
(२) तत्र । पा॰ ।

सर्वार्थानां भवेच्छब्दैः सर्वैरेवानुरञ्जनम् ।
न च भिन्नेन्द्रियग्राह्यं किं चिदस्त्यनुरागकृत् ॥ २१० ॥
न हि लाक्षानुरक्तेपि स्फटिके धीस्त्वगादिभिः ।
अनुमानागमौ मिथ्या स्यातामध्यासकल्पने ॥ २११ ॥
निरूपणस्य मिथ्यात्वात्सर्वभावः प्रसज्यते ।
तथास्त्विति यदि ब्रूयान् मिथ्या स्ववचने सति ॥ २१२ ॥
कथमेवं वदेदर्थो नानृताद्धि प्रतीयते ।
शून्यवादोत्तराच्चापि यथार्थे बुद्धिशब्दयोः ॥ २१३ ॥
प्रवृत्तिर्न तु तत्तन्त्रमर्थरूपं कदा चन ।
तस्मात्प्रागपि ये शब्दाद्भिन्नैकत्वादिबुद्धिभिः ॥ २१४ ॥
गृह्यन्ते सर्वदा तेषां परमार्थास्तिता भवेत् ।
शब्दाभ्युपायकेप्यर्थे तदभावे च यद्यपि ॥ २१५ ॥
अर्थबुद्धिर्न जायेत नार्थे रूपं प्रणश्यति ।
चक्षुरादेरभावे हि रूपाद्यात्मा न गृह्यते ॥ २१६ ॥
स्वरूपनाशो (१) रूपादेस्तावन्मात्रेण नेष्यते ।
संबन्धस्य च नित्यत्वान्नार्थस्य स्यादरूपता ॥ २१७ ॥
युगपन्नहि सर्वेषामन्याकारार्थवेदनम् ।
तदाकारेपि तद्वच्चेद् द्वये सति परीक्ष्यताम् ॥ २१८ ॥
किं न्वर्थस्यातथाभावो ग्रहीतुः किन्वशक्तता ।
सदसद्भावयोरर्थे विरोधित्वादसंभवः ॥ २१९ ॥
ग्रहीतृभेदाच्छक्तत्वमशक्तत्वं च युज्यते ।
यथान्धानन्धयोः पार्श्वे रूपस्येत्यभिधास्यते ॥ २२० ॥

(१) स्वभावनाशो पा॰ ।

तेनार्थध्वन्युपायस्य तद्धीनोन्यस्य जायते ।
देवदत्तादिशब्दे तु संबन्धाद्यत्वदर्शनात् ॥ २२१ ॥
अर्थस्यानित्यतायां च तादूप्यस्याप्यनित्यता ।
तत्राप्यौत्पत्तिकी शक्तिस्तद्रूपप्रत्ययं प्रति ॥ २२२ ॥
ग्राह्यग्राहकयोरिष्टा नियोगस्य त्वनित्यता ।
तत्र सर्वैरताद्रूप्यं प्राङ्नियोगात्प्रतीयते ॥ २२३ ॥
तेनेष्टमेव मिथ्यात्वं कैश्चिदध्यासकल्पने ।
यदा च यादृशः पिण्डः पूर्वं शब्दात्प्रतीयते ॥ २२४ ॥
तादृशस्मरणे हेतुशब्दस्तत्र यथार्थता ।
नियोगात्परतो वापि शब्देन व्यज्यतां मिथः ॥ २२५ ॥
तद्ग्राह्यशक्तिरर्थस्य पारक्ष्यं न तावता ।
सर्वाकारपरिच्छेद्यशक्तेर्थे वाचके पि वा ॥ २२६ ॥
सर्वाकारार्थविज्ञानसमर्थे नियमः कृतः ।
तत्र शब्दार्थसंबन्धं प्रमातुः स्मरतोपि वा ॥ २२७ ॥
बुद्धिः पूर्वगृहीतार्थसंधानादुपजायते ।
चक्षुषा संनिकृष्टेर्थे नाप्रत्यक्षमसौ भवेत् ॥ २२८ ॥
विविक्ता एव तेप्यर्थाः स्मृतिप्रत्यक्षगोचराः ।
स्मर्यते शब्दसंबन्धो मा भूत्प्रत्यक्षता तयोः ॥ २२९ ॥
तदप्रत्यक्षभावेन न त्वर्थस्यापि वार्यते ।
गृहीतमपि गोत्वादि स्मृतिस्पृष्टं च यद्यपि ॥ २३० ॥
तथापि व्यतिरेकेण पूर्वबोधात्प्रतीयते ।
व्यक्तिकालादिभेदेन तत्रास्त्यवसरो मितेः ॥ २३१ ॥
यः पूर्वावगतोंशोत्र स न नाम प्रतीयते ।
इदानींतनमस्तित्वं न हि पूर्वधियागतम् ॥ २३२ ॥

न हि स्मरणतो यत्प्राक्तत्प्रत्यक्षमितीदृशम् ।
वचनं राजकीयं वा वैदिकं वापि विद्यते ॥ २३३ ॥
न चापि स्मरणात्पश्चादिन्द्रियस्य प्रवर्तनम् ।
वार्यते केन चिन्नातस्तत्तदानीं प्रदुष्यति ॥ २३४ ॥
तेनेन्द्रियार्थसंबन्धात्प्रागूर्ध्वं वापि यत्स्मृतेः ।
विज्ञानं जायते सर्वं प्रत्यक्षमिति गम्यताम् ॥ २३५ ॥
विमनस्का यदा के चित्संबद्धमपि चेन्द्रियैः ।
न बुध्यन्ते तथा चान्ये सादृश्यादिति मोहिताः ॥ २३६ ॥
तत्र योऽर्थं विवेकेन कौशलात्सदृशेष्वपि ।
सूक्ष्मं वापि प्रपद्येत तस्य भ्रान्तिर्न तावता ॥ २३७ ॥
तथा षड्जादिभेदेन गाने लौकिकवैदिके ।
विवेकेनावगच्छन्ति येषां तत्संस्कृता मतिः ॥ २३८ ॥
गानमात्रं विजानन्ति तत्रानधिकृतास्तु ये ।
तदज्ञानान्न मिथ्यात्वं वक्तुं शक्यं विवेकिनाम् ॥ २३९ ॥
ते हि षड्जादिशब्देभ्यो विनाप्येषां विविक्तताम् ।
यथावदधिगच्छन्ति तद्वद्गोत्वादिवस्त्वपि ॥ २४० ॥
संकीर्णमर्थमात्रं तु बुध्यन्तेऽभ्यासवर्जिताः ।
विवेकं प्रतिपद्यन्ते ये शब्दस्मृतिसंस्कृताः ॥ २४१ ॥
यथा रूपादिमत्यर्थे यस्यैवास्ति यदिन्द्रियम् ।
सतन्मात्रं गृहीत्वान्यन्न गृह्णात्यनुपायतः ॥ २४२ ॥
तथा विवेकहेतूनां यदा यं प्रतिपद्यते ।
तदुपेये तदा ज्ञानं वर्तते तदनुग्रहात् ॥ २४३ ॥
तेन यावत्प्रमातॄणां विवेकोपायदर्शनम् ।
न स्यात्तावद्भवेत्तेषां विज्ञानं निर्विकल्पकम् ॥ २४४ ॥

तस्माद्यत्र विकल्प्येत वस्तु वस्त्वन्तरात्मना ।
प्रमाणाभासता तत्र न स्वधर्मविकल्पने ॥ २४५ ॥
प्रत्यक्षत्वमतः सिद्धं सामान्यस्य तथैव च ।
संबन्धस्येति तत्पूर्वमनुमानादि जायते ॥ २४६ ॥
सर्वं चाप्यनुमानादि प्रत्यक्षे निर्विकल्पके ।
न प्रवर्त्तेत इत्येतदनुमाने (१) हि साध्यते ॥ २४७ ॥
नन्वेवं सति याप्यग्नेर्दूराद्धूमाग्र्यकल्पना ।
सापि प्रत्यक्षमेव स्याद्य (२) था गोत्वादिबुद्धयः ॥ २४८ ॥
प्रत्यासन्नतरं गोत्वे प्रत्यक्षत्वेन संमतम् ।
विज्ञानं नान्यदस्तीति प्रत्यक्षमिदमेव नः ॥ २४९ ॥
तथाप्यग्नेरसंबन्धं मन्वानस्योपजायते ।
यदा बुद्धिस्तदा नैव प्रत्यक्षत्वेन कल्प्यते ॥ २५० ॥
स्पर्शने न तु संबन्धे प्रत्यक्षत्वेन जायते ।
सति रौप्ये परोक्षेयं चक्षुषाग्नो प्रकाशिते ॥ २५१ ॥
तस्माद्यदिन्द्रियं यस्य ग्राहकत्वेन कल्पितम् ।
तेनैव सति संबन्धे प्रत्यक्षं नान्यथा भवेत् ॥ २५२ ॥
एवं समानेपि विकल्पमार्गे यथाक्षसंबन्धफलानुसारः ।
प्रत्यक्षता तस्य तथा च लोके विनाप्यदो लक्षणतः प्रसिद्धम् ॥ २५३ ॥

॥ इति प्रत्यक्षसूत्रं चतुर्थम् ॥

---

(१) अभिधास्यते पा॰ ।

(२) स्याद्गू गोत्वादिमतयो यथेति पाठः ।

औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशो ऽव्यतिरेकश्चार्थे ऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षित्वात् ॥ ५ ॥

प्रत्यक्षादौ निषिद्धेपि ननु लोकप्रसिद्धितः ।
धर्माधर्मौ प्रमास्येते ब्राह्मणादिविवेकवत् ॥ १ ॥
धार्मिकाधार्मिकत्वाभ्यां पीडानुग्रहकारिणौ ।
प्रसिद्धौ हि तथा चाह पाराशर्य्योच वस्तुनि ॥ २ ॥
इदं पुण्यमिदं पापमित्येतस्मिन्पदद्वये ।
आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ॥ ३ ॥
निर्मूलासंभवादच प्रमाणैः सैव मृग्यते ।
कुतः पुनः प्रवृत्तेति प्रत्यक्षादि तु वारितम् ॥ ४ ॥
न चैतानि परित्यज्य पृथग्लोके प्रमाणता ।
संसारमोचकादेश्च हिंसा पुण्यत्वसंमता ॥ ५ ॥
न पश्चात्पुण्यमिच्छन्ति के चिदेवं विगानतः ।
म्लेच्छार्ययोः प्रसिद्धत्वं न धर्मस्योपपद्यते ॥ ६ ॥
न चार्याणां विशेषोस्ति यावच्छास्त्रमनाश्रितम् ।
तन्मूलार्थप्रसिद्धिस्तु तत्प्रामाण्ये स्थिते भवेत् ॥ ७ ॥
तस्मादभाववक्तृभ्यो धर्माधर्मौ न शक्नुयात् ।
चोदना चेत्समुद्धर्तुं ग्रस्तौ तेनैव पश्यताम् ॥ ८ ॥
उपदेशो हि भवति ज्ञानं तस्येति योज्यते ।
ज्ञायते येन तज्ज्ञानमेकाधिकरणावतः ॥ ९ ॥
औत्पत्तिकगिरा दोषः कारणस्य निवार्यते ।
अबाधो ऽव्यतिरेकेण स्वतस्तेन प्रमाणता ॥ १० ॥

सर्वस्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा ।
चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः ॥ ११ ॥
वाक्यान्तरे समर्थेपि किमर्थं विधिराश्रितः ।
साध्यसाधनसंबन्धः सर्वाख्यातेषु गम्यते ॥ १२ ॥
सर्ववाक्येषु चाख्यातं तेनाकाङ्क्षानिवर्तनात् ।
प्रवृत्तिसिद्धिरिच्छातः प्रतिषेधात्तु वर्जनम् ॥ १३ ॥
विधावनाश्रिते साध्यः पुरुषार्थो न लभ्यते ।
अतस्वर्गादिबाधेन धात्वर्थः साध्यतां व्रजेत् ॥ १४ ॥
विधौ तु तमतिक्रम्य स्वर्गादेः साध्यतेष्यते ।
तत्साधनस्य धर्मत्वमेवं सति च लभ्यते ॥ १५ ॥
स्वप्रत्ययान्तरापेक्षा स्यादनाप्तनरोक्तिषु ।
आप्तोक्तिषु नरापेक्षा नोभयं चोदनासु नः ॥ १६ ॥
आदिशब्दो मकारान्तो लुकि क्लेशेन संगतिः ।
तमध्याह्रियते सूत्रे संस्कारात्परिचोदना ॥ १७ ॥
प्रमाणं लक्षणाख्यानाद्व्यभिचारात्परीक्षणम् ।
नैतत्प्रत्यक्षमित्येवमपरीक्षोपसंहृता ॥ १८ ॥
तथान्यस्यायथार्थत्वं प्रत्यक्षे तु यथार्थता ।
यदाभासं हि विज्ञानं तत्संयोगे तदिष्यते ॥ १९ ॥
संपूर्णलक्षणं ह्येतत्तत्सतोर्व्यत्ययः कृतः ।
शोभनार्थस्तु सच्छब्दो यद्वाध्याहारकल्पना ॥ २० ॥
अर्थापत्त्येतरेषां च प्रत्यक्षाभासलक्षणम् ।
बाधकज्ञानलाभो हि पूर्वाबाधे न संभवेत् ॥ २१ ॥
स चास्तीत्यवबोधत्वे सति नान्योन्यसंश्रयम् ।
न चानागतबाधेन पूर्वेणात्मा हि लभ्यते ॥ २२ ॥

निमित्तदोषबोधेन पश्चाद्यचाप्यबाधनम् ।
भवत्येव हि तचापि नरान्तरविपर्ययः ॥ २३ ॥
सर्वेषां सर्वदा यच धीः स्यात्तच न बाधनम् ।
न हि कारणादुष्टत्वबुद्धिस्तच बलीयसी ॥ २४ ॥
जात्यादिषु यदा जाता बुद्धिः पश्चादसंभवात् ।
नाश्यते युक्तिभिस्तच व्यक्तमन्योन्यसंश्रयम् ॥ २५ ॥
स्वतः प्रामाण्यतश्चाच निर्णयोऽस्तित्वबोधनात् ।
तद्रूपप्रत्ययोत्पत्तेस्तदसद्वादिनामपि ॥ २६ ॥

॥ वृत्तिकारग्रन्थः समाप्तः ॥

---

## ॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

॥ एकविंशस्तवकावशेषः ॥

एवं निभृतभृतयुक्तयो विवशीकरिष्यमाणपुरुषवृषभा वृषभानुपुत्रीमुपसृत्य सुभगे यदि कृष्णवंशीवशीकरणलोभवती भवती कदा कृतकृतकवाम्या चणं भवतु, तदा कृष्णस्य वंशीवादनप्रगल्भतापयास्यति, यास्यति नः संगीतमतिकौशलमिति कथयन्तीषु निभृतं सर्वासु ॥ २६ ॥

तत्र तृतीय एवोपायः प्रबलः सुकरश्च ताभिर्निर्णीत इत्याह· एवमिति । विवशीकरिष्यमाणः पुरुषवृषभः कृष्णो याभिस्ताः । कृतं कृतकं कृत्रिमं वाम्यं मानलक्षणं यया तथाभूता भवती भवतु । ततश्च त्वत्प्रसादमनुपलभ्य विवशीभविष्यतोऽस्य कृष्णस्य वंशीं प्रत्यनवधाने सति तां सुखेन वयं चोरयाम इति भावः ॥ २६ ॥

कुसुमासवस्तु वस्तुतो न जानन्नपि सहजवाचालतालताकुसुमपरिमलया प्रतिभया भयाभावतः कृष्णं जगाद, वयस्य· इमाः खलु

मुरलीगानानुरूपं सुरूपं सुष्ठु गातुमसमर्था मुरलीमपहर्तुं मन्त्रयन्ते, तदिमां मयि समर्प्य कण्ठेनैव गीयताम्, मम ब्राह्मणस्य प्रभाप्रभावतो निकटं प्रकटं प्रयास्यन्ति नेमाः ॥ २७ ॥

किंच ताभिरचिन्तनीयो दैवघटितः कोऽप्यन्य एव वंशीहरणेऽत्तम उपायोऽभवदित्याह कुसुमासवस्त्वित्यादिना प्रबन्धेन ॥ २७ ॥

कृष्ण आह, वयस्य भवतो वसन्तोत्सव एव दृष्टा ब्राह्मण्यप्रभावाः प्रभाबाहुल्यं च, तदद्य मुरलीरक्षणक्षमता तव साधीयसी भविष्यतीति कः संदेहः ॥ २८ ॥

प्रभाबाहुल्यं च दृष्टम् ॥ २८ ॥

स आह, भो वयस्य यस्य मन्त्रणतो भवान् सर्वोत्कर्षशाली, शालीनः सोऽहं मुरलीं रक्षितुमेव समर्थो न भवेयं भवे यं कोऽपि द्रष्टुमपि नेष्टे मेष्टे मयि तत्राविश्वासं कार्षीः ॥ २९ ॥

शालीनः श्रेष्ठः । भवे संसारे यं मां कोऽपि जनः श्लेषेण को ब्रह्मापि द्रष्टुमपि किं पुनर्धर्तुं न ईष्टे न शक्नोति, एतेन स्वस्य ईश्वरवन्माहात्म्यम्, वस्तुतस्तु पलायनविद्यापाण्डित्यमेव ध्वनितम्, तत्र मयि इष्टे प्रिये सख्यौ अविश्वासं मा कार्षीः ॥ २९ ॥

कृष्ण आह, यदि भवत्करतलतोऽतलतोषमहोत्सवसबहुमदाभिराभिराकृष्यते मुरली तदा किमध्यवसेयं सेयं वा कथं लप्स्यते । स आह, दृश्यतां मत्तपःप्रभाव इति निःसाध्वसं मुरलीमाकृष्य कक्षे कृत्वा वयस्य कण्ठेनैव गीयताम् । कृष्णः यथा रुचितं भवते इति गातुमुपक्रमते ॥ ३० ॥

अतलो गम्भीरस्तोषो यत्र तथाभूते महोत्सवे बहुमदसहिताभिः ॥ ३० ॥

ततश्च ।

कृष्णो गायति चर्चरीमतिकलां कण्ठेन वीणाजिता

स्तभ्नाति स्म कलिन्दजा तरुलताश्रेण्योऽश्रुवर्षं दधुः ।

शृण्वन्तः श्रवणोपकण्ठगलितं स्वेदाम्बु तन्माधुरी-

धारास्यन्दधिया लिहन्ति रभसादन्योन्यमेणीगणाः ॥ ३१ ॥

वीणाजिता वीणाजयिना । श्रवणयोरुपकण्ठे निकटे गलितं स्वेदाम्बु हर्षात्यमन्योन्यं लिहन्ति । तत्र कारणमुत्प्रेक्षते, तस्य गानस्य माधुरीधारायाः स्यन्दः क्षरणम्, गानमाधुरीधारैवेयं श्रवणयोः पूर्णीभूय तत्रामान्ती स्यन्दते तदेनां लिहामेतीव बुद्ध्या· इत्यर्थः ॥ ३१ ॥

तदा तदाश्रुत्य श्रुत्यतिसुखदं स्वरग्रामग्रामश्रुतिजातिजाति-कौशलं कुसुमासवः सबहुगर्वमाह, भो ललिते ललितेयं चर्चरीगीतिरुद्गीता प्रियवयस्येन, वयस्येनद्गानकौशलं न श्रुतम्, गर्ववत्यो भवत्यो भविकविकसदीदृशं न गातुमर्हन्ति ॥ ३२ ॥

श्रुतिजातिजं च तत्· अतिकौशलं चेति तत् । वयसि मध्ये· एनत्· एतत् । भविकं सुखं यथा स्यात् तथा विकसत् प्रकाशमानम् ॥ ३२ ॥

संगीतविद्याह· अये विगतचर्च चर्चरीमितोऽपि समीचीनां चीनांशुकधारिणीयं ललिता यदि गातुं क्षमते तत्क्षमते तदा मुरलीं हारयसि, मतिकृपण पण एष क्रियताम् ॥ ३३ ॥

विगतचर्च हे गतविचार, "चर्चा संख्या विचारणे"त्यमरः । तत्क्षमते हे क्रूरबुद्धे ॥ ३३ ॥

स आह, संगीतविद्ये संगीतविद्येयं मदेकमात्रबोध्या वो· ध्यानपथेऽपि दुर्गमेति मया समयासन्नबोधेन समीचीनमिति यदि निरुच्यते रुच्यतेयमस्यास्तदैव दैवतयोग्या भवति । साह विप्रवटो नेदं वेदगानं वेदगा·नन्दन्ति येन तदस्य बोधे को भवान् ।

कृष्णः स्मयमानो गायन्नेव कुसुमासवं तादृशा दृशा ददर्श तदा तदाकूतज्ञता यादृशा दृशास्य जायते ॥ ३४ ॥

यादृशा दृशा दृष्ट्या· अस्य कुसुमासवस्य तदाकूतज्ञता कृष्णाभिप्रायज्ञातृत्वं जायते तादृशा दृशा ददर्श कृष्णः । तरुलतादीनामपि सात्त्विकविकारं मद्गानोत्थापितं दर्शयित्वा प्रतिपणं च राधां कृत्वा ललितां जयेति नेत्रसंज्ञया· उक्तवानिति भावः ॥ ३४ ॥

ततश्च विदिताकूतः पुनराह कुसुमासवः, अयि समदे मदेकबोध्यतां संगीतस्य यदि न प्रमापयसि पयसि स्तब्धता·अश्रुजलाविलता लतातरुषु विपुलपुलकता खगमृगादिषु यदि वयस्यगानवद्गवतीनामपि गाने भवति तदा कथंचित् समता मता भवति, समीचीनता न तावत् कुतोऽपि लभ्यते, तदयं कृत एव मुरलीपणः, यदि मानयसि नय सिद्धगानद्यूतं तदा त्वयापि प्रियसखीपणः क्रियताम् । ललिताह कुमनीष कुमनीषदेव विरसयति दुर्विदग्धः ॥ ३५ ॥

हे कुमनीष कुबुद्धे कुं पृथ्वीम्·अनीषत्·अनल्पमेव दुर्विदग्धो विरसयति, स तु भवानेवेति भावः ॥ ३५ ॥

यतः सर्वमेव द्यूतं प्रति पणप्रतिपणयोः समतैव निरुच्यते न खलु काचकाञ्चनयोः समता । कुसुमासव आह, भवति भवति हि प्रियवयस्यस्य मुरली काचः सखी ते काञ्चनम् । ललिताह, कोऽत्र संदेहः, साम्यं चेदिच्छसि तदा· अद्योभवता भवता वयस्यः पणीक्रियताम् । कुसुमासव आह, गीयतामेष मयानामयानामग्रण्या पणीकृतो वयस्यः ॥ ३६ ॥

सर्वमेव द्यूतं प्रति, सर्वस्मिन्नेव द्यूते·इत्यर्थः ॥ ३६ ॥

ललिता गातुमुपक्रमते ।

गान्धारग्रामसंधापितगरिमधुराधूतगान्धर्वविद्यं
गन्धर्वीगर्वखर्वीकरणपटु नटद्भ्रूलतं रक्तकण्ठी ।

त्रिस्थानस्पर्शि नानाविधगमकगमं साहसोत्साहनश्य-

द्व्रीडाक्रीडारसेनालपदतिललितोदारकेदाररागम् ॥ ३७ ॥

गान्धारग्रामे संधापिता सम्यग्धारिता या गरिमधुरा गौरवाधिक्यं तेन धूता खण्डिता गन्धर्वकर्तृका गानविद्या येन तत्, इति· आलपदिति क्रियाविशेषणम्, पक्षे गरिमधुरा गान्धारऋषभमध्यमस्वरातिशयः। त्रीणि स्थानानि· आरोहणावरोहसमाख्यानि· ऊर्ध्वाधोमध्यानि। नानाविधगमकं गमयति व्यञ्जयतीति तत् ॥ ३७ ॥

[1]एवं सरागं रागं केदारमालप्य भाषया सैारसेन्या रसे·न्याय-पेशलया लयान्वितं च जगै ॥ ३८ ॥

सअलकलामिअमण्डलो

वड्डिअपेम्मसमुद्दओ ।

पउमिणिमुद्दाषण्डिओ

रेहइ सामलचन्दओ ॥ ३९ ॥

सकलकलामृतमण्डलो वर्धितप्रेमसमुद्रः पद्मिनीनां मुद्रा मुदां रा दानं तत्र पण्डितः, पक्षे स्पष्टम्, राजते श्यामलचन्द्रः ॥ ३९ ॥

चूअङ्कुरकिदसेहरो

कुसुमाअरपिअखेलओ ।

रमणीमणिवच्छपादओ

रेहइ वुंदावणप्पिओ ॥ ४० ॥

चूताङ्कुरकृतशेखरः कुसुमाकरप्रियखेलः· रमणिमणिपक्षपाती राजते वृन्दावनप्रियः। कोकिलपक्षे चूताङ्कुरस्य कृतः पर्याप्तः शेखरो यतः, तद्भक्षणार्थे तस्य तदुपरिवर्तित्वात्। रमणीमणयः संभुक्ताङ्गनाः। कुसुमाकरो वसन्तः, वनप्रियः कोकिलश्च ॥ ४० ॥

---

[1] जहाविदं पद्यं व्याख्याता ।

तदा तदाकर्ण्य सगर्वमाह कुसुमासवः, हीही पराजितं भोः पराजितं ललितयेति बाहू समुद्गम्य नृत्यतस्तस्य कच्चान्मुरली पतति स्म तां निपतितामालोक्य सत्वरया रयादेव संगीतविद्यया सायासाभावेनैव निहुत्य रचिता चितावेक्षोऽपि न जानाति स्म नातिस्मयवती सा च निजवर्गे कस्यैचित् कथितवतीति स्थिते सैव तमुवाचालं वाचालं भोः कथमकाण्डे प्रहर्षमत्तोऽसि किमिति मत्तमञ्जरीनृत्यते विचारयतु रयतुलितकोटिद्वयस्तवैव वयस्यः कस्य जय इति ॥ ४१ ॥

सा मुरली, आयासाभावेन· अयत्नेन ॥ ४१ ॥

स आह पण्डितंमन्ये मन्ये साक्षादेवायं भवतीनामेव पराजयः, यतश्चर्चरीगानमुद्दिश्यैव पणः कृतः, इयं तु द्विपदिकाखण्डमेव गायति स्मेति स्मेरमुखि विचार्यतां पराजयो भवति न वेति कथिते सति यौगपद्येन पद्येन ते तं विजहसतुः ॥ ४२ ॥

द्विपदिकाखण्डमेव गायति स्मेति, चर्चरिकागानासामर्थ्यमेव पराजयव्यञ्जकमिति भावः । ते ललितासंगीतविद्ये ॥ ४२ ॥

अविदग्ध चर्चरी वा द्विपदी वा जम्भली वेति नामनि का वैचित्री ग्रामस्वरमूर्छनासु परमेषा, पश्यास्या गानमाधुर्यमहिमानम् ॥ ४३ ॥

पश्यास्या इत्येकस्याः संगीतविद्याया वचनम् ॥ ४३ ॥

अश्मानो य इमे मणीन्द्रवपुषो वृक्षालवालात्मकाः
सर्वे विद्रुतिमागता यदवमन्नम्भस्तदेतत् पुनः ।
जातस्तम्भमलम्भयत् कठिनतां येयं तथा सर्वतो
वृक्षाणां प्रतिमूलमेव निबिडा व्यातेनिरे वेदयः ॥ ४४ ॥

अश्मानो विद्रुतिमागताः सन्तो यदम्भोऽवमन्, तत्· अम्भः कर्म

जातस्तम्भं सत् या ललितेयं कठिनतामलम्भयत्, तया कठिनतया वेदयो व्यातेनिरे प्रकाशिताः, निर्मिता इत्यर्थः ॥ ४४ ॥

अतः कालिन्द्या देवतात्मकत्वेन वृन्दावनतरुलतानामपि ज्ञानवत्त्वेन खगमृगादीनामपि चेतनतया युक्तमेव भवद्वयस्यगानेन तथा तथात्वम्, अस्या गाने त्वयं विशेषः, यदमी अश्मानोऽप्येवमासन्निति जितमस्माभिरेव, तदयं त्वया स्ववयस्यः स्वयमानीय दीयताम् । सुबल आह· अयि संगीतविद्येऽविद्येव कथं जडीभावमापद्यसेऽद्य सेव न भवसि, यदनेन कथं कृष्णो हार्यतां, हार्यतां तावदधीनस्याधीनस्यामनन्ति न केऽपीति ॥ ४५ ॥

अधीनस्य· आयत्तस्य· अप्रधानस्यैव हार्यताम्· आमनन्ति, अधीनस्य· अधिकस्य· इनस्य प्रभोः प्रधानस्य हार्यतां केऽपि न· आमनन्ति । अयमर्थः, अन्यतः पराजितेन प्रधानेन· अप्रधानभूतः स्वाधीनो जनो हार्यते न त्वप्रधानेन· अधीनेन प्रधानभूतः प्रभुर्हारयितुं शक्यते तत्र तस्य स्वत्वाभावात् प्रत्युत स्वामित्वात् स्वयमेव तेन स्वामिना स हारितः स्यादिति, तेन त्वया पराजितः कुसुमासवः प्रधानभूतं नायकं कृष्णं हारयितुं न शक्नोति किंतु स्वजनकृतापराधः स्वामिनि प्रतिफलतीति न्यायेन कृष्ण एव कुसुमासवं हारयितुमर्हतीति ॥ ४५ ॥

कृष्ण आह कुसुमासव मा सबहुमानो भवितुमर्हसीदानीं यत उत्सवमदमत्तमत्तकाशिनीभिर्जितकाशिनीभिर्जितः, एवं भवानात्मानं मोचयितुमसमर्थोऽनर्थकारी दुरवस्थावस्थानमेष्यति तदधुना दीयतां मे मुरली, नो चेत् त्वया सहसा सह·सापि यास्यति । कुसुमासव आह वयस्य मयैव जितं तद्भवता प्रभवता प्रहर्षेण समानीयतामासां प्रियसखी ॥ ४६ ॥

मत्तकाशिनीभिर्युवतिभिः, "वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" त्यमरः । जितकाशिनीभिर्विजयगर्ववतीभिः । सापि मुरल्यपि ॥ ४६ ॥

ललिताह निरपत्रप पत्रपशो यद्ज्ञानमूलः किल विचारकृपण पण एष कृतः स एव मज्जयं विख्यापयति ॥ ४७ ॥

पत्रपशो वाहनरूप पशो, "पत्रं वाहनपत्रयो"रित्यमरः, उष्ट्राश्वहस्त्यादीनामेकतमतुल्येत्यर्थः । हे विचारकृपण, परामर्शशून्येत्यर्थः ॥ ४७ ॥

कुसुमासव आह वयस्य चेदेवं जातलोभ वदसि भवदसिद्धान्तमर्यादं तदा नीयतां ते मुरली पलाय्यते मयेति मुरलीं विचारयन्ननवलोक्य भो वयस्य मुरली प्रथममेव भयचपला पलायिता मत्करतलतोऽक्षतलतोद्यानान्तरं मन्ये, सर्वाः स्मयन्ते स्म ॥ ४८ ॥

हे जातलोभ, मया दत्तां विजयरूपां स्वप्रतिष्ठां महतीमप्यनादृत्य कुतश्चिल्लोभादेवैतासामधीनतामङ्गीकर्तुमिच्छसीत्यर्थः । भवत एव न सिद्धान्तमर्यादा यत्र तद् यथा स्यात् तथा चेद् वदसि । न क्षताः खण्डिता लता यत्र तादृशमुद्यानम्, भयरहितस्थानमिति भावः ॥ ४८ ॥

इत्येवमवसरे कियद्दूरतो निबिडखेलाभिरामासु दयितरामासु रामासु सतीषु कश्चिद्धनदानुजीवी जीवीभूतानां मध्येऽधमतमो मतमोहः ॥ ४९ ॥

दयितो रामो यासां तासु रामासु खेलाभिरामासु सतीषु, धनदानुजीवी कुबेरकिंकरः, मते ज्ञाने विचाररूपे मोहो मूढता यस्य सः, निर्बुद्धिरित्यर्थः ॥ ४९ ॥

तरुणतरमार्तण्डमरीचिमरीचिकाचाकचक्यचिक्कणकनकशिलासु विमलसलिलपरिपूर्णतडागधिया प्रांशुतरतरुशिखरतः खरतरनिदाघतप्तः सवेगमुत्प्लुत्य कृतप्रपातो मूढ इव ॥ ५० ॥

निर्बुद्धित्वमेवोत्प्रेक्षाभिर्व्यञ्जयति तरुणतरेति ॥ ५० ॥

समुज्ज्वलं ज्वलन्तीषु दहनशिखासु दिव्योषधीविपिनपिनद्धशोभालोभादिव तदपहरणरणकौतुकी पतङ्ग इव ॥ ५१ ॥

न केवलं शिलासंचूर्णिताङ्गत्वेन तज्ज्वालातितप्तत्वेन च तस्य तत्र दुःखमात्रस्यैव लाभः किंतु स्पर्शमात्रेणैव प्राणनाशोऽपीत्याह समुज्ज्वलमिति ॥ ५१ ॥

फणधरफणामणिजिहीर्षया तदभिमुखमापतन् मण्डूक इव ॥ ५२ ॥

नापि केवलं प्राणनाश एव किंतु भयविद्रवणबलकर्षणभुजदण्डपीडानुभवपूर्वक एवेत्याह फणधरेति, तदभिमुखे तस्य मुखं लक्षीकृत्य· आ सम्यक्· उत्प्लुत्य पतन् ॥ ५२ ॥

केशरिकेशरपटलीषु कार्तस्वरभास्वरासु परिपक्वशालिधिया बुभुक्षुरुपसर्पन् गवय इव मृत्युनाहूत इव कश्चन शङ्खचूडो नाम रामरामारत्नापजिहीर्षया यक्षापसदः समापपात ॥ ५३ ॥

किंच तस्य पामरस्य रामप्रेयसीनां स्पर्शयोग्यता न संभवतीति पूर्वोत्प्रेक्षासु प्रसक्तां तां वारयन्नाह केशरीति । उपसर्पन् निकटे गच्छन् । मृत्युनाहूत इत्यत्र कृष्णनिकटे मारणार्थमित्याक्षेपलब्धेन श्लेषेण मृत्योः कृष्णवशीभूतत्वं तदागमनस्य मरणप्रयोजनप्रयोजनकत्वं च व्यञ्जितम् ॥ ५३ ॥

तमतिकरालमालोक्य समुपपन्नभयविस्तारास्ता·रामरमण्यो मणयोतमूर्धानमूर्धा[१]ननं प्रबलतरतरक्षुवीक्षणक्षुभितभीतिचकितचमूरुबाला इव भो राम भोः कृष्ण पाहि नः पाहीति सत्रासं विचुक्रुशुः ॥ ५४ ॥

मणिना· आ सम्यक्· ऊतो ग्रथितो मूर्धा यस्य तम् ॥ ५४ ॥

तमार्तस्वरं स्वरंहसा प्रबलो बलो यावन्न शृणोति स्म तावदेव तरस्वीतरस्वीकारविमुखो मुखोदीरितमपि गीतमपहाय गिरिधरो धरोपरितः पदकमलमलम्भयन्निव द्रुतद्रुत एव तमन्वधात्, ततोऽतिप्रतिघाप्रतिघातरुग्णमानसो बलश्च ॥ ५५ ॥

१ ऊर्ध्वशब्दपर्यायः कोशेषूर्धशब्दोऽप्यस्तीति ।

तरस्वी त्वरितः, इतरस्य क्रीडादिकार्यस्य स्वीकारे विमुखः, द्रुतद्रुतः शीघ्रं गत एव, अतिप्रतिघा· अतिकोपः ॥ ५५ ॥

एवं वीरप्रवरो·हि रौहिणेयकृष्णौ विलोक्य बहु·धावमानो बहुधावमानोत्कष्यमात्मनो मन्यमानः स पामरो रमणीमणीर्विहाय विहायसेव धावन् प्राणपरीप्सया मतौ चपलायां पलायांचक्रे ॥ ५६ ॥

बहुधा बहुप्रकारस्य· अवमानस्य· औत्कष्यम्, मतौ बुद्धौ चपलायां सत्याम् ॥ ५६ ॥

अथ स केशरीशरीत्या धावमानः पुंनागो नागोत्तममिव पलायमानमपि तमधमं धमन्तमतिपरुषं रुषं वहन्तमपि क्षोभयतोभयतो वेगेन निष्प्रतिभं प्रति·भङ्गं यतमानं श्येन इव बलिभुजं भुजंगमिव विनतासुतो विनतासुतोषकरः ॥ ५७ ॥

नागोत्तमं महाहस्तिनं प्रति, केशरीशरीत्या श्रेष्ठसिंहरीत्या, पुंनागः पुरुषश्रेष्ठः कृष्णः, क्षोभयता क्षोभं जनयता· उभयतो वेगेन स्वपलायनवेगेन पृष्ठधाविकृष्णवेगेन च, भङ्गं प्रति यतमानं बलिभुजं काकं बलादावरणे श्येन इव, मारणे विनतासुतो गरुड इव, विनतानां विनम्राणाम्· आ सम्यक् सुष्ठु तोषकरः सुखदायी ॥ ५७ ॥

कचे गृहीत्वा मुष्टीकृतेन कमलकोमलेनापि करतलेन जरठकमठपृष्ठकठोरमपि तस्य मस्तकमस्तकल्याणस्य विनिपाट्य परिपाट्यपरिमितं च तस्य मूर्धचारिमणिमतिचारिमणि प्रथमानं प्रथमानन्दं बर्हस्तमादाय समालोकमानानां वनितानां पुरतो महाबलाय बलाय ज्यायसे समुपजहार प्रमोदसमुद्गामो दामोदरः ॥ ५८ ॥

अस्तकल्याणस्य गतशुभस्य, अतिचारिमणि· अतिचारुतायां प्रथमानं ख्यातम्, प्रथं विस्तृतमानन्दम्, तं प्रसिद्धम् ॥ ५८ ॥

ततश्च· असमाप्तमहोत्सवावेशानां रसविलासकलाचिन्तामणीनां स्वरमणीनां स्वरग्रामग्रामश्रुतिश्रुतिमनोरमगानजुषां सजुषां सह·

चराणां च संनिधिमासाद्य साद्यमानं तमुत्सवं स बन्धुरविभ्रमो निर्वा-स्यमानं दीपं पुनरुज्ज्वलयन्निव शुष्यमाणं सरः पुनरगाधयन्निव भग्नं प्रासादं पुनर्जीर्णोद्धारेण नवीकुर्वन्निव समुज्जृम्भयन् ॥ ५९ ॥

सजुषां जुट् प्रीतिस्तत्सहितानाम् । साद्यमानम् अन्तरा शङ्खचूडागमेन विशीर्यमाणम् । उज्ज्वलयन्निति पुनरधिकस्नेहदानेनेति अगाधयन्नित्यतिविलासरसवृष्ट्येति नवीकुर्वन्निति तत्र निजप्रयत्नविशेषेणापीति प्रेमविलासप्रयत्नविशेषा दर्शिताः । उत्सवं समुज्जृम्भयन् अतिप्रकाशयन् ॥ ५९ ॥

अनुसंधीयमानमुरलीकतयालीकतया चोरी त्वं चोरीकृतमुरलीचौर्यासीति चन्द्रावलीसहचरीणां मदनमदनमद्रियां विलासविशेषालम्बिनीनां नितम्बिनीनां नितरां जनं जनं वक्षसोऽञ्चलमुद्घाट्य मुरलीं विचारयन् यदि प्रजगल्भे तदा ताभिरभिरम्यपरिहासहासललितं भ्रूतरङ्गरङ्गभ्रुकुटिकुटिलाक्षं भर्त्सयामासे ॥ ६० ॥

अनुसंधीयमाना मुरली येन तत्तया अलीकतया मिथ्यापवादेनैव त्वं च उरीकृतं मुरलीचौर्यं यया सा असीति ॥ ६० ॥

अयि कुसुमासव सहचर तव समुचित एष तावदविचारः त्वत्करतलतो मुरली संव्यानं नः कथं विशतु यद्यस्माभिरपाहारि हारिणी ते मुरली तदा नः समुद्दण्डो दण्डो ध्रियते न चेत् तव सकौस्तुभकण्ठहारहारः क्रियते ॥ ६१ ॥

संव्यानमुत्तरीयम् । न चेद्, यदि नापाहारीत्यर्थः, तदा कौस्तुभेन सहितस्य कण्ठहारस्य हारो हरणं क्रियते, इति पणः क्रियतामिति भावः ॥ ६१ ॥

चन्द्रावली वलीयसा प्रागल्भ्येनाह अयि बलावलेपतोऽबलावलेऽपतोद कुसुमासवेन तव करतलतो मुरली प्रसभमाकृष्य अस्माभिर्हरणीयेत्याजह्रे तन्न संस्मरसि ॥ ६२ ॥

बलावलेपतो बलाहंकारतः। अबलाबले स्त्रीसमूहे विषये। अपतोदयति पीडयतीति हे तथाभूत। यद्वा· अपतोद गतव्यथ, निःशङ्केत्यर्थः ॥ ६२ ॥

कुसुमासव आह· अस्माभिर्हरणीयेति ते वच एव तस्या हरणे प्रमाणं मया प्रसभमाकृष्य हृतेत्यत्र प्रमाणमुच्यताम्। साह सर्वा एव। स आह सर्वा एव मे विपक्षाः। साह भवद्वयस्यः प्रमाणम्। स आह नैतदपि, तथा चेत् कुतो वः संख्यानं विचारितमनेनसानेन, साधीयसी तन्नूनं भवतीभिरेवापहृता मुरली कालीका ते व्याहृतिः॥ ६३ ॥

अनेनसा निर्दोषेण· अनेन वयस्येन, ते तव व्याहृतिः का कुत्सिता· अलीका ॥ ६३ ॥

इति तेनोदिते· नोदितेन प्रतिभया भयाभावस्फुरद्रूपेण पुनः कृष्ण ऊचे ॥ ६४ ॥

तेन कुसुमासवेन· इत्युदिते सति पुनः कृष्ण ऊचे। तेन किंभूतेन, प्रतिभया नो दितेन न खण्डितेन, प्रतिभायुक्तेनैवेत्यर्थः ॥ ६४ ॥

वयस्य तव करकमलसङ्गी संगीतविद्ययैवापहृतो वेणुर्नैताभिः, इत्याकर्ण्य संगीतविद्या विद्यायातयामा सचकितकितवनेत्रं लघु लघु चलनललिता ललिताकरे मुरलीमर्पयामास ॥ ६५ ॥

विद्यासु· अयातयामा, अतिनिपुणेत्यर्थः। सचकिते कितवे इतरालस्यभावत्वेन धूर्ते च नेत्रे यत्र तद्यथा स्यात् तथा ॥ ६५ ॥

ततस्तदाकारविकारविशेषमालोक्य पुनर्भङ्गुरितावट्टु वटुराह वयस्य मुरलीतस्करा करालेयं स्वयमेव व्यक्ता यतो मया संगीतविद्ययेति संगीतागमाधिष्ठातृदेवतामुद्दिश्य परिहसितं तदाकर्ण्य स्वं प्रति प्रतिपन्नाशङ्का शं[1]ङ्कारयामास संकोचस्य ॥ ६६ ॥

[1] शंकारयामासेति मुद्रणीये संधिः प्रागवत्।

संकोचस्य शं कल्याणं कारयामास, संकोचोऽस्याः प्रबलितोऽभूदित्यर्थः ॥ ६६ ॥

चौरस्य लक्षणमिदमेवेति । सा तु ललिताकरे मुरलीमाधाय सदर्पमुपसृत्य सस्मयस्मयमानाह किमात्थ रे वटोऽवटोऽसि कपटस्य महोत्सवं समया मया खेलन्त्या कदा कथमपहृता मुरली तया हृतयाहृदयालो मम वा किं प्रयोजनं जनं मृषा दूषयतस्तव स्तवकितमंहोरंहोऽरं भविष्यति रे वावाल वाचालमनया नयास्पदया दयावशान्न ते शास्तिः क्रियते ॥ ६७ ॥

तेनैव किमायातमित्यत आह चौरस्येति । अवटो गर्तः, "गर्तावटौ भुवि श्वभ्रे" इत्यमरः । समया मध्ये, "समयान्तिकमध्ययो"रित्यमरः । अंहसोऽपराधस्य रंहो वेगः । अरम् · अतिशयेन ॥ ६७ ॥

सर्वाः स्मयन्ते स्म । एवं मुरल्यपहरणरणसाहसहसद्वलावलात्कारतो रतोत्सवादप्यधिकसरसमसममामोदमुपलभमानो दुरवनमालीको वनमाली·कोमलमनाः क्रमशो जनं जनं विचार्य समुज्झितासु तासु ललितां ललिताम्बुजकरेण यदि स्म जिघ्रति ॥ ६८ ॥

दुरवनमाः· बाम्यवशादेव नम्रीकर्तुमशक्या आल्यः सख्यो यस्य सः । तथा स्वयं तु कोमलमनाः । जिघ्रति स्मेति तस्याः कमलिनीत्वं तस्य च भ्रमरत्वम्, स्पृशति स्मेत्यर्थः ॥ ६८ ॥

स्मयानवहितनवहितसौभाग्यगर्वार्हिता तर्हि·तातल्यमानकलाकलापालक्षितमेव तमेव वेणुं सा विदग्धभावबृषभा वृषभानुपुत्रीकरे निक्षिप्य निःसाध्वसे साध्वसंकोचा संमुखमुपसृत्य व्याहरति स्म ॥ ६९ ॥

स्मयेन मदेन· अनवहितम्· अवधानमेव नास्ति यस्याः सा चासौ नवेन हितसौभाग्यगर्वेण· अर्हिता पूजिता चेति सा । तथा तातल्यमा.

नः· अतिशयेन प्रतिष्ठाप्यमानः कलानां कलापो यया सा, "तल प्रतिष्ठायाम्"। विदग्धभावेन वैदग्ध्येन वृषभा श्रेष्ठा ॥ ६९ ॥

रतिस्मयमत्त मत्त एव ते मदोद्धुरता विरता विशेषेण भविष्यति यदि निरघामघार्दन मां स्रष्टुमाकाङ्क्षसि ॥ ७० ॥

निरघां निरपराधां मां यदि स्रष्टुमाकाङ्क्षसि तदा मत्तः सकाशादेव तव मदोद्धुरता विरता भविष्यति ॥ ७० ॥

पश्याहं निर्मुरलीकालीका न मे वागिति संव्यानं दुधाव धावमानैर्दशनकिरणैः सितदीधितिं हसन्ती पुनरूचे ॥ ७१ ॥

दुधाव कम्पयामास ॥ ७१ ॥

स्मर स्मरमदविभ्रान्त धनदानुचरं धावतो धतोर्वीतले वा पपातासौ मुरलिका ॥ ७२ ॥

धनदानुचरं शङ्खचूडम् ॥ ७२ ॥

वृथावृथा वरा वरारोहाणां ततीरेताः। कुसुमासव आह वयस्य तर्हि वेणोरवावरी वरीयस्येव ॥ ७३ ॥

वृथा व्यर्थमेव· आवृथाः· आवृतवानसि। अवावरी चोरी, "वेणृ· अपनयने"। वरीयसी राधा ॥ ७३ ॥

कृष्ण आह भवत्येवमेव मेदुरमते पारिशेष्यप्रमाणेनैतस्यामेव वर्तमानां तर्कयामो यामोऽपि विचारयितुमित्युपक्रामति मतिमतांवरे पीताम्बरे पीतासव इव घूर्णायमाननयने ॥ ७४ ॥

एतस्यां राधायाम् ॥ ७४ ॥

भयनेतृतया तदयनेनोपढौकितं तमेव मणिमणिमाद्यष्टसिद्धिसिद्धितोऽपि सुखरं सुखरञ्जनमनुपमेन महसा महसारस्यवती काचित् प्रियताला तालाङ्कस्य प्रिया समानीय हन्त गुणभराधिके राधिके त्वम् यद्वदामो दामोदरायणेन ते समुपढौकितं मणिमादातुमर्हसीत्युवाच ॥ ७५ ॥

नये नीतिविषये नेतृतया नायकतया, नीतिप्रवीणतयेत्यर्थः । सुखरं सुखदम् । खस्य स्वर्गस्यापि रञ्जनम् । प्रियतां लातीति प्रियताला, प्रेमवतीत्यर्थः । तालाङ्कस्य बलदेवस्य ॥ ७५ ॥

वाचमाकर्ण्य तां तरसादरसादखिन्नं करयुगलमुद्गम्य मुद्गम्यमानमानसायां तस्यां तमाददत्यां सुदत्यां सुतरां श्लथोत्तरीयतया मुरली यदि निपपात ।। ७६ ॥

तरसा वेगेन· आदरस्तेन सादो विसरणम्· आवेगव्यञ्जकं स्खलनमित्यर्थः, तेन खिन्नम् । मुदा· आनन्देन दम्यमानं मानसं यस्यास्तथाभूतायामिति मुरल्यनवधाने हेतुरुक्तः, तस्यां राधायां तं मणिम्· आददत्यां सत्यां श्लथोत्तरीयतया यदि मुरली निपपात तदा स कृष्णो ललितामुपजहासेत्यन्वयः ॥ ७६ ॥

तदा तदालोकेन मुखरो मुखरोचिरतिशयं वितन्वता तन्वतादवस्थ्यं च प्रकटयता कुसुमासवेन सकरतालिकमुच्चैर्हसता सहसहचरगणहीहीतिकोलाहलो ललितामुपजहास स हाससरसतया ।। ७७ ॥

तनोर्देहस्य· अतादवस्थ्यम्, कचवाससीवोत्तमनभङ्गुरगत्यादिभिर्वैकृत्यमित्यर्थः । सहचरगणानां हीहीति कोलाहलेन सह वर्तमानः ॥ ७७ ॥

ललिते सत्यमुक्तमचोभवत्या भवत्या धनदानुचरं धावतो वतोर्वीतले पतितासौ मुरली कथमन्यथा वात्सल्यकुतूहलिना हलिना कृतप्रसादादरादरादाने स्वावहेलावहे·लालसे मानवती नवतीव्रतररोषवशतो भुवीयं निपतिष्यति ।। ७८ ।।

हलिना कृतस्य प्रसादस्य· अदरेण अनल्पेन· आदरेण· आदाने सति स्वस्य· अवहेलामवज्ञाम्· आवहति प्रापयतीति तथाभूते मणिविषयके लालसे सति मानवती मानिनी ॥ ७८ ॥

कुसुमासव आह· अहो नेदमाश्चर्यं या खलु छिद्ररहितां हितां प्रियवयस्यस्य वयस्यस्य धिषणधिषणयापि न सुखावगाह्यां धियं

चोरयति सेयं वार्षभानवी नवीनचौर्यविद्येव छिद्रवतीमहितामखिल-जनमनोऽवगाह्यामिमां मुरलीं चोरयिष्यति यत् ॥ ७९ ॥

या वयस्यस्य धियं चोरयति सेयं मुरलीं यत् चोरयिष्यति तदिदमहो, नाश्चर्यमित्यर्थः । छिद्ररहितां सान्द्राम् । धिषणाधिषणाया बृहस्पतिबुद्ध्यापि कर्त्र्या आत्मनो वयसि न सुखावगाह्याम्, अवगाढुमशक्यामित्यर्थः ॥ ७९ ॥

तद्वयस्य नीयतां ते मुरली या मयानीते नीतेति निरणायि भवतापि तापिच्छरुचिना ॥ ८० ॥

या मया नीता इति भवतापि निरणायि निर्णीता, किं पुनरेताभिरित्यर्थः । हे अनीते नीतिरहित, अविश्वासिचित्ते यावत् । तापिच्छस्तमालः ॥ ८० ॥

इति तेनानीय दत्तामादत्तामादरेण दामोदरोऽदरोल्लसदामोदरो मन्दमधुरमथ तां वादयमानो महावसानं हावसानन्दाभिराभिराभिराम्यवतीभिः कारयामास ॥ ८१ ॥

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे मुरलीचौर्यविलासो नामैकविंशः स्तवकः ॥ २१ ॥ :: ::

हावेन हावाख्यभावोद्गमेन सानन्दाभिः, यदुक्तं "ग्रीवारेचकसंयुक्तो भ्रूनेत्रादिविकाशकृत् । भावादीषत्प्रकाशो यः स हाव इति कथ्यते" ॥ इति ॥ ८१ ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्तिन्यामेकविंशतिस्तवकसंगमनम् ॥ २१ ॥ :: ::

---

## ॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

### ॥ द्वाविंशतितमस्तवकारम्भः ॥

अथान्येद्युरन्ये-द्युरमणीगणगणनातिरिक्तमोदमेदुरा दुराराधा राधारमणविलासा ये ये मधुरा मधुराचिषु त्रिषु भुवनेषु दुरासदा

रासदाः समपद्यन्त तेषां मध्ये या ध्येयाधिकं रसवासनासनाथानां दोलोत्सवलीलाली लावण्यवतीभिः सह सहर्षमसावकारि वकारिणा साधुना साधुना प्रकारेण वर्णनीया भवितुमर्हति ॥ १ ॥

द्वाविंशतितमे दोलमण्डपोपरि मण्डितः। कृष्णः स्वप्रेयसीर्हर्षवर्षिणीः समखेलयत् ॥ लीलाली लीलाश्रेणी। लावण्यवतीभिर्गोपीभिः ॥ १ ॥

तथाहि।

श्रीवृन्दावन एव कापि वलते दोलोत्सवस्य स्थली
यत्प्रान्ते समरोपितेव परितः कल्पद्रुमाणां ततिः।
शाखाग्रैरितरेतरं समपरिष्वक्तेव लेखायिता
काण्डानामृजुदीर्घवृत्तवपुषां मध्येषु शून्यान्तरा ॥ २ ॥

समं तुल्यकालमेव रोपिता इवेति समप्रमाणत्वं स्वतः सिद्धत्वं च व्यञ्जितम्। काण्डानां शाखाग्रैः समं यथा स्यात् तथा परिष्वक्तेव लेखायिता श्रेणीभूय स्थिता। शून्यान्तरा शून्यावकाशा ॥ २ ॥

किंच।

तेषामेव महाहरिन्मणिचतुष्प्राचीरतां गच्छतां
चञ्चच्चामरचारुचेलशकलप्रालम्बमुक्तास्रजाम्।
नानारत्नफलप्रसूनविहगश्रेणीजुषामन्तरे
प्रांशुः काचन काञ्चनेन रचिता वेदिश्चतुष्कोणिका ॥ ३ ॥

चञ्चच्चामरेति, चामरादिकं तदुपरि स्थाने स्थाने वनदेवताभिर्विन्यस्तमिति ज्ञेयम्। प्रांशुरत्युच्चा ॥ ३ ॥

यत्कोणेषु चतुर्षु चारुविटपैरन्योन्यसंसर्गिण-
श्चत्वारो हरिचन्दनाः प्रसविनः सौन्दर्यसारश्रियाम्।
यैः शाखाभिरकारि कश्चन चतुर्द्वारश्चतुःस्तम्भवान्
भास्वद्रत्नचतुश्छदिः प्रसृमरस्तुङ्गो मणीमण्डपः ॥ ४ ॥

हरिचन्दनाः पारिजातभेदाः, यैर्हरिचन्दनैः कर्तृभिः शाखाभिः करणैर्मण्डपोऽकारि । कथंभूतः, चत्वारि द्वाराणि यस्य सः ॥ ४ ॥

यच्छाखाग्रविलम्बिनीभिरनतिस्थूलाभिरान्दोलिनी
बद्धा काञ्चनरज्जुभिर्विजयते प्रेङ्खोलखट्वा हरेः ।
या प्राग्दक्षिणपश्चिमोत्तरगते तुल्ये समस्ताङ्गणे
सर्वाभिर्मम संमुखेति ककुभां लक्ष्मीभिरालोक्यते ॥ ५ ॥

प्रागादिचतुर्दिग्गते समस्ते· अङ्गणे तुल्ये तुल्यप्रमाणके जात्या· एकत्वम्, समस्तेषु चतुर्षु प्राङ्गणेष्वित्यर्थः । या प्रेङ्खोलखट्वा दिशां लक्ष्मीभिः सर्वाभिश्चतसृभिर्मम संमुखी ममैव संमुखं मुखमस्या इत्यालोक्यते ॥ ५ ॥

एवं पर्यन्तभुवो भुवो महामहाकारा ये देवतरवो वत·रवोत्तमानां नववयसां वयसां कुलाकुला रामणीयकचतुरचतुरस्रतया चतुर्हरितां हरितां द्युतिं कारयन्तो रयं·तोषस्य निष्पादयन्तो वर्तन्ते स्म तेषामन्तरन्तरुभयोरुभयोर्वेदिमध्या वेदिमध्यानां दोलस्थली ॥६॥

एवं दोलमण्डपं मध्यगतं राधाकृष्णयोर्वर्णयित्वा यूथेश्वरीणामन्यासामपि व्यवस्थया दोलस्थलीं निरूपयति· एवमिति । रामणीयके चतुरं यच्चतुरस्रं तत्तया ये देवतरवो मध्यगतदोलमण्डपस्य पर्यन्तभुवो वर्तन्ते स्म तेषामेव· उभयोरुभयोर्वृक्षयोरन्तरन्तः· मध्ये मध्ये वेदिमध्या वेदिमध्यगता वेदिमध्यानां कृशमध्यानां सुन्दरीणां दोलस्थली । पर्यन्ते दोलमण्डपस्य प्राङ्गणाग्रदेशे भूरुत्पत्तिर्येषां ते । भुवः पृथिव्या महामहाकारा महोत्सवरूपाः । रवोत्तमानाम्· उत्तमकूजनवतां नववयसां तरुणानां वयसां पक्षिणां कुलैः समूहैराकुला व्याप्ताः । चतुर्हरितां चतुर्दिशां हरितां हरिद्वर्णां द्युतिं कारयन्तः ॥ ६ ॥

तस्याम् ।

द्वयोर्द्वयोः स्कन्धविलम्बिनीभि-
र्बद्धा दृढं काञ्चनशृङ्खलाभिः ।

समानरेखावदनुच्चनीचाः
प्रेङ्खोलिकानां ततयश्चतस्रः ॥ ७ ॥

चतस्रस्ततयो मध्यगदोलमण्डपचतुर्द्वाराभिमुखाश्चतस्रः श्रेण्यः ॥ ७ ॥

मध्यमण्डपमभितोऽभितोषसंपादनसत्वरेषु चत्वरेषु चतुर्षु चिन्तामणिरुचिरुचिरेषु समसमदविस्तृमरसृमरपालिपालितेषु समपरिसरेषु ॥ ८ ॥

मध्यमण्डपम्· अभितः· तच्चतुर्दिक्षु चिन्तामणिरुचिरुचिरेषु चतुर्षु चत्वरेषु प्राङ्गणेषु, दिग्भेदादेव देवानामपि किंपुनर्मनुष्याणां भेदेनावबोधः, इदमन्यत्· चत्वरं दक्षिणदिग्वर्तित्वात्, इदं च ततोऽप्यन्यत् पश्चिमदिग्वर्तित्वात्, इत्येतन्मात्रहेतुभेदेनावबोधो न तु तदाकारतः, तेषां परस्परमाकारवैलक्षण्याभावादिति । समानां समदानां विसृमराणां भ्रमणशीलानां सृमराणां मृगभेदानां पालिभिः श्रेणिभिः पालितेषु, ते तत्र सदा खेलन्तीत्यर्थः ॥ ८ ॥

एकैकं कनकजालमयमुल्लोचमुल्लोचनदृश्यं दृश्यं दलदलितविद्रुमाणां द्रुमाणां महोराशिखरेषु शिखरेषु तानितं समासाद्य तच्छायान्तरापतितहिमकरकरखण्डखण्डनिर्वाहितकौतुकोन्नतिलतिलतण्डुलनिकरधियाधियातहरिणाङ्गनागणाननाघातेषु ॥ ६ ॥

तेषु च· एकैकं कनकजालमयम्· उल्लोचं चन्द्रातपं द्रुमाणां शिखरेषु तानितं ग्रथितम् । द्रुमाणां कथंभूतानाम्, दलैः पत्रैस्तिरस्कृतविद्रुमरत्नानाम् । शिखरेषु किंभूतेषु महसां राशिभिः खरेषु तीक्ष्णेषु,अन्यदुष्प्रधर्षेष्वित्यर्थः । उल्लोचं कीदृशम्, उच्चीकृताभ्यां लोचनाभ्यां दृश्यम् । दृश्यं दृग्भ्यां हितं, नेत्रसुखदमित्यर्थः । तादृशम्· उल्लोचं समासाद्य प्राप्य तच्छायाया अन्तर्मध्ये· आपतितैर्हिमकरस्य करखण्डखण्डैर्निर्वाहितां कौतुकोन्नतिं लाति स्वीकरोति या तिलतण्डुलनिकरधीस्तया· अधियातानां लोभादागतानां हरिणाङ्गनानां गणस्य· आननेषु· आघातो येभ्यस्तेषु ॥ ९ ॥

हरिचन्दनाः पारिजातभेदाः, यैर्हरिचन्दनैः कर्तृभिः शाखाभिः करणैर्मण्डपोऽकारि । कथंभूतः, चत्वारि द्वाराणि यस्य सः ॥ ४ ॥

यच्छाखाग्रविलम्बिनीभिरनतिस्थूलाभिरान्दोलिनी
बद्धा काञ्चनरज्जुभिर्विजयते प्रेङ्खोलखट्वा हरेः ।
या प्राग्दक्षिणपश्चिमोत्तरगते तुल्ये समस्ताङ्गणे
सर्वाभिर्मम संमुखीति ककुभां लक्ष्मीभिरालोक्यते ॥ ५ ॥

प्रागादिचतुर्दिग्गते समस्ते· अङ्गणे तुल्ये तुल्यप्रमाणके जात्या· एकत्वम्, समस्तेषु चतुर्षु प्राङ्गणेष्वित्यर्थः । या प्रेङ्खोलखट्वा दिशां लक्ष्मीभिः सर्वाभिश्चतसृभिर्मम संमुखी ममैव संमुखं मुखमस्या इत्यालोक्यते ॥ ५ ॥

एवं पर्यन्तभुवो भुवो महामहाकारा ये देवतरवो वत·रवोत्तमानां नववयसां वयसां कुलाकुला रामणीयकचतुरचतुरस्रतया चतुर्हरितां हरितां द्युतिं कारयन्तो रयं·तोषस्य निष्पादयन्तो वर्तन्ते स्म तेषामन्तरन्तरुभयोरुभयोर्वेदिमध्या वेदिमध्यानां दोलस्थली ॥६॥

एवं दोलमण्डपं मध्यगतं राधाकृष्णयोर्वर्णयित्वा यूथेश्वरीणामन्यासामपि व्यवस्थया दोलस्थलीं निरूपयति· एवमिति । रामणीयके चतुरं यच्चतुरस्रं तत्तया ये देवतरवो मध्यगतदोलमण्डपस्य पर्यन्तभुवो वर्तन्ते स्म तेषामेव· उभयोरुभयोर्वृक्षयोरन्तरन्तः· मध्ये मध्ये वेदिमध्या वेदिमध्यगता वेदिमध्यानां कृशमध्यानां सुन्दरीणां दोलस्थली । पर्यन्ते दोलमण्डपस्य प्राङ्गणाग्रदेशे भूरुत्पत्तिर्येषां ते । भुवः पृथिव्या महामहाकारा महोत्सवरूपाः । रवोत्तमानाम्· उत्तमकूजनवतां नववयसां तरुणानां वयसां पक्षिणां कुलैः समूहैराकुला व्याप्ताः । चतुर्हरितां चतुर्दिशां हरितां हरिद्वर्णां द्युतिं कारयन्तः ॥ ६ ॥

तस्याम् ।

द्वयोर्द्वयोः स्कन्धविलम्बिनीभि-
र्बद्धा दृढं काञ्चनशृङ्खलाभिः ।

समानरेखावदनुच्चनीचाः
प्रेङ्खोलिकानां ततयश्चतस्रः ॥ ७ ॥

चतस्रस्ततयो मध्यगदोलमण्डपचतुर्द्वाराभिमुखाश्चतस्रः श्रेण्यः ॥ ७ ॥

मध्यमण्डपमभितोऽभितोषसंपादनसत्वरेषु चत्वरेषु चतुर्षु चिन्तामणिरुचिरुचिरेषु समसमदविभ्रमरभ्रमरपालिपालितेषु समपरिसरेषु ॥ ८ ॥

मध्यमण्डपम्· अभितः· तच्चतुर्दिक्षु चिन्तामणिरुचिरुचिरेषु चतुर्षु चत्वरेषु प्राङ्गणेषु, दिग्भेदादेव देवानामपि किंपुनर्मनुष्याणां भेदेनावबोधः, इदमन्यत्· चत्वरं दक्षिणदिग्वर्तित्वात्, इदं च ततोऽप्यन्यत् पश्चिमदिग्वर्तित्वात्, इत्येतन्मात्रहेतुभेदेनावबोधो न तु तदाकारतः, तेषां परस्परमाकारवैलक्षण्याभावादिति । समानां समदानां विभ्रमराणां भ्रमणशीलानां भ्रमराणां भृगभेदानां पालिभिः श्रेणिभिः पालितेषु, ते तत्र सदा खेलन्तीत्यर्थः ॥ ८ ॥

एकैकं कनकजालमयमुल्लोचमुल्लोचनदृश्यं दृश्यं दलदलितविद्रुमाणां द्रुमाणां महोराशिखरेषु शिखरेषु तानितं समासाद्य तच्छायान्तरापतितहिमकरकरखण्डखण्डनिर्वाहितकौतुकोन्नतिलतिलतण्डुलनिकरधियाधियातहरिणाङ्गनागणाननाघातेषु ॥ ९ ॥

तेषु च· एकैकं कनकजालमयम्· उल्लोचं चन्द्रातपं द्रुमाणां शिखरेषु तानितं ग्रथितम् । द्रुमाणां कथंभूतानाम्, दलैः पत्रैस्तिरस्कृतविद्रुमरत्नानाम् । शिखरेषु किंभूतेषु महसां राशिभिः खरेषु तीक्ष्णेषु,अन्यदुष्प्रधर्षेष्वित्यर्थः । उल्लोचं कीदृशम्, उच्चीकृताभ्यां लोचनाभ्यां दृश्यम् । दृश्यं दृग्भ्यां हितं, नेत्रसुखदमित्यर्थः । तादृशम्· उल्लोचं समासाद्य प्राप्य तच्छायाया अन्तर्मध्ये· आपतितैर्हिमकरस्य करखण्डखण्डैर्निर्वाहितां कौतुकोन्नतिं लाति · स्वीकरोति या तिलतण्डुलनिकरधीस्तया· अधियातानां लोभादागतानां हरिणाङ्गनानां गणस्य· आननेषु· आघातो येभ्यस्तेषु ॥ ९ ॥

दिग्भेदादेव देवतानामपि भेदावबोधो ननु सदा तदाकारतो भवति येषु चत्वारि त्वारिप्सितदोलोत्सवशोभावितानानि वितानानि वनदेवताभिरेव नह्यन्ते स्म ॥ १० ॥

येषु चत्वरेषु चत्वारि· अपराणि· अयिमश्लोकदृष्ट्या मुक्ताजालमयानीति पूर्ववितानशोभानपगमः। “अस्त्री वितानमुल्लोच” इत्यमरः ॥१०॥

यथा ।

वृन्दारण्यभुवः प्रणामविधिना दिक्सुभ्रुवां विश्लथा
मुक्ताकञ्चुलिकाः स्थिरेण महता धार्यन्त एताः किमु ।
स्वस्वस्थानसमीपतः किमथवा तद्वन्दनार्थं मुदा
पौर्वापर्यमपास्य सादरमधस्तावल्ली लम्बते ॥ ११ ॥

मुक्ताकञ्चुलिकाभिरखण्डिता चतुरस्रता न भवतीति वितानानां तारावल्युपमा ॥ ११ ॥

किंच या वितानावलिः ।

तद्भूरेणुलिलिक्षयेव नभसः श्रीणां रसज्ञाकुले-
र्यञ्चच्चञ्चलचारुचीनशकलैरान्दोलवद्भिर्वृता ।
मन्दस्पन्दिमरुद्विधूननमृदुप्रेङ्खोलमुक्तामणि-
प्रालम्बा चलकिङ्किणीकुलकलस्वानैः श्रवःप्रेयसी* ॥ १२ ।

तद्भुवो वृन्दारण्यभुवो रेणूनां लिलिक्षयेव लेढुमिच्छयेव नभस श्रीणाम्· आकाशलक्ष्मीणां रसज्ञाकुलैर्जिह्वासमूहैरिव चीनशकलैः, वितान पर्यन्तस्थैरित्यर्थः । मन्दस्पन्दिना मरुता यद्विधूननं तेन मृदुः प्रेङ्खो येषां तथाभूता मुक्तामणिमयाः प्रालम्बा यस्याः सा ॥ १२ ॥

किंच ।

पर्यन्तेषु समानचामरचयैर्ज्योत्स्नातडागोदरा-
दुड्डीनैरिव हंसकैर्गगनजैः किं वा सिताम्भोरुहैः ।

* श्रवःप्रेयसी· इति पा०

मालानामपि खण्डकैस्तत इतो नानाप्रसूनोज्ज्वलैः
सम्रद्धं वनदेवतापरिषदा संचस्करे सा पुनः ॥ १३ ॥

हंसकैरिति श्वेतिमचाञ्चल्यादिभिः, सिताम्भोरुहैरिति सौरभ्यमार्दवसममण्डलताभिः, संचस्करे संस्क्रियते स्म ॥ १३ ॥

धूपैरागुरवैर्महासुरभिभिः सद्धूमलेखोल्लस-
त्कर्पूरत्रसरेणुभिर्दिगवलालोमावलीसंनिभैः ।
च्योतद्भिर्मकरन्दबिन्दुनिकरैः कल्पद्रुमेभ्यो मुहुः
सौरभ्यातिशयं विशिष्य गमितैः सा धूपितासीत् स्थली ॥ १४ ॥

सतीषु धूमलेखासु उल्लसन्तः कर्पूराणां त्रसरेणवो यत्र तैः । पुनः किंभूतैः, कल्पद्रुमेभ्यश्च्योतद्भिर्मकरन्दबिन्दुनिकरैः कर्तृभिः सौरभ्यातिशयं गमितैः प्रापितैः ॥ १४ ॥

ततश्च ।

देव्यो देवा अपि सरभसं चित्रवादित्रवादाः
सिद्धा विद्याधरपरिषदश्चारणाः किंनराश्च ।
प्रागेवासन् नभसि परितो वीतमानैर्विमानै-
र्न ह्यौत्कण्ठ्यं भवति समयापेक्षमुत्कण्ठितानाम् ॥ १५ ॥

वीतमानैरपरिमितैर्विमानैः सह देव्यादयः प्रागेव दोलनखेलनात् पूर्वमेव चित्रवादित्राणि वादयन्त आसन्, तत्र न्यायो न ह्यौत्कण्ठ्यमिति ॥ १५ ॥

ततश्च सर्वस्माद्वनादेव ता देवता वनानामनानामतयो विविधमनाविलविलसत्तरमुत्सवोपकरणं समादाय मादायतनतयानतया चित्तवृत्त्या वृन्दावनावनावागत्य निस्तुलसौहृदहृदयालुतादिगुणवृन्दया वृन्दया सह सहचरीभावमाकल्प्य कल्प्यशेषा दोलामणितरुमण्डपावल्या वल्याभिः कुसुममालाभिर्मण्डनिका निरुपमकमनीयजालाकृतीर्विदधते स्म ॥ १६ ॥

अज्ञानामतयः सामञ्जस्येनैकमतयः। मादो हर्षस्तस्यायतनमाश्रयस्तत्तया। वृन्दावनावनौ वृन्दावनभूमौ। वल्याभिरुत्तमाभिः कुसुममालाभिः। कल्पशेषा मण्डनिकाः॥ १६॥

अभितोऽभितोषेणावलोकनरसविकिरो विकिरोत्कराश्च समन्ततः समन्ततः[1] समागत्य परितो दोलस्थलीस्थलीलातरुषु प्रतिशाखं प्रतिपल्लवमासीना जातहृदयान्दोला दोलायमानकृष्णदिदृक्षासदृक्षासन्नसन्नआमोदतया तूष्णीकाः सन्तः कृष्णगुणगणगणनामेव कुर्वते स्म॥ १७॥

विकिराणां पक्षिणामुत्कराः समूहाः, "नगौकोवाजिविकिरपतत्पत्ररथाण्डजाः" इत्यमरः। अवलोकनरसं विकिरन्तीति "किप्" ते तथा। समन्ततः सर्वतः। समं सहैव। ततः। दोलायमानस्य कृष्णस्य दिदृक्षया सदृक्षः सदृश एव, आसन्नः सन्नुत्तमः, नव आमोदो येषां तत्तया॥ १७॥

तथा सकला एव हरिणजातयो जातयोगेन परमकौतुकेन केनचिदितस्ततोऽस्ततोदेन मनसा प्रमिलताकुञ्जाजिरे रराजिरे राजिरेषा च तदा तासां विचित्रा चित्रार्पिता इवासीत्॥ १८॥

जातो योगः संयोगो यस्य तेन कौतुकेन, अस्ततोदेन गतव्यथेन मनसा। तासां राजिः श्रेणिः॥ १८॥

ततश्चाकस्मात्।

न चाकृष्टा वेणोः क्कणितकलया नापि भवन-
क्रियां त्यक्त्वायाता न च गुरुविरोधश्लथधियः।
कलाकेलीचिन्तामणय इव दिग्भ्यः किमथवा
समुद्भीर्णाः कल्पद्रुभिरथ समीयुर्मृगदृशः॥ १९॥

[1] अत्र संधिः प्राग्वत्।

श्च्योतैरागुरवैर्महासुरभिभिः कस्तूरिकाकर्दमैः
कार्पूरैरपि रेणुभिर्मलयजक्षोदैश्च संपूरिताः ।
वाष्पच्छेद्यतया महामणिमयस्थाल्यन्तरस्थापिताः
काश्चिज्जातुषकूपिकाः करतलेनादाय तस्थाययुः ॥

आगुरवैरगुरुसंबन्धिभिः श्च्योतैर्द्रवैः ॥ २३ ॥

काश्चित् कुङ्कुमवारिभिर्मलयजाम्भोभिश्च कस्तूरिक
पाथोभिः कुसुमद्रवैरपि पृथक् संपूरितं पौरटम् ।
बिभ्रत्यो जलयन्त्रजालमतुलं शिल्पेन नानात्मना
रेजुर्मन्मथयुद्धयान्त्रिकततेर्मूर्ता इवौजःश्रियः ॥ २

यान्त्रिकततेर्यन्त्रधारिसमूहस्य तेजःसंपत्तयो मूर्तिमत्य इ

एवं ताभिः स्त्रीरत्नभूताभिरभिभूताभिरभिराममहोत्स
तनुसेनातनुसौभाग्यहारिणीभिर्हारिणीभिरहंपूर्विकयापूर्विकया
यांपर्यावलोचनेनेव खेलासौकर्यचतुरं चतुरङ्गनपरिसरं परिस
यदि मदकलकलकण्ठकण्ठविकस्वरस्वरपरिहासकः स कश्च
कलः कलयांचक्रे तदेव ॥ २५ ॥

अभिरामेण महोत्सवरसेन· अभिभूताभिः· वशीकृताभि
नुसेनायाः कन्दर्पसैन्यस्य· अतनु· संपूर्णं सौभाग्यं हर्तुं शीलं यास
कश्चन कलकलः· एहि· आयातास्मि पश्य दर्शय देहि नय
वारोहय बधान परिधापयेत्याद्यात्मकः ॥ २५ ॥

श्रीराधिकांसविनिवेशितवामबाहु-
वेणीविलासविलसत्तरवामपाणिः ।
चारुप्रकोष्ठचलकङ्कणमन्यदोष्णा
लीलासरोरुहविधूननलब्धलक्ष्मीः ॥ २६ ॥

अन्यदोष्णा दक्षिणहस्तेन चाद्दणि प्रकोष्ठे चलं कङ्कणं यतस्तद्वा-था स्यात् तथेति विधूननक्रियाविशेषणम् । तरुमण्डपं विवेशेत्युत्तरेणा-न्वयः ॥ २६ ॥

अन्तःस्थशोणकुसुमद्युतिवामिसामि-
वासःकिरीटतटगुम्फितबर्हिबर्हः ।
मन्दभ्रमद्भ्रमरपक्षमरुद्विलोल-
कर्णोत्पलं मकरकुण्डलमादधानः ॥ २७ ॥

अन्तःस्थस्य शोणकुसुमस्य द्युतिवमनशीलं यत् सामिवासः कि-रीटं तिरश्चीनोष्णीषं तस्य तटे गुम्फितं बर्हिबर्हं येन सः ॥ २७ ॥

सुश्लक्ष्णसूक्ष्मतमकञ्चुकचुम्बिताङ्गः
केयूरकङ्कणमणीन्द्ररुचा सुचारुः ।
कण्ठोपकण्ठचलकौस्तुभरश्मिपूर-
शोणायमानवरमौक्तिकदामधामा ॥ २८ ॥

कण्ठोपकण्ठे कण्ठनिकटे ॥ २८ ॥

लीलाविलासगमनक्रममन्दमन्द-
शब्दायमानमणिनूपुरकिङ्किणीकः ।
ओष्ठाधरे ललितया ललितोपनीतं
ताम्बूलपूलकमदन् मदमत्तमूर्तिः ॥ २९ ॥

ताम्बूलस्य पूलकं वीटिकाम् ॥ २९ ॥

नीरध्राम्बररमणीमणीन्द्रवीथीं
स्वाभाभिर्मणिमययष्टिकोपमाभिः ।
उत्सार्य प्रसभमिवाहितप्रवेशः
श्रीकृष्णो मणितरुमण्डपं विवेश ॥ ३० ॥

अम्बररमण्यः स्वर्गाङ्गनाः ॥ ३० ॥

जय जय जयेत्युच्चैर्नादाः खगैरुपतेनिरे
मुकुलपुलकैरन्तर्मोदा द्रुमैरभिनिन्यिरे।
अजनि सुमनःशीधुस्यन्दैर्लताभिरुदस्रुभिः
सह दयितया दोलाक्रीडं हरावधिरोहति ॥ ३१ ॥

अधिरोहति· आरोहति सति ॥ ३१ ॥

सतडितमिव स्निग्धं धाराधरं द्रुममण्डपो-
परि परिगतं दर्शं दर्शं प्रहर्षवशं गताः।
परिचितमपि प्रेम्णापूर्वं विदन्त इवोन्मदा-
श्चुकुवुरभितः केऽओ केऽओ इति प्रचलाकिनः ॥ ३२ ॥

दर्शं दर्शं दृष्ट्वा दृष्ट्वा प्रचलाकिनो मयूराः परिचितमपि तं प्रेम्णा· अनुरागेण· अपूर्वमिव जानन्तः केऽओ केऽओ इति के यूयं भोः के यूयं भो इति चुकुवुः, "ओ संबोधन आह्वाने स्मरणे चानुकम्पने"· इति मेदिनी, अपभ्रंशभाषापीयं प्राच्यानां केहो केहो इति, पाश्चात्यानामपि ॥ ३२ ॥

अथ नभसि भसितिम्नातिम्नातानि नन्दनवनकुसुमानि सुमानितानि मधुकरनिकरेण करेण किरन्तीभिर्ललितसंचारचारणकिंपुरुषपुरुषनारीभिः ॥ ३३ ॥

अथ नभसि नन्दनवनकुसुमानि किरन्तीभिरमरनार्यादिभिर्हेतुभिर्निरवकाशतां वियति विशेषेण प्राप्नुवति सति व्रजतिलकनन्दनः कृष्णो दोलस्य पर्यङ्किकां समारोढुं व्रजति स्मेत्यन्वयः। कुसुमानि कथंभूतानि, भस्य नक्षत्रस्य सितिम्ना श्वेतिम्ना·अतिम्नातानि· अत्युज्ज्वलितानि, सुष्ठु मानितानि· अतिसौरभ्याद्बहुलोरादृतानि ॥ ३३ ॥

मृदुतरकरकिसलयसलयविमर्दमर्दलसुपणपणववरलम्पटपटहादिवादिचवादिचपारहितसिद्धवधूनिचयसमवेताभिरतिभासुरसुरतरङ्गिणीतरङ्गरुचामरचामरनिचयेन चुम्ब्यमानकरकमलाभिरमलाभिरमर-

नारीभिरुर्वशीवशीभूताभिरप्सरोभिरपि वियति वियति निरवकाशताम् ॥ ३४ ॥

करकिशलयानां सलयो विमर्दो यत्र तथाभूतो मर्दलश्च सुपणो बहुमूल्यः पणवश्च वरलम्पटः पटहश्च तदादिवादित्रवादिनीनां चपारहितसिद्धवधूनां निचयेन समवेताभिः, सुरतरङ्गिण्यास्तरङ्गस्येव रुक् कान्तिर्यस्य तथाभूतेन अमरचामरनिचयेन ॥ ३४ ॥

मथ्यमानचन्द्रिकाफेनधवलवलमानकशिपुना पुनानेनेव नयनवतां नयनवतां कृतास्तरां रुचिरुचिरोपबर्हामर्हामतिरामणीयकस्य कस्यचित् सकलसौन्दर्योपर्यङ्किकां पर्यङ्किकां दोलस्य लस्यमानमानसतया समारोढुं स्म व्रजति व्रजतिलकनन्दनः ॥ ३५ ॥

कशिपुना वस्त्रेण कृतास्तराम्, "कशिपु त्वचमाच्छादनं द्वय"मित्यमरः । कथंभूतेन, नयनवतां चक्षुष्मतां नयस्य रूपग्रहणस्य नवतां नवीनत्वं पुनानेनेव पवित्रीकुर्वतेव, नवनवतया प्राकृतवस्तुग्रहणमपि पूर्वं यत् कृतं तदपि यदवलोकनमाहात्म्यात् पवित्रं जातमित्यर्थः । सकलसौन्दर्यमपि उपरि अङ्कयति चिह्नयतीति ताम् ॥ ३५ ॥

नीराजितो मधुरमङ्गलगानपूर्वं
दीपैर्महामणिमयैर्वनदेवताभिः ।
व्यापारयन् नयनमद्भुतदोलशिल्पे
श्रीराधया सह बभौ कुतुकी मुकुन्दः ॥

वामे वामविलोचनाचयमणी राधा सलीलं हरे-
र्हस्तालम्बकरम्बितेन रहसा संजातरोमोत्सवा ।
आरूढस्य मणीन्द्रदोलनमहप्रेङ्खोलिकां कौतुका-
दुत्थायोपविवेश तत्सहचरीसंघः समन्तादभूत् ॥ ३६ ॥

प्रेङ्खोलिकाम् आरूढस्य हरेर्वामे राधा उपविवेश, वामविलो-

जय जय जयेत्युच्चैर्नादाः खगैरुपतेनिरे
मुकुलपुलकैरन्तर्मोदा द्रुमैरभिनिन्यिरे ।
अजनि सुमनःशीधुस्यन्दैर्लताभिरुदश्रुभिः
सह दयितया दोलाक्रीडं हरावधिरोहति ॥ ३१ ॥

अधिरोहति· आरोहति सति ॥ ३१ ॥

सतडितमिव स्निग्धं धाराधरं द्रुममण्डपो-
परि परिगतं दर्शं दर्शं प्रहर्षवशं गताः ।
परिचितमपि प्रेम्णापूर्वं विदन्त इवोन्मदा-
श्चुकुवुरभितः केऽओ केऽओ इति प्रचलाकिनः ॥ ३२ ॥

दर्शं दर्शं दृष्ट्वा दृष्ट्वा प्रचलाकिनो मयूराः परिचितमपि तं प्रेम्णा· अनुरागेण· अपूर्वमिव जानन्तः केऽओ केऽओ इति के यूयं भोः के यूयं भो इति चुकुवुः, "ओ संबोधन आह्वाने स्मरणे चानुकम्पने"· इति मेदिनी, अपभ्रंशभाषायेयं प्राच्यानां केहो केहो इति, पाश्चात्यानामपि ॥ ३२ ॥

अथ नभसि भसितिम्नातिम्नातानि नन्दनवनकुसुमानि सुमानितानि मधुकरनिकरेण करेण किरन्तीभिर्ललितसंचारचारणकिंपुरुषपुरुषनारीभिः ॥ ३३ ॥

अथ नभसि नन्दनवनकुसुमानि किरन्तीभिरमरनार्यादिभिर्हेतुभिर्निरवकाशतां वियति विशेषेण प्राप्नुवति सति व्रजतिलकनन्दनः कृष्णो दोलस्य पर्यङ्किकां समारोढुं व्रजति स्मेत्यन्वयः । कुसुमानि कथंभूतानि, भस्य नक्षत्रस्य सितिम्ना श्वेतिम्ना·अतिम्नातानि· अत्युज्ज्वलितानि, सुष्ठु मानितानि· अतिसौरभ्याद्बहुसौराद्वृतानि ॥ ३३ ॥

मृदुतरकरकिसलयमलयविमर्दमर्दलसुपणपणववरलम्पटपटहादिवादिचवादिचपारहितसिद्धवधूनिचयसमवेताभिरतिभासुरसुरतरङ्गिणीतरङ्गरुचामरचामरनिचयेन चुम्ब्यमानकरकमलाभिरमलाभिरमर-

नारीभिरुर्वशीवशीभूताभिरप्सरोभिरपि वियति वियति निरवकाशताम् ॥ ३४ ॥

करकिशलयानां सलयो विमर्दो यत्र तथाभूतो मर्दलश्च सुपर्णो बहुमूल्यः पणवश्च वरलम्पटः पटहश्च तदादिवादित्रवादिनीनां अपारहितसिद्धवधूनां निचयेन समवेताभिः, सुरतरङ्गिण्यास्तरङ्गस्येव रुक् कान्तिर्यस्य तथाभूतेन· अमरचामरनिचयेन ॥ ३४ ॥

मथ्यमानचन्द्रिकाफेनधवलवलमानकशिपुना पुनानेनेव नयनवतां नयनवतां कृतास्तरां रुचिरुचिरोपवर्हामर्हामतिरामणीयकस्य कस्यचित् सकलसौन्दर्योपर्यङ्किकां पर्यङ्किकां दोलस्य लस्यमानमानसतया समारोढुं स्म व्रजति व्रजतिलकनन्दनः ॥ ३५ ॥

कशिपुना वस्त्रेण छन्नास्तराम्, "कशिपु त्वचमाच्छादनं द्वय"मित्यमरः । कथंभूतेन, नयनवतां चक्षुष्मतां नयस्य रूपग्रहणस्य नवतां नवीनत्वं पुनानेनेव पवित्रीकुर्वतेव, नवनवतया प्राक्तनवस्तुग्रहणमपि पूर्वं यत् छतं तदपि यदवलोकनमाहात्म्यात् पवित्रं जातमित्यर्थः । सकलसौन्दर्यमपि· उपरि· अङ्कयति चिह्नयतीति ताम् ॥ ३५ ॥

नीराजितो मधुरमङ्गलगानपूर्वं
दीपैर्महामणिमयैर्वनदेवताभिः ।
व्यापारयन् नयनमद्भुतदोलशिल्पे
श्रीराधया सह बभौ कुतुकी मुकुन्दः ॥

वामे वामविलोचनाचयमणी राधा सलीलं हरे-
र्हस्तालम्बकरम्बितेन रहसा संजातरोमोत्सवा ।
आरूढस्य मणीन्द्रदोलनमहप्रेङ्खोलिकां कौतुका-
दुत्थायोपविवेश तत्सहचरीसंघः समन्तादभूत् ॥ ३६ ॥

प्रेङ्खोलिकाम्· आरूढस्य हरेर्वामे राधा· उपविवेश, वामविलो·

घनाघयस्य युवतिसमूहस्य· मणिः· रत्नरूपा, हरेर्हस्तालम्बेन स्कन्धोपरि वामहस्तन्यासेन करम्बितं संबद्धं यद्रहः स्मरविलसितं तेन हेतुना संजातो रोमोत्सवो यस्याः सा । तस्याः सहचरीसंघः समन्ताच्चतसृषु दिक्षु ॥ ३६ ॥

एवं चक्षुष्मतामतिमतिसुन्दरीदरीदृश्यमानेन रामणीयकेन केनचिदाहरन्तीं तां दोलोत्सवप्रेङ्खोलिकां भगवति सति समारूढे रूढेन लावण्यामृतस्रोत[1]स्स्वतीस्रोतस्स्वतीव तरलेन माधुर्यतरङ्गभरेण रेणव इव सर्वेषां धैर्यमर्यादा यदि चालिता बभूवुस्तदा तदालोकनकनदुत्कण्ठाः कण्ठागतप्राणा इव देवा देवाङ्गनाश्च विहाय विहायसो मध्यमध्यवसितदिदृक्षासदृक्षासन्नसद्भावशात् तदुचितं नभोदेशं समाशिश्रियिरे ॥ ३७ ॥

चक्षुष्मताम्· अतिशयेन मतिरेव सुन्दरी रमणी तया दरीदृश्यमानेन· अतिशयेन दृश्यमानेन रामणीयकेन केनचिदनिर्वचनीयेन तां मतिसुन्दरीम्· आहरन्तीम्· आकर्षन्तीं प्रेङ्खोलिकां समारूढे सति भगवति । लावण्यामृतस्य स्रोतस्वती नदी तस्याः स्रोतःसु· अतीव चपलेन ॥ ३७ ॥

ततश्च ।

प्रेङ्खोलिकारोहरोहदद्भुतमहामधुरिमाणं तमालोक्य स्वस्वदोलपर्यङ्कोपर्यङ्कोढकेलिधूलयो लयोत्तमेन मङ्गलगानेन विकस्वरस्वरपरिमलाः परितः प्रधानाः कमलदृशोऽमूदृशो मूर्छितानन्दाः समारुरुहुः ॥ ३८ ॥

स्वस्वदोलपर्यङ्कोपरि । अङ्के काञ्चीबन्धप्रदेशे· ऊढाः केलिधूलयो याभिस्ताः ॥ ३८ ॥

---

१ एकत्र सस्य द्वित्वमपरत्र विसर्गस्य सत्वं लिपितोऽपि यमकसौष्ठवार्थं वेदितव्यम् ।

चन्द्रावलीप्रभृतय: पुरतो मुरारे-
र्भद्रादय: परिजनै: सह दक्षिणेऽन्या: ।
श्यामादयो निजगणै: सह वामभागे
धन्यादय: सहचरीभिरथास्य पश्चात् ॥

एवं वलितप्रत्याशं प्रत्याशं समारूढदोलपर्यङ्किकासु तासु सुतासु गोदुहां कृष्णदोलसमोच्छ्रायलब्धशोभासु भासुरतयानारतया नाना-वधतया तदा तदात्यन्तिकमाश्चर्यमासीत् ॥ ३८ ॥

वलिता प्रत्याशा खेलनाभिलाषो यत्र तद्यथा स्यात् तथा, प्रत्याशं दिशि दिशीत्यर्थः, अनारतया निरन्तरया भासुरतया सुन्दरतया कृष्ण-दोलस्य सम एव य उच्छ्राय उच्चतिस्तेन लब्धशोभासु ॥ ३९ ॥

ततश्च सममदमेदुरताभी रताभी रसदसदस्यतायां पूरितचतु-रङ्गनाभिरङ्गनाभिरारब्धे मङ्गलमधुरगानकले कलेवरनिर्जितकनकल-तारामरामणीयकाभिर्मृदुलवीणापरिवादिनीवादिनीभिरपराभिरपराभि-दुरदुरवगाहमोदाभिरपि निर्मितेऽमिते नादमाधुरीधुरीणे श्रुतिहर्षेहर्षे सति ॥ ४० ॥

समा एव मदेन मेदुरता यासां ताभिः, रसदा या सदस्यता सभ्यता तस्यां रताभिः, पूरितानि चत्वारि प्राङ्गणानि याभिस्ताभिः, अपरैरभिदुरो भेत्तुमशक्यो दुरवगाहो मोदो यासां ताभिः ॥ ४० ॥

धृत्वा प्रेङ्खोलिकाया गुणमतिललितं पाणिनैकेन लीला-
लावण्यैर्दोलयन्त्यो निजतनुलतिकां भृङ्गसंघेन सार्धम् ।
मुष्टिग्राहं गृहीत्वा निविडनियमितादञ्चलात् केलिधूली-
रन्येनावल्गुवल्गन्मणिमयवलयं चिक्षिपुः पङ्कजाक्ष्यः ॥ ४१ ॥

एकेन पाणिना प्रेङ्खोलिकाया वामभागस्था वामेन, दक्षिणभा-गस्था दक्षिणेन पाणिना धृत्वा• इत्यर्थः ॥ ४१ ॥

ततश्च ।

धूलीनां धोरणिः सा नभसि तत इतो धूयमानानिलेन
ध्वान्तं व्योम्नि व्यतानीद् विकचनवजपाजाललक्ष्मीविडम्बि ।
देव्यो देवाश्च दृष्टिव्यवधिविधुरिताः पुष्पवर्षप्रकर्षै-
र्माध्वीकस्यन्दकन्दैर्मुहुरुदयि मुहुर्यन्नपूर्वं निरासुः ॥ ४२ ॥

दृष्टेर्दर्शनस्य व्यवधिना धूलिजालकृतव्यवधानेन विधुरिता व्याकुला मुहुरुदयि धूलिध्वान्तं मुहुरेव यन्नपूर्वं निरासुर्दूरीचक्रुः । कैः, पुष्पवर्षप्रकर्षैः, किं भूतैः, माध्वीकस्य मकरन्दस्य स्यन्देन क्षरणेन कन्दैर्जलदैरिवेत्यर्थः ॥ ४२ ॥

ततश्च ।

पर्यन्तस्थैः प्रियपरिजनैश्चारुदोलायमानौ
वृन्दाद्याभिर्जयजयजयेत्युच्यमानौ समन्तात् ।
लीलालोलं स्वयमपि मुदा केलिधूलीः किरन्तौ
राधाकृष्णौ युवतिनिकरै रेजतुः कीर्यमाणौ ॥ ४३ ॥

युवतिनिकरैश्चन्द्रावल्यादिभिः ॥ ४३ ॥

ततश्च ।

दोलन्तीभिः प्रियपरिभवप्राप्तये प्रेयसीभिः
क्षिप्ते खेलारजसि मरुता धूयमाने समन्तात् ।
भूयः क्षिप्ता जतुपुटिकया गन्धसारादिपङ्का
यन्त्रोन्मुक्ताः किमिव गुलिकाः कामदेवस्य पेतुः ॥ ४४ ॥

गन्धसारादीनां चन्दनादीनां पङ्काः ॥ ४४ ॥

ततश्च राधाकृष्णयोः परितः परितस्थुषीभिः कलावतीभिर्गन्धादिपङ्ककूपिकानिःक्षेपचतुराश्चतुराणावलयदेलारोहिरोहिणीरमण-

मण्डल्य इव कुवलयदृशस्तास्तदीया एव गन्धादिकूपिकाः परिम-
लदुहस्तेन हस्तेन गृहीत्वा निहन्यन्ते स्म ॥ ४५ ॥

परितः सर्वतः परितस्थुषीभिः स्थितवतीभिः सखीभिः कर्त्रीभिर्गन्धादिकूपिकानां निक्षेपे चतुरास्ताः कुवलयदृशश्चन्द्रावल्यादयः कर्मभूता निहन्यन्ते स्म, तदीयास्ताभिः क्षिप्ता एव या गन्धादिकूपिकास्ता एव हस्तेन गृहीत्वा ताभिरेवेत्यर्थः ॥ ४५ ॥

न खलु तासामेकापि तयोरङ्गे रङ्गेशयोर्ललाग यदि पुनरपि ताः संभूय भूयसा कौतुकेन केनचिद्युगपदेव पदे वर्तमाना जिगीषायामुपर्युपर्युपचितामहमहमिकामावहन्त्यस्त्रिचतुरास्त्रिचतुरा एव गन्धादिकूपिका एकैकं निचिक्षिपुः ॥ ४६ ॥

जिगीषायां पदे जिगीषारूपे व्यवसाये वर्तमानास्त्रिचतुरास्त्रिस्रश्चतस्रो वा सुन्दर्य एकैकं प्रत्येकमेव तिस्रश्चतस्रो वा कूपिका युगपच्चिक्षिपुः ॥ ४६ ॥

ततश्च ।

आवेगस्य जवेन तेन महता निर्भज्य विभ्रश्यतो
भूमौ जातुषकोषतोऽतिमृदुलान्निसृत्य दूरं गतैः ।
गन्धैरागुरवैर्घनैर्मलयजक्षोदैश्च गोलायितै-
र्भित्त्वाण्डं खगपोतकैरिव बहिर्भूतैर्निपेतेऽभितः ॥ ४७ ॥

विभ्रश्यतो जातुषकोषतः सकाशात् ॥ ४७ ॥

तेषां ये व्रजराजसूनुनिकटे वेगात् समं सर्वतः
क्षिप्तानां निपतन्ति तानरहयन् पार्श्वस्थिताः सुभ्रुवः ।
ये वा केऽपि लगन्ति तस्य जलदश्यामे प्रतीकेऽभित-
स्तानालुम्पति राधिका स्मितमुखी स्वेदच्युता पाणिना ॥ ४८ ॥

तेषां क्षिप्तानां गन्धादीनां मध्ये । अरहयन्, निवारयामासुरि-

ततश्च ।

धूलीनां धोरणिः सा नभसि तत इतो धूयमानानिलेन
ध्वान्तं व्योम्नि व्यतानीद् विकचनवजवाजाललक्ष्मीविडम्बि ।
देव्यो देवाश्च दृष्टिव्यवधिविधुरिताः पुष्पवर्षप्रकर्ष-
माध्वीकस्यन्दकन्दैर्मुहुरुदयि मुहुर्यत्नपूर्वं निरासुः ॥ ४२ ॥

दृष्टेर्दर्शनस्य व्यवधिना धूलिजालकृतव्यवधानेन विधुरिता व्याकुला मुहुरुदयि धूलिध्वान्तं मुहुरेव यत्नपूर्वं निरासुर्दूरीचक्रुः । कैः, पुष्पवर्षप्रकर्षैः, किं भूतैः, माध्वीकस्य मकरन्दस्य स्यन्देन क्षरणेन कन्दैर्जलदैरिवेत्यर्थः ॥ ४२ ॥

ततश्च ।

पर्यन्तस्थैः प्रियपरिजनैश्चारुदोलायमानौ
वृन्दाद्याभिर्जयजयजयेत्युच्यमानौ समन्तात् ।
लीलालोलं स्वयमपि मुदा केलिधूलीः किरन्तौ
राधाकृष्णौ युवतिनिकरै रेजतुः कीर्यमाणौ ॥ ४३ ॥

युवतिनिकरैश्चन्द्रावल्यादिभिः ॥ ४३ ॥

ततश्च ।

दोलन्तीभिः प्रियपरिभवप्राप्तये प्रेयसीभिः
क्षिप्ते खेलारजसि मरुता धूयमाने समन्तात् ।
भूयः क्षिप्ता जतुपुटिकया, गन्धसारादिपङ्का
यन्त्रोन्मुक्ताः किमिव गुलिकाः कामदेवस्य पेतुः ॥ ४४ ॥

गन्धसारादीनां चन्दनादीनां पङ्काः ॥ ४४ ॥

ततश्च राधाकृष्णयोः परितः परितस्थुषीभिः कलावतीभिर्गन्धादिपङ्ककूपिकानिःक्षेपचतुराश्चतुराशावलयदोलारोहिरोहिणीरमण-

मण्डल्य इव कुवलयदृशस्तास्तदीया एव गन्धादिकूपिकाः परिमल्दुहस्तेन हस्तेन गृहीत्वा निहन्यन्ते स्म ॥ ४५ ॥

परितः सर्वतः परितस्युषीभिः स्थितवतीभिः सखीभिः कर्त्रीभिर्गन्धादिकूपिकानां निक्षेपे चतुरास्ताः कुवलयदृशश्चन्द्रावल्यादयः कर्मभूता निहन्यन्ते स्म, तदीयास्ताभिः क्षिप्ता एव या गन्धादिकूपिकास्ता एव हस्तेन गृहीत्वा ताभिरेवेत्यर्थः ॥ ४५ ॥

न खलु तासामेकापि तयोरङ्गे रङ्गेशयोर्ललाग यदि पुनरपि ताः संभूय भूयसा कौतुकेन केनचिद्युगपदेव पदे-वर्तमाना जिगीषायामुपर्युपर्युपचितामहमहमिकामावहन्त्यस्त्रिचतुरास्त्रिचतुरा एव गन्धादिकूपिका एकैकं निचिक्षिपुः ॥ ४६ ॥

जिगीषायां पदे जिगीषारूपे व्यवसाये वर्तमानास्त्रिचतुरास्त्रिस्रश्चतस्रो वा सुन्दर्य एकैकं प्रत्येकमेव तिस्रश्चतस्रो वा कूपिका युगपच्चिक्षिपुः ॥ ४६ ॥

ततश्च ।

आवेगस्य जवेन तेन महता निर्भज्य विभ्रश्यतो
भूमौ जातुषकोषतोऽतिमृदुलान्निःसृत्य दूरं गतैः ।
गन्धैरागुरवैर्घनैर्मलयजक्षोदैश्च गोलायिते-
र्भित्त्वाण्डं खगपोतकैरिव बहिर्भूतैर्निपेतेऽभितः ॥ ४७ ॥

विभ्रश्यतो जातुषकोषतः सकाशात् ॥ ४७ ॥

तेषां ये व्रजराजसूनुनिकटे वेगात् समं सर्वतः
क्षिप्तानां निपतन्ति तानरहयन् पार्श्वस्थिताः सुभ्रुवः ।
ये वा केऽपि लगन्ति तस्य जलदश्यामे प्रतीकेऽभित-
स्तानालुम्पति राधिका स्मितमुखी स्वेदच्युता पाणिना ॥ ४८ ॥

तेषां क्षिप्तानां गन्धादीनां मध्ये । अरहयन्, निवारयामासुरि-

त्यर्थः । प्रतीके-अङ्गे । स्मितमुखीति भावविशेषोदयात् । पाणिना लुम्पतीति, तन्मिषेणैव तदङ्गस्पर्शोऽपि घटितः । अत एव स्वेदच्युतेति सात्त्विकविकारः प्रस्वेदः ॥ ४८ ॥

एवं दोलायमानमानकुतुकितचकोरकीकृतकोरकीकृतलोचनचमूरुलोचनाचमूरुलोचनाह्लादनमादनव्रतधरः ॥ ४९ ॥

दोलायमानानि धैर्यापगमे सति चपलीभूतानि च मानकुतुकितानि गर्वौत्सुक्ययुक्तानि च चकोरकीकृतानि सौभाग्यरसास्वादयोराधिक्यात्- चन्द्रानुकम्पितचकोरसदृशीकृतानि च तदानीमेव किंचिल्लज्जोदयवशात्- कोरकीकृतानि च लोचनानि यस्यास्तथाभूता या चमूरुलोचनाचमूर्हरिणनयनाविततिः- तस्याः- उरु- अधिकं लोचनाह्लादनमेव मादनव्रतं कन्दर्पप्रणीतनियमं धरतीति तथा सः ॥ ४९ ॥

तदितरविधावलसो वलसोदरोऽदरोद्गीर्णमदघूर्णमाननयनो विलासचतुरं चतुरङ्गनाभिमुख्यं मुख्यं पक्षमभिलषन् ॥ ५० ॥

तत्रैव निष्ठाकैवल्येन तस्य धीरललितत्वं सूचयन्नाह तदितरविधौ- अलस इति । चतुर्षु पूर्वादिदिग्गतेष्वङ्गनेषु प्राङ्गणेषु- आभिमुख्यं येन तथाभूतं पक्षमभिलषन्- इच्छयाङ्गीकुर्वन् ॥ ५० ॥

कदाचित् केलिकलाकलापदक्षिणा दक्षिणाशावर्तिनी रमणीमणीर्दोलन्तीः किरन्तीश्चारुण्यविलसत्करेणुचयं करेणुचयं जयन्तीर्वैजयन्तीर्वैदग्धीनामिव ॥ ५१ ॥

कदाचिद्दक्षिणाशावर्तिनी रमणीमणीर्दोलन्तीरवेक्षमाणः करपद्मधृतपद्मरागरुचिधूलीनां धूलीलया पराबभूव । आरुण्येन विलसत् कं सुखं यस्मात् तथाभूतं रेणुचयं करेणुचयं हस्तिनीसमूहं जयन्तीर्वैजयन्तीः पताकाः ॥ ५१ ॥

कदाचिच्च वलमानमुत्तरामुत्तराशाविलासिविलासिनीश्रेणिम् ॥ ५२ ॥

वलमानमुत्तराम्- अतिशयेन प्रवलानन्दाम्, उत्तरस्यां दिशि विलसितुं शीलं यस्याः सा चासौ विलासिनीश्रेणिश्चेति ताम् ॥ ५२ ॥

कदाचिदपि रसविलासैरपश्चिमाशां पश्चिमाशां प्रतिपद्य दोलन्तीं कुवलयवलयतिरस्कारिदृशां तादृशां तारुण्यवतीनामालीमालीजनैस्तथाविधैः सहिताम् ॥ ५३ ॥

अपश्चिमा· अनपकृष्टा· आशा मनोरथो यस्यास्तां तारुण्यवती· नामालीं श्रेणिम् ॥ ५३ ॥

कदाचन पूर्वकाष्ठापूर्वकाष्ठापरिप्राप्तदोलारोहा वरारोहा वरामोदवतीरवेक्षमाणो दोलन्नेव गुणवाराधिकया राधिकया सह करपद्मपद्मरागरश्मिधूलीधूलीलया सर्वा एव पराबभूव ॥ ५४ ॥

पूर्वकाष्ठायां पूर्वदिशि· अपूर्वा या काष्ठा कृष्णदोलपर्यङ्कस्य कृष्णस्य च संमुखत्वादद्भुत उत्कर्षस्तां परिप्राप्तं दोलं पर्यङ्कम्· आरोहन्तीति ताः, "काष्ठोत्कर्षे स्थितौ दिशि" त्यमरः। गुणवारेण गुणसमूहेन· अधिकया ॥ ५४ ॥

एवं स्मितविकसितवदननीरजो रजोभरेण ताः पराभूय भूय एव रसकुतूहलविक्रमेण क्रमेण हरिहरिदादिहरिच्चतुष्टयतुष्टय एव तत्तदभिमुखीभूय दोलतो द्विविध एव दोल आसीत् ॥ ५५ ॥

हरिहरित् पूर्वा दिक् तदादिदिक्चतुष्टयस्य तुष्टये, दोलतो दोलनतः ॥ ५५ ॥

तथाहि ।

सांमुख्यं यदि पूर्वपश्चिमदिशोर्दोलस्तदा संमुखः
सांमुख्यं यदि दक्षिणोत्तरदिशोर्दोलस्तदा पार्श्वगः ।
एवं संमुखपार्श्वदोलकुतुके हारस्य वन्यस्रजः
श्रीमत्कुण्डलयोश्च तस्य समभूद्दोलोत्सवस्तादृशः ॥ ५६ ॥

पूर्वपश्चिमदिशोर्यदि सांमुख्यम्, पूर्वाभिमुखीभूय पश्चिमाभिमुखीभूय वा यदा कृष्णो दोलतीत्यर्थः, दोलस्तदा संमुखः· दोलनक्रियापि

पूर्वाभिमुखी पश्चिमाभिमुखी चेति, तस्याः स्वमुखाग्रेतनदेशचारित्वेन सांमुख्यात्। दक्षिणोत्तरदिशोर्यद्वि सांमुख्यम्, दक्षिणाभिमुखीभूय उत्तराभिमुखीभूय वा यदि कृष्णो दोलतीत्यर्थः, दोलस्तदा पार्श्वग इति, दोलक्रियायाः सदैव पूर्वपश्चिमाभिमुखीभावेन स्थितेरैकरूप्यात्। एवमेव हारस्येति, हारादीनामपि कृष्णस्य पूर्वाभिमुखत्वे संमुख एव दोलोत्सवः दक्षिणाभिमुखत्वे पार्श्वगस्तिरश्चीनतयेति ॥ ५६ ॥

एवमहरहरहो रहोविलासा विलासाम्बुधेस्तस्य नित्यभूताः प्रकटाप्रकटतयैव समुज्जृम्भन्ते स्म ॥ ५७ ॥

अथ "गोप्यः कृष्णे वनं याते तमनु द्रुतचेतसः। कृष्णलीलाः प्रगायन्त्यो निन्युर्दुःखेन वासरान्" ॥ इत्यादिकदशमस्कन्धपञ्चत्रिंशाध्यायगतप्रतियुगलपद्यगीतवंशीवादनलीलायाः श्रीव्रजसुन्दरीजनविरहमयत्वं तदुपरितनारिष्टकेश्यादिवधलीलायाश्चानतिमाङ्गल्यं तदुपरितनाक्रूरागमनादिलीलायाश्चानुरागिभक्तजनविक्षोभकत्वं तदुपरितनरङ्गप्रवेशादिलीलानामवृन्दावनीयत्वं पर्यालोच्य निखिलसहृदयसमुदयमुकुटमणिः सोऽयं ग्रन्थकारः सुखमयदोलोत्सवरसावसर एव स्वग्रन्थपरिसमाप्तिमभिलषन्नाह एवमिति। अहो आश्चर्यभूताः रहोविलासा रहस्यलीलाः, प्रकटाप्रकटतयैव, त एव विलासा यदि कदाचित् प्रपञ्चगोचरीकृतास्तदा प्रकटतया यदा च तदगोचरीकृतास्तदा अप्रकटतयेत्यर्थः ॥ ५७ ॥

न तस्यास्ते शक्तिर्नहि भवितुमीदृक् प्रभवतो
न सिद्धादेर्भेदान्न कमलदृशस्ताश्च विविधाः।
न वृन्दारण्यस्यार्हति न खलु तस्याप्रकटता
कथं तस्मिन् नित्यं न भवतु हरेः केलिललितम् ॥ ५८ ॥

ननु तेषां प्रपञ्चागोचरत्वेन सत्त्वे किं प्रमाणमिति चेत्, "जयति जननिवासो" "व्रजपुरवनितानां वर्धयन् कामदेव"मित्यादिश्रीभागवतादिवचनसूचितलीलानित्यत्वप्रमाणिता तदचिन्त्या शक्तिरेवेत्यविश्वासनिरासाय साक्षेपमाह न तस्यास्ते इति। तस्य प्रभवतः प्रभोः कृष्णस्य

ईदृग् भवितुम्· उक्तन्यायेन प्रकटाप्रकटनित्यलीलास्पदीभवितुं शक्तिर्नास्ते न, अपित्वास्त एवेत्यर्थः । ताश्च तत्प्रेयस्यः कमलदृशो व्रजयुवतयो न· आसते न,अपित्वासत एव । कीदृश्यः, सिद्धादिभेदात् सिद्धा नित्यसिद्धाः श्रुतिरूपा मुनिरूपा इतिभेदाद् विविधाः । तस्य विलासस्थानस्य वृन्दारण्यस्याप्यप्रकटता प्रपञ्चलोकादृश्यत्वं नार्हति न, अपित्वर्हत्येव । अतः कथं केलिललितं नित्यं न भवतु । हे महावादिन्निदं तावन्मया पृष्टस्त्वमेव प्रतिब्रूहीति भावः ॥ ५८ ॥

किंवा ।

य एकः कान्तानां पुरि पुरि सहस्राष्टकयुग-
प्रसंख्यानां पाणिग्रहणकुतुके तत्र युगपत् ।
विशन् पौरैः सार्धं कथमथ गुरूणामविदुषां
स्वकीयं नानात्वं स्वमिव विनिवेशं व्यरचयत् ॥ ५९ ॥

किंवेति, युगपदेव प्रकटा अप्रकटाश्च सर्वा एव लीला नित्यभूता एव वर्तन्त इत्यर्थः । तथाहि । अनन्तकोटिब्रह्माण्डसमुदायेषु मध्ये यदा यत्र ब्रह्माण्डसमुदाये तेन या लीला प्रकाश्य समाप्यते सैव लीला तदपरस्मिन् ब्रह्माण्डसमुदाये· आरभ्य प्रकाश्यते तदपरत्र च नैवाप्यारभ्यते प्रकाशसमाप्त्योः का वार्ता । एवंरीत्या प्रकटा अपि सर्वा लीला यथास्थानं पर्यायेण नित्या एव । अप्रकटास्तु ता एव लीलाः सदैवाप्रकटतया भागवतामृतोक्तलक्षणैरनन्तप्रकाशैर्वर्तन्त एवेत्यत्र निदर्शनमाह य एक इति । स्वकीयं नानात्वं गुरूणां वसुदेवादीनामपि कथं केन प्रकारेण व्यरचयत्, उपलक्षणमेतत् पौराणामपि, किंतु· अविदुषाम्· आत्मनां बहुप्रकाशाविर्भावानुसंधानरहितानाम् । अतः पुरि पुरि स्वं विनिवेशमिव तेषां विनिवेशं च व्यरचयत्, यत"श्चित्रं बतैतदेकेन वपुषे"ति प्रमाणतः कायव्यूहं विनैव यथा स्वस्य तेषां च नानात्वं व्यरचयत्· अत्रापि तस्य तथा कर्तुं किमशक्यमिति भावः ॥ ५९ ॥

स्थितो वृन्दारण्ये सततमपि ताभिर्मधुपुरीं
गतश्चासां तद्वद्विरहरुजमप्यारचितवान् ।
अतोऽतर्क्यैश्वर्ये पुरुमहिमनि श्रीभगवति
व्रजेश्वर्याः सूनौ न किमपि विचित्रं विलसति ॥ ६० ॥

अतो "वत्सैर्वत्सतरीभिश्च साकं क्रीडति माधवः । वृन्दावनान्तरगतः सरामो बालकैर्वृतः" ॥ इत्याद्यार्षवचनप्रामाण्येन तादृशशक्तिमानसौ वृन्दारण्ये सततं स्थितोऽपि मधुपुरीं गतः,ताभिः सदा विहरन्नपि विरहरुजमप्यारचयत्, अप्रकटप्रकटप्रकाशाभ्यां क्रमेणेति भावः । तत्र· अतर्क्यैश्वर्यं इत्यादिहेतुचतुष्टयमुत्तरोत्तरप्रधानम् । व्रजेश्वर्याः सूनाविति, यदि देवकीसूनौ महिषीविवाहादौ तादृशत्वं तदा ततोऽपि परमपूर्णतमप्रकाशे व्रजेश्वर्याः सूनौ तत्र किमद्भुतमिति भावः ॥ ६० ॥

चैतन्यकृष्णकरुणोदितवाग्विभूति-
स्तन्मात्रजीवनधनस्य जनस्य पुत्रः ।
श्रीनाथपादकमलस्मृतिशुद्धबुद्धि-
श्चम्पूमिमां रचितवान् कविकर्णपूरः ॥ ६१ ॥

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे दोलोत्सवो नाम द्वाविंशतिस्तवकः ॥ २२ ॥

समाप्तश्चायमानन्दवृन्दावननामा ग्रन्थः ॥ :: :: ॥

तन्मात्रजीवनधनस्य श्रीशिवानन्दसेनस्य ॥ ६१ ॥

सन्तः संततशंसमेहितहितप्रारम्भसंभाविताः
सर्वेषामपि किं पुनर्मम नमत्कीर्णाः स्वघृणाग्धियः ।
तेनैषां त्वयामीत्वयात्वयामियं टीका न किं लप्स्यते
शुद्धिं बुद्धिमतां मतामथ ततः प्राप्यैव राजिष्यते ॥

राधासरसीरकुटीरवर्तिनः
प्राप्तव्यवृन्दावनचक्रवर्तिनः ।
आनन्दचम्पूविवृतिप्रवर्तिनः
सन्तो गतिर्मे सुमहानिवर्तिनः ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्तिन्यां द्वाविंशतितमस्तबकसंगमनम् ॥ २२ ॥

समाप्ता चेयमानन्दवृन्दावनचम्पूविवृतिः ॥ :: :: ॥

---

## ॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

### ॥ उपसंहारः ॥

सकृदपि स्मृतिगोचरतां गतः
सकलमङ्गलमाशु तनोति यः ।
तमिह कारुणिकं परमेश्वरं
जनमनीषितसिद्धिकरं भजे ॥ १ ॥

आनन्दवृन्दावननामचम्पूः
श्रीकर्णपूरेण विनिर्मितैषा ।
श्रीमज्जहांगीरमहीमहेन्द्र-
सभाप्रधानेन महामहिम्ना ॥ २ ॥

पारसीकगिरि संनिपुणोऽयं
ग्रन्थनिर्मितिकृदास च तत्र ।
अन्यदस्य निखिलं जनिवृत्तं
प्राङ्मयास्ति विनिवेदितमेव ॥ ३ ॥

तथा च तत्कृतपारसीकपदप्रधानाभिधसंदर्भस्यपद्यम् ।

स्थितो वृन्दारण्ये सततमपि ताभिर्मधुपुरीं
गतश्चासां तद्वद्विरहरुजमप्यारचितवान् ।
अतोऽतर्क्यैश्वर्ये पुरुमहिमनि श्रीभगवति
व्रजेश्वर्याः सूनौ न किमपि विचित्रं विलसति ॥ ६० ॥

अतो "वत्सैर्वत्सतरीभिश्च साकं क्रीडति माधवः । वृन्दावनान्तरगतः सरामो बालकैर्वृतः" ॥ इत्याद्यार्षवचनप्रामाण्येन तादृशशक्तिमानसौ वृन्दारण्ये सततं स्थितोऽपि मधुपुरीं गतःताभिः सदा विहरन्नपि विरहरुजमप्यारचयत्, अप्रकटप्रकटप्रकाशाभ्यां क्रमेणेति भावः । तत्र अतर्क्यैश्वर्ये इत्यादिहेतुचतुष्टयमुत्तरोत्तरप्रधानम् । व्रजेश्वर्याः सूनाविति, यदि देवकीसूनौ महिषीविवाहादौ तादृशत्वं तदा ततोऽपि परमपूर्णतमप्रकाशे व्रजेश्वर्याः सूनौ तत्र किमद्भुतमिति भावः ॥ ६० ॥

चैतन्यकृष्णकरुणोदितवाग्विभूति-
स्तन्मात्रजीवनधनस्य जनस्य पुत्रः ।
श्रीनाथपादकमलस्मृतिशुद्धबुद्धि-
श्चम्पूमिमां रचितवान् कविकर्णपूरः ॥ ६१ ॥

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे टोलोत्सवो नाम द्वाविंशतिस्तवकः ॥ २२ ॥

समाप्तश्चायमानन्दवृन्दावननामा ग्रन्थः ॥ :: :: ॥

तन्मात्रजीवनधनस्य श्रीशिवानन्दसेनस्य ॥ ६१ ॥

सन्तः संततशंतमेहितहितप्रारम्भसंभाविताः
सर्वेषामपि किं पुनर्मम नमच्छीर्षाः स्वधृष्ण्यग्धियः ।
तेनैषां चरणाम्बुजाश्रयमियं टीका न किं लप्स्यते
शुद्धिं बुद्धिमतां मतामथ ततः प्राप्यैव राजिष्यते ॥

राधासरस्तीरकुटीरवर्तिनः
प्राप्तव्यवृन्दावनचक्रवर्तिनः ।
आनन्दचम्पूविवृतिप्रवर्तिनः
सन्तो गतिर्मे सुमहानिवर्तिनः ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्तिन्यां द्वाविंशतितमस्तबकसंगमनम् ॥ २२ ॥

समाप्ता चेयमानन्दवृन्दावनचम्पूविवृतिः ॥ :: :: ॥

---

## ॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

### ॥ उपसंहारः ॥

सकृदपि स्मृतिगोचरतां गतः
सकलमङ्गलमाशु तनोति यः ।
तमिह कारुणिकं परमेश्वरं
जनमनीषितसिद्धिकरं भजे ॥ १ ॥

आनन्दवृन्दावननामचम्पूः
श्रीकर्णपूरेण विनिर्मितैषा ।
श्रीमज्जहांगीरमहीमहेन्द्र-
सभाप्रधानेन महामहिम्ना ॥ २ ॥

पारसीकगिरि संनिपुणोऽयं
ग्रन्थनिर्मितिकृदास च तत्र ।
अन्यदस्य निखिलं जनिवृत्तं
प्राङ्मयास्ति विनिवेदितमेव ॥ ३ ॥

तथा च तत्कृतपारसीकपदप्रधानाभिधसंदर्भस्योपक्रमः ।

"श्रीमज्जहांगीरमहीमहेन्द्र-
प्रसादमासाद्य निदेशरूपम् ।
करोत्यदः संस्कृतपारसीक-
पदप्रधानं कविकर्णपूरः" ॥

इति ।

अस्या उपक्रमे यो
मयाभ्यधायि प्रवृत्तिहेत्वादिः ।
तद्दर्शनतः शेषं
वृत्तं जानन्तु विद्वांसः ॥ ४ ॥

अस्याश्चम्प्वा मुद्रणारम्भसमाप्तिसमयौ च निरूप्येते ।
खीष्टाब्देऽब्ध्यद्रिनागौषधिपतिमितिके १८०४ मासि चाक्तूबराख्ये
सव्याख्यारम्भि चम्पूर्बुधजनसुमनोमोदिनी मुद्रणाय ।
हस्त्यद्र्यष्टेन्दुसंज्ञायुजि १८०८ शरदि तथा मासि चागस्तसंज्ञे
सैषा नीता सटीका मुरहरकृपया मुद्रयित्वा समाप्तिम् ॥ ५ ॥

सेयं काव्यरसज्ञसज्जनमनोमोदायनं सर्वथा
दुष्प्रापा यदभूदशेषविदुषां तस्मान्मया मुद्रिता ।
भूयादद्य दृशां गता विषयतां संख्यावतां येन मे
श्रान्तिः स्यात् सफला परिश्रमफलं को नाम नाकाङ्क्षति ॥ ६ ॥

मुद्रणावसरे चास्या मध्ये मध्ये स्वसंकेतितार्थसूचका बहवो बिन्दवो मयोपन्यस्तास्तेषामभिप्रायश्चायमपद्यद्वयेनोच्यते ।

यत्राविभागोऽभिमतः पदानां
विभज्य बिन्दुर्निहितोऽस्ति तत्र ।
क्वचित् पदानामवसानबोधी
क्वचिच्च शब्दैक्यमतेर्विधायी ॥ ७ ॥

स्पष्टप्रतीत्यै प्रथमोऽस्ति बिन्दुः
परोऽवसानाश्रयकार्यसिद्धै ।
तृतीय आस्ते यमकानुरोधात्
पाठाय तुल्याकृतिबुद्धिकारी ॥ ८ ॥

एतेषामुदाहरणानि यथायथं मतिमद्भिरिमान्यधो निवेशितानि ज्ञेयानि ।

गजाद्रिवसुचन्द्र १८७८ मितखीष्टाब्दगतजुलाईसंज्ञकमासमुद्रितपण्डितपत्रे,

पृ० १०४ प० १ चकार· इति । पृ० १०८ प० ११ अमबांधाः· लयावाप्या । पृ० १०८ प० १८ महे· उत्सवे । पृ० १०९ प० १२ उज्जगाम· अभ्युत्थितवती । पृ० ११३ प० १४ ललितोपवनकुञ्जराणाम्· अजिरेषु· उपविविशुरित्यन्वयः । पृ० ११३ प० १६ मत्या· ऊठेन । पृ० ११६ प० २४ यद् यस्मात्· अयमिन्दुस्तव । पृ० ११७ प० १३ चषकात्· एकस्मात्· चषकात्· चषकान्तः· अन्यस्य । पृ० ११९ प० २५ तदाकलनखेदेव खे·देववधूततिरपि । पृ० १२२ प० १७ विगतत्रपे तत्र·पेशलताशलता । इत्यादि ।

अस्याश्चम्प्वाः प्रस्तावनावर्णनावसरे· एकाधिकशततमे पण्डितपत्रे चतुरधिकैकशततमे पृष्ठे पञ्चमपङ्क्तौ "पित्रा कारितवन्दनम्" इत्यस्य स्थाने "पित्रा कारिवन्दनम्" इति तथा तत्रैव षडधिकैकशततमे पृष्ठे पञ्चत्रिंशत्तमपङ्क्तौ "रविसमो वनमध्युवास" इत्यस्य स्थाने "रविसमा वनमध्युवास" इति च मुद्रितमवलोक्य विपुलचम्प्वामस्यां बहून् मुद्रकदोषांस्तर्कयता तथैव स्वस्यापि प्रायः स्खलनमाशङ्कमानेन ग्रन्थविस्तरभिया शुद्धिपत्रं विधायान्ते मुद्रयितुमशक्नुवता च मया विचारनिपुणा गुणैकावचयसंनियुक्तमतयः क्षमासाराः संख्यावन्तः प्रार्थ्यन्ते ।

तीर्णा बाहुबलेन किं न जलधिश्चम्पूर्यदेषा मया
नीताद्यास्ति समाप्तिमायततमा मुद्राविधानात्मना ।
अस्यां मुद्रकशोधकभ्रमवशाद् या स्यादशुद्धिः क्वचित्
तां क्षाम्यन्तु विपश्चितः श्रमविदः कृत्वाञ्जलिं प्रार्थये ॥ ९ ॥

गोरीग्रामे कान्यकुब्जप्रसिद्धे
पूर्वे जाता यस्य नित्यं न्यवात्सुः ।
अद्याप्यास्ते तत्र यद्बन्धुवर्गो
वास्तव्यो यो जन्मना काशिकायाः ॥ १० ॥

काशीस्थराजकीय-
प्रधानपाठालये नियुक्तोऽहम् ।
सांख्याध्यापनकृत्ये
वेचनरामस्त्रिपाठ्युपाख्योऽस्मि ॥ १० ॥

॥ युग्मम् ॥



## ॥ श्लोकवार्तिकम् ॥



प्रमाणत्वाप्रमाणत्वे पुण्यपापादि तत्फलम् ।
विध्यर्थवादमन्त्रार्थनामधेयादिकल्पना ॥ १ ॥
सर्वेषु लक्षणेष्वेवं स्वप्रमाणगणैः स्थितिः ।
वचनव्यक्तिभेदेन पूर्वसिद्धान्तपक्षता ॥ २ ॥
कर्मभ्यःफलसंबन्धः पारलौक्यैहलौकिके ।
सर्वमित्याद्ययुक्तं स्यादथ शून्यासु बुद्धिषु ॥ ३ ॥
तस्माद्धर्मार्थिभिः पूर्वं प्रमाणैर्लोकसंमतैः ।
अर्थस्य सदसद्भावे यत्नः कार्यः क्रियां प्रति ॥ ४ ॥
यदा संवृत्तिसत्येन सर्वमेतत्प्रकल्प्यते ।
ज्ञानमात्रेपि तस्माद्वो वृथाग्रहोर्थकल्पने ॥ ५ ॥
संवृतेर्न्नु सत्यत्वं सत्यभेदः कुतो न्वयम् ।
सत्यं चेत्संवृतिः केयं मृषा चेत्सत्यता कथम् ॥ ६ ॥
सत्यत्वं न च सामान्यं मृषार्थपरमार्थयोः ।
विरोधान्न हि वृक्षत्वं सामान्यं वृक्षसिंहयोः ॥ ७ ॥
तुल्यार्थत्वेपि तेनैषां मिथ्यासंवृत्तिशब्दयोः ।
वञ्चनार्थ उपन्यासो बालावक्त्रासवादिवत् ॥ ८ ॥
नास्तिक्यपरिहारार्थं संवृत्तिः कल्पनेति च ।
कल्पनापि त्वभिन्नस्य नैव निर्वस्तुके भवेत् ॥ ९ ॥
तस्माद्यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः ।
तत्सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना ॥ १० ॥

स्वप्नादिभोगवच्चापि योपभोगत्वकल्पना ।
तन्निवृत्त्यर्थमेवेह परमार्थे प्रयत्यते ॥ ११ ॥
न हि स्वप्नसुखाद्यर्थं धर्मे कश्चित्प्रवर्तते ।
यादृच्छिकत्वात्स्वप्नस्य तूष्णीमास्येत पण्डितैः ॥ १२ ॥
परमार्थफलावाप्तिमिच्छद्भिस्तेन यत्नतः ।
प्रतिपत्तिर्विधातव्या युक्तिभिर्बाह्यवस्तुषु ॥ १३ ॥
तत्रार्थशून्यं विज्ञानं योगाचाराः समाश्रिताः ।
तस्याप्येवममिच्छन्ति ये माध्यमिकवादिनः ॥ १४ ॥
तत्तद्ग्राह्यार्थशून्यत्वं तुल्यं तावद्द्वयोरपि ।
निवर्त्याथ ततो ज्ञाने तद्वत्संवृतिकल्पना ॥ १५ ॥
तस्मात्साधारणत्वेन तन्मूलत्वेन चाप्ययम् ।
बाह्यार्थसदसद्भावे यत्नो भष्यकृता कृतः ॥ १६ ॥
बाह्यार्थापह्नवे ऽद्वैतमेकार्थस्य परीक्षणात् ।
प्रमाणमाश्रितश्चैकस्तत्रास्तां यः प्रमेयतः ॥ १७ ॥
प्रमाणस्थस्तु मूलत्वादिहेदानीं परीक्ष्यते ।
प्रस्तुतः स द्विधा चात्र प्रथमं त्वनुमानतः ॥ १८ ॥
प्रत्यक्षबाधने चोक्ते पश्चात्तच्छलयवेक्षणात् ।
तत्रानुमानमाहेदं न त्वित्यस्य च संगतिः ॥ १९ ॥
तत्संप्रयोगजं नाम प्रत्यक्षमिति भाषितम् ।
तत्रेन्द्रियार्थसंबन्धभेदो न परमार्थतः ॥ २० ॥
कल्पितः संप्रयोगस्तु स्वप्नादावपि विद्यते ।
तदतद्योगजन्यस्य विभागस्तेन दुर्लभः ॥ २१ ॥
मिथ्यात्वं यद् द्विधैवोक्तं नान्यथेत्यत्र चोच्यते ।
सर्वस्यैव च मिथ्यात्वे किं विशिष्याभिधीयते ॥ २२ ॥

स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात्तथा हि यः।
प्रत्ययः स मृषा दृष्टः स्वप्नादिप्रत्ययो यथा ॥ २३ ॥
सिद्धसाधनभावांशे दृष्टान्ताभाव एव च।
मा भूतामेवशब्दश्च व्यर्थोऽशेषप्रसाधने ॥ २४ ॥
सर्व एवेति तेनात्र जाग्रद्बुद्धिपरिग्रहः।
स्वांशाभ्युपगमाच्चापि बाह्यग्राह्यनिवारणम् ॥ २५ ॥
प्रत्ययस्येति साध्यांशव्याप्तहेतुनिदर्शनम्।
हेतुश्चोपनयेनात्र जाग्रतोपीति दर्शितः ॥ २६ ॥
विपक्षाभावतश्चात्र व्यतिरेको न कथ्यते।
सामान्यस्य च हेतुत्वान्नस्यात्पक्षैकदेशता ॥ २७ ॥
जाग्रद्भावे विशेषोयं यतः सुपरिनिश्चयः।
बाह्यालम्बनसंबन्धो न प्रसिद्धः परं प्रति ॥ २८ ॥
तस्माद्यद्भाष्यकारेण दत्तमुत्तरमत्र तु।
विकल्पसमता वा स्याद्वैधर्म्यसमतापि वा ॥ २९ ॥
दुष्टत्वात्पूर्वपक्षस्य जात्युक्तिः कैश्चिदाश्रिता।
प्रतिज्ञादोषमेवाहुः केचित्प्रत्यक्षबाधनम् ॥ ३० ॥
शक्यामो यदि विस्पष्टं स्वांशग्राह्यनिवारणम्।
तदा ते शुद्ध एव स्यात्पक्षो ग्राह्यनिवारणः ॥ ३१ ॥
प्रत्यक्षादेश्च विषयो बाह्य एवावतिष्ठते।
तन्निषेधकृतस्तस्य तैर्भवेत्पक्षबाधनम् ॥ ३२ ॥
सुनिश्चयेन चैतेषां बाधकप्रत्ययादृते।
प्रमाणाभासता नास्तीत्येतस्मात्कथ्यते बलम् ॥ ३३ ॥
दृष्टज्ञानगृहीतार्थप्रतिषेधो हि युज्यते।
गृहीतमात्रबाधे तु स्वपक्षोपि न सिध्यति ॥ ३४ ॥

अग्राह्यत्वाच्च भेदेन विशेषणविशेष्ययोः ।
अप्रसिद्धोभयत्वं वा वाच्यमन्यतरस्य वा ॥ ३५ ॥
वक्तृश्रोत्रोश्च यज्ज्ञानं विशेषणविशेष्ययोः ।
तन्निरालम्बनत्वेन स्ववाग्बाधो द्वयोरपि ॥ ३६ ॥
संभवो न च भेदस्य विशेषणविशेष्ययोः ।
तस्मान्निरूपणं नास्ति प्रतिज्ञार्थस्य शोभनम् ॥ ३७ ॥
निरालम्बनता नाम न किंचिद्वस्तु गम्यते ।
तेन तद्व्यतिरेकादौ प्रश्नो नैवोपपद्यते ॥ ३८ ॥
यद्यवस्तु कथं त्वस्मांस्त्वं बोधयितुमिच्छसि ।
बुध्यते वा स्वबुद्ध्या त्वं कल्पिता त्वप्यसाध्यता ॥ ३९ ॥
असतः कल्पना कीदृक् कॢप्ता वस्तु प्रसज्यते ।
कथमिष्टमभावे चेद्वस्तु सोपीति वक्ष्यते ॥ ४० ॥
तथा प्रत्यय इत्येष कर्म भावादि वा भवेत् ।
भावादिषु विरोधः स्यात्कर्म चेत्सिद्धसाधनम् ॥ ४१ ॥
प्रत्याय्यस्य हि रूपादेर्निरालम्बनतेष्यते ।
अविज्ञानात्मकत्वेन किं चिन्नालम्बते ह्यसौ ॥ ४२ ॥
कर्तृत्वे करणत्वे वा पक्षत्वं शब्दयोरपि ।
तन्निराम्बनत्वेन पक्षाभावः प्रसज्यते ॥ ४३ ॥
प्रत्याय्येन च भिन्नेन विना कर्त्राद्यसंभवः ।
प्रत्यये तन्निमित्ते वा बाधः स्ववचनेन ते ॥ ४४ ॥
अथापि रूढिरूपेण प्रत्ययः स्यात्तथापि तु ।
ग्राहकं वस्तु सिद्धं नो व्यत्ययो ऽन्यस्य वस्तुनः ॥ ४५ ॥
तमभ्युपेत्यपक्षश्चेदभ्युपेतं विरुद्ध्यते ।
विशेष्यस्याप्रसिद्धिश्च तवास्माकमतादृशे ॥ ४६ ॥

आत्मधर्मस्वतन्त्रत्वकल्पनेपि तथा भवेत् ।
न च प्रत्ययमात्रत्वं किं चिदस्त्यनिरूपणात् ॥ ४७ ॥
शब्दार्थमात्ररूपेण यथान्येषां निरूपणम् ।
तथा च भवतो न स्याद्ग्राह्यभेदमनिच्छतः ॥ ४८ ॥
निरालम्बनता चापि सर्वथा यदि साध्यते ।
विशेषणाप्रसिद्धिश्च दृष्टान्तश्च न विद्यते ॥ ४९ ॥
केन चिच्चेत्प्रकारेण निरालम्बनतोच्यते ।
रसज्ञानस्य रूपादिशून्यत्वात्सिद्धसाधनम् ॥ ५० ॥
अथ बुद्धिर्यदाकारा तदालम्बनवारणम् ।
स्वाकारस्याभ्युपेतत्वात्तदभावो विरुध्यते ॥ ५१ ॥
बाह्यानालम्बनत्वेपि बाह्य इत्याग्रहो यदि ।
स्तम्भादौ नैव तद्बुद्धिरित्येवं सिद्धसाधनम् ॥ ५२ ॥
अथ स्तम्भादिरूपेण निरालम्बनतोच्यते ।
संवेदनस्य दृष्टत्वात्तद्विरोधः प्रसज्यते ॥ ५३ ॥
द्विचन्द्रादिषु तुल्यश्चेन्नेन्द्रियाप्राप्तितो हि नः ।
तत्रानालम्बनोक्तिः स्यान्नार्थसंवित्त्यभावतः ॥ ५४ ॥
सर्वत्रार्थेन्द्रियाणान्तः संयोगसदसत्तया ।
संवित्तौ विद्यमानायां सदसद्ग्राह्यनास्थितिः ॥ ५५ ॥
भवतस्त्विन्द्रियादीनामभावाद्ग्रहणादृते ।
नालम्बनत्वहेतुः स्यान्निषेधोतो न युज्यते ॥ ५६ ॥
बहिर्भावाप्रसिद्धत्वात्तेनानालम्बना मतिः ।
कथं चित्साध्यते नैष पक्षो हि ज्ञायते तदा ॥ ५७ ॥
यथान्यबोधनाशक्तेर्नाप्रसिद्धे विशेषणे ।
पक्षसिद्धिस्तथैवेह स्याद्विशेष्यविशेषणे ॥ ५८ ॥

नाप्रसिद्धे पदार्थे हि वाक्यार्थः संप्रतीयते ।
तत्पूर्वकत्वात्पन्नश्च वाक्यार्थः स्थापयिष्यते ॥ ५९ ॥
पर्युदासे निषेधे वा व्यतिरिक्तास्य वस्तुनः ।
प्रमेयत्वाद्यभेदेन जगतः सिद्धसाधनम् ॥ ६० ॥
यदि चात्यन्तभेदेन निरालम्बमतोच्यते ।
कथं चित्रेद्विरुध्येत प्राक्पक्षः कल्पितेन ते ॥ ६१ ॥
वस्त्वाद्याकारतश्चापि धीर्निरालम्बनेष्यते ।
ग्राहकाच्चेदभिन्नत्वं शक्तिभेदो विरुध्यते ॥ ६२ ॥
निरालम्बनबुद्धिश्च यद्युत्पत्तिः प्रसाध्यते ।
दृष्टत्वात्सेष्यतेस्माभिर्बाह्यग्राह्यविवर्जिता ॥ ६३ ॥
सम्यक्त्वं पुनरेतस्यास्त्वन्नेच्छसि कथं चन ।
आत्मांशेवसिता ह्येषा मृगतृष्णादिबुद्धिवत् ॥ ६४ ॥
चैत्रादिप्रत्ययानां च निरालम्बनता यदि ।
धर्मभूता न गृह्येत साधनोत्थितया धिया ॥ ६५ ॥
ततो विषयनानात्वात् प्रतियोग्यनिराकृता ।
रूपात्सालम्बनप्राप्तिः सती केन निवार्यते ॥ ६६ ॥
यदि प्रत्ययशब्दोपि प्रत्ययत्वेन गृह्यते ।
संवित्त्यालम्बनत्वेन वार्यते सिद्धसाधनम् ॥ ६७ ॥
बुद्ध्युत्पादनशक्तिश्चेद्वार्या साध्यं न सिध्यति ।
साधनस्य प्रयोगेच बोधकत्वाद्विना न ते ॥ ६८ ॥
न चाभिधास्त्यसंबन्धादृते भेदाच्च नास्त्यसौ ।
न चासौ तद्गतं भेदं बोधयन्त्या धिया विना ॥ ६९ ॥
प्राश्निकैर्नागृहीते च वाक्ये स्यावयवे पृथक् ।
पक्षे हेतौ च दृष्टान्ते वादिनि प्रतिवादिनि ॥ ७० ॥

साधनस्याप्रयोगः स्यादभ्युपेत्योच्यते यदि ।
पूर्वाभ्युपगमेनैव प्रतिज्ञा साध्यते ततः ॥ ७१ ॥
धर्माधर्मादिभेदे च नासिद्धे परमार्थतः ।
शिष्यात्मनोश्च धर्मादेरुपदेशो ऽवकल्प्यते ॥ ७२ ॥
तदनुष्ठानतो बुद्धेरिष्टो भेदः स्फुटं च तैः ।
सूत्रान्तरेभ्युपेतत्वाद्वेदागमबाधनम् ॥ ७३ ॥
सर्वलोकप्रसिद्ध्या च पक्षबाधो ऽत्र ते ध्रुवम् ।
कृत्स्नसाधनबुद्धिश्च यदि मिथ्येष्यते ततः ॥ ७४ ॥
सर्वाभावो यथेष्टं वा न्यूनता वाभिधीयते ।
तेषां सालम्बनत्वे वा तैरनैकान्तिको भवेत् ॥ ७५ ॥
तदन्यस्य प्रतिज्ञा चेत्तदन्यप्रत्ययो मृषा ।
तन्मिथ्यात्वप्रसंगे च सर्वं पूर्वं न सिध्यति ॥ ७६ ॥
स्तम्भादिसाधनज्ञानभेदो न हि यथा भवेत् ।
यावद्यावत्प्रतिज्ञेयं तदन्यस्य प्रणीयते ॥ ७७ ॥
तावत्तावत्परेषां स्यान्मिथ्यात्वादन्यबाधनम् ।
विरुद्धाव्यभिचारित्वं बाधो वाप्यनुमानतः ॥ ७८ ॥
इत्थं सर्वेषु पक्षेषु वक्तव्यं प्रतिसाधनम् ।
बाह्यार्थालम्बना बुद्धिरिति सम्यक्त्वधीरयम् ॥ ७९ ॥
बाधकापेतबुद्धित्वाद्यथा स्वप्नादिबाधधीः ।
सापि मिथ्येति चेद्ब्रूयात्स्वप्नादीनामबाधनात् ॥ ८० ॥
तस्मात्साधर्म्यदृष्टान्तो भवतः साधने ऽधुना ।
विज्ञानास्तित्वभिन्नत्वक्षणिकत्वादिधीस्तथा ॥ ८१ ॥
सम्यक् चेदभ्युपेयेत तथा नैकान्तिको भवेत् ।
तन्मिथ्याभ्युपपत्तौ च पक्षबाधः प्रसज्यते ॥ ८२ ॥

नाप्रसिद्धे पदार्थे हि वाक्यार्थः संप्रतीयते ।
तत्पूर्वकत्वात्पक्षश्च वाक्यार्थः स्थापयिष्यते ॥ ५९ ॥
पर्युदासे निषेधे वा व्यतिरिक्तस्य वस्तुनः ।
प्रमेयत्वाद्यभेदेन जगतः सिद्धसाधनम् ॥ ६० ॥
यदि चात्यन्तभेदेन निरालम्बनतोच्यते ।
कथं चिच्चेद्विरुध्येत प्राक्पक्षः कल्पितेन ते ॥ ६१ ॥
वस्त्वाद्याकारतश्चापि धीर्निरालम्बनेष्यते ।
ग्राहकाच्चेदभिन्नत्वं शक्तिभेदो विरुध्यते ॥ ६२ ॥
निरालम्बनबुद्धेश्च यद्युत्पत्तिः प्रसाध्यते ।
दृष्टत्वात्सेष्यतेस्माभिर्बाह्यग्राह्यविवर्जिता ॥ ६३ ॥
सम्यक्त्वं पुनरेतस्यास्त्वन्नेच्छसि कथं चन ।
आत्मांशेवसिता ह्येषा मृगतृष्णादिबुद्धिवत् ॥ ६४ ॥
चैत्रादिप्रत्ययानां च निरालम्बनता यदि ।
धर्मभूता न गृह्येत साधनेत्थितया धिया ॥ ६५ ॥
ततो विषयनानात्वात् प्रतियोग्यनिराकृता ।
स्वरूपात्सालम्बनप्राप्तिः सती केन निवार्यते ॥ ६६ ॥
यदि प्रत्ययशब्दोपि प्रत्ययत्वेन गृह्यते ।
संवित्त्यालम्बनत्वेन वार्यते सिद्धसाधनम् ॥ ६७ ॥
बुद्ध्युत्पादनशक्तिश्चेद्वार्या साध्यं न सिध्यति ।
साधनस्य प्रयोगोच बोधकत्वाद्विना न ते ॥ ६८ ॥
न चाभिधास्त्यसंबन्धादृते भेदाच्च नास्त्यसौ ।
न चासौ तद्गतं भेदं बोधयन्त्या धिया विना ॥ ६९ ॥
प्राश्निकैर्नागृहीते च वाक्ये स्यावयवे पृथक् ।
पक्षे हेतौ च दृष्टान्ते वादिनि प्रतिवादिनि ॥ ७० ॥

साधनस्याप्रयोगः स्यादभ्युपेत्योच्यते यदि ।
पूर्वाभ्युपगमेनैव प्रतिज्ञा साध्यते ततः ॥ ७१ ॥
धर्माधर्मादिभेदे च नासिद्धे परमार्थतः ।
शिष्यात्मनोश्चधर्मादेरुपदेशो ऽवकल्प्यते ॥ ७२ ॥
तदनुष्ठानतो बुद्धेरिष्टो भेदः स्फुटं च तैः ।
सूत्रान्तरैभ्युपेतत्वाद्वेदागमबाधनम् ॥ ७३ ॥
सर्वलोकप्रसिद्ध्या च पक्षबाधो ऽत्र ते ध्रुवम् ।
कृत्स्नसाधनबुद्धिश्च यदि मिथ्येष्यते ततः ॥ ७४ ॥
सर्वाभावो यथेष्टं वा न्यूनता वाभिधीयते ।
तेषां सालम्बनत्वे वा तैरनैकान्तिको भवेत् ॥ ७५ ॥
तदन्यस्य प्रतिज्ञा चेत्तदन्यप्रत्ययो मृषा ।
तन्मिथ्यात्वप्रसंगे च सर्वं पूर्वं न सिध्यति ॥ ७६ ॥
स्तम्भादिसाधनज्ञानभेदो न हि यथा भवेत् ।
यावद्यावत्प्रतिज्ञेयं तदन्यस्य प्रणीयते ॥ ७७ ॥
तावत्तावत्परेषां स्यान्मिथ्यात्वादन्यबाधनम् ।
विरुद्धाव्यभिचारित्वं बाधो वाप्यनुमानतः ॥ ७८ ॥
इत्थं सर्वेषु पक्षेषु वक्तव्यं प्रतिसाधनम् ।
बाह्यार्थालम्बना बुद्धिरिति सम्यक्त्वधीरयम् ॥ ७९ ॥
बाधकापेतबुद्धित्वाद्यथा स्वप्नादिबाधधीः ।
सापि मिथ्येति चेद्ब्रूयात्स्वप्नादीनामबाधनात् ॥ ८० ॥
तस्मात्साधर्म्यदृष्टान्तो भवतः साधने ऽधुना ।
विज्ञानास्तित्वभिन्नत्वक्षणिकत्वादिधीस्तथा ॥ ८१ ॥
सम्यक् चेदभ्युपेयेत तथा नैकान्तिको भवेत् ।
तन्मिथ्याभ्युपपत्तौ च पक्षबाधः प्रसज्यते ॥ ८२ ॥

नाप्रसिद्धे पदार्थे हि वाक्यार्थः संप्रतीयते ।
तत्पूर्वकत्वात्पक्षश्च वाक्यार्थः स्थापयिष्यते ॥ ५९ ॥
पर्युदासे निषेधे वा व्यतिरिक्तस्य वस्तुनः ।
प्रमेयत्वाद्यभेदेन जगतः सिद्धसाधनम् ॥ ६० ॥
यदि चात्यन्तभेदेन निरालम्बनतोच्यते ।
कथं चिद्वृत्तिरुध्येत प्राक्पक्षः कल्पितेन ते ॥ ६१ ॥
वस्त्वाद्याकारतश्चापि धीर्निरालम्बनेष्यते ।
ग्राहकाच्चेदभिन्नत्वं शक्तिभेदो विरुध्यते ॥ ६२ ॥
निरालम्बनबुद्धेश्च यद्युत्पत्तिः प्रसाध्यते ।
दृष्टत्वात्सेष्यतेऽस्याभिर्बाह्यग्राह्यविवर्जिता ॥ ६३ ॥
सम्यक्त्वं पुनरेतस्यास्त्वन्नेच्छसि कथं चन ।
आत्मांशेवसिता ह्येषा मृगतृष्णादिबुद्धिवत् ॥ ६४ ॥
चैत्रादिप्रत्ययानां च निरालम्बनता यदि ।
धर्मभूता न गृह्येत साधनेत्थितया धिया ॥ ६५ ॥
ततो विषयनानात्वात् प्रतियोग्यनिराकृता ।
रूपात्सालम्बनप्राप्तिः सती केन निवार्यते ॥ ६६ ॥
यदि प्रत्ययशब्दोऽपि प्रत्ययत्वेन गृह्यते ।
संवित्त्यालम्बनत्वेन वार्यते सिद्धसाधनम् ॥ ६७ ॥
बुद्ध्युत्पादनशक्तिश्चेद्वार्या साध्यं न सिध्यति ।
साधनस्य प्रयोगोऽथ बोधकत्वाद्विना न ते ॥ ६८ ॥
न चाभिधास्त्यसंबन्धादृते भेदाच्च नास्त्यसौ ।
न चासौ तद्गतं भेदं बोधयन्त्या धिया विना ॥ ६९ ॥
प्राश्निकैर्नागृहीते च वाक्ये स्यादवयवे पृथक् ।
पक्षे हेतौ च दृष्टान्ते वादिनि प्रतिवादिनि ॥ ७० ॥

साधनस्याप्रयोगः स्यादभ्युपेत्योच्यते यदि।
पूर्वाभ्युपगमेनैव प्रतिज्ञा साध्यते ततः॥ ७१॥
धर्माधर्मादिभेदे च नासिद्धे परमार्थतः।
शिष्यात्मनोश्च धर्मादेरुपदेशो ऽवकल्प्यते॥ ७२॥
तदनुष्ठानतो बुद्धेरिष्टो भेदः स्फुटं च तैः।
सूत्रान्तरैभ्युपेतत्वाद्वेदागमबाधनम्॥ ७३॥
सर्वलोकप्रसिद्ध्या च पक्षबाधो ऽत्र ते ध्रुवम्।
कृत्स्नसाधनबुद्धिश्च यदि मिथ्येष्यते ततः॥ ७४॥
सर्वाभावो यथेष्टं वा न्यूनता वाभिधीयते।
तेषां सालम्बनत्वे वा तैरनैकान्तिको भवेत्॥ ७५॥
तदन्यस्य प्रतिज्ञा चेत्तदन्यप्रत्ययो मृषा।
तन्मिथ्यात्वप्रसंगे च सर्वं पूर्वं न सिध्यति॥ ७६॥
स्तम्भादिसाधनज्ञानभेदो न हि यथा भवेत्।
यावद्यावत्प्रतिज्ञेयं तदन्यस्य प्रणीयते॥ ७७॥
तावत्तावत्परेषां स्यान्मिथ्यात्वादन्यबाधनम्।
विरुद्धाव्यभिचारित्वं बाधो वाप्यनुमानतः॥ ७८॥
इत्थं सर्वेषु पक्षेषु वक्तव्यं प्रतिसाधनम्।
बाह्यार्थालम्बना बुद्धिरिति सम्यक्त्वधीरयम्॥ ७९॥
बाधकापेतबुद्धित्वाद्यथा स्वप्नादिबाधधीः।
सापि मिथ्येति चेद्ब्रूयात्स्वप्नादीनामबाधनात्॥ ८०॥
तस्मात्साधर्म्यदृष्टान्तो भवतः साधने ऽधुना।
विज्ञानास्तित्वभिन्नत्वक्षणिकत्वादिधीस्तथा॥ ८१॥
सम्यक् चेदभ्युपेयेत तथा नैकान्तिको भवेत्।
तन्मिथ्याभ्युपपत्तौ च पक्षबाधः प्रसज्यते॥ ८२॥

तथा च बद्धमुक्तादिव्यवस्था न प्रकल्पते ।
ततश्च मोक्षयत्नस्य वैकल्यं वः प्रसज्यते ॥ ८३ ॥
विकल्पोत्पद्यमाना च ज्ञानास्तित्वादिधीर्यदि ।
मृषेष्टा न च दृष्टान्त प्रमाणान्तरतो गतिः ॥ ८४ ॥
प्रमाणाभावतस्तेन ज्ञानास्तित्वादि दुर्लभम् ।
सर्वं चाप्यस्मदादीनां मिथ्याज्ञानं विकल्पनात् ॥ ८५ ॥
सान्निध्यविप्रकृष्टत्वे सत्त्वासत्त्वे च दुर्लभे ।
मिथ्याज्ञानविशेषेपि सांख्यादिपरिवर्जनात् ॥ ८६ ॥
बौद्धदर्शन एकस्मिन् पक्षपातो न युज्यते ।
मृषात्वं यदि बुद्धेः स्याद्बाधः किं नोपलभ्यते ॥ ८७ ॥
बाधाद्विनापि तच्चेत्स्याद्व्यवस्थान प्रकल्पते ।
प्रतियोगिनि दृष्टे च जाग्रज्ज्ञाने मृषा भवेत् ॥ ८८ ॥
स्वप्नादिबुद्धिरस्माकं तव भेदोपि किंकृतः ।
नचान्यत्प्रतियोग्यस्ति जाग्रज्ज्ञानस्य शोभनम् ॥ ८९ ॥
यद्दर्शनेन्व मिथ्यात्वं स्तम्भादिप्रत्ययो व्रजेत् ।
स्वप्नादिप्रतियोगित्वं सर्वलोकप्रसिद्धितः ॥ ९० ॥
तदीयधर्मवैधर्म्याद्बाधकप्रत्ययो यथा ।
योगिनां जायते बुद्धिर्बाधिका प्रतियोगिनी ॥ ९१ ॥
जाग्रत्स्तम्भादिबुद्धीनां ततः स्वप्नादितुल्यता ।
प्राप्तानां तामवस्थां च सर्वप्राणभृतामपि ॥ ९२ ॥
बाधेयं भविता तेन सिद्धा सप्रतियोगिता ।
इह जन्मनि केषां चिन्न तावदुपलभ्यते ॥ ९३ ॥
योग्यवस्थागतानां तु न विद्मः किं भविष्यति ।
योगिनां चास्मदीयानां त्वदुक्तप्रतियोगिनी ॥ ९४ ॥

त्वदुक्तिविपरीता वा बाधबुद्धिर्भविष्यति ।
ईदृक्के योगिबुद्धीनां दृष्टान्तो न तवास्ति च ॥ ९५ ॥
दृष्टान्तस्त्वस्मदादीनां यो गृहीतः स विद्यते ।
अथ स्तम्भादिबुद्धीनां वदेत्सप्रतियोगिता ॥ ९६ ॥
बाह्यत्वं चापि बुद्धित्वान्मृगतृष्णादिबुद्धिवत् ।
इष्टं सप्रतियोगित्वं मृगतृष्णादिबुद्धिभिः ॥ ९७ ॥
तदात्मना च बाध्यत्वं ग्राह्यान्तरतयापि च ।
बाधकैश्चाप्यनैकान्तस्तदन्यत्वे च पूर्ववत् ॥ ९८ ॥
मिथ्याधीप्रतियोगित्वं स्वप्नादाविव ते भवेत् ।
रागादिद्वययोगित्वनिमित्ताधिगतिस्तथा ॥ ९९ ॥
यावान्विशेष इष्टश्चेत्सर्वबाधाविरुद्धता ।
महाजनस्य वा बाधादिदानीं बाधबुद्धिवत् ॥ १०० ॥
वाच्योनुमानबाधो वा यदि वा प्रतिसाधनम् ।
पूर्वसाधनदोषाश्च संधेयास्तस्य चाधुना ॥ १०१ ॥
साध्याभेदादवाच्यत्वाद्धेतोर्नोभयसिद्धता ।
प्रत्ययत्वं च सामान्यं भिन्नाभिन्नं च विद्यते ॥ १०२ ॥
भवतोत्यन्तभिन्नं च मत्पक्षे तु कथं चन ।
सारूप्यान्यनिवृत्ती च नेत्येतत्साधयिष्यते ॥ १०३ ॥
तस्माद्धेतुर्न सामान्यमस्ति सिद्धं द्वयोरपि ।
विशेषयोश्च हेतुत्वं पक्षतत्तुल्यसंस्थयोः ॥ १०४ ॥
न स्यादन्वयहीनत्वादतद्धर्मतयापि च ।
न चार्थहीना तद्बुद्धिर्हेतुत्वेन भविष्यति ॥ १०५ ॥
आश्रयासिद्धिता चोक्ता विशेष्यस्याप्रसिद्धितः ।
तथाहेतोर्विरुद्धत्वं दृष्टान्ते साध्यहीनता ॥ १०६ ॥

विशेषणाप्रसिध्यर्थविकल्पेनैव बाध्यते ।
स्वप्नादिप्रत्यये बाह्यं सर्वथा न हि नेष्यते ॥ १०७ ॥
सर्वत्रालम्बनं बाह्यं देशकालान्यथात्मकम् ।
जन्मन्येकत्र भिन्ने वा तथा कालान्तरेऽपि वा ॥ १०८ ॥
तद्देशो वान्यदेशो वा स्वप्नज्ञानस्य गोचरः ।
अलातचक्रे ऽलातं स्याच्छीघ्रभ्रमणसंस्कृतम् ॥ १०९ ॥
गन्धर्वनगरेऽभ्राणि पूर्वज्ञातं गृहादि च ।
पूर्वानुभूततोयं च रश्मितप्तोखरं तथा ॥ ११० ॥
मृगतोयस्य विज्ञाने कारणत्वेन कल्प्यते ।
द्रव्यान्तरे विषाणं च शशस्यात्मा च कारणम् ॥ १११ ॥
शशशृङ्गधियो मौण्ड्यं निषेधे शिरसो ऽस्य च ।
वस्त्वन्तरैरसंसृष्टः पदार्थः शून्यताधियः ॥ ११२ ॥
कारणत्वं पदार्थानामसद्वाक्यार्थकल्पने ।
अत्यन्ताननुभूतोऽपि बुद्ध्या योऽर्थः प्रकल्प्यते ॥ ११३ ॥
तस्योत्पत्तौ कथं चित्स्युः पृथिव्यादीनि कारणम् ।
एष प्रत्यक्षधर्मश्च वर्तमानार्थतैव या ॥ ११४ ॥
संनिकृष्टार्थवृत्तिश्च न तु ज्ञानान्तरेष्वियम् ।
कथमुत्पादयेत् ज्ञानं तत्रासंश्चेत्कुतो न्वियम् ॥ ११५ ॥
अर्थस्याविद्यमानस्य विज्ञानोत्पत्त्यशक्तता ।
बाह्यालम्बनतायां नो विवादोऽर्थस्य संनिधिः ॥ ११६ ॥
यदि नास्ति किमेवं स्यादस्मत्पक्षनिवर्तनम् ।
तस्माद्यदन्यथासन्तमन्यथा प्रतिपद्यते ॥ ११७ ॥
तन्निरालम्बनं ज्ञानमभावालम्बनं च तत् ।
भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात् ॥ ११८ ॥

भवतां द्वयमप्येतद्दुर्निरूपं सहेतुकम् ।
प्रतिज्ञादोषवच्चापि योज्या हेतोर्विरुद्धता ॥ ११९ ॥
समस्तव्यस्तधर्मादिस्वस्वरूपाविपर्ययात् ।
दृष्टान्तदोषाः सर्वे च योज्या न ह्येकवस्तुनि ॥ १२० ॥
तव साध्यांशहेत्वंशव्याप्तधर्मादिसंभवः ।
के चिद्वैधर्म्यदृष्टान्तोनास्तीत्यप्यनुयुञ्जते ॥ १२१ ॥
तदभावादवृत्तेश्च नास्त्यत्रावसरस्तव ।
विधिरूपप्रतिज्ञायामेतद्वक्तुं हि शक्यते ॥ १२२ ॥
तत्रावस्तुविपक्षेपि प्रयोगस्य हि संभवः ।
यस्मिन्ननित्यता नास्ति कार्यतापि न विद्यते ॥ १२३ ॥
तस्मिन्यथा खपुष्पादाविति शक्यं हि भाषितुम् ।
अत्र त्ववस्तुसाध्यत्वाद्वस्तुनश्च विपक्षता ॥ १२४ ॥
तेन स्याद्व्यतिरेकोस्य वाच्यो यश्चापि दर्शयेत् ।
प्रतिषेधद्वयात्तेन विधिरेव प्रदर्शितः ॥ १२५ ॥
न च शक्यो विधिर्वक्तुं वस्तुन्यसति केन चित् ।
एवं स्थिते च सर्वज्ञनिषेधादावियं गतिः ॥ १२६ ॥
प्रत्यक्षादेरसामर्थ्यं तदीयस्यास्मदादिवत् ।
वैधर्म्यासंभवेप्येतदन्ये त्वाहुर्दूषणम् ॥ १२७ ॥
विनैव तत्प्रयोगेण हेतुरैकान्तिको यतः ।
सर्वथा सदुपायानां वादसार्गः (१) प्रवर्तते ॥ १२८ ।
अधिकारेनुपायत्वान्न वादे शून्यवादिनः ।
ननु सर्वं भवेत्सिद्धं मयेदं साधनं कृतम् ॥ १२९ ॥

(१) वादमार्गः ।

किमर्थं तदसिद्ध्या त्वं विकल्पाथाप्यदूषणम् ।
विप्रलिप्सुरिवाहैवं किमर्थंन्यायविद्वान् ॥ १३० ॥
नाश्रौषीः साधनत्वं किं प्रसिद्धस्य द्वयोरपि ।
योपि तावत्परासिद्धः स्वयंसिद्धोऽभिधीयते ॥ १३१ ॥
भवेत्तच प्रतीकारः स्वतोसिद्धे तु वा क्रिया ।
तं साधयन्विरुन्ध्याद्धि पूर्वाभ्युपगतं नरः ॥ १३२ ॥
असाधिते तु साध्यार्थो न तेन प्रतिपद्यते ।
परासिद्धो न पर्याप्तः परेषां प्रतिपत्तये ॥ १३३ ॥
तेनासाधनतायुक्ता स्वतो ऽसिद्धे तु किंकृता ।
द्वयोः सिद्धस्य हेतुत्वं नादृष्ट्योपदिश्यते ॥ १३४ ॥
वदेत्कथमसिद्धं चेदित्यनेनापि किं तव ।
गृहीतमगृहीतं वा साध्यं वा साधनापि वा ॥ १३५ ॥
मयोच्यते चेत्त्वत्सिद्धं किं त्वं न प्रतिपद्यसे ।
अथ स्यात्पुरुषाधीना बुद्धिस्तत्रेदमुच्यते ॥ १३६ ॥
कुतोस्य पूर्वविज्ञानमित्यचैतन्न युज्यते ।
यदि चैवं भवेदत्र प्रतिज्ञामात्र एव हि ॥ १३७ ॥
मद्दोषाज्ञानमात्रेण प्रतिपत्तिर्भवेत्तव ।
यतस्तु साधनापेक्षा तेनास्यैव प्रमाणता ॥ १३८ ॥
तत्स्मृत्युत्पत्तिमात्रे तु वाक्यव्यापार इष्यते ।
तस्माद्यथैव साध्यांशव्याप्तहेतुनिदर्शनात् ॥ १३९ ॥
साध्यं गृह्णन्नवक्तारमपेक्षेत तथा भवान् ।
यच्चापि भवतो ज्ञानं प्रत्यक्षादिः किमत्र ते ॥ १४० ॥
मत्प्रसिद्धास्ति युक्तिर्वा साध्यं वात्र यथेच्छसि ।
तस्मान्न विदुषामेतदुत्तरं युज्यते यतः ॥ १४१ ॥

तव हेतुरसिद्धोयं मम तेन न साधनम् ।
सत्यं यदि ममैवात्र प्रतिपत्तिः फलं भवेत् ॥ १४२ ॥
तदा त्वदप्रसिद्धेपि हेतौ मां प्रति हेतुता ।
यदा तु ज्ञानमात्रत्वप्रतिपत्तौ भवान्मया ॥ १४३ ॥
पृष्टः को हेतुरत्रेति तदैवं नोपपद्यते ।
स्वयं नह्यगृहीतेन मत्प्रसिद्धेन वा भवान् ॥ १४४ ॥
हेतुना साध्यमेतत्तु प्रतिपन्नः कथं चन ।
न च व्याप्रियतेन्यत्र वचनं प्राश्निकान्प्रति ॥ १४५ ॥
स्वनिश्चयाय यो हेतुस्तस्यैव प्रतिपादनात् ।
मत्प्रसिद्धत्वमेतस्य कुतश्चावगतं त्वया ॥ १४६ ॥
कथं चेत्कं विवक्षा ते स्वयमर्थमजानतः ।
मयि जिज्ञासमानेपि बुद्धिपूर्वाभिधायिनः ॥ १४७ ॥
इति ज्ञात्वा च वो वृद्धैर्भाषितो भयसिद्धता ।
तेन यद्वन्ममैतेन त्वमाधित्ससि हेतुना ॥ १४८ ॥
साध्यज्ञानं तथैवाहमज्ञानं तव दूषणैः ।
यथैव च भवानीदृक् साध्यमुक्तास्य साधनम् ॥ १४९ ॥
साध्यानुरूपमज्ञात्वा विहितः प्रतिपादनात् ।
तथैव प्रतिपाद्योपि तादृक्साध्यबुभुत्सया ॥ १५० ॥
मन्वानः साधनं दुष्टं ततः साध्यं न बुध्यते ।
संवित्त्या साधनं मत्वा तत्सद्भावे दृढे स्थिते ॥ १५१ ॥
साध्यस्यासंभवादेव त्वदुक्तं नावबुध्यते ।
तेनाशेयं न कर्तव्या मोहादपि मयेरिते ॥ १५२ ॥
साधने साधनं ज्ञात्वा पर एवावभोत्स्यते ।
विस्पष्टश्चाक्षपादोक्तो विरोधो हेतु साध्ययोः ॥ १५३ ॥

यमदृष्ट्वा परैरुक्तमदूषणमिदं किल ।
ननु लोकप्रसिद्धेन पूर्वमेतेन हेतुना ॥ १५४ ॥
साध्यसिद्धिर्ममाप्यासीत्परमार्थस्य नास्तिता ।
योऽधुना परमार्थेन नास्तीत्येवं प्रकाशते ॥ १५५ ॥
कथं पूर्वमसावासीदसंश्चेत्साधनं कथम् ।
साधनं चेदवश्यं च परमार्थास्तिता भवेत् ॥ १५६ ॥
सिद्धिना परमार्थेन परमार्थस्य युज्यते ।
न दृष्टा शशशृङ्गादेः सम्यक् ज्ञानादिहेतुता ॥ १५७ ॥
बाष्पादिनाप्यधूमेन मिथ्यावन्ह्यादिबोधनम् ।
तस्मादसत्यहेतोर्या परमार्थे मतिस्तव ॥ १५८ ॥
साप्यसत्या न सत्यं हि सत्याभासेन गम्यते ।
येपि रेखादयो दृष्टा वर्णानां प्रतिपादकाः ॥ १५९ ॥
न ते स्वेनापि रूपेण परमार्थत्ववर्जिताः ।
वर्णात्मना न सत्याश्चेत्सर्वभावेष्वयं विधिः ॥ १६० ॥
पदार्थान्तररूपेण न सत्यं किं चिदिष्यते ।
स्वरूपे विद्यमाने तु यदप्येवं प्रकाशते ॥ १६१ ॥
स्वरूपाभावक्लृप्तौ तु न सत्यं नाप्यसत्यता ।
हेत्वादीनां तु भवतः स्वरूपेणाप्यसत्यता ॥ १६२ ॥
तेन बाष्पादिवत्तेषामुपायत्वं न लेख्यवत् ।
उपायानां स्वरूपं हि संवृत्यात्मकमेव नः ॥ १६३ ॥
तथा च सत्त्यतेष्टैव स्वरूपासत्यता कथम् ।
संवृत्त्या यत्स्वरूपं हि तद्वाङ्मात्रनिबन्धनम् ॥ १६४ ॥
हेतुत्वं परमार्थस्य प्रतिपत्तुं न शिक्नुयात् ।
परमार्थाच्च लोकस्य न भेदे हेतुरस्ति ते ॥ १६५ ॥

लौकिकोपायगम्यस्य केन स्यात्परमार्थता ।
नन्वसत्यपि बाह्येऽर्थे बुद्ध्यारूढे न सिध्यति ॥ १६६ ॥
वासनाशब्दभेदाच्च विकल्पप्रविभागतः ।
न्यायविद्भिरिदं चोक्तं धर्मादौ बुद्धिमाश्रिते ॥ १६७ ॥
व्यवहारोऽनुमानादेः कल्प्यते न बहिःस्थिते ।
अस्तीदं वचनं तेषामिदं तत्र परीक्ष्यताम् ॥ १६८ ॥
भेदोऽसतः कथं हि स्याद्बुद्धिशब्दप्रकल्पनात् ।
निर्वस्तुके कथं चित्स्याद्विभागो बुद्धिशब्दयोः ॥ १६९ ॥
शब्दभेदोऽपि भवतस्तदभावान्न सिध्यति ।
यदि वा विद्यमानोऽपि भेदो बुद्धिप्रकल्पितः ॥ १७० ॥
साध्यसाधनधर्मादेर्व्यवहाराय कल्पते ।
ततो भवत्प्रयुक्तेऽस्मिन्साधने यावदुच्यते ॥ १७१ ॥
सर्वत्रोत्पद्यते बुद्धिरिति दूषणता भवेत् ।
यश्च मन्त्रस्त्वयोक्तोऽयं धर्म्यादौ बुद्धिमाश्रिते ॥ १७२ ॥
न बाह्यापेक्षया सः स्यादसिद्ध्यादौ मयेरिते ।
बुद्धिप्रक्लृप्तिसिद्धिश्च भवतां व्यवहारिणाम् ॥ १७३ ॥
मदुक्तं दूषणं सिद्धं त्वदुक्तं तु न साधनम् ।
बाह्यार्थव्यवहारित्वज्ञानोत्पादे स्थितेऽपि नः ॥ १७४ ॥
कथं चिन्नहि कल्प्येत व्यवहारोऽर्थवर्जितः ।
ननु यद्वन्मया हेतुर्नेष्यते दूषणं तथा ॥ १७५ ॥
तेन मे दूषणाभावाददुष्टं साधनं भवेत् ।
नेदानीं दूषणैः कार्यं साधना भावतो यदि ॥ १७६ ॥
त्वयैवास्मदभिप्रेता स्वपक्षासिद्धिराश्रिता ।
न चास्तिवासनाभेदो निमित्तासंभवात्तव ॥ १७७ ॥

ज्ञानभेदो निमित्तं चेत्तस्य भेदः कथं पुनः ।
वासनाभेदतश्चेत्स्यात्प्राप्तमन्योन्यसंश्रयम् ॥ १७८ ॥
स्वस्थस्य ज्ञानरूपस्य न हि भेदः स्वतोऽस्ति ते ।
प्रमाणां वा सनास्त्वित्वे भेदे चापि न विद्यते ॥ १७९ ॥
कुर्याद् ग्राहकभेदं सा ग्राह्यभेदस्तु किंकृतः ।
संवित्त्या जायमाना हि स्मृतिमात्रं करोत्यसौ ॥ १८० ॥
क्षणिकेषु च चित्तेषु विनाशे च निरन्वये ।
वास्यवासकयोश्चैवमसाहित्यान्नवासना ॥ १८१ ॥
पूर्वक्षणैरनुत्पन्नो वास्यते नोत्तरः क्षणः ।
उत्तरेण विनष्टत्वान्न च पूर्वस्य वासना ॥ १८२ ॥
साहित्येऽपि तयोर्नैव संबन्धोऽस्तीत्यवासना ।
क्षणिकत्वाद् द्वयस्यापि व्यापारो न परस्परम् ॥ १८३ ॥
विनश्यच्च कथं वस्तु वास्यतेऽन्येन नश्यता ।
अवस्थितादि वास्यन्ते भावाभावैरवस्थितैः ॥ १८४ ॥
अवस्थितो हि पूर्वस्माद्भिद्यते नोत्तरो यदि ।
पूर्ववद्वासना तत्र न स्यादेवाविशेषतः ॥ १८५ ॥
भङ्गुरे पूर्वसादृश्याद्भिन्नत्वान्नास्ति वासना ।
नैतदस्त्यनुरूपं तु क्षणिकत्वे धियां तव ॥ १८६ ॥
पूर्वज्ञानं त्वनुत्पन्नं कार्यं नारभते क्वचित् ।
न विनष्टं न तास्यास्ति निष्पन्नस्य क्षणं स्थितिः ॥ १८७ ॥
तेनोत्पन्नविनष्टत्वान्नास्त्यारम्भक्षणोऽपि हि ।
निरन्वयविशिष्टत्वादानुरूप्यं कुतः पुनः ॥ १८८ ॥
न तदीयोऽस्ति कश्चिच्च धर्म उत्तरबुद्धिषु ।
समानधर्मतां मुक्त्वा नानुरूप्यं च विद्यते ॥ १८९ ॥

यदि स्यादानुरूप्याच्च वासना गोधियो यदा।
हस्तिबुद्धिर्भवेत्तच वैलक्षण्यान्न वासना॥ १९०॥
ततः परं च गोज्ञानं निर्मूलत्वान्न संभवेत्।
सर्वं विलक्षणं ज्ञानं न स्यादेव विलक्षणात्॥ १९१॥
बाह्यार्थानुगमाभावात्पाराध्यैनात्मशीकृता।
निरन्वयविनाशिन्यः कुर्युः कार्यं कथं क्रमात्॥ १९२॥
विनाशे कारणस्येष्टः कार्यारम्भश्च नान्यथा।
तत्रैव ज्ञाननाशेन विनष्टाः सर्ववासनाः १९३॥
तेन सर्वाभ्य एताभ्यः सर्वाकारं समुच्छ्रितम्।
ज्ञानमेकक्षणेनैव विनाशं गन्तुमर्हति॥ १९४॥
यद्याश्रयविनाशेऽपि शक्त्यनाशोऽभ्युपेयते।
क्षणिकत्वं च हीयेत न चारम्भो ऽन्यथा भवेत्॥ १९५॥
वासनानां प्रवाहोऽपि यदि ज्ञानप्रवाहवत्।
वासनातस्ततो ज्ञानं न स्यात्तस्माच्च वासना॥ १९६॥
कुर्यातां तुल्यमेवैते नान्योन्यं तु कदाचन।
नान्यो विलक्षणो हेतुर्येनान्यादृक् फलं भवेत्॥ १९७॥
तस्मात्संवृत्तिसत्यैषा कल्पिता नास्ति तत्त्वतः।
न चेदृशेन भावेन कार्यमुत्पद्यते क्वचित्॥ १९८॥
यस्य त्ववस्थितो ज्ञाता ज्ञानाभ्यासेन युज्यते।
स तस्य वासनाधारो वासनापि स एव वा॥ १९९॥
कुसुमे बीजपूरादेर्यल्लाक्षाद्युपसिच्यते।
तद्रूपस्यैव संक्रान्तिः फले स्यादित्यवासना(१)॥ २००॥
युक्त्यानुपेतामसतीं प्रकल्प्य यद्वासनामर्थनिराक्रियेयम्।
आस्थानिवृत्त्यर्थमवादि बुद्धैर्ग्राहं गतास्तत्र कथं चिदन्ये॥ २०१॥

इतिनिरालम्बनवादः॥

(१) तस्येत्यवासना पा०।

एवमुक्तेनुमानस्य ज्ञानमाश्रित्य दूषणे ।
ज्ञानप्रवृत्त्यशक्त्या तु परः प्रत्यवतिष्ठते ॥ १ ॥
यत्तावन्मन्यमानेन प्रत्यक्षं भवतोच्यते ।
दूषणं तद्विरोधादि तदिदानीं परीक्ष्यताम् ॥ २ ॥
प्रवर्त्तितुं हि किं शक्तं स्तम्भाद्यर्थे बहिः स्थिते ।
अथ वात्मांशएवैतद्ग्राह्ये क्षीणं न वस्तुनि ॥ ३ ॥
तद्यद्येतेन बाह्योर्थो गृह्यते दूषणं ततः ।
त्वदुक्तं सर्वमात्मांशे ग्राह्ये तन्नोपपद्यते ॥ ४ ॥
तत्र तावदिदं सिद्धं सर्वप्राणभृतामपि ।
ग्राह्यत्वं नीलपीतादिदीर्घाद्याकारवस्तुनः ॥ ५ ॥
न चाप्याकारभेदेन ज्ञानज्ञेयावधारणा ।
न चान्यतरधर्मत्वं विस्पष्टं तत्र गृह्यते ॥ ६ ॥
गृह्यमाणस्य चास्तित्वं नाग्राह्यस्याप्रमाणकम् ।
तस्मादाकारवद्वस्तु ग्राह्यत्वाद्विद्यते ध्रुवम् ॥ ७ ॥
अतः परीक्ष्यमाणानां ज्ञानमाकारवद्यदि ।
तन्मात्रे च प्रमा क्षीणा ततो नास्त्यर्थकल्पना ॥ ८ ॥
यदि वाकारवत्तास्याद् बाह्यस्यैवेह वस्तुनः ।
तदस्तिगृह्यमाणत्वात्तत्सिद्धौवास्तिधीरपि ॥ ९ ॥
किं तावदत्र युक्तं स्याज्ज्ञानमाकारवत्कुतः ।
एकमाकारवद्वस्तु ग्राह्यमित्यधिगीष्महि ॥ १० ॥
तद्यथाकारवानर्थो बाह्यः कल्प्येत तस्य च ।
ग्राह्यत्वमन्यथा न स्यादिति ग्राहककल्पना ॥ ११ ॥

तेनाकारवतः क्लृप्ताद् ग्राह्यादाकारवर्जितम् ।
वस्त्वन्तरं प्रकल्प्यं स्याद् ग्राहकं निष्प्रमाणकम् ॥ १२ ॥
तस्याकल्पकमिच्छंश्चेदर्थे ग्राहकतां वदेः ।
संज्ञामात्रे विसंवादः सिद्धात्वेकार्थकल्पना ॥ १३ ॥
ग्राह्यग्राहकयोरैक्यं सर्वथा प्रतिपद्यते ।
बाह्याभ्यन्तररूपश्च परिकल्प्यो मृषेष्यते ॥ १४ ॥
मत्पक्षे यद्यपि स्वस्थो ज्ञानात्मा परमार्थतः ।
तथाप्यनादौ संसारे पूर्वज्ञानप्रसूतिभिः ॥ १५ ॥
चित्राभिश्चित्रहेतुत्वाद्वासनाभिरुपप्लवात् ।
स्वानुरूप्येण नीलादि ग्राह्यग्राहकदूषितम् ॥ १६ ॥
प्रविभक्तमिवोत्पन्नं नान्यमर्थमपेक्षते ।
अन्योन्यहेतुता चैव ज्ञानशक्त्योरनादिका ॥ १७ ॥
अनेन कल्पनायाश्च ज्यायसी ह्येककल्पना ।
शक्तिमात्रस्य भेदश्च वस्तुभेदाद्विशिष्यते ॥ १८ ॥
तस्मादुभयसिद्धत्वात् ज्ञानस्याकारकल्पना ।
ज्यायसी भवतस्त्वर्थे कल्पयित्वा भवेदियम् ॥ १९ ॥
तदसिद्धावशक्तत्वात्ते नेवं विप्रकृष्टता ।
प्रत्यासन्नं च संविद्धं ग्राह्यं मम भविष्यति ॥ २० ॥
इतश्चाकारवज्ज्ञानं यस्मात्तद्वत्प्रकाशकम् ।
स्वयं प्रकाशहीनस्य बाह्यस्योपासनं मतम् ॥ २१ ॥
नचागृहीते ज्ञानाख्ये प्रकाश्योऽर्थोऽवधार्यते ।
तदधीनप्रकाशत्वाद्दीपाभ्यासे यथा घटः ॥ २२ ॥
उत्पन्नेष्वपि चार्थेषु प्रकाशाभावनं क्वचित् ।
प्रतिबंधकयोगाद्वा संवित्तिर्नोपजायते ॥ २३ ॥

ज्ञानस्योत्पद्यमानस्य प्रतिबंधो न कश्चन ।
नचाप्रकाशरूपत्वं येनास्याग्रहणं भवेत् ॥ २४ ॥
प्राक्चार्थग्रहणादिष्टा तस्योत्पत्तिस्तदैव च ।
संवेदनं भवेदस्य नचेत्कालान्तरेऽपि न ॥ २५ ॥
किं हि तस्य भवेदूर्ध्वं प्राक्च नासीन्न येन तत् ।
पूर्वं गृहीतं पश्चाच्च गृहीतमिति भाष्यते ॥ २६ ॥
ज्ञानान्तरस्य चोत्पत्तिं प्रकाशो न प्रतीक्षते ।
तस्य तस्यापि चान्येन संवित्तावस्थितिर्भवेत् ॥ २७ ॥
ज्ञानपृष्ठेन योऽप्यूर्ध्वमर्थाभावेऽपि दृश्यते ।
परामर्शोऽर्थरूपस्य स कथं वोपपद्यते ॥ २८ ॥
तद्रूपमार्थमालिख्य यदि धीर्नोपजायते ।
भूतकाले च यद्यर्थस्तत्पूर्वं नोपलक्षितः ॥ २९ ॥
वक्तारश्चापि दृश्यंते वर्त्तमानार्थबुद्धिषु ।
नीलोऽर्थोऽयं यतो नैवतद्रूपा जायते मतिः ॥ ३० ॥
तस्मात्पूर्वगृहीतासु बुद्धिष्वर्थोपलम्भनम् ।
न चोपलब्धिरस्तीह निराकारासु बुद्धिषु ॥ ३१ ॥
विवेकबुद्ध्यभावाच्च साकारस्य च दर्शनात् ।
स्वाकारवत्तया बोध्ये ज्ञानस्यैव प्रसज्यते ॥ ३२ ॥
न ह्येव कल्पना शक्या निराकारादितो मतिः ।
गृह्यतेऽर्थस्ततः पश्चात्साकारः संप्रतीयते ॥ ३३ ॥
आकारवत्त्वभेदोऽच ज्ञात्वा शक्येत भाषितुम् ।
प्राग्बुद्धिग्रहणादर्थे संवित्तिर्नेति साधितम् ॥ ३४ ॥
न चार्थाकार एवायं ज्ञानारूढः प्रतीयते ।
न हि सोन्तः प्रवेशाय पर्याप्तोनार्थहानये ॥ ३५ ॥

इत्थंभावे प्रमाणं च तस्य वक्तुं न शक्यते ।
तदीयप्रतिबिम्बत्वमेतस्मादेव नेष्यते ॥ ३६ ॥
निश्चंद्रबिम्बरूपं हि दृष्टं येन दिवा जलम् ।
स रात्रौ खे च तं दृष्ट्वा जानाति प्रतिबिम्बताम् ॥ ३७ ॥
विज्ञानेन कदा चित्तु प्राग्निराकारदर्शनम् ।
बाह्ये वाकारवत्ताधीर्येनैवं कल्पना भवेत् ॥ ३८ ॥
शब्दगन्धरसानां च कीदृशी प्रतिबिम्बता ।
ज्ञाने च गृह्यमाणस्य कथं स्यादर्थधर्मता ॥ ३९ ॥
बाह्याभ्यन्तरदेशत्वान्न चार्थज्ञानयोर्मिथः ।
संपर्कोऽस्ति यतो मोहादविवेकमतिर्भवेत् ॥ ४० ॥
असंमूढस्य चादृष्टे न संमोहप्रकल्पना ।
कल्प्यमानेऽथ वाप्येवं न द्वयोरवतिष्ठते ॥ ४१ ॥
संसर्गधर्म आकारस्तस्मादेव न युज्यते ।
देशभेदादसंसर्गो मूर्त्तामूर्त्ततया तथा ॥ ४२ ॥
त्रैलोक्ये न प्रसङ्गाच्च संसर्गो नैककालता ।
न चाप्यार्जवतः स्थानं ज्ञानेनार्थे विद्यते ॥ ४३ ॥
सर्वथा कल्पनायां च चक्षुषाऽपि रसादयः ।
गृह्येरन्सर्वभावानामथवाकाराश्च तद्गताः ॥ ४४ ॥
न चापि विषयत्वेन स्थाने संसर्गकल्पना ।
विषयश्च हि कीदृक् स्यात्प्रागाकारोपलम्भनात् ॥ ४५ ॥
न ह्यसंचेतितो भावो विषयत्वेन कल्पते ।
विषयत्वात्तदाकार आकाराद्विषयश्च सः ॥ ४६ ॥
द्वयोराकारनिर्मुक्तं सत्त्वं संसृष्टता तथा ।
स्वरूपतः परिच्छिद्य वक्तुमित्यादि युज्यते ॥ ४७ ॥

न चाप्यस्येह सद्भावः प्राग्गृहीतो न चोपरि।
न ह्याकारविनिर्मुक्तं ग्राह्यमस्तीति भावितम्॥ ४८॥
तस्मादर्थेन संसर्गो निष्प्रमाणक एव ते।
ज्ञानवैचित्र्यसिद्ध्यर्थं न चास्त्यर्थस्य कल्पना॥ ४९॥
तदधीनं हि वैचित्र्यं क्व दृष्टं केन कल्प्यते।
निराकारेण चोत्पत्तिर्वैचित्र्याकारयोः कथम्॥ ५०॥
निराकाराच्च विषयाद् बुध्या कातिविस्मयः।
स्मृतिस्वप्नादिबोधेन स्यादनाकारता तव॥ ५१॥
न हि तत्रार्थसंसर्गः केवला वासनैव तु।
हेतुत्वेनोपपन्नेति सैव जाग्रद्धियामपि॥ ५२॥
अन्वयव्यतिरेकाभ्यामेव ज्ञानस्य गम्यते।
आकारो न हि बाह्यस्य ज्ञानापेतोनिदर्श्यते॥ ५३॥
बाह्यापेतो मया यद्वत्तस्मात्संसर्गवागियम्।
निराकारोऽपि विज्ञाने वासनास्वेव युज्यते॥ ५४॥
द्वयोरप्येक आकार इत्येतस्याप्रमाणता।
देशभेदादसंसर्गो द्वयोश्चानवधारणात्॥ ५५॥
एवमेवार्थबुद्ध्योः स्यात्सादृश्याच्चाविभक्तता।
भेदे ज्ञाते हि सादृश्यं नाज्ञाते स्यात्खपुष्पवत्॥ ५६॥
तथा द्विचंद्रमायादावन्यथाऽर्थे व्यवस्थिते।
यास्यादाकारसंवित्तिर्नासावर्थनिबन्धना॥ ५७॥
नक्षत्रंतारका तिष्यो दारा इत्येवमादिषु।
नैकत्रार्थे विरुद्धत्वाल्लिंगानेकत्वसंभवः॥ ५८॥
परिव्राट्कामुकशुनां कुणपादिमतिस्तथा।
दीर्घह्रस्वत्वबुद्धिश्च ह्येकस्मिन्नप्यपेक्षया॥ ५९॥

घटत्वात्पार्थिवद्रव्यसंज्ञेयादिमतिस्तथा ।
युगपद्ग्राहकाकारणांच न स्यादैकात्म्यवत्तया ॥ ६० ॥
नार्थेह्येकत्र युगपद्विरुद्धाकारसंभवः ।
प्रत्ययानां तु भिन्नत्वाद्गवच्छत्त्यनुसारतः ॥ ६१ ॥
निरपेक्षं स्वरूपेण तस्माज्ज्ञानं यदाकृति ।
तथार्थो न यथार्थं तु ज्ञानमुत्पद्यते क्वचित् ॥ ६२ ॥
इत्थं विज्ञानतन्त्रत्वे वोदत्वर्थं (१) कल्पयिष्यति ।
धीरनारोपिताकारा आत्मन्येवोपयोज्यते ॥ ६३ ॥
नैतदस्ति त्वयैकं हि ग्राह्यं ग्राहकमिष्यते ।
नचैकस्यैवमात्मत्वे दृष्टान्तः कश्चिदस्ति ते ॥ ६४ ॥
अग्न्यादयो घटादीनां प्रसिद्धा ये प्रकाशकाः ।
न ते प्रकाश्यरूपा हि प्रकारस्यानपेक्षणात् ॥ ६५ ॥
ग्राह्यत्वं तु यदा तेषां तदा ऽक्षं ग्राहकं मतम् ।
अक्षग्रहणकाले तु ग्राहिका धीर्भविष्यति ॥ ६६ ॥
तस्यां तु गृह्यमाणायामन्याधीर्ग्राहिकेष्यते ।
न त्वात्मा ग्राहको ग्राह्यो भवता ऽभ्युपगम्यते ॥ ६७ ॥
कथं चिद्धर्मरूपेण भिन्नत्वात्प्रत्ययस्य तत् ।
ग्राहकत्वं भवेत्तत्र ग्राह्यं द्रव्यादि चात्मनः ॥ ६८ ॥
यस्तु नात्यन्तभेदो ऽत्र ध्रुवासाविष्यते मया ।
प्रत्यासत्तिनिमित्ता तु प्रत्यगात्मप्रवर्त्तिता ॥ ६९ ॥
अस्मत्प्रयोगसंभिन्ना ज्ञानस्येव न कर्त्तरि ।
भवन्ती तत्र संवित्तिर्युज्येतायात्मकर्तृका ॥ ७० ॥
नत्वत्रकरणज्ञानग्राहकाका स्वेदनम् ।
ग्राह्यत्वं येन बुद्धः स्यादभिन्नत्वे ऽपि पूर्ववत् ॥ ७१ ॥

शेषमग्रे

(१) I suppose the reading (कोन्वर्थं) in place of (वोदत्वर्थं)

## ॥ अथ योगचन्द्रिकायाः ॥

### ॥ प्रस्तावना ॥

यमनियमरताः परं पुमांसं
हृदि कलयन्ति समाधिभिर्यमद्धा ।
तमखिलनिगमोक्तिसारभूतं
प्रकृतिपरं परमेश्वरं नमामि ॥ १ ॥
अधुना मधुनो रिपुणा
प्रेरितमनसा मया व्यतर्कीदम् ।
मुक्तेः साधनविद्या
सम्प्रति मुद्या वरीयसी या स्यात् ॥ २ ॥
न कर्णधारेण विना कथंचित्
तरिः सरित्पारमुपैति नूनम् ।
तथावलम्बेन विनेश्वरस्य
जनो न यायाद् भवसिन्धुपारम् ॥ ३ ॥
ब्रह्माहमस्मीतिविचारदक्षोऽ-
प्यनेकजन्मार्जितपुण्यपापः ।
विवेकशास्त्राश्रयमात्रयोगी
विघ्नैरनेकैर्बहु बाध्यमानः ॥ ४ ॥
अतो निरालम्बपथं विहाय
वेदान्तशास्त्रादिमनादिसिद्धः ।
परेश्वरो वस्तुत एव यश्च
निरूप्यते मुद्रयितुं तदीहे ॥ ५ ॥

तथाविधं वेद्मि च योगशास्त्रं
परं तु धीरैर्गहनत्वमाप्तम्।
व्याख्यातृभिस्तत् प्रथमं समस्त-
सूत्रार्थमात्रप्रतिपादयित्रीम्॥ ६॥
अनन्तविद्वद्वरसंप्रणीतां
सुखेन साध्यां लघुतोऽपि लघ्वीम्।
प्रस्तौमि योगादिकचन्द्रिकाख्या-
मेकेन मासेन समापनार्हाम्॥ ७॥
श्रीमत्सर्वनरेन्द्रमौलिमुकुटालंकारसर्वेश्वरी-
संबन्धादधिकाशि काशिततमे पाठालये शोभते।
भारत्याः सदनं वरं सुमनसामेनां दुरापां ततः
प्राचीनामलभिष्यहं सुविमलां तस्मादियं मुद्र्यते॥ ८॥
काशीस्थराजकीय-
प्रधानपाठालयीयसंख्यावान्।
गौरीग्रामनिवासी
वेचनरामोऽस्म्यहं कान्यकुब्जः॥ ९॥

---

## ॥ अथ पातञ्जले योगशास्त्रे योगचन्द्रिकायाः॥

### ॥ प्रथमोऽध्यायः॥

गुरुं प्रणम्य सूत्रार्थचन्द्रिका क्रियते मया।
अनन्तेनेश्वरप्रीत्यै सच्चिदानन्दरूपिणम्॥ १॥

**अथ योगानुशासनम्॥ १॥**

अथ शब्दोऽधिकारवाची, योगो नाम समाधानम्, अनुशिष्यते व्याख्यायते येन तत्॥ १॥

**योगश्चित्तवृत्तिनिरोधः ॥ २ ॥**

सत्त्वपरिणामरूपस्य चित्तस्य या वृत्तयस्तासां निरोधो बहिर्मुखताविच्छेदादन्तर्मुखतया स्वकारणे लयो योगः ॥ २ ॥

**तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥**

तस्मिन् निरोधसमाधिकाले द्रष्टुः पुरुषस्य स्वरूपे चिन्मात्रे॰ अवस्थानं स्थितिर्भवति ॥ ३ ॥

**वृत्तिसारूप्यमितरत्र ॥ ४ ॥**

इतरत्र योगादन्यस्मिन् काले वक्ष्यमाणलक्षणाऽवृत्तिभिः सारूप्यं तद्रूपत्वम् ॥ ४ ॥

**वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः ॥ ५ ॥**

वृत्तयश्चित्तस्य परिणामविशेषाः, क्लेशैराक्रान्ताः क्लिष्टाः, तद्भिन्ना अक्लिष्टाः ॥ ५ ॥

**प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥**

एताः पञ्च वृत्तयः, तासां व्याख्यासूत्राणि ॥ ६ ॥

**प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥**

बाह्[1]वस्तुनि॰ इन्द्रियद्वारेण चित्तस्योपरागादर्थस्य विषयावधारणप्रधाना वृत्तिः प्रत्यक्षम् ॥ ७ ॥

**गृहीतसंबन्धाल्लिङ्गाल्लिङ्गिनि सामान्यात्मनाध्यवसायोऽनुमानम् ॥ ८ ॥**

अनुमानं नाम गृहीतसंबन्धाद्धेतोः पक्षे साध्यस्य सामान्यात्मना निश्चयः ॥ ८ ॥

---

१ प्रत्यक्षे वादिनां विप्रतिपत्तेरभावात् तल्लक्षणं पतञ्जलिर्नोक्तवानिति स्वयं तल्लक्षणं वच्मि, अनुमानागमयोस्तु लक्षणे स्वयं पतञ्जलिनाभिहिते अग्रेतनसूत्रद्वयेनेति ग्रन्थकर्तुराशयः। भाष्यकारभोजराजभावागणेशभवदेवादिमते त्वनुमानागमगमकं गृहीतसंबन्धादित्याद्याप्तवचनमागम इत्यन्तं सूत्रद्वयं पतञ्जलिकृतं नैवास्तीति वास्तविकपन्थाः।

आप्तवचनमागमः ॥ ९ ॥

आप्तस्य॰ ईश्वरस्य वाक्यं वेदः ॥ ९ ॥

विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ १० ॥

अतथाभूतेऽर्थे तथोत्पद्यमानं ज्ञानं विपर्ययः, संशयोऽपि॰ अतद्रूपी, अतद्रूपप्रतिष्ठत्वाच्च मिथ्याज्ञानम् ॥ १० ॥

शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ११ ॥

शब्दजज्ञानानुपतनशीलो वस्तुनस्तथात्वमनपेक्षमाणो निश्चयो विकल्पः ॥ ११ ॥

अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १२ ॥

अभावप्रत्यय आलम्बनं यस्या वृत्तेः सा निद्रा ॥ १२ ॥

अनुभूतविषयासंप्रमोषः स्मृतिः ॥ १३ ॥

अनुभूतस्य विषयस्य योऽयमसंप्रमोषः संस्कारद्वारेण बुद्धावारोहः स स्मृतिः ॥ १३ ॥

अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १४ ॥

वक्ष्यमाणलक्षणाभ्यामभ्यासवैराग्याभ्यां चित्तवृत्तीनां यत् प्रतिहननं स निरोधः ॥ १४ ॥

तत्र स्थितौ यत्नोऽभ्यासः ॥ १५ ॥

वृत्तिरहितस्य चित्तस्य स्वरूपनिष्ठः परिणामः स्थितिः॰ तस्यां यत्न उत्साहः पुनः पुनस्तथात्वेन चेतसि निवेशनमभ्यासः ॥ १५ ॥

स तु दीर्घकालनैरन्तर्यसत्कार[१]सेवितो दृढभूमिः ॥ १६ ॥

स त्वभ्यासो बहुकालं नैरन्तर्येण सेव्यमानो दृढभूमिः स्थिरो भवतीत्यर्थः ॥ १६ ॥

---

१ भवदेवमते दीर्घकालनैरन्तर्यश्रद्धासेवितो–इति पाठः, नैरन्तर्येण श्रद्धया॰ आसेवित इति तद्व्याख्यानात् ।

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा
वैराग्यम् ॥ १७ ॥

दृष्ट इहोपलभ्यमानाः शब्दादिः, देवलोकादावानुश्रविकः, तयोः परिणामविरसत्वदर्शनाद्विगतगर्धस्य वशीकारसंज्ञा वैराग्यमुच्यते ॥ १७ ॥

तत् परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १८ ॥

गुणवैतृष्ण्यरूपमुत्कृष्टं वैराग्यं पुरुषविवेकख्यातेर्भवति ॥ १८ ॥

वितर्कविचारानन्दास्मितानुगमात् संप्रज्ञातः ॥ १९ ॥

वितर्कादिचतुष्टयभेदेनानुगमात् सम्यक् प्रकर्षेण ज्ञायते भाव्यस्वरूपं येन सः॰ संप्रज्ञात इत्यर्थः ॥ १९ ॥

विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ २० ॥

विरम्यते॰ अनेन स चासौ प्रत्ययश्च तस्याभ्यासः पुनः पुनश्चेतसि निवेशनं तत् पूर्वं यस्य तादृशः, तत्र या काचिद्वृत्तिरुल्लसति तस्या "नेति नेती"ति श्रुत्या निरासः कार्यः, संस्कारमात्रशेषोऽन्यः, असंप्रज्ञात इत्यर्थः ॥ २० ॥

[1]प्रतिपरिमाणं च संस्काराः ॥ २१ ॥

तत्र व्युत्थानाद्याः संस्काराः समाधिप्रारम्भाद्यैः संस्कारैर्हन्यन्ते ॥ २१ ॥

भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ २२ ॥

विदेहप्रकृतिलयानां वितर्कादीनां समाधिः॰ भवप्रत्ययः संसार एव कारणं यस्य सः ॥ २२ ॥

श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २३ ॥

अन्येषां श्रद्धादिपूर्वकः, श्रद्धा चेतसः प्रसादः वीर्यमुत्साहः स्मृतिरुक्ता समाधिरेकाग्रता प्रज्ञा विवेकस्तत्पूर्वको भवति २३ ॥

---

१ इदं सूत्रं नान्येषां मतेऽस्ति।

[1]तस्याभ्यासात् पराच्च वैराग्याद्भवत्यसंप्रज्ञातः ॥ २४ ॥

सविकल्पसमाधेरभ्यासात् संस्कारशेषाद्वैराग्यादसंप्रज्ञातः ॥ २४ ॥

[2]तीव्रसंवेगानामासन्नः ॥ २५ ॥

संस्कारस्तीव्रो येषां तेषां समाधिलाभः शीघ्रं भवति ॥ २५ ॥

मृदुमध्याधिमात्रत्वात् ततोऽपि विशेषः ॥ २६ ॥

मृद्वादिसंवेगभेदाद्योगिनोऽपि भिन्नाः, तेषां समाधिलाभो दीर्घकालादिभेदेन भवतीत्यर्थः ॥ २६ ॥

ईश्वरप्रणिधानाद्वा ॥ २७ ॥

सुगमोपायोऽयं भक्तिविशेषः, ईश्वरे सर्वक्रियाणामर्पणं वा ॥ २७ ॥

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २८ ॥

अविद्यादयः क्लेशाः, कर्माणि विहितप्रतिषिद्धानि, विपाकास्तत्फलभूता जात्यायुर्भोगाः, आ फलविपाकाच्चित्ते शेरत इत्याशया वासनाः, ताभिर्न संस्पृष्ट अन्येभ्यः पुरुषेभ्यो विशिष्ट ईशनशीलः ॥ २८ ॥

तत्र निरतिशयं सर्वज्ञ[3]बीजम् ॥ २९ ॥

तस्मिन् भगवति सर्वज्ञत्वस्य बीजं सर्वस्य मूलत्वाद्बीजमिव बीजं निरतिशयं काष्ठां प्राप्तम् ॥ २९ ॥

स[4] पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ ३० ॥

स ब्रह्मादीनामपि गुरुरुपदेष्टा यतः कालेन नावच्छिद्यते· अनादित्वात्, तेषां पुनरादिमत्त्वादस्ति कालेनावच्छेदः ॥ ३० ॥

---

१ प्रतिपादिचरनाम्नां मते नैतत् सूत्रम् ।

२ अधिमात्रोपायानां तीव्रसंवेगानामासन्नः समाधिलाभः, इत्याकारकं सूत्रं भोजराजो मन्यते। भावागणेशस्तु अधिमात्रोपायानां तीव्रसंवेगानामासन्नः, इत्याकारकम् ।

३ सर्वज्ञत्वबीजमिति भवदेवसंमतः पाठः । भोजवृत्तौ तु क्वचित् क्वचित् सार्वज्ञ्यबीजमिति लभ्यते ।

४ व्यासभावागणेशयोः स एषेति पाठः, केचित्त्व स एषेति भाष्यगतं पदं वदन्ति ।

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १७ ॥

दृष्ट इहोपलभ्यमानाः शब्दादिः, देवलोकादावानुश्रविकः, तयोः परिणामविरसत्वदर्शनाद्विगतगर्धस्य वशीकारसंज्ञा वैराग्यमुच्यते ॥ १७ ॥

तत् परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १८ ॥

गुणवैतृष्ण्यरूपमुत्कृष्टं वैराग्यं पुरुषविवेकख्यातेर्भवति ॥ १८ ॥

वितर्कविचारानन्दास्मितानुगमात् संप्रज्ञातः ॥ १९ ॥

वितर्कादिचतुष्टयभेदेनानुगमात् सम्यक् प्रकर्षेण ज्ञायते भाव्यस्वरूपं येन सः॰ संप्रज्ञात इत्यर्थः ॥ १९ ॥

विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ २० ॥

विरम्यते॰ अनेन स चासौ प्रत्ययश्च तस्याभ्यासः पुनः पुनश्चेतसि निवेशनं तत् पूर्वं यस्य तादृशः, तत्र या काचिद्वृत्तिरुल्लसति तस्या "नेति नेती"ति श्रुत्या निरासः कार्यः, संस्कारमात्रशेषोऽन्यः, असंप्रज्ञात इत्यर्थः ॥ २० ॥

[1]प्रतिपरिमाणं च संस्काराः ॥ २१ ॥

तत्र व्युत्थानाद्याः संस्काराः समाधिप्रारम्भाद्यैः संस्कारैर्हन्यन्ते ॥ २१ ॥

भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ २२ ॥

विदेहप्रकृतिलयानां वितर्कादीनां समाधिः॰ भवप्रत्ययः संसार एव कारणं यस्य सः ॥ २२ ॥

श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २३ ॥

अन्येषां श्रद्धादिपूर्वकः, श्रद्धा चेतसः प्रसादः वीर्यमुत्साहः स्मृतिरुक्ता समाधिरेकाग्रता प्रज्ञा विवेकस्तत्पूर्वको भवति २३ ॥

१ इदं सूत्रं नान्येषां मतेऽस्ति ।

[1]तस्याभ्यासात् पराच्च वैराग्याद्भवत्यसंप्रज्ञातः ॥ २४ ॥

सविकल्पसमाधेरभ्यासात् संस्कारशेषाद्वैराग्यादसंप्रज्ञातः ॥ २४ ॥

[2]तीव्रसंवेगानामासन्नः ॥ २५ ॥

संस्कारस्तीव्रो येषां तेषां समाधिलाभः शीघ्रं भवति ॥ २५ ॥

मृदुमध्याधिमात्रत्वात् ततोऽपि विशेषः ॥ २६ ॥

मृद्वादिसंवेगभेदाद्योगिनोऽपि भिन्नाः, तेषां समाधिलाभो दीर्घकालादिभेदेन भवतीत्यर्थः ॥ २६ ॥

ईश्वरप्रणिधानाद्वा ॥ २७ ॥

सुगमोपायोऽयं भक्तिविशेषः, ईश्वरे सर्वक्रियाणामर्पणं वा ॥ २७ ॥

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २८ ॥

अविद्यादयः क्लेशाः, कर्माणि विहितप्रतिषिद्धानि, विपाकास्तत्फलभूता जात्यायुर्भोगाः, आ फलविपाकाच्चित्ते शेरत इत्याशया वासनाः, ताभिर्न संस्पृष्ट अन्येभ्यः पुरुषेभ्यो विशिष्ट ईशनशीलः ॥ २८ ॥

तत्र निरतिशयं सर्वज्ञ[3]बीजम् ॥ २९ ॥

तस्मिन् भगवति सर्वज्ञत्वस्य बीजं सर्वस्य मूलत्वाद्बीजमिव बीजं निरतिशयं काष्ठां प्राप्तम् ॥ २९ ॥

स[4] पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ ३० ॥

स ब्रह्मादीनामपि गुरुरुपदेष्टा यतः कालेन नावच्छिद्यते· अनादित्वात्, तेषां पुनरादिमत्त्वादस्ति कालेनावच्छेदः ॥ ३० ॥

---

१ प्रतिपादिचरनाम्नां मते नैतत् सूत्रम् ।

२ अधिमात्रोपायानां तीव्रसंवेगानामासन्नः समाधिलाभः, इत्याकारकं सूत्रं भोजराजो मन्यते। भावागणेशस्तु अधिमात्रोपायानां तीव्रसंवेगानामासन्नः, इत्याकारकम् ।

३ सर्वज्ञत्वबीजमिति भवदेवसंमतः पाठः । भोजवृत्तौ तु क्वचित् क्वचित् सार्वज्ञ्यबीजमिति लभ्यते ।

४ व्यासभावागणेशयोः स एषेति पाठः, केचिच्च स एषेति भाष्यगतं पदं वदन्ति ।

सुगमोपायमाह ।

तस्य वाचकः प्रणवः ॥ २१ ॥

ईश्वरस्याभिधायक ओंकारः, "तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदती"ति स्मृतेः ॥ २१ ॥

तज्जपस्तदर्थभावनम्[1] ॥ २२ ॥

तस्य प्रणवस्य जपः प्रणववाच्यस्येश्वरस्य भावनं पुनः पुनश्चेतसि निवेशनम्· एकाग्रताया उपायः, "जपेच्च प्रणवं नित्यं ब्रह्मविष्णुशिवात्मकम् । कोटिसूर्यसमं तेजो ध्यायेदात्मनि निर्मलम्" ॥ इति स्मृतेः ॥ २२ ॥

ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥ २३ ॥

तस्माज्जपात् तदर्थभावनाच्च प्रत्यग् विषयप्रातिकूल्येनाञ्चति या चेतना दृक्शक्तिस्तस्या अधिगमो ज्ञानं भवति वक्ष्यमाणान्तरायशक्तिप्रतिबन्धश्च भवतीत्यर्थः ॥ २३ ॥

व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ २४ ॥

व्याधिर्ज्वरादिः, स्त्यानमकर्मण्यता, उभयकोट्यालम्बनं विज्ञानं संशयः, प्रमादोऽनवधानता, आलस्यं कायचित्तयोर्गुरुत्वम्, अविरतिर्विषयासक्तिः, भ्रान्तिदर्शनं विपर्ययज्ञानम्, अलब्धभूमिकत्वं समाधिभूमेरलाभः, अनवस्थितत्वं चित्तस्य समाधावप्रतिष्ठा, एते च विघ्ना इत्युच्यन्ते ॥ २४ ॥

दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ २५ ॥

तत्र दुःखं चित्तस्य राजसः परिणामो बाधनलक्षणः, दौर्मनस्यं कारणैर्मनसो दौस्थ्यम्, अङ्गमेजयत्वं सर्वाङ्गवेपथुः, प्राणो यत्र बाह्यवायु-

[1] भावनं चेति भवदेवः ।

मात्रामति स श्वासः, यत् कोष्ठ्यं वायुं निःसारयति स प्रश्वासः, एते विक्षेपैः सह जायन्ते, अतोऽभ्यासवैराग्याभ्यां निरोद्धव्याः ॥ ३५ ॥

तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३६ ॥

तेषां विक्षेपाणां निषेधार्थं कस्मिंश्चिदेकस्मिन्नभिमते तत्त्वे॰ ऽभ्यासो विधेय इत्यर्थः ॥ ३६ ॥

मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥ ३७ ॥

मैत्रीं सौहार्दं सुखितेषु करुणां कृपां दुःखितेषु मुदितां हर्षं पुण्य-वत्सु॰ उपेक्षामौदासीन्यमपुण्यवत्सु भावयेत्, एवं मैत्र्यादिपरिकर्मणा चित्तं प्रसीदति रागद्वेषनिरासे सुखेन समाधिप्रादुर्भावो भवत्येकाग्रता च ॥ ३७ ॥

प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३८ ॥

प्रच्छर्दनं नाम यत् कोष्ठ्यस्य वायोः प्रयत्नविशेषाद्बहिर्निःसारणम्, विधारणं मात्राप्रमाणेन प्राणस्यायामो गतिविच्छेदः, ताभ्यां वा चित्तस्य प्रसादनं कुर्यादित्यर्थः ॥ ३८ ॥

विषयवती वा प्रवृत्तिरुत्पन्ना स्थितिनिबन्धिनी[1] ॥ ३९ ॥

विषया दिव्यगन्धाद्या विद्यन्ते फलत्वेन यस्यां सा संविदुत्पन्ना सती मनसः स्थैर्यं करोतीत्यर्थः ॥ ३९ ॥

विशोका वा ज्योतिष्मती ॥ ४० ॥

ज्योतिःशब्देन सात्त्विकः प्रकाश उच्यते सोऽतिशयवान् यस्यां सा ज्योतिष्मती प्रवृत्तिरुत्पन्ना विशोका विगतशोका सुखमयसत्त्वाभ्या-सात्चेतसः स्थितिकर्त्री ॥ ४० ॥

वीतरागविषयं वा चित्तम् ॥ ४१ ॥

परित्यक्तविषयाभिलाषं चित्तं मनसः स्थितिनिबन्धनं भव-तीति ॥ ४१ ॥

---

१ मनसः स्थितिनिबन्धनी॰ इति व्यासदेवभावागणेशौ ।

सुगमोपायमाह।

तस्य वाचकः प्रणवः ॥ २७ ॥

ईश्वरस्याभिधायक ओंकारः, "तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदती"ति स्मृतेः ॥ ३१ ॥

तज्जपस्तदर्थभावनम्[1] ॥ २८ ॥

तस्य प्रणवस्य जपः प्रणववाच्यस्येश्वरस्य भावनं पुनः पुनश्चेतसि निवेशनम्० एकाग्रताया उपायः, "जपंश्च प्रणवं नित्यं ब्रह्मविष्णुशिवात्मकम्। कोटिसूर्यसमं तेजो ध्यायेदात्मनि निर्मलम्" ॥ इति स्मृतेः ॥ ३२ ॥

ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥ २९ ॥

तस्माज्जपात् तदर्थभावनाच्च प्रत्यग् विषयप्रातिकूल्येनाञ्चति या चेतना दृक्शक्तिस्तस्या अधिगमो ज्ञानं भवति वक्ष्यमाणान्तरायशक्तिप्रतिबन्धश्च भवतीत्यर्थः ॥ ३३ ॥

व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ ३० ॥

व्याधिर्ज्वरादिः, स्त्यानमकर्मण्यता, उभयकोट्यालम्बनं विज्ञानं संशयः, प्रमादोऽनवधानता, आलस्यं कायचित्तयोर्गुरुत्वम्, अविरतिर्विषयासक्तिः, भ्रान्तिदर्शनं विपर्ययज्ञानम्, अलब्धभूमिकत्वं समाधिभूमेरलाभः, अनवस्थितत्वं चित्तस्य समाधावप्रतिष्ठा, एते च विघ्ना इत्युच्यन्ते ॥ ३४ ॥

दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ ३१ ॥

तत्र दुःखं चित्तस्य राजसः परिणामो बाधनलक्षणः, दौर्मनस्यं कारणैर्मनसो दौस्थ्यम्, अङ्गमेजयत्वं सर्वाङ्गवेपथुः, प्राणो यत्र बाह्यवायु-

१ भावनं चेति भवदेवः।

माचामति स श्वासः, यत् कोष्ठ्यं वायुं निःसारयति स प्रश्वासः, एते विक्षेपैः सह जायन्ते, अतोऽभ्यासवैराग्याभ्यां निरोद्धव्याः ॥ ३५ ॥

तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३६ ॥

तेषां विक्षेपाणां निषेधार्थं कस्मिंश्चिदेकस्मिन्नभिमते तत्त्वेऽभ्यासो विधेय इत्यर्थः ॥ ३६ ॥

मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥ ३७ ॥

मैत्रीं सौहार्दं सुखितेषु करुणां कृपां दुःखितेषु मुदितां हर्षं पुण्यवत्सु॰ उपेक्षामौदासीन्यमपुण्यवत्सु भावयेत्, एवं मैत्र्यादिपरिकर्मणा चित्तं प्रसीदति रागद्वेषनिरासे सुखेन समाधिप्रादुर्भावो भवत्येकाग्रता च ॥ ३७ ॥

प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३८ ॥

प्रच्छर्दनं नाम यत् कोष्ठस्य वायोः प्रयत्नविशेषाद्बहिर्निःसारणम्, विधारणं मात्राप्रमाणेन प्राणस्यायामो गतिविच्छेदः, ताभ्यां वा चित्तस्य प्रसादनं कुर्यादित्यर्थः ॥ ३८ ॥

विषयवती वा प्रवृत्तिरुत्पन्ना स्थितिनिबन्धिनी[1] ॥ ३९ ॥

विषया दिव्यगन्धाद्या विद्यन्ते फलत्वेन यस्यां सा संविदुत्पन्ना सती मनसः स्थैर्यं करोतीत्यर्थः ॥ ३९ ॥

विशोका वा ज्योतिष्मती ॥ ४० ॥

ज्योतिःशब्देन सात्त्विकः प्रकाश उच्यते सोऽतिशयवान् यस्यां सा ज्योतिष्मती प्रवृत्तिरुत्पन्ना विशोका विगतशोका सुखमयसत्त्वाभ्यासाच्चेतसः स्थितिकर्त्री ॥ ४० ॥

वीतरागविषयं वा चित्तम् ॥ ४१ ॥

परित्यक्तविषयाभिलाषं चित्तं मनसः स्थितिनिबन्धनं भवतीति ॥ ४१ ॥

---

१ मनसः स्थितिनिबन्धनी॰ इति व्यासदेवभावागणेशौ ।

स्वप्ननिद्राज्ञानालम्बनं वा ॥ ४२ ॥

प्रत्यस्तमितबाह्यवृत्तेर्मनोमात्रेणैव यत्र भोक्तृत्वमात्मनः स स्वप्नः, निद्रा पूर्वोक्ता, तदन्यतरालम्बनं ज्ञानं चेतसः स्थितिहेतुः ॥ ४२ ॥

यथाभिमतध्यानाद्वा ॥ ४३ ॥

यथाभिमतवस्तुनि बाह्ये हरिमूर्त्यादावाभ्यन्तरे नाडीचक्रादौ वा भाव्यमाने चेतसः स्थितिर्भवति ॥ ४३ ॥

परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ४४ ॥

एभिश्चेतसः स्थैर्यं भावयतो योगिनः सूक्ष्मभावनद्वारेण परमाण्वन्तः स्थूलभावनद्वारेणाकाशान्तो वशीकारः, परमाणुपर्यन्ते सूक्ष्मे आकाशादिस्थूले चेतसोऽप्रतिघातो भवतीत्यर्थः ॥ ४४ ॥

क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनतासमापत्तिः ॥ ४५ ॥

क्षीणा वृत्तयो यस्य तस्य चेतसः स्फटिकमणेरिव ग्रहीतृग्रहणग्राह्येषु तत्स्थत्वं तदेकाग्रता तदञ्जनता तन्मयत्वं तद्रूपः परिणामो भवतीत्यर्थः ॥ ४५ ॥

शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का ॥ ४६ ॥

शब्दः श्रवणेन्द्रियग्राह्यः स्फोटो वा, अर्थो जात्यादिः, ज्ञानं बुद्धिवृत्तिः, विकल्प उक्तलक्षणः, एते यस्यां भासन्ते सा सवितर्का ॥ ४६ ॥

स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४७ ॥

शब्दार्थस्मृतिप्रविलये स्पष्टग्राह्याकारप्रतिभासतया स्वरूपशून्येव ग्राह्यमात्रस्फुरणेन तन्मात्रप्रभासा निर्वितर्का समापत्तिः ॥ ४७ ॥

एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४८ ॥

## सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा ॥ २३ ॥

यत् पूर्वकृतं कर्म तद् द्विविधम्, एकं फलजननायोपक्रमेण कार्यकरणाभिमुख्येन सह वर्तत इति सोपक्रमम्, अपरमुक्तरूपविपरीतं निरुपक्रमम्, तस्मिन् द्विविधे कर्मणि यः संयमं करोति, किं शीघ्रविपाकं किं चिरविपाकमिति, एवं ध्यानदार्ढ्यादपरान्तज्ञानमुत्पद्यते, अपरान्तं शरीरवियोगस्तज्ज्ञानम्, अमुष्मिन् देशे काले वा शरीरवियोगो भविष्यतीति। अरिष्टेभ्यो वा, आध्यात्मिकादीनि त्रिविधान्यरिष्टानि, पिहितकर्णताहेतुकघोषाश्रवणविकृतपुरुषदर्शनस्वर्गादिपदार्थदर्शनानि, तेभ्यः शरीरवियोगकालं जानाति। अयोगी संशयेन योगी निश्चयेन जानातीत्युभयोर्भेदः ॥ २३ ॥

## मैत्र्यादिषु बलानि ॥ २४ ॥

मैत्र्यादिषु विहितो यः संयमस्तस्य बलानि निर्मैत्र्यादीनां संबन्धीनि प्रादुर्भवन्ति, मैत्र्याद्युत्कर्षे सर्वस्य मित्रत्वादिकं प्रतिपद्यते ॥ २४ ॥

## बलेषु हस्तिबलादीनि ॥ २५ ॥

हस्त्यादिसंबन्धिषु बलेषु कृतसंयमस्य तद्बलानि हस्त्यादिबलान्याविर्भवन्ति ॥ २५ ॥

## प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ॥ २६ ॥

विषयवतीज्योतिष्मतीरूपप्रवृत्तौ य आलोकः प्रकाशस्तस्य सर्वविषयेषु न्यासात् तेषां भावनादन्तःकरणेन्द्रियेषु सूक्ष्मव्यवहितविप्रकृष्टनिरोधिरसायनादिज्ञानमुत्पद्यते ॥ २६ ॥

## भुवनज्ञानं सूर्ये संयमात् ॥ २७ ॥

सूर्ये यः संयमं करोति तस्य भूर्भुवादिसप्तभुवनज्ञानमुत्पद्यते ॥ २७ ॥

## चन्द्रे ताराव्यूहज्ञानम् ॥ २८ ॥

चन्द्रे संयमात् ताराणां व्यूहः संनिवेशस्तज्ज्ञानमुत्पद्यत इत्यर्थः ।२८।

ध्रुवे तद्गतिज्ञानम् ॥ २९ ॥

ध्रुवे ज्योतिष्प्रधाने निश्चले कृतसंयमस्य तारादीनां गत्यादिज्ञानमुत्पद्यते, इयं तारा॰ अयं ग्रहः॰ इयत्कालेन गच्छतीति ॥ २९ ॥

नाभिचक्रे कायव्यूहज्ञानम् ॥ ३० ॥

षोडशारे नाभिचक्रे कृतसंयमस्य काये यो व्यूहो विशिष्टरसनाड्याद्यवस्थानं तस्य ज्ञानमुत्पद्यते ॥ ३० ॥

कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ ३१ ॥

कण्ठे गले कूपो जिह्वामूलम्, जिह्वामूले गर्ताकारः प्रदेशः, तत्स्पर्शात् प्राणादीनां क्षुधाद्या भवन्ति, तस्मिन् कृतसंयमस्य क्षुत्पिपासादयो विनिवर्तन्ते ॥ ३१ ॥

कूर्मनाड्यां स्थैर्यम् ॥ ३२ ॥

कण्ठकूपस्याधस्ताद्धृद्या कूर्माख्या नाडी, तस्यां कृतसंयमस्य चेतसः स्थैर्यमुत्पद्यते ॥ ३२ ॥

मूर्धज्योतिषि सिद्धदर्शनम् ॥ ३३ ॥

रन्ध्राख्यं छिद्रं प्रकाशत्वाज्ज्योतिः,तस्मिन् कृतसंयमस्य सिद्धानां दर्शनं भवति ॥ ३३ ॥

प्रातिभाद्वा सर्वम् ॥ ३४ ॥

यथार्थे प्रागुत्पद्यमानं ज्ञानं प्रतिभा, तस्यां संयमे क्रियमाणे तारकं ज्ञानमुदेति, संयमान्तरानपेक्षः सर्वं जानातीत्यर्थः ॥ ३४ ॥

हृदये चित्तसंवित् ॥ ३५ ॥

हृदयपुण्डरीकान्तःकृतसंयमस्य स्वपरचित्तज्ञानमुत्पद्यते, स्वपरचित्तगतं सर्वं जानातीत्यर्थः ॥ ३५ ॥

सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थात् स्वार्थसंयमात् पुरुषज्ञानम् ॥ ३६ ॥

सत्त्वं प्रकाशसुखात्मकः प्राधानिकः परिणामः, पुरुषो भोक्ता, तयोश्चेतनाचेतनत्वादत्यन्तासंकीर्णत्वम्, तयोर्यः प्रत्ययस्याविशेषो भेदेनाप्रतिभासनात् सुखसंवित्, सा भोगः, पुरुषार्थादन्यः स्वार्थः, तत्राहंकाररहितचितौ कृतसंयमस्य पुरुषज्ञानमुत्पद्यते ॥ ३६ ॥

अस्य फलमाह।

ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते ॥ ३७ ॥

ततः पुरुषसंयमाद् व्युत्थितस्यापि ज्ञानानि जायन्ते, तत्र प्रातिभं पूर्वोक्तं ज्ञानम्, श्रावणं श्रोत्रेन्द्रियजम्, वेदना स्पर्शनेन्द्रियजम्, आदर्शश्चक्षुरिन्द्रियजं ज्ञानम्, आस्वादो रसनेन्द्रियजं ज्ञानम्, वार्ता गन्धसंवित्, सर्वत्र दिव्यत्वं विवक्षितम्, एतानि भवन्ति ॥ ३७ ॥

ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३८ ॥

ते प्राक् प्रतिपादिताः फलविशेषाः समाधावुपद्रवा विघ्ना व्युत्थाने विशिष्टफलदायकत्वात् सिद्धयो भवन्तीत्यर्थः ॥ ३८ ॥

बन्धकारणशैथिल्यात् प्रचारसंवेदनात्[1] च चित्तस्य परशरीरावेशः ॥ ३९ ॥

व्याप्यात्मचित्तयोर्नियतकर्मणा शरीरान्तर्यद्वेदनं संबन्धस्तस्य कारणं धर्माधर्माख्यं यदा शिथिलं भवति, तस्माच्चित्तस्य यः प्रचारो हृदयाद्विषयाभिमुख्येन प्रसरः, तस्य ज्ञानाच्चित्तवहनाड्यादि यो जानाति स परशरीरं सजीवं मृतं वा प्रविशति, सर्वं सूक्ष्मं तदनु, मधुकरराजमिव मधुमक्षिकाः, कर्मनाशाद्योगी सर्वत्र व्यवहरतीत्यर्थः ॥ ३९ ॥

उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ४० ॥

हृदयान्मुखनासिकाद्वारेण वायोः प्रणयनात् प्राण इत्युच्यते, नाभि-

---

[1] प्रसरसंवेदनादिति भावदेवः पाठः।

प्रदेशात् पादाङ्गुष्ठपर्यन्तमपनयनादपानः, नाभिप्रदेशं परिवेष्ट्य समन्ता नयनात् समानः, कृकाटिकादेशादा शिरोवृत्तेरुन्नयनादुदानः, व्याप नयनात् सर्वशरीरव्यापी व्यानः, उदानस्य संयमद्वारेण जयादितरेष वायूनां निरोधादूर्ध्वगामित्वेन जले नद्यादौ कर्दमे कण्टकादिषु वा न सज्जते, अतिलघुत्वात् तूलपिण्डवज्जलादौ मज्जितोऽप्युद्गच्छतीत्यर्थः अयमुत्क्रान्तिशब्दार्थः ॥ ४० ॥

समानजयात् प्रज्वलनम्[1] ॥ ४१ ॥

अग्निमावेष्ट्यास्थितस्य वायोः समानाख्यस्य जयाद्वशीकारादग्ने स्तेजसा प्रज्वलन्निव योगी भवतीत्यर्थः ॥ ४१ ॥

श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम् ॥ ४२ ॥

श्रोत्रेन्द्रियाकाशयोः संबन्धो देशदेशिभावः, तस्मिन् कृतसंयमस योगिनो दिव्यं श्रोत्रं प्रवर्तते, युगपत् सूक्ष्मव्यवहितविप्रकृष्टशब्दग्रहणस मर्थं भवतीत्यर्थः ॥ ४२ ॥

कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्चा-
काशगमनम् ॥ ४३ ॥

कायः शरीरं तस्याकाशेनावकाशदानाद्यः संबन्धस्तत्र संयमं वि धाय लघुनि तूलादौ समापत्तिस्तन्मयीभावलक्षणा तां च विधाय प्राप्त स्यन्तलघुभावो योगी प्रथमं भुवि यथारुचि संचरन् क्रमेणोर्णनाभितन्तु जालेन संचरमाण आदित्यरश्मिभिश्च संचरन् यथेष्टमाकाशेन गच्छति ॥४३

बहिरकल्पिता वृत्तिर्महाविदेहा ततः
प्रकाशावरणक्षयः ॥ ४४ ॥

शरीराद्बहिर्या मनोवृत्तिः सा महाविदेहा नाम विगतशरीरा कारदार्ढ्यद्वारेणोच्यते, ततस्तस्यां कृतसंयमात् प्रकाशावरणक्षयः, सात्त्वि

[1] भावागणेशवृत्तावपि प्रज्वलनमिति पाठः । भाष्यभोजभवदेववृत्तिषु ज्वल मित्येव पाठः ।

कचित्तस्य यः प्रकाशस्तस्य यदावरणं क्लेशादि तस्य क्षयः प्रविलयो भवति ॥ ४४ ॥

एवं बहिरान्तरीः सिद्धीः प्रतिपाद्य समाध्युपयोगिनीराह ।

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥ ४५ ॥

पञ्चानां भूतानां पञ्च स्थूलत्वादयो धर्माः, तत्र कृतसंयमस्य भूतजयो भवति, भूतानां दृश्यमानं विशिष्टं रूपं स्थूलम्, स्वरूपं कार्यं गन्धस्नेहोष्णताप्रेरणावकाशदानलक्षणम्, सूक्ष्मं तन्मात्राणि, अन्वयिनो गुणाः सर्वत्रोपलभ्यन्ते, अर्थवत्त्वं नाम गुणेषु भोगापवर्गसंपादनाख्या शक्तिः, एवं पञ्चसूक्ष्मलक्षणावस्थाभिन्नेषु प्रत्यवस्थं संयमं कुर्वन् योगी भूतजयी भवति॥४५॥

तस्य फलमाह ।

ततोऽणिमादिप्रादुर्भावः कायसंपद्धर्मानभिघातश्च ॥ ४६ ॥

अणिमा॰ अणुत्वापत्तिः, महिमा महत्त्वम्, लघिमा लघुत्वप्राप्तिः, गरिमा गुरुत्वप्राप्तिः, प्राप्तिः॰ अङ्गुल्यग्रेण चन्द्रादिस्पर्शनशक्तिः, प्राकाम्यम्॰ इच्छानभिघातः, शरीरान्तःकरणेश्वरत्वमीशित्वम्, सर्वतः प्रभविष्णुत्वं वशित्वम्, सर्वभूतानि तदुक्तं नातिक्रामन्ति, त एतेऽणिमाद्याः समाध्युपयोगिभूतजयाद् योगिनः प्रादुर्भवन्ति, एता महासिद्धय इत्युच्यन्ते, कायसंपद्वक्ष्यमाणा तां प्राप्नोति, तद्धर्मानभिघातश्च, कायस्य ये धर्मा रूपादयस्तेषामनभिघातो नाशो नास्ति, अस्य रूपस्याग्निवाय्वादिना दाहशोषादिकं न भवतीत्यर्थः ॥ ४६ ॥

कायसंपदमाह ।

रूपलावण्यबलवज्रसंहननत्वानि[१] कायसंपत् ॥ ४७ ॥

रूपलावण्यबलानि प्रसिद्धानि, वज्रसंहननत्वं वज्रवत् कठिना संहतिरस्य शरीरे भवतीत्यर्थः, इति कायस्याविर्भूतगुणसंपत् ॥ ४७ ॥

इन्द्रियजयमाह ।

१ भवदेववृत्तौ–संहननत्वादीनि॰ इति पाठः, आदिपदाद् गत्यादानसामर्थ्यादि॰ इति तत्रार्थनिरूपणात् ।

ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादि-
न्द्रियजयः ॥ ४८ ॥

ग्रहणं विषयाभिमुखी वृत्तिः, स्वरूपं सामान्येन प्रकाशत्वम्, अ-स्मिता॰ अहंकारानुगमः, अन्वयार्थवत्त्वे पूर्ववत्, एतेषामिन्द्रियाणामव-स्थापञ्चके संयमं कृत्वेन्द्रियजयी भवतीत्यर्थः ॥ ४८ ॥

ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४९ ॥

शरीरस्य मनोवद्गतिलाभो मनोजवित्वम्, कायनिरपेक्षाणामिन्द्रि-याणां वृत्तिलाभो विकरणभावः, सर्ववशित्वं प्रधानजयः, एताः सिद्धयो जितेन्द्रियस्य प्रादुर्भवन्ति ॥ ४९ ॥

अन्तःकरणजयमाह ।

सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं
सर्वज्ञातृत्वं च ॥ ५० ॥

सत्त्वान्तःकरणे कृतसंयमस्य या॰ उत्पद्यते सत्त्वपुरुषयोः ख्यातिः॰ गुणानां शिथिलीभावः, तत्सामर्थ्यात् तत्रैव स्थितस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च भवति, इयं विशोका नाम सिद्धिः ॥ ५० ॥

तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ५१ ॥

एतस्यां विशोकायां सिद्धौ यदा वैराग्यमुत्पद्यते तदा दोषाणां रागादीनां यद्बीजमविद्यादयस्तस्य क्षये निर्मूलत्वे कैवल्यम्॰ आत्यन्तिकी दुःखनिवृत्तिः ॥ ५१ ॥

तत्र समाधौ स्थित्युपायमाह ।

स्थान्युपनिमन्त्रणे[१] सङ्गस्मयाकरणं पुनरनिष्ट-
प्रसङ्गात् ॥ ५२ ॥

प्रधानजयस्य मधुमतीति संज्ञा तस्यां कृतसंयमस्य स्थानिनो देवा उपनिमन्त्रयितारो भवन्ति, दिव्यस्त्र्यादिना तस्मिन्नुपनिमन्त्रणे नानेन

१ भाष्यभोजभवदेवभावागणेशवृत्तिषु स्थान्युपनिमन्त्रणे॰ इत्येव पाठः ।

सङ्गः कर्तव्यो नापि स्मयः, सङ्गस्मयकरणे समाध्यनुत्साहोऽनिष्टप्रसङ्गः स्यात् ॥ ५२ ॥

क्षणतत्क्रमयोः संबन्धसंयमाद् विवेकजं ज्ञानम् ॥ ५३ ॥

क्षणानां यः क्रमः पौर्वापर्येण परिणामः, तत्र संयमात् प्रागुक्तं विवेकजं ज्ञानमुत्पद्यते, सूक्ष्मक्षणादिज्ञानात् सूक्ष्ममहदादीनां ज्ञानं भवति ॥ ५३ ॥

जातिलक्षणदेशैरन्यतानवच्छेदात्[1] तुल्ययोस्ततः प्रतिपत्तिः ॥ ५४ ॥

पदार्थानां भेदहेतवो जातिलक्षणदेशा भवन्ति, तत्र जात्या भेदो यथायं गौरयं महिष इति, जात्या तुल्ययोर्लक्षणेन भेदो यथायं गौः शुक्लोऽयमरुण इति, देशाद् यथा तुल्यपरिमाणयोरामलकयोर्भिन्नदेशावस्थितयोः; यत्र भेदो न ज्ञायते तत्रापि कृतसंयमस्य ज्ञानमुपजायते, उभयोर्भेदप्रतिपत्तिर्भवत्येव ॥ ५४ ॥

तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५५ ॥

उक्तसंयमबलादन्त्यभूमिकोत्पन्नं ज्ञानं संसारोत्तारणात् तारकमित्युच्यते, सर्वाणि महदादीनि विषया अस्येति सर्वविषयं तत्त्वानां स्थूलाद्यवस्थाविषयत्वात्, सर्वथाविषयम् अतीतादिविषयत्वात्, अक्रमं नाम भाव्यमिति विद्यमानत्वे पश्यति ॥ ५५ ॥

सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् ॥ ५६ ॥

इति पतञ्जलिसूत्रे तृतीयः पादः ॥ ३ ॥ * *

उक्तलक्षणयोः सत्त्वपुरुषयोः शुद्धिसाम्येऽपि सत्त्वस्य कर्तृत्वनिष्ठवृत्त्या स्वकारणे लयः पुरुषस्योपचरितभोगनिवृत्त्या कैवल्यं मोक्षो भवतीत्यर्थः ॥ ५६ ॥

इति श्रीपतञ्जलिसूत्रे योगशास्त्रे योगचन्द्रिकायां तृतीयः पादः ॥ ३ ॥

---

१—अन्यत्रानवच्छेदादिति भवदेवः, अन्यत्र जात्यादौ इति तदर्थात्।

केवल्याख्यं चतुर्थं पादमाह ।

## जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥

तत्र सिद्धीनामनेकजत्वं सूचयति, काश्चन जन्मत एव सिद्धयो यथा कपिलादीनाम्, औषधिसिद्धयः पारदादयः, मन्त्रसिद्धिराकाशगमनादिः, तपःसिद्धिर्विश्वामित्रादीनाम्, समाधिजाः प्राक् प्रतिपादिताः ॥ १ ॥

## जात्यन्तरपरिणामः प्रकृत्यापूरणात्[1] ॥ २ ॥

यो ह्यस्मिन् जन्मनि जात्यन्तरपरिणामः स प्रकृत्यापूरणात्, पाश्चात्यजन्मप्रकृतयो ह्यस्मिन् जन्मनि विकारानापूरयन्ति ॥ २ ॥

## निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥

निमित्तं धर्मादि तच्च प्रयोजकं प्रकृतीनां परिणामे, कुतस्तर्हि तस्य धर्मादिर्व्यापारस्तत्राह वरणभेदस्तु ततः क्षेत्रिकवत्, ततस्तस्मादनुष्ठीयमानाद्धर्मादेर्यद्वरणमावरकं धर्मादि तस्यैव विरोधित्वाद्भेदः क्षयः क्रियते, यथा क्षेत्रिकः कृषीवलः केदारात् केदारान्तरे जलानयनार्थं प्रतिबन्धावरणभेदमात्रं करोति तद्वत् ॥ ३ ॥

योगी अनेकशरीराणि युगपत् सृजतीत्याह ।

## निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥

योगिनः स्वयं निर्मितेषु यानि चित्तानि तानि मूलकारणात् अस्मितामात्रात् प्रसरन्ति, अग्नेर्विस्फुलिङ्गा इव ॥ ४ ॥

## प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥

चेतसां प्रवृत्तिभेदे व्यापारनानात्वे एकं योगिनश्चित्तं प्रयोजकमधिष्ठातृत्वेन न भिन्नं तत्त्वम् ॥ ५ ॥

जन्मप्रभवाच्चित्तात् समाधिप्रभवस्य वैलक्षण्यमाह ।

---

१ प्रकृत्यापूरादिति भाष्यभोजभवदेवभावागणेशादयः, तत्तद्व्याख्यासु तथा प्रतीकोपादानात् ।

तत्र ध्यानजमनाशयम् ॥ ६ ॥

ध्यानजं यच्चित्तं तत् पञ्चसु जन्मप्रभवचित्तेषु मध्ये॰ अनाशयं कर्मवासनारहितमित्यर्थः ॥ ६ ॥

कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥

शुभफलदं यागादि कर्म शुक्लम्, अशुभफलदं ब्रह्महत्यादि कृष्णम्, उभयसंकीर्णं शुक्लकृष्णम्. तत्र शुक्लं दानादिमताम्, कृष्णं नारकिकाणाम्, शुक्लकृष्णं मनुष्याणाम् । योगिनां संन्यासवताम्॰ अशुक्लाकृष्णम्, क्रियमाणं कर्म फलत्यागानुसंधानेनानुष्ठानाच्च किंचित् फलमारभते ॥ ७॥

तस्यैव कर्मणः फलमाह ।

ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥

द्विविधवासनामध्ये जात्यायुर्भोगफलाः पूर्वं कृतनिर्णयाः, यास्तु स्मृतिफलास्ततः कर्मणो यादृक् शरीरमारब्धं देवादि तस्य विपाकस्य या अनुगुणा अनुरूपा वासनास्तासामेव तस्मादभिव्यक्तिर्वासनानां भवति ॥८॥

आसां कार्यकारणभावानुपपत्तिं निराकरोति ।

जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥

इह कांचिद्योनिमनुभूय यदा योन्यन्तरसहस्रव्यवधानेन तामेव पुनर्योनिं प्रतिपद्यते तत्र या वासनाः प्रकटीभूता आसंस्तास्तथाविधव्यञ्जकाभावात् तिरोभूताः पुनस्तादृक्शरीरलाभे प्रकटीभवन्ति, जातिदेशकालव्यवधानेऽपि तासां स्वानुरूपस्मृत्यादिफलसाधने॰ आनन्तर्यं नैरन्तर्यम्, कुतः, स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥

वासनानां यदा प्रथममेवानुभवः, तदा किं सनिमित्त उत निर्निमित्त इति शङ्कामपनयति ।

तासामनादित्वमाशिषो[1]नित्यत्वात् ॥ १० ॥

तासां वासनानामनादित्वम्, न विद्यते॰ आदिर्यस्य तस्य भावस्तत्त्वम्, कुत इत्यत आह॰ आशिषो नित्यत्वात्, येयमाशीर्महामोहरूपा सुखसाधनं मे भूयान्न कदाचित् तेन वियोग इत्येवंरूपसंकल्पो वासनाकारणं तस्य नित्यत्वात् ॥ १० ॥

आसां हानोपायमाह ।

हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥ ११ ॥

वासनानामन्तरानुभवो हेतुस्तस्याप्यनुभवस्य रागादयस्तेषामविद्येति साक्षात् पारम्पर्येण च हेतुः, फलं शरीरादि, आश्रयो बुद्धिसत्त्वम्, आलम्बनं यदेवानुभवस्य, तैरनन्तानां वासनानामभावः ॥ ११ ॥

अतीतानागतं स्वरूपतोऽध्वभेदाद्धर्माणाम् ॥ १२ ॥

सतामभावासंभवादसतां चोत्पत्त्यभावात् तैर्धर्मैर्विपरिणममानो धर्मी॰ एकरूपः, धर्मास्त्वनेके, तस्माद् धर्माणामतीतानागताद्यध्वभेदः, तस्मादपवर्गपर्यन्तमेकमेव चित्तं धर्मि ॥ १२ ॥

ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥

त एते धर्मधर्मिणो व्यक्तसूक्ष्मसत्त्वादिगुणपरिणामरूपाः ॥ १३ ॥

धर्मैकत्वमाह ।

परिणामैकत्वाद्वस्तुतत्त्वम् ॥ १४ ॥

यद्यपि गुणास्त्रयस्तथापि तेषामङ्गाङ्गित्वाद्वस्तुनस्तत्त्वमेकत्वं यथेष्टम्, पृथिवीत्वादिवत् ॥ १४ ॥

वस्तुनो ज्ञानैकत्वे कथमेतदित्याह ।

वस्तुसाम्ये चित्तभेदात् तयोर्विविक्तः पन्थाः[2] ॥ १५ ॥

---

१ भाष्यभवदेवभावागणेशवृत्तिषु—त्वं चाशिषो॰ इति पाठः ।

२—विभक्तः पन्थाः इति भाष्यपाठः ।

तयोर्ज्ञानज्ञययोर्विविक्तः पन्थाः, कथम्, वस्तुसाम्ये चित्तभेदात्, स्त्र्यादिवस्त्वेकत्वे प्रमातृणां सुखादिनानारूपचित्तपरिणामत्वात् ॥ १५ ॥

कथं युगपत् सर्वानर्थान् गृह्णातीत्याशङ्क्य चित्तं परिहरति।

[1]तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ १६ ॥

तस्यार्थस्योपरागादाकारसमर्पणाच्चित्ते बाह्यवस्तु ज्ञातमज्ञातं च भवतीत्यर्थः ॥ १६ ॥

पुरुषस्य परिणामित्वमाशङ्क्य परिहरति।

सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणा-
मात् ॥ १७ ॥

याश्चित्तस्य वृत्तयस्तास्तत्प्रभोस्तस्य चित्तस्य ग्रहीतुः पुरुषस्य सदा सर्वकालमेव ज्ञेयाः, तस्य चिद्रूपतयापरिणामात् ॥ १७ ॥

ननु चित्तमेव स्वप्रकाशमस्तु किं ग्रहीत्रन्तरकल्पनेनेत्याशङ्क्य परिहरति।

न तत् स्वाभासं दृश्यत्वात् ॥ १८ ॥

तच्चित्तं स्वाभासं स्वप्रकाशकं न भवति किंतु पुरुषवेद्यम्, कुतः, दृश्यत्वात् ॥ १८ ॥

बुद्धेरसंवेदने रागादयो नोपपन्ना इत्याशङ्क्य निरसितुमाह।

एकसमये चोभयानवधारणम् ॥ १९ ॥

एकस्मिन् काले॰ उभयस्य स्वरूपस्य॰ अर्थस्य चावधारयितुमशक्य-त्वाच्चित्तं न स्वप्रकाशम् ॥ १९ ॥

तर्हि बुद्ध्यन्तरेणास्तु ग्रहणमित्याशङ्क्याह।

चित्तान्तरदृश्ये[2] बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसंकरश्च ॥ २० ॥

---

१ भाष्यभावागणेशवृत्त्योस्तु नचैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात्, इदं षोडशतमं सूत्रम्, ततः परं सप्तदशतमं तदुपरागदित्यादि सूत्रम्।

२ भावागणेशवृत्तौ चित्तान्तरग्राह्ये॰ इति पाठः, यदि चित्तं चित्तान्तरेण वृत्त्यन्तरेण ग्राह्यं स्यादिति तद्व्याख्यानात्।

यदि बुद्धिर्बुद्ध्यन्तरेण वेद्येत, तस्या अपि बुद्धित्वाद् बुद्ध्यन्तरमित्यनवस्थानात् तदर्थप्रत्यक्षं न स्यात्, स्मृतीनां रूपादिस्मृतीनां संकरश्च, किंविषयिणी स्मृतिरिति न ज्ञायेत ॥ २० ॥

सिद्धान्तमाह ।

चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २१ ॥

न विद्यते प्रतिसंक्रमोऽन्यत्र गमनं यस्याः सा॰ अप्रतिसंक्रमा तस्याश्चितेः पुरुषस्य सदैकरूपत्वात् संनिधौ बुद्धिस्तदाकारतामापद्यते चिच्छक्तिर्बुद्ध्यविशिष्टतया संपद्यते यदा तदा बुद्धेः स्वस्यात्मनो वेदनं भवतीत्यर्थः ॥ २१ ॥

द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २२ ॥

द्रष्टा पुरुषस्तेनोपरक्तं तदाकारतामिव प्राप्तं दृश्योपरक्तं विषयाकारपरिणामं यदा भवति तदा तदेव सर्वार्थग्रहणसमर्थं जायते ॥ २२ ॥

द्रष्टरि प्रमाणमाह ।

तदसंख्येयवासनाभिश्चित्रमपि[1] परार्थं संहत्य कारित्वात् ॥ २३ ॥

तदेव चित्तं संख्यातुमशक्याभिर्वासनाभिश्चित्रमपि नानारूपमपि परार्थं परस्य स्वामिनो भोक्तुर्भोगापवर्गलक्षणार्थं साधयति, कुतः, संभूय मिलित्वार्थक्रियाकारित्वात्, यथा गृहादिः ॥ २३ ॥

इदानीं कैवल्यं निर्णेतुं दश सूत्राणि ।

विशेषदर्शिन आत्मभावभावनानिवृत्तिः[2] ॥ २४ ॥

एवं सत्त्वपुरुषयोरन्यत्वे साधिते यस्तयोर्विशेषं पश्यति॰ अहमस्मा-

१ भवदेववृत्तौ तदसंख्येयं वासनाभिश्चित्तमपि इत्यादिः पाठः, तच्चित्तं वासनाभिरसंख्येयं संख्यातुमशक्यम्॰ इत्यादिः, किंच चित्तमपि संहत्य कारित्वाच्चक्षुरादिभिर्मिलित्वा कार्यं करोतीत्यादिश्च तत्रत्या हि वृत्तिः ।

२ विशेषदर्शिन्यात्मभावभावनानिवृत्तिः॰ इति भवदेववृत्तिमतः पाठः, एवं पूर्वोक्तप्रकारेण विशेषदर्शिनि॰ इति तत्रार्थात् क्वचिच्च भावशब्दो नास्त्येव ।

दन्य इत्येवंरूपम्, तस्य चित्ते॰ आत्मत्वभावना सा निवर्तते, चित्तमेव कर्तृ ज्ञातृ भोक्तृ॰ इत्यभिमानोऽनुवर्तते ॥ २४ ॥

तस्मिन् सति किं भवतीत्याह तदेति ।

तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २५ ॥

यदस्याज्ञाननिम्नं बहिर्मुखं विषयभोगफलं चित्तमासीत् तदिदानीं विवेकनिम्नं विवेकमार्गवर्त्यन्तर्मुखं कैवल्यप्राग्भारं कैवल्यफलं कैवल्यप्रारम्भं वा संपद्यत इति ॥ २५ ॥

यस्मिंश्च विवेकवाहिनि चित्ते येऽन्तरायाः प्रादुर्भवन्ति तेषां हेतुप्रतिपादनद्वारेण त्यागोपायमाह तच्छिद्रेष्विति ।

तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २६ ॥

तस्मिन् समाधौ स्थितस्य छिद्रेष्वन्तरालेषु यानि प्रत्ययान्तराणि व्युत्थानानुरूपाणि ज्ञानानि तानि प्राक्तनेभ्यो व्युत्थानानुभवनेभ्यः संस्कारेभ्योऽहं ममेत्येवंरूपाणि क्षीयमाणेभ्योऽपि प्रभवन्ति, अतः कारणोच्छित्तिद्वारेण तेषां हानं कर्तव्यमित्युक्तं भवतीति ॥ २६ ॥

हानोपायः पूर्वमेवोक्त इत्याह ।

हानमेषां क्लेशवदुक्तम् ॥ २७ ॥

यथा क्लेशानामविद्यादीनां हानं पूर्वमुक्तं तथा संस्काराणामपि कर्तव्यम्, यथा ते ज्ञानाग्निना प्लुष्टा दग्धबीजकल्पा न पुनश्चित्तभूमौ प्ररोहं लभन्ते तथा संस्कारा अपि ॥ २७ ॥

एवं प्रत्ययान्तरानुदयेन स्थिरीभूते समाधौ यादृशस्य योगिनः समाधिप्रकर्षप्राप्तिर्भवति तथाविधमुपायमाह ।

प्रसंख्यानेऽप्यकुसीदस्य[1] सर्वथा[2] विवेकख्यातेर्धर्ममेघः समाधिः ॥ २८ ॥

प्रसंख्यानं यावतां तत्त्वानां यथाक्रमं व्यवस्थितानां परस्परविलक्षणं स्वरूपपरिभावनं तस्मिन् सत्यकुसीदस्य फलमलिप्सोः प्रत्ययान्तराणाम-

१ तालव्यमध्यो दन्त्यमध्यश्च

२ भवदेववृत्तौ सर्वथेति नास्ति

नुदये सर्वप्रकारं विवेकख्यातेः परिशेषाद्धर्ममेघः समाधिर्भवति, प्रकृष्टम-शुक्लाकृष्णं धर्मं परपुरुषार्थसाधकं मेहति सिञ्चतीति धर्ममेघः, अनेन प्रकृष्टस्य धर्मस्यैव ज्ञानहेतुत्वमित्युपपादितं भवति ॥ २८ ॥

तस्माद्धर्ममेघात् किं भवतीत्याह तत इति ।

## ततः क्लेशकर्मनिवृत्तिः ॥ २९ ॥

क्लेशानामविद्यादीनामभिनिवेशान्तानां कर्मणां च शुक्लादिभेदेन त्रिविधानां ज्ञानोदयात् पूर्वपूर्वकारणनिवृत्त्या निवृत्तिर्भवतीत्यर्थः ॥ २९ ॥

निवृत्तेषु किं भवतीत्यत आह तदेति ।

## तदा सर्वावरणापेतस्य[1] ज्ञानस्यानन्त्याज्ज्ञे-यमल्पम् ॥ ३० ॥

आव्रियते चित्तमेभिरित्यावरणानि क्लेशाः, तेभ्योऽपेतस्य तद्विरहितस्य ज्ञानस्य शरद्गगनप्रतिमस्यानन्त्यादनवच्छेदाज्ज्ञेयमल्पं गणनास्पदं भवति, अक्लेशेनैव सर्वं जानातीत्यर्थः ॥ ३० ॥

ततः किमित्याह कृतार्थानामिति ।

## कृतार्थानां[2] परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३१ ॥

कृतो निष्पादितो भोगापवर्गलक्षणः पुरुषार्थो यैस्ते कृतार्था गुणाः सत्त्वरजस्तमांसि तेषां परिणाम आ पुरुषार्थसमाप्तेरानुलोम्येन प्रातिलोम्येन चाङ्गाङ्गिभावस्थितिलक्षणस्तस्य योऽसौ क्रमो वक्ष्यमाणस्तस्य परिसमाप्तिर्निष्ठा, न पुनरुद्भवतीत्यर्थः ॥ ३१ ॥

क्रमस्योक्तस्य लक्षणमाह ।

## क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३२ ॥

क्षणोऽल्पीयान् कालः, तस्य योऽसौ प्रतियोगी एकक्षणविलक्षणः, परिणामापरान्तनिर्ग्राह्यः· अनुभूतेषु क्षणेषु पश्चात् संकलनाबुद्ध्यैव यो गृह्यते स क्षणानां क्रम उच्यते, न ह्यननुभूतेषु क्षणेषु क्रमः परिज्ञातुं शक्यः ॥ ३२ ॥

इदानीं फलभूतस्य कैवल्यस्यासाधारणं स्वरूपमाह पुरुषार्थेति ।

---

१ सर्वावरणमलापेतस्येत्यन्यत्र पाठः ।

२ भाष्यभावागणेशवृत्त्यनुसारी 'ततः कृतार्थानाम्' इति पाठः, उभयत्र तत इत्यस्यार्थप्रतिपादनात् ।

पुरुषार्थशून्यानां गुणानां[1] प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३३ ॥

इति पतञ्जलिसूत्रे चतुर्थः पादः ॥ ४ ॥ :: :: ॥

समाप्तभोगापवर्गलक्षणपुरुषार्थानां गुणानां यः प्रतिप्रसवः प्रतिलोमपरिणामस्य समाप्तौ विकारानुद्भवः, यदि वा चितिशक्तेर्वृत्तिसारूप्यनिवृत्तौ स्वरूपमात्रेणावस्थानम्, तत् कैवल्यमुच्यते । न केवलमस्मद्दर्शने चेत्रज्ञः कैवल्यावस्थायामेवंभूतो दर्शनान्तरेष्वपि विमृष्यमाण एवंरूप एवावतिष्ठते, यस्मात् शास्त्रान्तरेऽप्येवमेव निश्चयस्तस्मादिदमेव युक्तम् । वृत्तिसारूप्यपरिहारेण स्वरूपप्रतिष्ठा चितिशक्तेः कैवल्यमिति । तदेवं सिद्धान्तरेभ्यो विलक्षणा सर्वसिद्धिमूलभूता समाधिसिद्धिः, सैव साधनीयेति ॥ ३३ ॥

सूत्रार्थवृत्तिमालोच्य कृतेयं पदचन्द्रिका[2] ।
अनन्तेनेश्वरप्रीत्यै चार्पिता शिवपादयोः ॥ १ ॥

इति श्रीपतञ्जलिकृते योगशास्त्रे योगचन्द्रिकायां चतुर्थः पादः ॥ ४॥

समाप्तश्चायं ग्रन्थः ॥ :: :: ॥

---

## ॥ अथ योगचन्द्रिकायाः ॥

### ॥ उपसंहारः ॥

श्रीभोजराजरचनाविदनन्तनाम्ना
तत्रत्यवल्गुवचनेषु कियद् गृहीत्वा ।
दृष्टान्तजातमपहाय विहाय वादं
सूत्रार्थमात्रविवृती रचितास येयम् ॥ १ ॥

---

१ बहुषु पुस्तकेषु गुणानामिति नोपलभ्यते तथापि तत्तद्व्याख्यासु सर्वत्रोपलम्भात्त तद्व्यतिरिक्तः पाठो मयोपन्यस्त इति । इयं विधान्यत्रापि पाठान्तरपरित्यागे संभावनीयेति ।

२ पदचन्द्रिकेति मुख्यं नाम, योगचन्द्रिकेति तु प्रसिद्ध्यनुसारात् पादान्तेषु तथालेखाच्च ।

विश्वंभरस्य कृपया परमेश्वरस्य
सेयं मया लघुतमेति धिया व्यमुद्रि ।
पश्येयुरच्छसुधियः सदसद्विवेके
दक्षास्ततो मम भवेत् सफलः प्रयासः ॥ २ ॥
तद्भोजराजभवदेवगणेशवृत्ती-
रालोच्य भाष्यभणितानि तथा विमृश्य ।
पाठान्तराणि विधृतानि मयाधिसूत्रं
यानि स्युरेव विदुषामुपकारकाणि ॥ ३ ॥
यादृक् पाठो येन पूर्वं गृहीत-
स्तादृक् पाठस्तस्य वर्यो विभाति ।
नैतन्न्याय्यं किंतु सिद्धान्त एष
व्याख्या पाठं वक्ति यं स प्रमाणम् ॥ ४ ॥
तस्माद् व्याख्यायां मयादर्शि यादृक्
तादृक् पाठः स्थापितो वित्त विज्ञाः ।
अस्मिन् भ्रान्तिश्चेन्मम स्यात् कदाचित्
क्षान्तिः कार्या शान्तिमद्भिर्भवद्भिः ॥ ५ ॥
सूत्रं भाष्यं नैव निर्णेतुमीशा
भाष्यं सूत्रं भ्रान्तितः केचिदूचुः ।
एतद् विज्ञैः पाठनिर्देशकाले
टिप्पण्या मे तत्र तत्रावधार्यम् ॥ ६ ॥
काशीस्थराजकीय-
प्रधानपाठालयीयसंख्यावान् ।
सांख्याध्यापनकारी
वेचनरामोऽस्म्यहं कान्यकुब्जः ॥ ७ ॥ * * ॥



# ॥ श्लोकवार्तिकम् ॥

अन्यरूपापि संवित्तिर्यद्यन्यविषयेष्यते ।
ज्ञानाकारापि संवित्तिः कस्मान्नार्थस्य कल्प्यते ॥ ७२ ॥
अभिन्नत्वं यदा वेष्टं ग्राह्यग्राहकवस्तुनोः ।
तदान्यतरसंवित्तौ द्व्याकारं ग्रहणं भवेत् ॥ ७३ ॥
यदा तु ग्राह्यमाकारं नीलादि प्रतिपद्यते ।
न तदा ग्राहकाकारा संवित्तिर्दृश्यते क्वचित् ॥ ७४ ॥
तस्मादभिन्नता चेत्स्यात्तस्याप्यनुभवो भवेत् ।
ग्राह्यो वा नानुभूयेत ग्राहकाननुभूतिवत् ॥ ७५ ॥
ग्राहकग्रहणे ऽप्येवं ग्राह्यसंवेदनं भवेत् ।
शुद्धमेव निराकारं ग्राहकं संविदन्ति हि ॥ ७६ ॥
ग्राह्यादभिन्नतायां च सा संवित्तिर्न युज्यते ।
ग्राहको वा न गृह्येत तद्ग्राह्याननुभूतिवत् ॥ ७७ ॥
यथावद् ग्राह्यसंवित्तौ ग्राहकग्रहणे ऽपि वा ।
ग्राह्यग्राहकसंवित्तिर्नास्त्येव स्याद्द्वयोरपि ॥ ७८ ॥
स बहिर्देशसंबिद्ध इत्यनेन निरूप्यते ।
ग्राह्याकारस्य संवित्तिर्ग्राहकानुभवादृते ॥ ७९ ॥
परं प्रति न साध्यत्वादर्थस्याकारसिद्धये ।
बहिर्द्देशेन संबन्धो न हेतुत्वाय कल्पते ॥ ८० ॥
तस्माद्बहिरितीहेदं निष्कृष्टं ग्राहकांशतः ।
संवेद्यं नीलपीतादि प्रत्यक्षादेरुदाहृतम ॥ ८१ ॥

विश्वंभरस्य कृपया परमेश्वरस्य
सेयं मया लघुतमेति धिया व्यमुद्रि।
पश्येयुरच्छसुधियः सदसद्विवेके
दक्षास्ततो मम भवेत् सफलः प्रयासः॥ २॥
तद्भोजराजभवदेवगणेशवृत्ती-
रालोच्य भाष्यभणितानि तथा विमृश्य।
पाठान्तराणि विधृतानि मयाधिसूत्रं
यानि स्युरेव विदुषामुपकारकाणि॥ ३॥
यादृक् पाठो येन पूर्वं गृहीत-
स्तादृक् पाठस्तस्य वर्यो विभाति।
नैतन्न्याय्यं किंतु सिद्धान्त एष
व्याख्या पाठं वक्ति यं स प्रमाणम्॥ ४॥
तस्माद् व्याख्यायां मयादर्शि यादृक्
तादृक् पाठः स्थापितो वित्त विज्ञाः।
अस्मिन् भ्रान्तिश्चेन्मम स्यात् कदाचित्
क्षान्तिः कार्या शान्तिमद्भिर्भवद्भिः॥ ५॥
सूत्रं भाष्यं नैव निर्णेतुमीशा
भाष्यं सूत्रं भ्रान्तितः केचिदूचुः।
एतद् विज्ञैः पाठनिर्देशकाले
टिप्पण्या मे तत्र तत्रावधार्यम्॥ ६॥
काशीस्थराजकीय-
प्रधानपाठालयीयसंख्यावान्।
सांख्याध्यापनकारी
श्रेत्नरामोऽस्म्यहं कान्यकुब्जः॥ ७॥ * *॥



न्यद्रूपापि संवित्तिर्यद्वान्यविषयेष्यते ।
नाकारापि संवित्तिः कस्मान्नार्थस्य कल्प्यते ॥ ७२
भिन्नत्वं यदा वेष्टं ग्राह्यग्राहकवस्तुनोः ।
दान्यतरसंवित्तौ ह्याकारं ग्रहणं भवेत् ॥ ७३ ॥
दा तु ग्राह्यमाकारं नीलादि प्रतिपद्यते ।
तदा ग्राहकाकारा संवित्तिर्दृश्यते क्वचित् ॥ ७४ ॥
स्मादभिन्नता चेत्स्यात्तस्याप्यनुभवो भवेत् ।
ह्यो वा नानुभूयेत ग्राहकाननुभूतिवत् ॥ ७५ ॥
हकग्रहणे ऽप्येवं ग्राह्यसंवेदनं भवेत् ।
द्रुमेव निराकारं ग्राहकं संविदन्ति हि ॥ ७६ ॥
ह्यादभिन्नतायां च सा संवित्तिर्न युज्यते ।
हको वा न गृह्येत तद्ग्राह्याननुभूतिवत् ॥ ७७ ॥
थावद् ग्राह्यसंवित्तौ ग्राहकग्रहणे ऽपि वा ।
ह्यग्राहकसंवित्तिर्नास्त्येव स्याद्द्वयोरपि ॥ ७८ ॥
बहिर्देशसंविद्ध इत्यनेन निरूप्यते ।
ह्याकारस्य संवित्तिर्ग्राहकानुभवादृते ॥ ७९ ॥
रं प्रति न साध्यत्वादर्थस्याकारसिद्धये ।
हिर्देशेन संबन्धो न हेतुत्वाय कल्पते ॥ ८० ॥
स्माद्बहिरितीहेदं निष्कृष्टं ग्राहकांशतः ।
वेद्यं नीलपीतादि प्रत्यक्षादेरुदाहृतम् ॥ ८१ ॥

न पूर्वं ज्ञायते बुद्धिरित्येवैतद्विहिष्यते ।
ग्राहकस्यैव संवित्तिर्लक्ष्यते ग्रहणे क्वचित् ॥ ८२ ॥
न स्मरामि मया को ऽपि गृहीतो ऽर्थस्तदेति हि ।
स्मरन्ति ग्राहकोत्पादग्राह्यरूपविवर्जितम् ॥ ८३ ॥
तस्मादभिन्नतायां च ग्राह्ये ऽपि स्मरणं भवेत् ।
ग्राहकत्वेन चैतस्य हीयेतैव द्विरूपता ॥ ८४ ॥
ग्राहके गृह्यमाणे च ग्राह्यमात्रप्रसञ्जनम् ।
न स्यादाकार एकश्चेदितरस्यापि नास्तिता ॥ ८५ ॥
उद्भवाभिवाभ्यां च ग्राह्याग्राह्यत्वदर्शनम् ।
यथा दीपप्रभादीनां रूपमात्रोपलम्भनम् ॥ ८६ ॥
दिवा चाग्नेः समीपस्थैः स्पर्शएवोपलभ्यते ।
गन्धवद्द्रव्यवृत्तौ च गन्धस्यैवोपलम्भनम् ॥ ८७ ॥
न गुणान्तरसंवित्तिर्यथाचाभिभवात्तथा ।
नाकारान्तरसंवित्तिर्ग्राह्यग्राहकबुद्धिषु ॥ ८८ ॥
ग्राह्यादनन्यभूतो ऽपि कश्चिन्नैवोपलभ्यते ।
नित्यानित्यादयो धर्माः शब्दादिग्रहणे यथा ॥ ८९
अभेदं वाभ्युपेत्यायं प्रसङ्गो यदि गीयते ।
एकस्मिन्गृह्यमाणांशे न गृह्येतापरः कथम् ॥ ९० ॥
तस्माद्यत्स्याद्यदा योग्यं तस्यैव ग्रहणं तदा ।
द्वयं च त्वदुपन्यस्तं शक्तिभावान्नगृह्यते ॥ ९१ ॥
कुतोयमेकवस्तुत्वे योग्यायोग्यत्वसंभवः ।
उद्भवाभिवात्मत्वं कथं चैकस्य कल्पितम् ॥ ९२
एकांशाभिभवे च स्यादितराभिभवो ऽपि ते ।
तथा तस्याभिभूतत्वाद् ग्राह्यत्वं न च युज्यते ।

अयोग्यता विकल्प्यैवं दृष्टान्ता ये ऽत्र कीर्तिताः ।
रूपादिभेदात्तच्च स्यादुद्भवाभिभवाद्यपि ॥ ९४ ॥
यदाप्येकान्ततो भेदो रूपादेर्न परस्परम् ।
तदापि द्रव्यरूपस्य परिणामस्तथा तथा ॥ ९५ ॥
अभिन्नत्वे ऽपि न ग्राह्यमिति यच्चाब्रवीद्भवान् ।
कृतकत्वादिधर्माणां धीभेदे ऽनन्यता कथम् ॥ ९६ ॥
न ह्यन्यत्प्रत्ययादस्ति भिन्नाग्राह्यस्य भेदकम् ।
न चेयत्तैव भेदस्य देशतो मूर्त्तितो ऽपि वा ९७ ॥
कारणानां हि संबन्धः कार्यैः कृतकतोच्यते ।
विभागो ऽवयवानां च भवेत्क्वचिदनित्यता ॥ ९८ ॥
बुद्ध्यादेरात्मरूपादि स्थानं नाशित्वमुच्यते ।
नित्यत्वं सर्वदा सत्ता वस्तुत्वं सैव कीर्त्यते ॥ ९९ ॥
प्रमाणज्ञानसंबन्धः प्रमेयज्ञेयतोच्यते ।
सर्वत्र चात्र भिन्नत्वमस्ति केन चिदात्मना ॥ १०० ॥
तस्माद्यथैव रूपादेर्दृशभेदादिभिर्विना ।
बुद्धिभेदेन भेदो ऽस्ति तथैवात्र प्रतीयताम् ॥ १०१ ॥
अत्यन्तभिन्नतास्माभिर्नैव कस्य चिदिष्यते ।
सर्वं हि वस्तुरूपेण भिद्यते न परस्परम् ॥ १०२ ॥
सर्वं च कृतकत्वादि क्रियाहेत्वाद्यपेक्षया ।
गृह्यते तदसंवित्तावभेदे ऽपि न गृह्यते ॥ १०३ ॥
ज्ञानेनैवं विधो भेदो नापेक्षान्यत्र विद्यते ।
परस्परेण चापेक्षा स्याच्चेत्सन्निहितश्च सः ॥ १०४ ॥
ननु ग्राहकमित्येवं ग्राह्यमित्यपि वा मतिः ।
नीलादिग्रहणे नास्तीत्यपेक्षा कथमुच्यते ॥ १०५ ॥

माभूदेवं तथाप्यत्र ह्याकारं ग्रहणं भवेत् ।
एवं चागृह्यमाणे वा ज्ञाने ह्याकारता कथम् ॥ १०६ ।
उत्तरोत्तरविज्ञानविशेषाद्या प्रकल्प्यते ।
ग्राहकाकारसंवित्तिः स्मरणाज्ज्ञानुमानिकी ॥ १०७ ॥
एकाकारं किल ज्ञानं प्रथमं यदि कल्प्यते ।
ततस्तद्विषयाप्यन्या तद्रूपैव मतिर्भवेत् ॥ १०८ ॥
घटविज्ञानतज्ज्ञानविशेषो ऽतो न सिद्ध्यति ।
ग्राहकाकारसंवित्तौ त्वाकारप्रचयो भवेत् ॥ १०९ ॥
जायते पूर्वविज्ञानं ह्याकारं तत्र यत्पुनः ।
तस्यात्मीयश्च पूर्वो च विषयस्यावुपप्लुतौ ॥ ११० ॥
परेष्वाकारवृद्धिर्वं पूर्वेभ्यो भिन्नता तथा ।
ग्राह्यवत्स्मरणात्पश्चात्संवित्तौ ग्राहकः पुरा ॥ १११ ॥
न तावदेवमाकारान्पश्यामः प्रचयान्वितान् ।
विषयव्यपदेशाच्च नर्ते ज्ञाननिरूपणम् ॥ ११२ ॥
तस्माद् ज्ञानात्मनेकत्वे ग्राह्यभेदनिबन्धनः ।
संवित्तिभेदः सिद्धो ऽत्र किमाकारान्तरेण नः ॥ ११३ ।
निराकारत्वसाम्ये ऽपि यथाकारवतां ध्रुवम् ।
भेदः स्वाभाविकस्तद्वदज्ञानानां किं न सिद्ध्यति ॥ ११
स्मृतेरुत्तरकालं चेतोन्मिथ्यैत्र गीयते ।
तदैव ह्यस्य संवित्तिरर्थापत्त्योपजायते ॥ ११५ ॥
गृहीतमेव यच्चोक्तं तदभेदान्न तद्यतः ।
नास्माभिर्वाक्यवृत्तेस्त्वं निमित्तमनुयुज्यसे ॥ ११६ ॥
ग्राह्यग्राहकतैवास्य केन चिन्नोपलभ्यते ।
प्रत्यक्षज्ञानपक्षे च नैषा स्यादानुमानिकी ॥ ११७ ॥

एकाकारे च विज्ञाने यद्यन्यो ऽप्यत्र कल्प्यते।
सहस्राकारतैकस्य कस्मान्न परिकल्प्यते ॥ ११८ ॥
ग्राह्यग्राहकयोर्भेदो नन्वस्त्येव परस्परम्।
सिद्धो नः पक्ष एवं स्यान्न ज्ञानत्वादभेदतः ॥ ११९ ॥
भिन्नाभिन्नत्वमेकस्य कुतो ऽत्र परिकल्पितम्।
त्वया सांख्यमतेनैवमुक्ता बुद्धस्य शासनम् ॥ १२० ॥
एकं चेद्ग्राहकं ग्राह्यं कुतो भिन्नत्ववागियम्।
भिन्नं चेत्कथमुच्येत तस्यैकत्वं पुनस्त्वया ॥ १२१ ॥
एकज्ञानादनन्यत्वाद्ग्राह्यग्राहकयोर्मिथः।
एकत्वे न भवेज्ज्ञानं ग्राह्यग्राहकमेव वा ॥ १२२ ॥
तत्र चान्यतरापाये द्वितीयापायतः पुनः।
ज्ञानस्यांशद्वयासत्त्वान्निःस्वाभाव्यादभावता ॥ १२३ ॥
भिन्नाभ्यां वाप्यभिन्नत्वाद्भेदो ज्ञानात्मनो भवेत्।
तत्स्वात्मनस्ततश्चैवं सिद्धं वस्तुद्वयं हि नः ॥ १२४ ॥
तयोश्च यदि संज्ञेयं ज्ञानमित्यस्त्वथापि वा।
ज्ञानं ज्ञायतइत्यर्थो धीर्भावे करणे ऽपि वा ॥ १२५ ॥
सर्वथा वस्तुभेदो नः सिद्धः शब्दो यथारुचि।
प्रवर्त्ततां न नस्तत्र का चिद्विप्रतिपन्नता ॥ १२६ ॥
अथ सत्यपि भिन्नत्वे ग्राह्यं ज्ञानान्तरं भवेत्।
ज्ञानत्वे तस्य का युक्तिः पूर्वोक्ता तस्य सेष्यते ॥ १२७ ॥
ज्ञानं ज्ञानमितीकं तु न द्वयोरनुवर्त्तते।
व्यतिरिक्तं च सामान्यं त्वया नाभ्युपगम्यते ॥ १२८ ॥
व्यतिरेके तयोर्ज्ञानान्न ज्ञानात्मकता भवेत्।
तद्रूपरहितत्वे च ज्ञानाभावः प्रसज्यते ॥ १२९ ॥

ताभ्यां च तस्य संबन्धे प्रत्येकं व्यतिषज्य च।
भेदे सावयवत्वादि दोषो वैशेषिकादिवत् ॥ १३० ॥
तथा हि तेषां जात्यादौ दोषाद्युक्ताः परैरमी।
यथैवैषां प्रसज्यन्ते भिन्नाभिन्नार्थसंगतौ ॥ १३१ ॥
तासामव्यतिरेके वा भेदः पूर्वोक्त एव ते।
सादृश्यापोहसामान्यकल्पना वारयिष्यते ॥ १३२ ॥
वस्त्वन्तरस्य चाभावात्त्वयापोहो ऽपि दुष्करः।
नाज्ञानं नाम किं चित्स्यादपोह्यं ज्ञानवादिनः ॥ १३३ ॥
अपोहो न ह्यभावस्य कथं चिदुपपद्यते।
वस्त्वन्तरमभावः स्यादपोह्यत्वाच्च वस्तुता ॥ १३४ ॥
तेनाज्ञाननिवृत्तौ हि ज्ञाने ऽन्यार्थः प्रसज्यते।
कल्पितं स्यादपोह्यं चेन्नात्यन्तासत्यकल्पना ॥ १३५ ॥
बुद्धिरज्ञाननिर्भासा तवाज्ञानं प्रकल्पितम्।
ततश्च ज्ञानमेवैकमपोह्यत्वेन संमतम् ॥ १३६ ॥
न चात्मापोह एवास्ति क्वचित्सामान्यकल्पने।
वृक्षस्य न पोह्यत्वं वृक्षेणैव कदाचन ॥ १३७ ॥
अपोह्ये चैव विज्ञाने ज्ञानत्वं न भवेत्तव।
वृक्षत्वं न ह्यपोह्येषु घटत्वादिषु युज्यते ॥ १३८ ॥
ततश्चाज्ञानमेवार्थ इत्यभिन्नार्थता भवेत्।
अज्ञानप्रत्ययश्चायं किमालम्बन इष्यते ॥ १३९ ॥
न तावज्ज्ञाननिर्मुक्तमज्ञानं ग्राह्यमस्ति ते।
न तु वस्तु निषिद्धं तदभावः किं न गृह्यते ॥ १४० ॥
भावो न गृह्यते येन तस्याभावेषु का कथा।
स्वांशमर्थवशानं च तुल्यमत्रापि कारणम् ॥ १४१ ॥

यत्प्रदीपप्रभाद्युक्तं सूक्ष्मः कालो ऽस्ति तत्र नः ।
दुर्लक्ष्यस्तु यथा वेधः पद्मपत्रशते तथा ॥ १५४ ॥
भागयोर्यौगपद्येन तथैव स्यान्निराक्रिया ।
न च शक्त्यर्पणद्वारं क्रमेणालम्बनं भवेत् ॥ १५५ ॥
ग्राह्यं तदाद्यतीतं स्यात्तादूप्यं चाप्रमाणकम् ।
अतीतत्वानुविद्धो हि स्मृत्या ग्राह्यो ऽनुभूयते ॥ १५६
तद्वदेव भवेत्तत्र स्वप्ने न स्याद्विपर्ययात् ।
तत्र ह्यवर्त्तमानो ऽपि गृह्यते वर्त्तमानवत् ॥ १५७ ॥
बाधज्ञानादिदं भ्रान्तं न त्वत्रैवं विपर्ययः ।
तस्मात्प्रत्यक्षबुद्धीनां नातीतो विषयो भवेत् ॥ १५८
अतीतत्वाद्यथैवासां वृत्तौ जन्मान्तरेषु यः ।
तद्रूपत्वेन वा ज्ञानं हेतुर्भाविवदुच्यते ॥ १५९ ॥
अतीतत्वेपि नार्थो ऽयं धीरेषेत्यत्र का प्रमा ।
अतीते यच्च विज्ञानं ग्राह्यत्वेन प्रकल्पितम् ॥ १६० ॥
तत्स्याद् ग्राहकरूपं वा ग्राह्यं चोभयथापि वा ।
ग्राह्याकारत्वमात्रे स्यादर्थः शब्दान्तरेण ते ॥ १६१ ॥
स्वकाले चाथ संवित्तेर्न स्याच्छक्त्यर्पणं ततः ।
यथैवागताज्ज्ञानात्स कृत्यन्तरजादपि ॥ १६२ ॥
दृढत्वेनाथ विज्ञातात्तथोत्पन्नाद्विनश्यतः ।
केवलग्राहत्वे तु विषयत्वं न युज्यते ॥ १६३ ॥
किमपेक्ष्य च तस्येदं ग्राहकत्वं प्रकल्पते ।
ह्याकारता निरस्तैव संवेद्येत तदेव च ॥ १६४ ॥
ततश्चोत्तरविज्ञानं न प्रतीयेत बोधकः ।
ह्याकारकल्पनायां च परस्यात्मांश एव ते ॥ १६५ ॥

प्रमापर्यवसानेन नातीतो विषयो भवेत् ।
पूर्वग्राह्यस्वरूपत्वे ग्राहकत्वं प्रहीयते ॥ १६६ ॥
ग्राहकाकारमात्रे स्याद्विषयो नासद्रूपत: ।
न च शक्त्यर्पणस्यात्र व्यापार उपलभ्यते ॥ १६७ ॥
शक्त्यर्पणस्य चाभावो युष्मत्पक्षे प्रसाधित: ।
संतानान्तरवच्चैषां निषेध्याद्धेतुसाध्यता ॥ १६८ ॥
वास्यवासकभावश्च ज्ञानत्वादेकसन्ततौ ।
तस्माद्यद्वासकं रूपं तद्ग्राह्यात्तस्य भिन्नता ॥ १६९ ॥
तत्संवित्तावसंवित्तेरसादिग्राहकं यथा ।
ग्राह्यं तद्ग्राहकाच्चैव तत्परामृषता यत: ॥ १७० ॥
न परामृश्यते ऽवश्यं रसादिग्राहकं यथा ।
द्वयं परस्परेणैवं भिन्नं साध्यं रसादिवत् ॥ १७१ ॥
ऐकरूप्येण विज्ञानात्सन्तानान्तरबुद्धिवत् ।
ज्ञानं स्वांशं न गृह्णाति ज्ञानोत्पत्ते: स्वशक्तिवत् ॥ १७२
ग्राह्यत्वं प्रतिषेधश्च द्वयहीना द्विवासना ।
चैत्रज्ञानं तदुद्भूतज्ञानांशग्राह्यबोधकम् ॥ १७३ ॥
ज्ञानत्वान्न भवेद्यद्वत्तस्य देहान्तरोद्भवम् ।
एतयैव दिशा वाच्या शक्तिद्वयनिराक्रिया ॥ १७४ ॥
प्रमाणान्तरसिद्धत्वादन्यत्रानेकशक्तिता ।
न त्वत्र कारणं तादृक् शक्तिभेदकृदस्ति ते ॥ १७५ ॥
तस्मादुभयसिद्धत्वाल्लाघवाद्यपरिग्रह: ।
उपायत्वाच्च यत्तस्य पूर्वग्रहणकल्पनम् ॥ १७६ ॥
चक्षुरादीन्द्रियैरत्र तदनैकान्तिकं भवेत् ।
यदप्यप्रतिबद्धत्वादुत्पत्तौ गृह्यतामिति ॥ १७७ ॥

तत्रात्मना न शक्यं तन्नान्योत्पत्तिस्तदस्ति वा ।
तेनैतत्कारणाभावात्तदानीं नानुभूयते ॥ १७८ ॥
नान्यथा ह्यर्थसद्भावो दृष्टः सन्नुपपद्यते ।
ज्ञाने चेन्नेत्यतः पश्चात्प्रमाणमुपजायते ॥ १७९ ॥
न चापि प्रतिबन्धेन केवलेनाग्रहो भवेत् ।
विशिष्टकारणाभावे ह्यर्थो नैवानुभूयते ॥ १८० ॥
व्यापृतं चार्थसंवित्तौ ज्ञानं चात्मानमृच्छति ।
तेन प्रकाशकत्वेऽपि बोधायान्यत्प्रतीयते ॥ १८१ ॥
ईदृशं वा प्रकाशत्वं तस्यार्थानुभवात्मकम् ।
न वात्मानुभवेऽस्त्यस्येत्यात्मनो न प्रकाशकम् ॥
सति प्रकाशकत्वे च व्यवस्था दृश्यते यथा ।
रूपादौ चक्षुरादीनां तथात्रापि भविष्यति ॥ १८३ ॥
प्रकाशकत्वं बाह्यार्थे शक्त्यभावात्तु नात्मनि ।
अन्येन वानुभावेऽसावनवस्था प्रसज्यते ॥ १८४ ॥
तत्र तत्र स्मृतिं दृष्ट्वा सर्वानुभवकल्पना ।
एकेन त्वनुभूतत्वे सर्वं तत्रैव संभवेत् ॥ १८५ ॥
स्मृतश्चापि तिरित्येतन्न लोकानुमतं वचः ।
न हि विज्ञानसन्तानं कश्चित्स्मरति लौकिकः ॥ १८६ ॥
घटादावगृहीतेऽर्थे यदि तावदनन्तरम् ।
अर्थापत्त्यावबुध्यन्ते विज्ञानानि पुनः पुनः ॥ १८७ ॥
यावत्क्रमं ततः पश्चात्तावत्येव स्मरिष्यति ।
तदा त्वकल्पिते ऽप्येवं स्मृतिर्वन्ध्यासुतादिवत् ॥ १८८ ॥
स्मृतिभ्रान्तिश्च याप्यत्र पश्चाज्ज्ञानेषु जायते ।
तदैवार्थस्मृतेरेषां तज्ज्ञानादिप्रमाणता ॥ १८९ ॥

यावच्छ्रमे च तद्बुद्धिस्तत्प्रबन्धेमहत्यपि ।
प्रमादृच्चान्यसंपर्काद्विच्छेदो विषयेष्विव ॥ १८० ॥
तत्रापि स्मृतिरित्येषा प्रथमे प्रत्यये यदि ।
तन्मात्रग्रहणादेवं नानवस्था प्रसज्यते ॥ १८१ ॥
स्मरणं त्वथ सर्वेषु तन्सिद्धौ ग्रहणं तथा ।
प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते ॥ १८२ ॥
अथ तान्याद्यविज्ञानविषयाणीति कल्प्यते ।
नोत्तरोत्तरबुद्धीनां विशेष उपपद्यते ॥ १८३ ॥
विज्ञानविषयत्वं च यस्य सर्वासु बुद्धिषु ।
घटविज्ञानतद्ज्ञानविशेषस्तेन दुर्लभः ॥ १८४ ॥
स्मरन्यथैव विज्ञानं निराकारं स्मरत्ययम् ।
तथा स्मरन्गृहीत्वार्थं निराकारतया स्मरेत् ॥ १८५ ॥
ज्ञानपृष्ठेन यो ऽप्यूर्द्ध्वं परामर्शो भवत्यसौ ।
तस्यार्थेष्वभ्युपायत्वान्न तु ग्राह्यत्वकारितः ॥ १८६ ॥
प्रत्यासन्नत्वसंबन्धौ ग्राह्यत्वासंभवाच्च्युतौ ।
विषयत्वेन वाप्येतौ स्तः किं देशाविभागतः ॥ १८७
अर्थाकारस्य यो ऽप्युक्तो मिथ्याज्ञानेष्वसंभवः ।
देशकालान्यथामात्रसंभवः केषु चित्कृतः ॥ १८८ ॥
प्रत्यक्षादन्यविज्ञानमतीतानागतैरपि ।
जन्यते ऽर्थैर्भवन्तीषु वासनास्वसतीषु वा ॥ १८९ ॥
यः पुनर्नानुभूतो ऽर्थो न वाप्यनुभविष्यते ।
वासनाभावतस्तत्र तवाप्यनुभवः कथम् ॥ २०० ॥
विनापि वासनातश्चेद्बुद्धिरुत्पद्यते ततः ।
वासनाया निमित्तत्वमभ्युपेतं विरुध्यते ॥ २०१ ॥

तचात्मना न ग्राह्य तन्नान्यात्पत्तिस्तदास्ति वा ।
तेनैतत्कारणाभावात्तदानीं नानुभूयते ॥ १७८ ॥
नान्यथा ह्यर्थसद्भावो दृष्टः सन्नुपपद्यते ।
ज्ञानं चेन्नेत्यतः पश्चात्प्रमाणमुपजायते ॥ १७९ ॥
न चापि प्रतिबन्धेन केवलेनाग्रहो भवेत् ।
विशिष्टकारणाभावे त्वर्थो नैवानुभूयते ॥ १८० ॥
व्यापृतं चार्थसंवित्तौ ज्ञानं चात्मानमृच्छति ।
तेन प्रकाशकत्वेपि बोधायान्यत्प्रतीयते ॥ १८१ ॥
ईदृशं वा प्रकाशत्वं तस्यार्थानुभवात्मकम् ।
न वात्मानुभवे ऽस्त्यस्येत्यात्मनो न प्रकाशकम् ॥ १८२ ॥
सति प्रकाशकत्वे च व्यवस्था दृश्यते यथा ।
रूपादौ चक्षुरादीनां तथात्रापि भविष्यति ॥ १८३ ॥
प्रकाशकत्वं बाह्यार्थे शक्त्यभावात्तु नात्मनि ।
अन्येन वानुभावेसावनवस्था प्रसज्यते ॥ १८४ ॥
तत्र तत्र स्मृतिं दृष्ट्वा सर्वानुभवकल्पना ।
एकेन त्वनुभूतत्वे सर्वं तत्रैव संभवेत् ॥ १८५ ॥
स्मृतश्चापि तिरित्येतन्न लोकानुमतं वचः ।
न हि विज्ञानसन्तानं कश्चित्स्मरति लौकिकः ॥ १८६ ॥
घटादावगृहीते ऽर्थे यदि तावदनन्तरम् ।
अर्थापत्त्यावबुध्यन्ते विज्ञानानि पुनः पुनः ॥ १८७ ॥
यावत्क्रमं ततः पश्चात्तावत्येव स्मरिष्यति ।
तदा त्वकल्पिते ऽप्येवं स्मृतिर्वन्ध्यासुतादिवत् ॥ १८८ ॥
स्मृतिभ्रान्तिश्च याप्यत्र पश्चाज्ज्ञानेषु जायते ।
तदेवार्थस्मृतेरेषां तज्ज्ञानादिप्रमाणता ॥ १८९ ॥

यावत्क्रमे च तद्बुद्धिस्तत्प्रबन्धेमहत्यपि ।
प्रमादाद्वान्यसंपर्काद्विच्छेदो विषयेष्विव ॥ १६० ॥
तत्रापि स्मृतिरित्येषा प्रथमे प्रत्यये यदि ।
तन्मात्रग्रहणादेवं नानवस्था प्रसज्यते ॥ १६१ ॥
स्मरणं त्वथ सर्वेषु तत्सिद्धौ ग्रहणं तथा ।
प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते ॥ १६२ ॥
अथ तान्याद्यविज्ञानविषयाणीति कल्प्यते ।
नोत्तरोत्तरबुद्धीनां विशेष उपपद्यते ॥ १६३ ॥
विज्ञानविषयत्वं च यस्य सर्वासु बुद्धिषु ।
घटविज्ञानतद्ज्ञानविशेषस्तेन दुर्लभः ॥ १६४ ॥
स्मरन्यथैव विज्ञानं निराकारं स्मरत्ययम् ।
तथा स्मरन्गृहीत्वार्थं निराकारतया स्मरेत् ॥ १६५ ॥
ज्ञानपृष्ठेन यो ऽप्यूर्ध्वं परामर्शो भवत्यसौ ।
तस्यार्थेष्वभ्युपायत्वान्न तु ग्राह्यत्वकारितः ॥ १६६ ॥
प्रत्यासन्नत्वसंबन्धो ग्राह्यत्वासंभवाच्च्युतौ ।
विषयत्वेन वाप्येतौ स्तः किं देशाविभागतः ॥ १६७ ॥
अर्थाकारस्य यो ऽप्युक्तो मिथ्याज्ञानेष्वसंभवः ।
देशकालान्यथामात्रसंभवः केषु चित्कृतः ॥ १६८ ॥
प्रत्यक्षादन्यविज्ञानमतीतानागतैरपि ।
जन्यते ऽर्थैर्भवन्तीषु वासनास्वसतीषु वा ॥ १६९ ॥
यः पुनर्नानुभूतो ऽर्थो न वाप्यनुभविष्यते ।
वासनाभावतस्तत्र तवाप्यनुभवः कथम् ॥ २०० ॥
विनापि वासनातश्चेद्बुद्धिरुत्पद्यते ततः ।
वासनाया निमित्तत्वमभ्युपेतं विरुध्यते ॥ २०१ ॥

वासना चेद्भवेत्तत्र सा च संवित्तिपूर्विका ।
तथा सति च पूर्वत्र गृहीतः क्काप्यसौ ध्रुवम् ॥ २०२ ॥
एवं च नैव वक्तव्यमत्यन्ताभावनं क्वचित् ।
अन्यथानुपपत्त्या हि सिद्धा जन्मान्तरेऽस्तिता ॥ २०३ ॥
दुष्टत्वेन च विज्ञानमन्यथापि व्यवस्थितम् ।
पृथिव्यादिषु गृह्णीयादाकारं तन्निबन्धनम् ॥ २०४ ॥
तानपास्य तु नैवार्थे क्वचिदाकारकल्पना ।
न ज्ञानं ह्यनवष्टम्भमात्मानं लब्धुमर्हति ॥ २०५ ॥
विज्ञानस्यैव वा कार्ये यद्दोषोऽन्ये च कल्पिताः ।
विशेषः कोऽत्र येनायमत्यन्तासन्निर्तीष्यते ॥ २०६ ॥
तस्माद् भ्रान्तिरपि त्वेषां कल्पयत्यर्थमेव नः ।
कल्पयत्यन्यथा सन्तं न त्वात्मानं व्यवस्यति ॥ २०७ ॥
ततश्च बाधकज्ञानाद्वाचोयुक्तिरियं भवेत् ।
अर्थेऽन्यथापि सत्येष धिया ऽऽकारः प्रतीयते ॥
द्विचन्द्रादिष्वपि त्वेवं तारकादिमतौ तथा ।
स्त्रीत्वाद्यन्यत्र दृष्टं स्यात्कथं चिद्वेह संभवेत् ॥ २०९ ॥
शब्दमात्रप्रतीत्या वा दृष्टैर्वा कैश्चिदङ्गनात् ।
संस्त्यानप्रसवस्थानैर्यथा पातञ्जले मते ॥ २१० ॥
तेन लिङ्गत्रयस्यात्र सद्भावः स्यात्प्रमाणवान् ।
अपेक्षाभेदतश्चात्र विरोधोऽपि न विद्यते ॥ २१
कुणपादिमतौ चैवं सार्वरूप्येऽव्यवस्थिते ।
वासनाः सहकारिण्यो व्यवस्थाकारदर्शने ॥ २१२
स्वप्रत्ययानुकारो हि बह्वाकारेषु वस्तुषु ।
निर्धारणे भवेद्धेतुर्नापूर्वाकारकल्पने ॥ ११३ ॥

तथा दीर्घघटत्वादौ भिन्नापेक्षानिबन्धना ।
आकारभेदसंपत्तिरविरुद्धा भविष्यति ॥ २१४ ॥
नानेकाकारसंवित्तेर्निराकारत्वकल्पना ।
युक्ता प्रतीतिभेदात्तु बह्वाकारत्वसंभवः ॥ २१५ ॥
संवित्तेश्चाविरुद्धानामेकस्मिन्नाप्यसंभवः ।
एकाकारं भवेदेकमिति नेश्वरभाषितम् ॥ २१६ ॥
तथापि तदुपेतव्यं स्यादेकत्वं च वस्तुनः ।
न चाप्यैकान्तिकं तस्य यद्यथैवोपलभ्यते ॥ २१७ ॥
तस्माद्देशादिसद्भावनिमित्तैः प्रत्ययैः पृथक् ।
वस्त्वाकाराः प्रतीयेरन्नुद्भवामिवात्मकाः ॥ २१८ ॥
युगपद्ग्राहकाणां च यो यदाकारवाचिनम् ।
शब्दं स्मरति तेनासावाकारः संप्रतीयते ॥ २१९ ॥
नित्यं सत्सु तथा लोके रूपादिषु घटे पृथक् ।
चक्षुराद्यनुरोधेन संवित्तिर्व्यवतिष्ठते ॥ २२० ॥
एवमेव घटत्वादौ सर्वान्प्रति भवत्यपि ।
वाचकस्मृतिभेदेन संवित्तिर्व्यवतिष्ठते ॥ २२१ ॥
तस्माद्बहिः स्थितो ऽप्यात्मा नराणां चक्षुरादिभिः ।
प्राप्य वा ऽप्राप्य वा बुद्धेर्विषयत्वेन कल्प्यते ॥ २२२ ॥
वदन्ति लौकिका यच्च यादृग् ज्ञानं तथा बहिः ।
ते पुनर्ज्ञानसंवित्त्या तथार्थं प्रति जायते ॥ २२३ ॥
ग्राहकत्वेन विज्ञानं यथार्थं नः समर्पयेत् ।
तादृगर्थः स इत्येवं तेषां वा ऋजूपायतः ॥ २२४ ॥
लैङ्गिकासत्त्वमप्राप्तैरेतैर्बाह्यार्थवादिभिः ।
ज्ञानानुभवमुक्रम्य बाह्य एव प्रतीयते ॥ २२५ ॥

वासना चेद्भवेत्तत्र सा च संवित्तिपूर्विका ।
तथा सति च पूर्वत्र गृहीतः क्वाप्यसौ ध्रुवम् ॥ २०२ ॥
एवं च नैव वक्तव्यमत्यन्ताभावनं क्वचित् ।
अन्यथानुपपत्त्या हि सिद्धा जन्मान्तरे ऽस्तिता ॥ २०३ ॥
दृष्टत्वेन च विज्ञानमन्यथापि व्यवस्थितम् ।
पृथिव्यादिषु गृह्णीयादाकारं तन्निबन्धनम् ॥ २०४ ॥
तानपास्य तु नैवार्थं क्वचिदाकारकल्पना ।
न ज्ञानं ह्यनवष्टम्भमात्मानं लब्धुमर्हति ॥ २०५ ॥
विज्ञानस्यैव वा कार्यं यद्येषो ऽन्ये च कल्पिताः ।
विशेषः को ऽत्र येनायमत्यन्तासन्निती्ष्यते ॥ २०६ ॥
तस्माद् भ्रान्तिरपि त्वेषां कल्पयत्यर्थमेव नः ।
कल्पयत्यन्यथा सन्तं न त्वात्मानं व्यवस्यति ॥ २०७ ॥
ततश्च बाधकज्ञानाद्वाचोयुक्तिरियं भवेत् ।
अर्थे ऽन्यथापि सत्येष धिया ऽऽकारः प्रतीयते ॥ २०८ ॥
द्विचन्द्रादिष्वपि त्वेवं तारकादिमतौ तथा ।
स्त्रीत्वाद्यन्यत्र दृष्टं स्यात्कथं चिद्रेह संभवेत् ॥ २०९ ॥
शब्दमात्रप्रतीत्या वा दृष्टैर्वा कैश्चिदिङ्गनात् ।
संस्त्यानप्रसवस्थानैर्यथा पातञ्जले मते ॥ २१० ॥
तेन लिङ्गत्रयस्यात्र सद्भावः स्यात्प्रमाणवान् ।
अपेक्षाभेदतश्चात्र विरोधो ऽपि न विद्यते ॥ २११ ॥
कुणपादिमतौ चैवं सार्वरूप्येव्यवस्थिते ।
वासनाः सहकारिण्यो व्यवस्थाकारदर्शने ॥ २१२ ॥
स्वप्रत्ययानुकारो हि बह्वाकारेषु वस्तुषु ।
निर्धार्यो भवेद्धेतुर्नापूर्वाकारकल्पने ॥ ११३ ॥

तथा दीर्घघटत्वादौ भिन्नापेक्षानिबन्धना ।
आकारभेदसंपत्तिरविरुद्धा भविष्यति ॥ २१४ ॥
नानेकाकारसंवित्तेर्निराकारत्वकल्पना ।
युक्ता प्रतीतिभेदात्तु बह्वाकारत्वसंभवः ॥ २१५ ॥
संवित्तेश्चाविरुद्धानामेकस्मिन्नाप्यसंभवः ।
एकाकारं भवेदेकमिति नेश्वरभाषितम् ॥ २१६ ॥
तथापि तदुपेतव्यं स्यादेकत्वं च वस्तुनः ।
न चाप्यैकान्तिकं तस्य यद्यथैवोपलभ्यते ॥ २१७ ।
तस्माद्देशादिसद्भावनिमित्तैः प्रत्ययैः पृथक् ।
वस्त्वाकाराः प्रतीयेरन्नुद्भवाभिवात्मकाः ॥ २१८ ॥
युगपद्ग्राहकाणां च यो यदाकारवाचिनम् ।
शब्दं स्मरति तेनासावाकारः संप्रतीयते ॥ २१९ ।
नित्यं सत्सु तथा लोके रूपादिषु घटे पृथक् ।
चक्षुराद्यनुरोधेन संवित्तिर्व्यवतिष्ठते ॥ २२० ॥
एवमेव घटत्वादौ सर्वान्प्रति भवत्यपि ।
वाचकस्मृतिभेदेन संवित्तिर्व्यवतिष्ठते ॥ २२१ ॥
तस्माद्बहिः स्थितो ऽप्यात्मा नराणां चक्षुरादिभिः ।
प्राप्य वा ऽप्राप्य वा बुद्धेर्विषयत्वेन कल्प्यते ॥ २२२ ।
वदन्ति लौकिका यच्च यादृग् ज्ञानं तथा बहिः ।
ते पुनर्ज्ञानसंवित्त्या तथार्थं प्रति जायते ॥ २२३ ॥
ग्राहकत्वेन विज्ञानं यथार्थे नः समर्पयेत् ।
तादृगर्थः स इत्येवं तेषां वा ऋजूपायतः ॥ २२४ ॥
लैङ्गिकासत्त्वमप्राप्तैरेतैर्बाह्यार्थवादिभिः ।
ज्ञानानुभवमुत्क्रम्य बाह्य एव प्रतीयते ॥ २२५ ॥

[illegible] सिद्धवत् कृत्वा यज्जगतो जन्माद्युपादाननिमित्तकारणं तद्ब्रह्मेति मिथ्याभूतेनापि प्रपञ्चजन्मादिकारणत्वेन यद्रजतमित्यभात् सा शुक्तिरितिवद्ब्रह्माद्वितीयानन्तशब्दानां च स्वार्थप्रक्षेपेण द्वितीयं जगत्कारणं ब्रह्मेत्युपलक्ष्य पुनस्तस्य मायाविशिष्टस्य कारणत्वात् तथैव ब्रह्मत्वे प्राप्ते सत्यानन्दादिविशेषलक्षणोपादानेन विशुद्धं ब्रह्म लक्ष्यत इत्युभयलक्षणेन जिज्ञास्यब्रह्मनिर्णयो दर्शितः, तदुक्तं भाष्ये, “तस्य च निर्णयवाक्यमानन्दाद्ध्येवे”ति ॥ २ ॥

## शास्त्रयोनित्वात् ॥ ३ ॥

प्रमाणान्तरेणार्थमुपलभ्य तत्र वाक्यरचनायां वेदस्य पौरुषेयत्वात्तादनित्येष्टसाधनज्ञानजन्यानित्यरागकार्यतया तद्रागलक्षणविधिविषयस्य शब्दस्य लोके पौरुषेयतयाप्रामाण्यम्, ब्रह्मणस्तु कृत्स्नवेदार्थलक्षेष्टसाधनज्ञानस्य नित्यत्वादिष्टसाधनविषयरागस्यापि नित्यतया तत्कार्यस्य शब्दस्य नित्यरागलक्षणविधिविषयस्य सत्यपि पौरुषेयत्वे प्रामाण्यमिति विभागकरणे प्रमाणाभावात् कृत्स्नेष्टसाधनविषयनित्यज्ञानस्यासिद्धेः सर्वज्ञत्वेऽसिद्धत्वाद्रागो नित्य इति विप्रतिषेधाच्च रागतात्पर्यस्य शब्दस्य पौरुषेयतयाप्रामाण्यम्, वेदस्तु विधितात्पर्यवत्तया पूर्वसिद्धो ब्रह्मणाभिव्यज्यते, पूर्वसिद्धवक्तृरागतात्पर्यवतो महाभारतस्य वाचकत्वमिति विभागकरणेऽपि प्रमाणान्तरेण वेदार्थमुपलभ्य रचनायां विधिरागतात्पर्यविभागासिद्धेरुपाध्यायवद्रचनायां तु सर्वज्ञत्वासिद्धेः शास्त्रजन्यज्ञानविशिष्टे संवेदनानां ब्रह्मचैतन्यतया सर्वज्ञत्वे प्रमाणान्तरजन्यसंवेदने[illegible]शब्दोपादानकारणत्वमात्रेण सर्वज्ञत्वासिद्धेर्न ब्रह्म शास्त्रयोनित्वात् सर्वज्ञमिति प्राप्तम् । तत्र यथा प्रदीपस्य प्रकाशनसामर्थ्यं [illegible]कारणस्याग्नेरपि तथाविधसामर्थ्यपूर्वकं दृष्टम्, एवं सर्वशब्दानां [illegible]पादनसामर्थ्यं तदुपादानस्य ब्रह्मणोऽपि सर्वार्थप्रकाशनसामर्थ्यपूर्वकमित्यनुमाय तच्चार्थप्रकाशनसामर्थ्यं प्रकाशद्रव्यस्य साधनान्तरनिरपेक्षस्य स्वसंनिहितार्थप्रकाशवत्तयैव व्याप्तम्, प्रदीपादिष्विति [illegible] ब्रह्मणोऽपि सर्वार्थप्रकाशसमर्थस्य पूर्वाधिकरणसिद्धज्ञानस्वलक्षण[illegible]

तया प्रकाशद्रव्यस्यात एव साधनान्तरनिरपेक्षतया स्वसंनिहितार्थप्रकाशनसमर्थस्य सर्वगततया स्वसंनिहितसर्ववस्तुप्रकाशवत्तापि नित्यमेव भवतीत्यनुमानेन सर्वार्थप्रकाशनसमर्थसर्वशब्दोपादानस्य ब्रह्मणः सर्वज्ञत्वं समर्थ्यते, तदुक्तम्, "तस्यैव ज्ञानशक्तिविवर्तत्वा"दिति ॥ ३ ॥

## तत् तु समन्वयात् ॥ ४ ॥

यद्यपि प्रमाणान्तरानुरोधित्वाल्लौकिकस्य शब्दस्य भूतेऽप्यर्थे प्रयोगतात्पर्यं संभवति तथापि वैदिकस्य वाक्यस्य भूतार्थतात्पर्याभावाद् भूतार्थस्य प्रमाणान्तरयोग्यतया तत्संवादविसंवादाभ्यां समन्वयस्य भूतार्थे प्रामाण्याद्विधिव्यवधानेनैव भूतस्याप्यर्थस्य यूपाहवनीयादिवत् सिद्धेः कार्यान्विते शब्दसामर्थ्याच्च न ब्रह्मणि कार्यनिरपेक्षे वेदान्ताश्च प्रमाणमिति प्राप्तम् । तत्रोपक्रमोसंहारानुसंधानं मध्येऽप्यभ्यस्यमानता मानान्तरेणानधिगतार्थत्वं विशिष्टफलसंबन्धोऽर्थवादोपादानमुक्तार्थस्य युक्तिभिरुपपादनमिति षड्विधानि तात्पर्यलिङ्गानि यस्य वाक्यस्य यस्मिन्नर्थे प्रतीयन्ते तद्वाक्यं तदर्थप्रमितिशेषं लौकिकं वैदिकं वा विधिवाक्येषु तथा दर्शनादिति न्यायेन वेदान्तानामपि षड्विधतात्पर्यलिङ्गवतां ब्रह्मप्रमितिशेषत्वं साध्यते, अधिकरणे पुनस्तादर्थ्येन ब्रह्मणः प्रमाणान्तरायोग्यत्वात् समन्वयस्य प्रमाणान्तरसंवादविसंवादाशङ्कां प्रमाणान्तरयोग्यस्य च तदनुत्पादे विषयाभावात् समन्वयस्य मिथ्यात्वशङ्कां च निराकृत्य ब्रह्मण्यनिरपेक्षं प्रामाण्यं समन्वयस्य दर्शितं प्रथमेन वर्णकेन । द्वितीयेन तु वर्णकेन विधेयाभावात् कर्तरि वा जीवे कर्मणि वा ब्रह्मणि विधेयक्रियाफलस्यातिशयस्य नित्यस्य मोक्षस्यानुपपत्तेर्ब्रह्मणि च प्रमाणाभावप्रसङ्गादित्येवमादिभिर्हेतुभिः समन्वयस्य विधिवाक्यव्यवधानमन्तरेण प्रामाण्यमुक्तम् । पुनश्च वर्णकद्वयार्थसिद्ध्यर्थं पदानां गवादिस्वरूपमात्रनिष्ठत्वे पदार्थानामेव परस्परसंसर्गप्रतिपादनसामर्थ्यं कल्पनागौरवात् पदानामेव संसर्गप्रतिपादनसामर्थ्यकल्पनालाघवात् संसर्गविषयप्रवृत्त्या च वृद्धस्य संसर्गविषयज्ञानसामर्थ्यानुमानादावापोद्वारयोरप्यन्वितस्वार्थस्य

व्यभिचाराद् देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्याद्यतीतानागतवर्तमानार्थवाक्येषु निगमनिरुक्तनिघण्टुव्याकरणोपदेशेषु च कार्यप्रत्ययशून्येषु प्रसिद्धार्थपदसमभिव्याहारेण परिशेषादप्रसिद्धार्थपदपदार्थसंबन्धग्रहणात् तत्राप्यन्वितस्वार्थाव्यभिचारात् कार्यान्वितस्वार्थ इति विशेषणादन्वितस्वार्थग्रहणस्य लाघवात् कार्यस्य कार्यान्तराभावाद् भावार्थकार्यत्वस्य नियोगनिमित्तान्विताभिधाननिमित्तत्वात् स्वरूपेण भूतत्वाद् गुणद्रव्यादिपदार्थानां च कार्येण क्रियाकारकान्वययोग्यत्वाभावाच्छेषशेष्यन्वयस्वर्गादिफलेनैव शेषिणा सर्वपदार्थानामन्वयप्रसङ्गाल्लौकिकव्यवहारादिसंवादिभूतनिष्ठवाक्यानामप्रामाण्यस्य कार्यपदाध्याहारस्य वा प्रतिवाक्यं पुरुषबुद्धिनिष्ठत्वे वार्थे सामर्थ्याभावस्य वा प्रसङ्गादव्यभिचारात् कार्यान्वयनियमे प्रमाणान्तरप्रमितकार्यान्वयप्रसङ्गा“दाग्नेयोऽष्टाकपाल” इत्यादिसंसर्गप्रमित्या नियोगाध्याहारप्रसङ्गाच्च पदानामन्वितस्वार्थे सामर्थ्यमित्युक्तम् ॥ ४ ॥

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

अत्र शब्दस्य गौणमुख्यार्थप्रत्यययोर्मुख्यार्थप्रत्ययो युक्तो बुद्धिलाघवादिति न्यायेनेक्षत्यात्मसर्वज्ञादिशब्दानां जगत्कारणविषयाणामनुमानादिप्रमाणान्तरानुसारेण प्रधानादौ गौणीं वृत्तिमपबाध्य मुख्यार्थोपपादनेन चेतने ब्रह्मण्येव जगत्कारणे समन्वयो न प्रधानादावित्युक्तम्। पुनस्तत्रिवृत्पि प्रकृतिप्रत्ययार्थयोर्विरोधे प्रत्ययार्थस्य प्रकृत्यर्थसापेक्षस्यैव परित्यागेन निरपेक्षप्रकृत्यर्थोपादानं युक्तं प्रत्ययलाघवादिति न्यायेन “तदैक्षत”, “स ईक्षत” इत्यादिकमुपचरितार्थं कर्तृप्रत्ययमुपादाय चित्तवृत्तिविशेषितस्य [illegible] वा स्वभावसिद्धचैतन्यप्रकाशस्य जानातिधात्वर्थत्वेन [illegible] सर्वज्ञादिशब्दैर्दर्शितमित्युक्तम्। अथवा धात्वर्थाश्रयत्वमेव [illegible] न तन्निर्वर्तकत्वं सविता प्रकाशत इत्यादिदर्शनादिति [illegible] कारणमिति दर्शितं [illegible] भावात् ॥ ५ ॥

आनन्दमयोऽभ्यासात् ॥ ६ ॥

अत्रैकस्मिन् वाक्ये प्रथमचरमश्रुतशब्दयोः परस्परविरुद्धार्थत्वे तात्पर्ये च तुल्ये प्रथमश्रुतानुसारेण चरमश्रुतं नेतव्यम्। प्रथमश्रुतस्यासंजातविरोधितया मुख्यार्थबुद्धिहेतुत्वाच्चरमश्रुतस्योत्पत्तिसमये बाध्यमानत्वादिति न्यायेन पुच्छशब्दानुसारेण कृत्स्नवाक्यस्यानन्दमयोपासनाशेषत्वं बाधित्वा स्वप्रधानमान्त्रवर्णिकब्रह्माभिधायिब्रह्मशब्दानुसारेण पुच्छशब्दमुपाचरितार्थमादायानन्दमयवाक्यं पुच्छब्रह्मपरं न स्वप्रधानमित्युक्तम्। पुनस्तत्सिद्ध्यर्थमेकस्या अपि श्रुतेः श्रुतिर्लिङ्गप्रकरणानि बलवन्तीति न्यायेन "मयड्वे"ति सूत्रेण मयटो विकारेऽपि श्रुतत्वाद्विकारप्रकरणादुत्त्कमानप्रियाद्यवयवैरुप्यमानावयविन आनन्दमयस्य मयटो विकारार्थत्वे लिङ्गत्वादिति श्रुतिलिङ्गप्रकरणैर्मयटः प्राचुर्यार्थत्वं निराकृतम्। अत्रेदमुत्तरसकलशास्त्रार्थन्यायावगत्यर्थमुच्यते। 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्'। श्रुतिः पदान्तरनिरपेक्षः शब्दः, श्रुतसामर्थ्यमर्थान्तरेणाविनाभावलक्षणं लिङ्गम्, तच्च श्रुतिमपेक्षते, अर्थनिर्णयेऽनेकपदसामर्थ्यं वाक्यम्, तच्च श्रुत्यभिहितं श्रुतसामर्थ्यप्राप्तं चार्थमपेक्ष्य मुख्यलक्षणाभ्यां विशिष्टसंबन्धं प्रतिपादयतीति द्वयमपेक्षते, अन्यतराकाङ्क्षयेतरेतराकाङ्क्षया वा वाक्यद्वयसामर्थ्यमारभ्याधीतविषयं प्रकरणम्, तच्च वाक्यद्वयसामर्थ्यं श्रुतार्थं श्रुतसामर्थ्यप्राप्तमनेकपदसामर्थ्यप्रमितं वापेक्ष्य महावाक्यार्थं प्रतिपादयति, क्रमसंनिविष्टानां क्रमसंनिविष्टैर्यथाक्रमं संबन्धः स्थानम्, तच्च वाक्यद्वयसामर्थ्यं क्रमद्वयप्रतिपादकमपेक्षते, संबन्धप्रतिपादने वाक्यान्तरप्रतिपन्नस्य वाक्यान्तरप्रतिपन्नेनार्थेन संबन्धनिमित्तं संज्ञासामर्थ्यं समाख्या, तच्च पूर्वं सर्वमपेक्षते, एतानि प्रमाणानि यथासंभवमुत्तरेषूदाहरणेष्ववगन्तव्यानि। न चैतेषां श्रुत्यादीनां प्रत्यक्षादिवत् स्वसत्तयैव प्रामाण्यमिष्यते, आगमभेदत्वात्, आगमप्रामाण्यस्य तात्पर्याधीनत्वात्, अतः पूर्वस्मादपि प्रमाणादुत्तरं फलादिसंबन्धितया तात्पर्यवच्चेदुत्तरेण तात्पर्यवता पूर्वमपि तात्पर्यहीनं बाध्यत इति तत्र तत्रावगन्तव्यम्, न चेह ब्रह्मलिङ्गानामर्थवादलिङ्गवद्व्याख्यान-

रसव्यपेक्षत्वम्, सर्वत्र ब्रह्मणः प्रतिपिपादयिषितत्वात् तल्लिङ्गानां तात्पर्यवत्त्वात् स्वातन्त्र्येण प्रामाण्यस्योपपत्तेः, अर्थवादगतानां तु तात्पर्यहीनत्वान्न्यायान्तरसापेक्षत्वमिति विशेषः ॥ ६ ॥

अन्तस्तद्धर्मोपदेशात् ॥ ७ ॥

अत्र प्रथमश्रुतादपि लिङ्गादविवक्षिताच्चरमश्रुतमपि प्रयोजनवल्लिङ्गं बलीयस्तात्पर्याधीनत्वात् प्रामाण्यस्येति न्यायेन प्रयोजनवत्सर्वपाप्मोदयस्य ब्रह्माविनाभावलिङ्गस्यानुसारेण सामान्यप्रवृत्तां कर्मनिमित्तशरीरग्रहणश्रुतिमीश्वरविषयेऽपबाध्य कर्माभावेऽपि रूपवत्त्वं ब्रह्मपरतया नीतम् ॥ ७ ॥

आकाशस्तल्लिङ्गात् ॥ ८ ॥

अत्र प्रथमश्रुताया अपि श्रुतेश्चरमश्रुतमपि प्रतिपिपादयिषितं लिङ्गं तात्पर्याद्बलीयो"ऽग्निरधीतेऽनुवाक"मित्यत्र दर्शनादिति न्यायेन समस्तजगत्प्रकृतित्वावधारणाभ्यामुपबृंहितमन्तवत्त्वदोषपरिहारेण प्रतिपिपादयिषितम्। "स एषोऽनन्त" इति श्रुतमानन्त्यं स्वसामर्थ्यादविनाभावादाकाशश्रुतिमपोह्य ब्रह्माकाशशब्दार्थतया समर्पयतीत्युक्तम्। तत्सिद्ध्यर्थं भूतशब्दस्य प्राणिनिकाये महाभूतेषु च रूढस्यान्यतरोपादाने कारणशून्यस्य वाक्यार्थनिर्णायकत्वे प्राप्ते बालाक्यधिकरणन्यायेन भवन्तीति भूतानीति वृत्त्यन्तरमाश्रित्य कार्यमात्रपरत्वमुक्तम् ॥ ८ ॥

अत एव प्राणः ॥ ९ ॥

अत्र च तेनैव न्यायेन जगत्प्रकृतित्वावधारणोपबृंहितं प्रतिपिपादयिषितदेवताशब्दाभिहितं चेतनत्व स्वाविनाभूतं ब्रह्म प्राणशब्दाभिधेयतया समर्पयतीति समर्थितम् ॥ ९ ॥

ज्योतिश्चरणाभिधानात् ॥ १० ॥

अत्र यच्छब्दस्य द्युसंबन्धलिङ्गोपस्थापितं प्रकृतं ब्रह्माभिधेयत्वेन समर्प्यतां किंवा ज्योतिःश्रुत्युपस्थापितज्योतिरेवाभिधेयत्वेन समर्प्यतामिति संशये प्रकृतमपि ज्योतिःशब्दस्य श्रुतित्वात् तदुपस्थापितं ज्योतिर्बलीयो

लिङ्गोपस्थापितात् प्रकृताद्ब्रह्मणस्तथापि ज्योतिषि यच्छब्दार्थे प्रमाणान्तरमन्वेषणीयम् । ब्रह्म तु त्रिपाच्छ्रुतिप्रमाणेनैव प्रकृतमुपासनायां विनियोगसाकाङ्क्षं च, अतश्च श्रुत्युपस्थापितविजातीयप्रमाणसाकाङ्क्षज्योतिरभिधानाद्वरं लिङ्गोपस्थापितसंनिहिततरश्रुतिप्रमाणसिद्धैकवाक्यतासाकाङ्क्षब्रह्माभिधानम् । यच्छब्दस्य बुद्ध्यात्तिपलाघवादेकवाक्यतासापेक्षत्वादागमस्येति न्यायेन यच्छब्दस्य ब्रह्माभिधेयमुक्तम् । पुनश्च प्रमाणान्तरनिश्चितेऽर्थे बुद्धौ संनिहितेऽर्थान्तराभिधानमपि तत्र प्रयुज्यमानं तत्परतयैव प्रयुज्यते । यथा ज्योतिष्टोमे प्रकृते बुद्धौ संनिहिते वसन्ते "वसन्ते ज्योतिषा यजेते"ति ज्योतिःशब्दवदिति न्यायेन यच्छब्देन संनिहिते ब्रह्मणि प्रयुज्यमानो ज्योतिःशब्दो ब्रह्मपर इति न्यायद्वयमत्र दर्शितम् । 'छन्दोऽभिधानान्नेति चे'दित्यत्र श्रुत्यादिषु प्रथमैकप्रमाणादुत्तरानेकप्रमाणं बलवत् । प्रत्ययसंवादस्य तात्पर्यनिमित्तत्वादिति न्यायेन भूतादिपादलिङ्गात् 'तावानस्ये'ति मन्त्रलिङ्गाद् "यद्वैतद् ब्रह्मेदं वाव त"दिति वाक्याच्च गायत्री ब्रह्मेति निर्णीता ॥ १० ॥

## प्राणस्तथानुगमात् ॥ ११ ॥

अत्रैकस्मिन्नर्थप्रतिपादनपरे वाक्ये ब्रह्माब्रह्मलिङ्गेषु संनिहितेष्वब्रह्मलिङ्गानि ब्रह्मपरतया निर्णेतव्यानि, न तु ब्रह्मलिङ्गान्यब्रह्मपरतया नेयानि । कारणस्य कार्याकारेण व्यवस्थितस्य कार्यधर्मेणापि संबन्धात् कार्यस्य परिच्छिन्नस्य कार्यान्तरेष्वपि वर्तमानेन कारणधर्मेण संबन्धाभावादिति न्यायेन प्राणजीवदेवतात्मलिङ्गानि ब्रह्मपरतया निर्णीतानि । अत्रेदमप्यवगन्तव्यम् । "यथैन्द्र्या गार्हपत्यमुपतिष्ठत" इति श्रुत्या मन्त्रस्येन्द्रप्रतिपादनसामर्थ्यलक्षणं लिङ्गं बाधित्वा गार्हपत्यपरत्वमुपपाद्यते न तथेह श्रुत्यादीनामन्यतमेन प्रमाणेनान्यतमस्यात्यन्तबाधः क्रियते किंतु कथंचित् स्वार्थमपरित्यज्यैव ब्रह्मपरतया तस्यापि वृत्तिराश्रीयत इति ॥११॥

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥ * * ॥

## सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

प्रयोजनवदर्थशून्याल्लिङ्गात् प्रयोजनवत् प्रकरणमन्यतराकाङ्क्षयेतरेतराकाङ्क्षया चैकवाक्यतासमर्थं बलवत् तात्पर्यवत्त्वादिति न्यायेन "मनोमयः प्राणशरीर" इति वाक्येन विशेष्यसाकाङ्क्षेण शमविधिशेषतया निराकाङ्क्षमपि ब्रह्म सर्वैरुपास्यत्वेनाभिलषितप्रयोजनवत्तयाभिलषितत्वादन्यतराकाङ्क्षया संबध्यते । मनोमयत्वादिलिङ्गोपस्थापितं प्रयोजनशून्यं जीवं बाधित्वेत्ययं न्यायोऽस्मिन्नधिकरणे साध्यते । कथं पुनर्लिङ्गस्य प्रयोजनवदर्थशून्यत्वमिति? । उच्यते । मनोमयप्राणशरीरधर्माभ्यां न तावदुपासनार्थं जीवो लिङ्ग्यते, एकेनापि धर्मेण तत्सिद्धेरितरधर्मवैयर्थ्यप्रसङ्गात्, नाप्यपूर्ववस्तुप्रतिपत्तये प्रमाणान्तरैरेव तदुभयधर्मविशिष्टस्य जीवस्य नित्यमुपास्यमानत्वादिति निष्प्रयोजनता जीवलिङ्गस्य । अथवा "स क्रतुं कुर्वीत" इत्यस्य वाक्यशेषगतो जीवः सत्रन्यायेन कर्मत्वेनोपादीयतां किंवा विश्वजिन्न्यायेन सर्वाभिलषितं ब्रह्म कर्मत्वेनोपादीयतामिति विशये[1] यद्यपि सत्रन्यायेन वाक्यशेषगतं वस्तुस्वरूपमुपजीव्य तस्य कर्मतामात्रमपूर्वमादीयत इति लघीयसी कल्पना । विश्वजिन्न्यायेन तु सर्वाभिलषितब्रह्मस्वरूपं तस्य साध्यता चेत्युभयमादेयमिति गरीयसी कल्पना । तथापि प्रयोजनशून्यात् सत्रन्यायात् प्रयोजनवान् विश्वजिन्न्यायो बलवान् तात्पर्याभिप्रेतत्वादागमस्येति न्यायेन सर्वाभिलषितं ब्रह्म विश्वजिन्न्यायेनोपादीयत इति न्यायद्वयमुक्तम् ॥ १ ॥

## अत्ता चराचरग्रहणात् ॥ २ ॥

[illegible] अत्र प्रसिद्धादर्थादर्थान्तरे प्रसिद्धार्थगुणलेशेन प्रयुज्यमानः शब्दः संनिहितपदार्थानुसारेण गुणमादत्ते । तेनैकवाक्यतासामर्थ्यादिति न्या[illegible]न ब्रह्मक्षत्रयोर्वर्तमानेन मृत्यूपसेचनसंनिधानात् प्रसिद्धौदनतो विनाश्यत्वगुणोऽवलम्ब्यते । तथा ब्रह्मक्षत्रशब्दाभ्यामपि तत्संनिधानाद्विनाश्यवस्तुमात्रं लक्ष्यत इति कृत्स्नस्य विनाशलिङ्गाद्ब्रह्मात्र सम[illegible]

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ३ ॥

संख्याश्रवणे सत्येकस्मिन् संप्रतिपन्ने द्वितीयाकाङ्क्षायां संप्रतिपन्नजातिमुपजीव्य विशेषपरिग्रहे बुद्धिलाघवाद्विजातीये जातिव्यक्तिबुद्धिद्वयापेक्षत्वात् संप्रतिपन्नसमानजातीयाकाङ्क्षैव युक्ता । अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्यादिषु दर्शनादिति न्यायेन बुद्धिजीवसामान्यस्य कारकत्वस्य बहिरङ्गत्वाच्चेतनत्वस्य स्वभावतयान्तरङ्गत्वात् संप्रतिपन्नजीवसजातीयः परमात्मोपादीयत इत्युक्तम् ॥ ३ ॥

## अन्तर उपपत्तेः ॥ ४ ॥

"एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मे"ति वाक्यमितिशब्दशिरस्कत्वा"न्मनो ब्रह्मे"ति वाक्यवदविवक्षितार्थमित्यङ्गीकृत्य न्यायः प्रदर्श्यते, वाक्योपक्रमगतादप्येकस्माल्लिङ्गाद्वाक्यशेषगतानि बहूनि लिङ्गानि बलवन्ति, प्रत्ययसंवादस्य तात्पर्यनिमित्तत्वादिति न्यायेन वामनीत्वादिलिङ्गानुसारेण छायात्मनि लिङ्गमुच्चोतं बाध्यत इत्युक्तम् । अथच इतिशब्दोऽपि क्वचिदर्थविवक्षां वाक्यस्य बाधित्वा प्रत्ययपरो भवति । यत्र प्रत्ययो विवक्ष्यते "मनो ब्रह्मे"त्यादौ क्वचिदर्थपरो भवतीत्युक्तार्थावच्छेदेन वचनसंबन्धे 'यथेति ह स्मोपाध्यायः कथयती'त्यत्र पुनरिति होवाचेति वचनसंबन्धादुक्तार्थावच्छेदेनार्थपरत्वमेव सिध्यतीति श्रुतिलिङ्गाभ्यां केवलस्य छायात्मलिङ्गस्य बाधो दर्शितः । 'सुखविशिष्टाभिधानादेव च' अत्र "य एषोऽक्षिणी"ति यच्छब्दस्य लिङ्गोपस्थापितच्छायात्माभिधेयः किंवा प्रकरणोपस्थापितं ब्रह्मेति विशये यद्यपि लिङ्गोपस्थापितं बलीयस्तथापि गत्यभिधानपरिशेषात् पूर्वस्योत्तरेणैकवाक्यताकाङ्क्षायां सत्यां साकाङ्क्षं प्रकरणमेव बलवदेकवाक्यत्वविच्छेदकाल्लिङ्गात् संभवत्येकवाक्यत्व इति न्यायेन प्रकृतं ब्रह्म यच्छब्दाभिधेयतया समर्थितम् ॥ ४ ॥

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ ५ ॥

अस्मिन्नधिकरणे सर्वविषयं नियन्तृत्वं वाक्योपक्रमोपसंहाराभ्यामैक्यस्यैवेति सिद्धम्, तच्च सर्वविषयं नियन्तृत्वं दहराद्युपासनासिद्धस्या-

प्यस्तीत्यङ्गीकृत्येदमुच्यते, क्वचिच्छ्रूयमाणेन धर्मेण धर्म्युपादाने यस्यासौ धर्मः साधनसाध्यः स उपादेयः किंवा यस्यासौ नित्यसिद्धः स उपादेय इति विशये यस्य साधनसाध्यस्तस्योपादाने साधनान्तरप्रतिपत्तिपूर्वमेव स उपादेय इति बुद्धिगौरवं स्यात्, नित्यसिद्धस्योपादाने धर्मेण धर्मिमात्रप्रतिपत्तिरेव स्यान्न साधनान्तरप्रतिपत्तिरिति बुद्धिलाघवमित्यनेन न्यायेन सर्वनियन्तृत्वेन ब्रह्मैवोपादीयत इत्युक्तम् ॥ ५ ॥

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ ६ ॥

द्वयोः साधारणस्य प्रमाणस्यान्यतरस्मिन् नियामकाकाङ्क्षायामविवक्षितश्रुतिप्रत्यभिज्ञानेनान्यतरस्मिन् नियमनाद्वरं विवक्षितलिङ्गप्रत्यभिज्ञानेनान्यतरस्मिन् नियमनं तात्पर्यवत्त्वादिति न्यायेन भूतयोनिवाक्यगतस्य ब्रह्मप्रधानयोः साधारणलिङ्गस्या"क्षरात् परतः पर" इति भूतयोन्यक्षरशब्दमात्रप्रत्यभिज्ञानेन ब्रह्मणोऽर्वाचीने प्रधाने नियमनं प्राप्तम्, तद्बाधित्वैकविज्ञानेन सर्वविज्ञानाय प्रतिपिपादयिषितसर्वजगत्प्रकृतित्वप्रत्यभिज्ञानेन भूतयोनिगतमदृश्यत्वादिलिङ्गं सर्वज्ञब्रह्मपरतया नियमितम् । अथवा"क्षरात् परतः पर" इति भूतयोनौ प्रधानेऽप्यक्षरशब्दे न प्रत्यभिज्ञास्ति, येना"क्षरं पुरुषं वेद सत्य"मिति चेतनेऽपि भूतयोन्यक्षरं प्रत्यभिज्ञायते । द्वयोश्च शब्दप्रत्यभिज्ञयोस्तुल्ययोः सर्वज्ञभूतयोन्यैकत्वलिङ्गेन जगत्प्रकृतित्वप्रत्यभिज्ञानेन भूतयोनिर्ब्रह्मेति नियम्यत इति न्यायद्वयमुक्तम् ॥ ६ ॥

## वैश्वानरः साधारणशब्दविशेषात् ॥ ७ ॥

वाक्योपक्रमगतेऽनेकार्थसाधारणे श्रुतिप्रमाणे वाक्यशेषगतेनासाधारणलिङ्गेनान्यतरस्मिन्नर्थे नियमः शक्यते कर्तुमिति न्यायेनात्मवैश्वानरशब्दयोर्जाठरभूताग्निदेवताजीवपरमात्मवाचकतया तुल्यवृत्तित्वेनान्यतमार्थानिश्चायकयोराहवनीयहोमाधारत्वादिकल्पनामात्रलिङ्गाभासेनाग्नौ नियमनं बाधित्वा ब्रह्मासाधारणेन त्रैलोक्यात्मकशरीरलिङ्गेनात्मवैश्वानरशब्दौ ब्रह्मपरतया निर्णीतौ, विप्रतिपन्नयोः संप्रतिपन्नेन निर्णयो युक्त इति ॥ ७ ॥

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥ * * ॥

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

उपक्रमगतस्याप्यनेकार्थसाधारणलिङ्गस्यानिर्णायकत्वाद्वाक्यशेषगतलिङ्गेनान्यतमनिर्णयं बाधित्वा विशेषश्रुत्यान्यतमनिर्णयो युक्त इति न्यायेन जगदाधारत्वस्य प्रधानब्रह्मादिसाधारणस्य सेतुशब्दलिङ्गात् प्रधानादौ नियमं बाधित्वात्मश्रुत्या ब्रह्मपरतया नियमः कृतः । तथा सेतुशब्देन प्रसिद्धादर्थादर्थान्तरे प्रयुज्यमानेन प्रसिद्धार्थगुणलेशोऽवलम्बितव्यस्तत्त्वर्थाम्यधिकरणन्यायेन नित्यसिद्धाविनाभूतपारवत्त्वमेवोपादेयं न कादाचित्कं विधरणत्वमिति प्राप्ते शब्दैकदेशार्थविधरणलक्षणैव न्याय्या नात्यन्तबहिरर्थपारवत्त्वलक्षणा, एकदेशमुख्यार्थलाभेन बुद्धिसंनिकर्षादिति न्यायेन विधरणत्वमेवोपादाय ब्रह्मपरता निर्णीता ॥ १ ॥

## भूमा संप्रसादादध्युपदेशात् ॥ २ ॥

प्रकरणलिङ्गाभ्यां संभूय प्रतिपादकाभ्यां वाक्यश्रुतिसंभूयप्रतिपादके बलीयस्याविति न्यायेन प्राणस्य प्रकरणमतिवादित्वलिङ्गं भूयः प्रश्नप्रतिवचनाभावलिङ्गं च संभूय प्राणानुगमनप्रतिपादकं बाधित्वा "एष तु वा अतिवदति" "यः सत्येनातिवदती"ति वाक्यश्रुतिभ्यामतिवादित्वनिमित्तं सत्यशब्दवाच्यं प्रस्तावितम्, तस्मिन् प्रस्ताविते भूमशब्दस्य धर्म्याकाङ्क्षायां "सत्यं ब्रह्मे"ति प्रकरणाद्भूमेति निर्णीतम् । अथवा संनिहितप्रकरणादपि निराकाङ्क्षाद्वाक्योपक्रमगतप्रकरणप्रतिज्ञातस्यात्मनः प्रतिपादनं सापेक्षमेकवाक्यतासामर्थ्याद्बलीय इति न्यायेन "तरति शोकमात्मवि"दित्युपक्रान्तं ब्रह्मोपसंहारगतेन भूमशब्देनोपादीयत इति ॥ २ ॥

## अक्षरमम्बरान्तधृतेः ॥ ३ ॥

केवलाया रूढेर्विवक्षितलिङ्गानुगृहीता योगवृत्तिर्बलीयसी तात्पर्यवत्त्वादिति न्यायेन प्रश्नप्रतिवचनाभ्यां प्रतिपादिताकाशान्तजगदाधारत्वविवक्षितलिङ्गेनाक्षरशब्दस्य ब्रह्मणि योगवृत्तिराश्रिता ॥ ३ ॥

## ईक्षतिकर्मव्यपदेशात् सः ॥ ४ ॥

यद्यपि लिङ्गात् प्रकरणानुगृहीताच्छ्रुतिप्रत्यभिज्ञा दुर्बला प्रत्यभिज्ञायाश्च लिङ्गं बलवद् बहुबुद्धिव्यपेतत्वात् तथाप्युपसंहारेणैकवाक्यतासमर्थप्रकरणानुगृहीता श्रुतिप्रत्यभिज्ञा बलीयसी बलवत्प्रमाणत्वादिति न्यायेनापरब्रह्मोपस्थापकं कार्यब्रह्मप्राप्तिफललिङ्गं तत्प्रकरणानुगृहीतं बाधित्वा परपुरुषशब्दप्रत्यभिज्ञानादेकवाक्यतासाकाङ्क्षपरब्रह्मप्रकरणाच्च ध्यायतिकर्म परमात्मेति निर्णीतम्, अपरब्रह्म तु हेयतयोपन्यस्तमिति ॥ ४ ॥

## दहर उत्तरेभ्यः ॥ ५ ॥

उपक्रमश्रुताया अपि श्रुतेर्लिङ्गानुगृहीतोपसंहारश्रुतिर्बलीयसी प्रत्ययसंवादादिति न्यायेनापहतपाप्मादिलिङ्गानुगृहीतात्मश्रुतिबलेनाकाशश्रुतिर्ब्रह्मपरतया निर्णीता। तथा प्रकृतिप्रत्ययार्थयोः परस्परविरोधेन प्रत्ययार्थस्य प्रकृत्यर्थसापेक्षत्वात् प्रकृत्यर्थस्य तन्निरपेक्षत्वान्निरपेक्षमुपादेयं सापेक्षं विहायेति न्यायेन ब्रह्मणः पुरमित्यत्र स्वस्वामिसंबन्धप्रतिपादकसापेक्षषष्ठ्यर्थं विहाय निरपेक्षब्रह्मशब्दस्य मुख्यार्थोपादानेन जीवपरता निरस्ता। तथा सति भेदे सादृश्ये चोपमानोपमेयभाव इति न्यायेन भूताकाशेनोपमीयमानो दहराकाशो न भूताकाश इत्युक्तम्। उत्तराच्चेदिति लिङ्गस्य श्रुतिलिङ्गाभ्यां बाधो युक्तः प्राबल्यादिति न्यायेनावस्थात्रयसंबन्धलक्षणं जीवलिङ्गं बाधित्वा "एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मे"ति श्रुतिलिङ्गाभ्यां वाक्यस्य ब्रह्मपरता नीता ॥ ५ ॥

## अनुकृतेस्तस्य च ॥ ६ ॥

श्रुतार्थपरित्यागाश्रुतार्थोपादानरूपाच्छब्दस्य लक्षणावृत्तिपरिग्रहाच्छ्रुताश्रुतार्थाध्याहारकल्पना लाघवादिति न्यायेन तत्रेति सतिसप्तमीपक्षे सूर्यादयो न भान्तीति वर्तमानतायाः प्रमाणान्तरविरोधान्न भान्तीत्यागामिलक्षणां विहाय कर्मणि सप्तमीपरिग्रहेण न भासयन्तीति णिजर्थमध्याहृत्य यत् सूर्यादिभिरभास्यमानं सूर्यादीनां च भासकं तद्ब्रह्मेति निर्णीतम् ॥ ६ ॥

## शब्दादेव प्रमितः ॥ ७ ॥

लौकिकात् सामान्यतो दृष्टानुमानात् तात्पर्यवद्वाक्यं बलीयो वाक्यगोचरविषयादन्यत्रैव प्राप्तेः सावकाशत्वादिति न्यायेन तत्त्वमस्यादितादात्म्यप्रतिपादकवाक्येनानेकपदार्थसामर्थ्यलक्षणेन परस्परविरुद्धस्वभावयोर्जीवब्रह्मणोरैक्यं नास्ति तमःप्रकाशयोरिवेत्याद्यनुमानं बाधित्वा विरुद्धांशपरित्यागेनाविरुद्धांशलक्षणया चैकत्वं प्रतिपादितम्। अथवा जीवब्रह्मणोरप्रत्यक्षयोर्भेदोऽप्यप्रत्यक्षः अप्रत्यक्षस्य भेदस्य[1] प्रत्यक्षत्वमङ्गीकृत्येदमुच्यते, संभावितदोषात् प्रत्यक्षादसंभावितदोषं तात्पर्यवद्वाक्यप्रमाणं बलीयः, दूरवर्तितया संभावितदोषसर्पप्रत्यक्षात् समीपवर्तितयासंभावितदोषाप्तवाक्यस्य तात्पर्यवतः प्राबल्यदर्शनादिति न्यायेन जीवब्रह्मणोर्भेदप्रत्यक्षं बाधित्वैक्यमुक्तम्। अथवानूद्यमानगतधर्मस्य प्रतिपाद्यमानगतधर्मविरोधे सति स एव बाध्यः, प्रतिपाद्यमानस्य तात्पर्यवत्त्वादिति न्यायेनाङ्गुष्ठपरिमाणबाधया ईशानत्वं जीवस्योपपादितम् ॥ ७ ॥

## तदुपर्यपि बादरायणः संभवात् ॥ ८ ॥

ब्रह्मविद्या तदङ्गविधयो न देवादीनधिकुर्वन्ति वैदिकविधित्वादग्निहोत्रविधिवत्, न देवादयो जन्मान्तराधीतवेदानुस्मर्तारः, जन्ममरणाभ्यां व्यवहितत्वादस्मदादिवत्, इति तेषामनधिकारः प्राप्तः, तत्र न्यायानुगृहीतमर्थवादलिङ्गं सामान्यतो दृष्टानुमानाद्बलीयो व्याप्तेर्लिङ्गविषयादन्यत्रैव सङ्कोचोपपत्तेरिति न्यायेनार्थित्वादिसंपन्नस्य फलवति प्रवृत्तिरस्मदादिवत् स्वाभाविकीति न्यायेन मनुष्यशरीरमारभ्यार्वाचीनस्थूलशरीरहीनानां प्रेतपिशाचादीनां बालादिष्वनुप्रविष्टानां जन्मान्तराधीतवेदानुस्मरणेनोच्चारणादिदर्शनाद्देवादीनामपि जन्मान्तराधीतवेदानुस्मरणं संभवतीति च न्यायानुगृहीतेन "तद्यो यो देवाना प्रत्यबुध्यत" इत्यादिब्रह्मविद्यासंबन्धलिङ्गेनानुमानद्वयं बाधित्वा देवादीनां ब्रह्मविद्यातदङ्गविधिष्वधिकारो दर्शितः। चिन्तायाः प्रयोजनं "परात् परं पुरि शयं पुरुषमीक्षते" इत्यादिसम्यग्ज्ञानोत्पत्तिद्वारेण क्रममुक्तिफलोपासनानुष्ठानं

१—भेदोऽप्यप्रत्यक्षोऽप्रत्यक्षस्य भेदस्य इति पाठान्तरम्।

भावं तु बादरायणोऽस्ति हि ॥ १२ ॥

इति विधिनैकवाक्यत्वादवान्तरपदसंसर्गवदर्थवादवाक्यानां न पृथक् प्रामाण्यमिति प्राप्तम्। तत्र यथा प्रयाजाद्यङ्गविधिवाक्यानां स्वार्थप्रमितावनन्यार्थताप्रमितावेवार्थानां प्रयोजनवशादन्यार्थता तथा प्रमाणान्तरप्राप्तिविरोधरहितानामप्यर्थवादमन्त्राणां स्वार्थप्रमितावनन्यार्थताप्रयोजनवशादन्यार्थतेति न्याय्यम्, अङ्गविधिप्रकरणपठितानुवादविरोधरहितवाक्यत्वात् प्रयाजादिवाक्यवदिति न्यायेनार्थपरतोक्ता। अथवा प्रकरणपाठात् प्रयाजाद्यङ्गानुष्ठानवत एवापूर्वसिद्धिरित्युच्यते। एवमर्थवादैरौत्सर्गिकप्रमितिकार्यैः प्रमीयमाणेन्द्रादिसाङ्गोपाङ्गदेवताप्रमितिमत एव यागानुष्ठानादपूर्वसिद्धिरिति कल्प्यते। प्रमेयद्वारेण च विध्युपकारो विधिप्रकरणत्वात् प्रयाजादिवाक्यवदिति। अथवेन्द्रादिशब्दव्यतिरिक्तासाधारणदेवतार्थाकारप्रमितिबुद्धिः कर्मणापेक्ष्यमाणा भवितुमर्हति, कर्त्राद्यन्यतमकारकबुद्धित्वात् कर्तृकारकबुद्धिवदिति मन्त्रार्थवादयोः प्रामाण्येन देवादीनामधिकारः साधितः ॥ १२ ॥

शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ १३ ॥

अर्थवादलिङ्गान्न्यायानुगृहीतादपि विध्यन्यथानुपपत्तिर्बलीयसी तात्पर्यवत्त्वादिति न्यायेनार्थत्वादिमतश्च फलवति प्रवृत्तिः स्वाभाविकीति न्यायानुगृहीताच्छूद्रशब्दलिङ्गाद्वैदिकविद्यायां शूद्रस्याधिकारे प्राप्ते साङ्गाध्ययनविधिरदृष्टसंस्कारवद्वेदवाक्यजनितार्थप्रमितिमत एवोत्तरविधिष्वधिकारो नान्यस्येति नियममन्तरेणानुपपद्यमानो वैदिकेषु ब्रह्मविद्याफलपर्यन्तसाधनविधिषु शूद्रस्याधिकारं वारयतीत्युक्तम्। अथवा यौगिकार्थसंनिधाने सत्यप्रतिपन्नरूढ्यर्थग्रहणाद्वरं प्रतिपन्नयौगिकार्थग्रहणमिति न्यायेन योगवृत्तिराश्रिता। शूद्रशब्दस्यैकस्य लिङ्गस्य बहुलिङ्गविरोधो वा दर्शितः ॥ १३ ॥

कम्पनात् ॥ १४ ॥

एकस्याः श्रुतेरेकवाक्यतासाकाङ्क्षप्रकरणानुगृहीतबहुलिङ्गविरोधे

बाधो युक्तः, प्रत्ययसंवादतात्पर्यादेकवाक्यतासापेक्षत्वादागमस्येति प्रकरणानुगृहीतजगत्कम्पनाश्रयत्वभयहेतुत्वामृतत्वसाधनत्वलिङ्गैः प्राणशब्दो ब्रह्मपरतया निर्णीतः ॥ १४ ॥

## ज्योतिर्दर्शनात् ॥ १५ ॥

श्रुतिलिङ्गाभ्यामुपसंहारसापेक्षवाक्योपक्रमगतेन प्रकरणेनानुगृहीता श्रुतिर्बलीयसी, एकवाक्यतासिद्धेरिति न्यायेन शरीरादुत्थितस्यानन्तरमुपसंपत्तव्यत्वमादित्यस्य नाडीखण्डे दृष्टमिति लिङ्गानुगृहीतां ज्योतिःश्रुतिं बाधित्वापहतपाप्मादिप्रकरणानुगृहीतोत्तमपुरुषश्रुत्या ज्योतिःश्रुतिर्ब्रह्मपरतया नीता ॥ १५ ॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ १६ ॥

उपक्रमगताभ्यामपि श्रुतिलिङ्गाभ्यां वाक्यशेषगतानि बहूनि श्रुतिलिङ्गानि बलवन्ति बहुसंवादस्य तात्पर्यनिमित्तत्वादिति न्यायेना"काशो वै नामे"ति प्रसिद्धलिङ्गाकाशश्रुती भूताकाशप्रतिपादिके बाधित्वा नामरूपनिर्वहणतद्व्यतिरेकामृताभयलिङ्गैर्ब्रह्मात्मश्रुतिभ्यां च ब्रह्मपरत्वं वाक्यस्य निर्णीतम् ॥ १६ ॥

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ १७ ॥

एकस्मिन् वाक्ये प्रसिद्धाप्रसिद्धयोर्लिङ्गेषु संनिविष्टेषु प्रसिद्धानुवादेन तस्याप्रसिद्धात्मतैव प्रतिपाद्या वाक्यस्यापूर्वार्थविषयत्वादिति न्यायेन जीवलिङ्गैस्तदनुवादेन तस्य ब्रह्मात्मतावाक्येन प्रतिपाद्यत इत्युक्तम् ॥ १७ ।

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥ * * ॥

## आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

स्मार्ताभ्यां क्रमलिङ्गाभ्यामेकवाक्यतासंबन्धिनी श्रौते क्रमप्रकरणे बलीयसी संनिधानाद्वाक्यैकत्वाच्चेति न्यायेन स्मृतिपठितमहदव्यक्तपुरुषक्रमसदृशे श्रौतमहदव्यक्तपुरुषक्रमे मध्यवर्त्यव्यक्तशब्दस्य मध्यवर्तिप्रधाना-

भिधायित्वं न व्यक्तमव्यक्तमिति शब्दलिङ्गं च बाधित्वा प्रकृतात्मशरी बुद्धिक्रममध्यवर्तिशरीरमव्यक्तशब्देनाभिधीयत इत्युक्तम् ॥ १ ॥

चमसवदविशेषात् ॥ २ ॥

बहूनां गुणवाचिशब्दानां व्यवहितलक्षणापरिग्रहेण गुणशब्दसंयोगार्थपरिग्रहो बाधनीयः, तेषामेव च शब्दानामव्यवहितलक्षणापरिग्रहानुगृहीतेन प्रसिद्धार्थाकृतिकल्पनया रूढिपरिग्रहेणाकृतिकल्पना बुद्धिमात्राधिक्येन प्रत्ययलाघवादिति न्यायेन रोहितादिशब्दानां रञ्जनीयत्वादिगुणसामान्यव्यवधानेन रजःसत्त्वादिव्यवहितलक्षणानुगृहीताम् अजाशब्दयोगवृत्तिं बाधित्वा रोहितादिगुणसंहति प्रधानं तेजोऽबन्नमजाकारं कल्पयित्वाजाशब्दस्य रूढिवृत्तिः परिगृहीता ॥ २ ॥

न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ३ ॥

यत्र गुणिशब्दस्य षष्ठ्यन्तता तत्र गुणशब्दस्य स्वप्रधानता यथा पटस्य शौक्ल्यमिति, यत्र सामानाधिकरण्यं तत्र गुणिप्रधानता यथा शुक्लः पट इति, तथा नोपसर्जनेन पदान्तरस्यान्वयः किंतु प्रधानेन यथा दण्डी धावतीति, एताभ्यां न्यायाभ्यां "पञ्च पञ्चजना" इति द्वितीयपञ्चशब्दस्य जनशब्दप्रधानस्य प्रथमपञ्चशब्देनान्वयाच्च पञ्चविंशतिसंख्यासिद्धिरित्यसमासपक्षे दर्शितम्, समासपक्षे तु समासान्तरात् सामान्यविषयात् संज्ञासमासो विशेषविषयो बलवानिति न्यायेन पञ्चैव पदार्था इति दर्शिताः ॥ ३ ॥

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ ४ ॥

बहूनां शब्दानामेकविषयाणां परस्परविरोधेनार्थनिर्णयासामर्थ्ये सति प्रमाणान्तरानुसारेण सर्वशब्दलक्षणापरिग्रहाद्वरं स्वान्तर्वर्तिबहुशब्दानुसारेण कतिपयशब्दलक्षणा लाघवादिति न्यायेन प्रमाणान्तरसिद्धप्रधानपरतया सर्वशब्दलक्षणां बाधित्वासदव्याकृतादिशब्दानां चेतनकारणवाचिबहुशब्दानुसारेण लक्षणया ब्रह्मैव कारणमुक्तम् ॥ ४ ॥

जगद्वाचित्वात् ॥ ५ ॥

एकस्य शब्दस्यानेकार्थे रूढस्याभिधेयोपादाने विप्रतिपत्तौ सत्यामन्यतरोपादाने च विशेषाभावे तस्य वृत्त्यन्तराश्रयणेनापि वाक्यार्थप्रतिपत्तिर्युक्ता तदर्थत्वादभिधानप्रयोगस्येति न्यायेन कर्मशब्दस्य चलनादृष्टयो रूढस्यान्यतरोपादने कारणाभावादनिर्णये सति क्रियत इति कर्मेति वृत्त्यन्तरेण कार्यं जगदुपादाय तत्कर्तृ ब्रह्मावधारितम् ॥ ५ ॥

## वाक्यान्वयात् ॥ ६ ॥

नेह जीवब्रह्मलिङ्गेष्वेकस्मिन् वाक्ये संनिविष्टेषु ब्रह्मणः सर्वात्मत्वसिद्धये जीवलिङ्गानि ब्रह्मण्येव योज्यन्ते प्रतर्दनाधिकरणे सिद्धत्वात्, नापि जीवलिङ्गैः प्रसिद्धं जीवमनूद्याप्रसिद्धब्रह्मता निर्णीयते सुषुप्त्युत्क्रान्त्यधिकरणे सिद्धत्वात्, किंतु जीवब्रह्मणोरुद्देश्योपादेययोर्भेदोऽप्यपेक्षित इति भेदाभेदपरं सामानाधिकरण्यमिति प्राप्ते कार्यकारणभावशून्ययोर्द्रव्ययोरुद्देश्योपादेयभावेन सामानाधिकरण्यमेकस्यैव सतो द्रव्यस्योपाधिकल्पितभेदापेक्षं न द्रव्यभेदापेक्षं घटाकाशो महाकाशः सोऽयं देवदत्त इत्यादिषु दर्शनादिति न्यायेन जीवब्रह्मणोरत्यन्तैक्यमेव दर्शितम्, तथा च लिङ्गमात्मशब्देनोपक्रान्तस्य जीवस्य धर्मिणो धर्म्यन्तरोपादानमन्तरेण ब्रह्मधर्मैरावाक्यपरिसमाप्तेर्विशिष्टतया प्रतिपादनं धर्मिभेदं निरुणद्धि, भेदाभेदौ तु लोकवज्जीवब्रह्मणोरप्यनुमानेन सिद्धेर्न शास्त्रगम्यावित्यन्तैक्यमेव साधितम् ॥ ६ ॥

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ ७ ॥

नेदं जगच्चेतनोपादनं द्रव्यत्वे सति कार्यत्वाद् घटवत्, न ब्रह्म कार्यद्रव्यस्योपादनं चेतनत्वाज्जीववत्, न ब्रह्म कार्यद्रव्यस्योपादनमीश्वरत्वाल्लौकिकेश्वरवत्, इदं जगदचेतनोपादानं कार्यद्रव्यत्वाद् घटवत्, इत्याद्यनुमानाच्च ब्रह्म जगदुपादानमिति प्राप्तम् । तत्र श्रुतिलिङ्गाभ्यां सामान्यतो दर्शितानुमानानि बहून्यपि दुर्बलानि श्रुतिविषयादन्यत्र व्याप्तिसंकोचोपपत्तेरिति न्यायेन प्रतिज्ञादृष्टान्तलिङ्गादुपादानकारणाभिधायिपञ्चमीशब्दाच्च ब्रह्मोपादानकारणं निर्णीतम् ॥ ७ ॥

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ ८ ॥

"एषोऽणुरात्मा चेतसा वेदितव्यः", "अणोरणीयान्", "अणुः पन्था" इत्याद्यणुशब्दस्यात्यन्तपरिच्छिन्नाच्छवस्तुनोऽसाधारणस्यात्मादिनियतार्थशब्दसामानाधिकरण्यादच्छताभिधानेनात्मपरत्वं युक्तमिति न्यायेन परमाणुवादोऽशब्दमूलः, तथा "असद्वा इदमग्र आसीत्", "असदेवेदमग्र आसी"दित्याद्यसच्छब्दस्य सच्छब्दसामानाधिकरण्यादनभिव्यक्तधर्मसामान्यात् सति लक्षणावृत्तिराश्रीयते न सच्छब्दस्यासति लक्षणा ब्रह्मव्यतिरिक्तस्य सतोऽभिव्यक्तनामरूपतया शून्येन धर्मसाम्याभावाद् ब्रह्मणश्चानङ्गीकरणादिति शून्यवादो निरस्तः, तथा "तद्धेदं तर्ह्यव्याकृतमासी"दिति कर्मकर्तरि लकारे एकस्योभयकल्पनाविरोधं प्रतिपद्य तत्परिहारकल्पनादुरं कर्मणि लकारोपादानेन कर्त्राक्षेप इति स्वभाववादोऽशब्दमूल इति ॥ ८ ॥

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे प्रथमाध्यायस्य चतुर्थः पादः ॥ ४ ॥ * * ॥

समाप्तश्च प्रथमाध्यायः ॥ १ ॥ :: :: ॥

## स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

तुल्यबलयोः प्रमाणयोरन्यतरस्याप्रामाण्यानुपपत्तौ सावकाशनिरवकाशन्यायेन प्रामाण्यं व्यवस्थाप्यते, प्रबलदुर्बलयोस्तु प्रमाणयोर्विरोधे प्रबलेन दुर्बलस्य बाध एव न्याय्यो न व्यवस्थेति न्यायेनाभ्युदयविषयतया सावकाशयापि स्मृत्या निःश्रेयसविषयतयान्यत्र निरवकाशापि स्मृतिर्बाध्यत इत्युक्तम्, अथवा क्लृप्तमूलया स्मृत्या कल्प्यमूला स्मृतिर्बाध्या, मूलकल्पनायां [illegible]बादिति न्यायेन प्रत्यक्षश्रुतिमूलमन्वादिस्मृत्या सांख्यस्मृतिर्बाध्यत इति ॥ १ ॥

## एतेन योगः प्रत्युक्तः ॥ २ ॥

[illegible]पेक्षया स्वार्थप्रमापकयोर्वाक्ययोर्वाक्यैकवाक्यभावेमे-

कवाक्यतो तत्रान्यतरवाक्यबाधेऽप्यन्यतरवाक्यस्य प्रामाण्यं युक्तं विध्युद्देशार्थवादवाक्यवदिदं रजतमिति ज्ञानवच्च प्रमितावन्योन्यनिरपेक्षत्वादिति न्यायेन, "अथ तद्दर्शनोपायः षडङ्गो योग" इति वाक्ये प्रकृतिपुरुषव्यतिरिक्तेश्वरप्रतिपादकावान्तरवाक्यबाधेऽपि योगप्रतिपादकावान्तरवाक्यस्य प्रामाण्यं दर्शयित्वा विरुद्धांशबाधः कृतः ॥ २ ॥

न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ३ ॥

इदं जगद्ब्रह्मप्रकृतिकं न भवति ब्रह्मासाधारणचैतन्यस्वभावेनाननुगतत्वात्, यत् कार्यं यत्कारणस्वभावेनाननुगतं तत् तत्प्रकृतिकं न भवति यथा सुवर्णस्वभावेनाननुगतः पट इति, तथा ब्रह्म न जगत्प्रकृतिकं संभवति तस्मिन्ननुगतस्वभावत्वात्, यद्धि यस्मिन्ननुगतस्वभावं न तत् तत्प्रकृतिकं संभवति यथा घटस्य सुवर्णमिति सांख्यानामनुमाने, अनयोश्च घटः प्रकाशत इति जगतश्चैतन्यगुणत्वात्· शकृद्वृहसामान्याद्वृश्चिकलोमादिषु प्रत्यभिज्ञाभावात्· शास्त्रेण च ब्रह्मप्रकृतित्वावधारणादसिद्धानैकान्तिककालात्ययापदिष्टत्वादीनि साधितानि । 'असदिति चेन्ने'ति "सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः", "सदेव सौम्येद"मित्यादिसच्छब्दार्थस्य घटादिष्वनुवर्तमानस्य मूलकारणत्वात् सप्रतियोगिको निषेधो नास्तीति त्रिष्वपि कालेषु कार्यमसदिति वक्तुं न शक्यते किंतु सन्मूलकारणं कार्यमसदित्यवादीति दर्शितम्, 'तर्काप्रतिष्ठाना'दिति कश्चित् तर्को व्यवहारेण स्थाप्यते यथाग्निमान् पर्वत इति, अपरश्चागमेन रक्ष्यते यथा कार्यकारणयोरनन्यभाव इति, तदुभयानुग्रहशून्यश्चाप्रतिष्ठित इत्युक्तम् ॥ ३ ॥

एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ ४ ॥

ब्रह्मचैतन्यं जगत्समवायिकारणविशेषगुणो न भवति जगति समानजातीयगुणान्तरानारम्भकत्वात्, यो हि गुणो यस्मिन् कार्ये समानजातीयं गुणान्तरं नारभते स तत्समवायिकारणविशेषगुणो न भवति, यथा तन्तुशौक्ल्यं पटस्य समवायिकारणविशेषगुणो न भवतीति वैशेषिकाद्य-

धावद्विद्यमानस्य मिथ्यात्वादिति। एवं प्रत्यक्षानुमानागमार्थापत्तिभिर्द्वैतस्य मिथ्यात्वप्रदर्शनेन समन्वयस्याबाधो दर्शितः। नन्वेतान्यपि द्वैतविषयत्वान्न मिथ्यात्वं व्यवस्थापयितुमलम्, तन्न, प्रपञ्चोपाधौ मिथ्यात्वस्य बाधाभावात् तत्र प्रामाण्यसिद्धेः, एवं वैदिकसाध्यसाधनप्रमाणप्रमेयसंबन्धादीनां स्वोपाधिबाधाभावादेव प्रामाण्यसिद्धेर्बाध्यमानप्रपञ्चधर्मतया मिथ्यात्वस्याप्यनिर्वचनीयत्वात् परमार्थसत्यमेकमेव ब्रह्मेति सिद्धम् ॥ ७ ॥

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ ८ ॥

जीवब्रह्मणोरैक्याज्जगत्स्रष्टृत्वाद्धिताकरणादिदोषयोर्जीवब्रह्मगतयोरेकत्र समवायेऽपि सत्यनुमानमुच्यते, ब्रह्मानिष्टस्य कार्यप्रपञ्चस्याकारणमनिष्टसंबन्धिनो वा जीवाद् भिन्नं भवितुमर्हति बुद्धिपूर्वकारितया स्वतन्त्रत्वाद्। यो हि बुद्धिपूर्वकारी स्वतन्त्रः सोऽनिष्टस्य कार्यप्रपञ्चस्याकर्ता, अनिष्टसंबन्धिनो वा जीवाद्भिन्नो दृष्टो यथोदासीनः पुरुष इति, अत्र प्रतिबिम्बघटाकाशादेः श्यामत्वाल्पत्वादिधर्मवतोऽभिन्नस्यापि बिम्बाकाशादेरौपाधिकभेदाश्रयेण श्यामादिधर्मासंस्पर्शः स्वाभाविकावदातत्वादिधर्मवत्त्वं च यथा तथा हिताकरणादिदोषसंसर्गिणोऽपि जीवादभिन्नस्यापि ब्रह्मणस्तद्धर्मासंस्पर्शो जगत्स्रष्टृत्वं चोपाधिभेदेन व्यवस्थाप्यत इति हेतोरनैकान्तिकत्वमागमविरोधश्च सुप्रसिद्ध इति दर्शितम् ॥ ८ ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ ९ ॥

ब्रह्म जगदुपादानकारणं न भवति स्वव्यतिरिक्तोपकरणाधिष्ठानादिकारकशून्यत्वाद् यदेवंविधकारकशून्यं न तत् कार्यस्योपादानं दृष्टं यथा केवलमृदादि, तथा ब्रह्म जगतो न निमित्तकारणं स्वव्यतिरिक्तादिदण्डादिसामग्रीशून्यत्वाद् यदेवंविधसामग्रीशून्यं न तन्निमित्तकारणं यथा केवलकुलाल इत्यनयोरनैकान्तिकत्वं क्षीरे देवादौ च। आगमविरोधश्च सुप्रसिद्ध इति दर्शितम् ॥ ९ ॥

कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ १० ॥

निरवयवस्य ब्रह्मणो विकारासंस्पृष्टतयावस्थानमाकाशाकारेण च परिणामः पुनर्वाय्वाकारेण परिणामावस्थानमिति विरुद्धार्थप्रतिपादकानां परस्परविरोधे सति श्रुतिप्रामाण्यादेव व्यवस्था कर्तव्या यथो"दिते जुहोति"·"अनुदिते जुहोति"· "आहवनीये जुहोति" "पदे जुहोती"त्यादाविवेति न्यायेन "मायां तु प्रकृतिम्"· "इन्द्रो मायाभिः·" "नासदासी""न्नो सदासी"दित्यादिसदसद्विलक्षणानिर्वचनीयप्रपञ्चनिवेदकैर्वाक्यैः परिणामस्याद्वितीयब्रह्मप्रतिपत्तिशेषतया स्वप्नसृष्टिनिदर्शनेन च प्रपञ्चस्य सत्यमिथ्याविभागव्यवस्थया विकारासंस्पृष्टत्वपरिणामयोरविरोधो दर्शितः ॥ १० ॥

सर्वोपेता च तद्दर्शनात् ॥ ११ ॥

ब्रह्म विचित्रकार्यव्यापारतच्छक्तिमन्न भवति चेतनत्वे सत्यकार्यकरणत्वाद् यश्चेतनत्वे सत्यकार्यकरणः स विचित्रव्यापारतच्छक्तिमान्न भवति यथा सुषुप्तपुरुष इत्यनुमानस्य पूर्वस्मिन् क्षणे कार्यकरणाभिमानहीनस्य सुषुप्तादुत्तिष्ठतो जीवस्य मनआदिशरीरेन्द्रियाद्युत्पादनव्यापारतच्छक्तिमत्तादर्शनेनानैकान्तिकत्वमागविरोधश्च सुप्रसिद्ध इति दर्शितम् ॥ ११ ॥

न प्रयोजनवत्त्वात् ॥ १२ ॥

ब्रह्म जगत्कारणं न भवति साक्षाद्वा परंपरया वा स्वात्मप्रयोजनशून्यत्वाद् य एवंविधप्रयोजनशून्यः स कार्यं न करोति यथा लौकिकः पुरुष इत्यस्य सुखोल्लासनिमित्तक्रीडायामुच्छ्वासादौ चानैकान्तिकत्वमागमविरुद्धत्वं च दर्शितम् ॥ १२ ॥

वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति ॥ १३ ॥

ब्रह्म परेषामर्थानर्थहेतोः प्रपञ्चकार्यस्य कारणं न भवति चेतनत्वे सति निरवद्यत्वाद् यश्चेतनत्वे सति निरवद्यः स परेषामर्थानर्थहेतोः कार्यस्याकारणं यथा विशिष्टो लौकिकः पुरुष इत्यस्यानुमानस्य निरवद्योऽपि राज्ञि सेवाचौर्यादिकर्मापेक्षया परेषामर्थानर्थौ कुर्वाणे ऽनैकान्तिकत्वमागमविरोधश्च दर्शितः ॥ १३ ॥

द्रवत्वधर्माधर्मसंस्कारा नवैवात्मविशेषगुणाः, संस्कारश्च भावनावेगस्थितस्थापकलक्षणः स्मृत्यभिघातकटसंवेष्टनादिहेतुस्त्रिविधः, संख्यापरिमाणसंयोगविभागगुरुत्वपरत्वापरत्वपृथक्त्वान्यष्टौ गुणाः साधारणा इति चतुर्विंशतिर्गुणाः। उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव कर्माणि। सामान्यं द्विविधं परमपरं च, सत्ता परम, अपरं च गोत्वादि। आत्ममनःपार्थिवाप्यतैजसवायवीयाणुषु षट्स्ववान्तरजातिभिन्नेषु प्रत्येकमेकजातीयानामितरेतरस्वान्तर्गतभेदहेतवोऽनन्ता विशेषाः। एक एव सर्वत्र समवायः। आकाशदिक्कालाश्च परोपाधिभेदाद्भिन्ना इवाभान्ति, ते च द्रव्यादयोऽत्यन्तभिन्नाः षट् पदार्थाः, गुणादयस्तु सर्वे समवयन्तीति वैशेषिकाणां प्रक्रिया। तत्र परमाणुसमवायव्यतिरिक्ता लोकवेदसिद्धाः।

इदानीं तदुभयं निराकरोति। तत्र परमाणुसमर्पकमनुमानम्, सर्वं कार्यद्रव्यं स्वपरिमाणादणुतरपरिमाणसंयोगसचिवस्वसमानजातीयानेकद्रव्यारब्धं भवितुमर्हति सावयवत्वात्, यत् सावयवं तत् स्वपरिमाणादणुतरपरिमाणसंयोगसचिवस्वसमानजातीयानेकद्रव्यारब्धं दृष्टम्, यथा तन्त्वारब्धः पट इति, एवं यत् किंचित् सावयवं द्व्यणुकपर्यन्तं तत् सर्वमेवंविधद्रव्यारब्धमित्यत्यन्ताणुपरिमाणा निरवयवाः संयोगसचिवाः कार्येण पार्थिवत्वादिसमानजातीया नित्या बहवश्च परमाणवः सावयवद्रव्याणामारम्भकाः सिद्धाः। तत्र साध्यविशेषणानां सर्वेषां प्रत्यनुमानविरुद्धत्वमनैकान्तिकत्वं च सूत्रैः प्रदर्श्यते। तत्र न संयोगसचिवाः परमाणवः स्वातन्त्र्ये सति तद्धेतुकर्मशून्यत्वात्, आत्माकाशवत्, कर्मशून्याः परमाणवः तद्धेतुप्रयत्नाभिघातादिशून्यत्वात्, आत्माकाशवत्, तथा [illegible]वो द्रव्यानारम्भका निरवयवत्वेन संयोगप्रचयहीनत्वात्, आत्माकाशवत्, न परमाणवो नित्या रूपादिमत्त्वात्, घटादिवत्, तथा परमाणवो न निरवयवा दिग्भेदव्यवस्थापकत्वात्, घटवत्, तथा न परमाणुपरिकल्पिताः पदार्थाः सर्वे तुल्यपरिमाणा रूपादिगुणोपचयापचयवत्त्वात्, पृथिव्यादिवत्, अतोऽनेकद्रव्यारभ्यत्वं घृतकाठिन्यादि नानैकान्तिकं स्वपरिमाणादणुपरिमाणारभ्यत्वं च दीर्घविस्तीर्णैस्त्रिभिर्दुकूलैः क्रियमाणे

रज्जुकार्येऽनैकान्तिकमित्यनुमानस्य कालात्ययापदिष्टत्वमनैकान्तिकत्वं च सूत्रैः प्रदर्शितम्, तादात्म्यस्यासंबन्धत्वाचानवस्था, समवाये त्वनवस्था दर्शितेति ॥ ३ ॥

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ ४ ॥

तत्र खरस्नेहोष्णेरणस्वभावाः परमाणवो न द्रव्यस्वभावाः, ते च द्व्यणुकादिमहापृथिव्यादिपर्यन्तं संहन्यन्ते नावयविनमारभन्ते, बाह्यमध्यात्मशरीरेन्द्रियभावेन संहन्यन्ते, स बाह्यात्मसंघातो रूपस्कन्धः। अहमित्यनादिप्रवृत्तो विज्ञानसंतानो विज्ञानस्कन्धः। विज्ञानरूपस्कन्धसंसर्गजन्यो विज्ञानविशेषप्रवाहो वेदनास्कन्धः। गौरिति शब्दोल्लेखितविकल्पविज्ञानप्रवाहः संज्ञास्कन्धः। वेदनासंज्ञास्कन्धद्वयनिमित्तो रागद्वेषादिविज्ञानप्रवाहः संस्कारस्कन्धः। क्वचिदाशयस्यापि धर्माधर्मलक्षणस्य संस्कारशब्देनाभिधानमस्ति। तत्राहमित्यालयविज्ञानमात्रं चित्तमित्युच्यते। वेदनाविज्ञानसंस्कारस्कन्धत्रयं प्रवाहान्तर्गतमपि चित्तस्य विषयविशेषोपरागे सति भवति· असति नेति कादाचित्कत्वाच्चैत्तमित्युच्यते। श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्चैवेन्द्रियाणि गोलकस्थानमात्राण्यप्राप्यकारीणि च न वैशेषिकाणामिव गोलकाद्व्यतिरिक्तानि द्रव्याणि प्राप्यकारीणि चेति तान्यधिपतिरित्युच्यन्ते। सहकार्यालोकनिमित्तमालम्बनं नीलादिविषयो मन इति समनन्तरप्रत्ययमात्रमुच्यते। तत्र बाह्याध्यात्मिकसमुदायद्वयाकारेण चतुर्विधाः परमाणवः पञ्च स्कन्धाश्च संहन्यन्ते। सर्वज्ञवशादाशयवशात् स्वभावसामर्थ्याद्वा कार्यदर्शनोन्नेयात् कुतश्चिन्निमित्तादिति। ते च स्कन्धाः परमाणवश्च क्षणिकाः। प्रत्यक्षेण हि वर्तमानार्थपरिच्छेदिना स्वविषयस्यावर्तमानाद्व्यावृत्तिः क्रियते नीलपरिच्छेदिना स्वविषयस्यानीलाद्व्यावृत्तिः क्रियते यथेति प्रत्यक्षेण क्षणिकत्वं सिध्यति। तथानुमानेनापि सर्वे भावाः क्षणिकाः सत्त्वात्, ये क्षणिका न भवन्ति न ते सन्तः, यथा शशविषाणादयः। तथा सर्वे भावाः क्षणिका अर्थक्रियाकारित्वात्, ये न क्षणिका न तेऽर्थक्रियाकारिणः, स एव दृष्टान्तः। घटस्यान्त्यक्षणसत्त्वात् पूर्वपूर्वक्षणविशिष्टतत्त्वानि स्वसत्ताक्षणादुत्तरक्षणे

गोलक्रमात् क्रान्तिगुणो द्विधा स्या-
दयो यदाल्पं पदमेव शोध्यात् ।
तदा पदोनादमुतोऽपि साध्या
क्रान्तिज्यका प्रोक्तदुतरैव ॥ ५ ॥
मूलीयखण्डद्वययोर्यदा स्या-
दुक्तप्रकाराद्विपरीतशुद्धिः ।
तदा तदुद्दिष्टमशुद्धमेव
विज्ञेयमेतदयाग्रतश्च ॥ ६ ॥

द्वितीयप्रकारेण भङ्गः ।

लम्बज्यकापरिणता नतकालकोटि
ज्याद्यः परोऽनगुणवर्गयुताद्यवर्गः
यच्छङ्कुवर्गरहितात् परतः पदं स-
दाद्याहतेन खलु तेन पलज्यकाऽ
शङ्कुर्द्विधा युतवियुक् त्रिगुणाहतोऽ
यन्योद्धृतोऽपमगुणो द्विविधोऽप्युदक् स्यात् ।
आद्योऽल्पको यदि नरात् परथा पदाद्य-
घातो द्विधा पलगुणघ्ननराढ्यहीनः ॥ ८ ॥
सोऽन्योद्धृतस्त्रिभगुणेन हतोऽपमज्या
गोलक्रमात् क्वचिदियं हि सती द्विधापि ।
क्वेषासती भवति तत् कथयाम्यथापि
धीरा बुधा अनुपदं प्रविचार्यतां तत् ॥ ६

कारेण भङ्गः ।

दृग्ज्यां च लम्बगुणमच चरासुभाया:
साध्यास्तये विवरयोगविहीनखाङ्का: ॥ १० ॥

द्वेधोदगेव भवति ह्यपमो यदा तु
खाङ्काधिका युतिरतो नवतिर्विशोध्या ।
एषोऽपमो भवति दक्षिण एव वाच्यं
चासत्त्वमस्य परमापमतोऽधिकत्वे ॥ ११ ॥

प्रश्नः ।

योऽपमज्ञोऽच विध्वा नतांशान् नतं
कालमप्यच विज्ञाय वक्त्यक्षभाम् ।
द्रागसौ बुद्धिमत्स्वाग्रगण्योऽथवा
भास्कराचार्यवर्यावतारो मतः ॥ १२ ॥

अस्य भङ्गः ।

क्रान्त्यंशानक्षांशान् प्रकल्प्य साध्योऽपमः प्रकाराभ्याम् ।
सन्निहिताभ्यामुदगिह सिध्यन्त्यक्षांशकास्ते स्युः ॥ १३ ॥

प्रश्नः ।

नतांशान् नतासूंश्चरासूंश्च धीमा-
नभिज्ञाय योऽक्षप्रभां द्राग् ब्रवीति ।
विदामग्रतः कस्तदग्रेसरः स्यात्
सुधीः शास्त्रयाथार्थ्यबोधे पृथिव्याम् ॥ १४ ॥

अस्य भङ्गः ।

शङ्कुहता चरजीवा विहृतान्त्यकया फलं यत् तत् ।
उन्मण्डलशङ्कुः स्यादुक्तक्रिययाक्षभातश्च ॥ १५ ॥

अस्य भङ्गः ।

नतकालवलनयोर्यं कोटिज्यकयोर्वधोऽनेन ।
वियुतयुता नतकाले तिथिनाडीभ्योऽधिके न्यूने ॥ ४९ ॥
त्रिज्याद्दृग्ज्याभिहृति र्दक्षिणगोलेऽनयां विहीना सा ।
आक्षवलननतासुद्वयोर्मौर्व्योर्वधेन संभक्ता ॥ ५० ॥
सा वलनज्याक्षघ्ना नतकालज्योद्धृताक्षज्या ।
अपमोऽत एवमसकृत् क्रान्तिज्याक्षज्यके स्फुटे भवतः ॥ ५१ ॥

प्रश्नः ।

नतकालं दिग्भागानाक्षजवलनं तथात्रगम्य द्राक् ।
पलभामपमं ब्रूते स्तूयासुस्तं न किम्वार्याः ॥ ५२ ॥

अस्य भङ्गः ।

द्विज्याघनवलनमौर्व्याक्रान्तिज्य घनान्नतासुकोटिगुणात् ।
दिक्कोटिवलनकोट्योर्ज्यावधविहृतात्त्रिभज्यकागुणितात् ॥५३॥
लब्धं शङ्कुः कल्प्यः साध्या तस्माद्भुजांशकोटिज्या ।
सा वलनज्याक्षघ्ना नतकालगुणोद्धृताक्षज्या ॥ ५४ ॥
अक्षज्यां दिग्भागान् नतकालं चापि विज्ञाय ।
क्रान्तिः शङ्कुः साध्यस्त्वित्थं साध्यो मुहुः शङ्कुः ॥ ५५ ॥
अक्षज्याक्रान्तिज्यानतकालज्या भुजश्चापि ।
क्रमतोऽमुतः प्रकारात् सम्यक् स्फुटतामुपेयासुः ॥ ५६ ॥
श्रीबालशास्त्रिविदुषां सविधं पठित्वा
प्राक् शब्दशास्त्रमथ तज्जनितावबोधः ।
श्रीबापुदेवगुरुवर्यकृपाकटाक्षात्
सज्ज्यौतिषं प्रपठतीह विनायको यः ॥ ५७
तन्निर्मिते कतिपयप्रश्नविचाराभिधप्रबन्धेऽस्मि
दिग्भागादिप्रकरणं एतन्नतकालखण्डमभवत ॥

॥ श्लोकवार्त्तिकम् ॥

असिद्धेनैकदेशेन गम्यः सिद्धेन बोधकः ।
आत्तः पृथगभिन्नो वा प्रयोक्तॄणां विवक्षया ॥ २५ ॥
अनित्यः कृतको यस्माद्धूमवानग्निमानिति ।
धर्म्यभिन्नमुपादानं भेदो ऽत्राग्निरितीदृशः ॥ २६ ॥
एकदेशविशिष्टश्च धर्म्यैवात्रानुमीयते ।
न हि तन्निरपेक्षत्वे संभवत्यनुमेयता ॥ २७ ॥
न धर्ममात्रं सिद्धत्वात्तथा धर्मी तथोभयम् ।
व्यस्तं वापि समस्तं वा स्वातन्त्र्येणानुमीयते ॥ २८ ॥
एकदेशस्य लिङ्गत्वं साध्येनानुगमो ऽस्य च ।
द्वयं च न स्यादिष्टं स पक्षेष्वेषु यथाक्रमम् ॥ २९ ॥
अनित्यत्वादि नो धर्मः कृतकत्वादयो न हि ।
ध्वनिनानुगमे नैषां नोभयस्योभयेन वा ॥ ३० ॥
संबन्धो ऽप्यनुपादानान्नाम्ना षष्ठ्यापि वा मितो ।
न चाप्यनुगमस्तेन लिङ्गस्येह निदर्श्यते ॥ ३१ ॥
न चाकारद्वयं तस्य साध्यसाधनभाग्भवेत् ।
तस्मादर्थगृहीतत्वान्मतुबर्थस्य गम्यता ॥ ३२ ॥
न स्वातन्त्र्येण मन्तव्या यथा दण्ड्यादिशब्दतः ।
विशिष्टार्थप्रतीतौ स्यात्संबन्धो नान्तरीयकः ॥ ३३ ॥
विशेषणविशेष्यत्वमापन्नौ द्वाविमावतः ।
गम्यावङ्गाङ्गिभावस्तु कैश्चिदिष्टो विकल्पतः ॥ ३४ ॥

तेनैवोत्तरबाधस्य विकल्पादेरसंभवात् ।
अग्राह्यता तु शब्दादेः प्रत्यक्षेण विरुध्यते ॥ ५६ ॥
तेषामश्रावणत्वादि विरुद्धमनुमानतः ।
न हि श्रावणता नाम प्रत्यक्षेणावगम्यते ॥ ६० ॥
सान्वयव्यतिरेकाभ्यां गम्यते बधिरादिषु ।
त्रिधा शब्दविरोधः स्यात्प्रतिज्ञादिविभागतः ॥ ६१ ॥
प्रतिज्ञा पूर्वसंकल्पःसर्वलोकप्रसिद्धितः ।
यावज्जीवमहं मौनीत्युक्तिमात्रेण बाध्यते ॥ ६२ ॥
सर्ववाक्यमृषात्वेन धर्मोक्त्यैवात्मबाधनम् ।
धर्म्युक्त्याहं यतो जातः सा वन्ध्या जननी मम ॥ ६३ ॥
बौद्धस्य शब्दनित्यत्वं पूर्वापेतेन बाध्यते ।
चन्द्रशब्दाभिधेयत्वं शशिनो यो निषेधति ॥ ६४ ॥
स सर्वलोकसिद्धेन चन्द्रज्ञानेन बाध्यते ।
ज्ञातगोगवयाकारं प्रति यः साधयेदिदम् ॥ ६५ ॥
न गोर्गवयसादृश्यं तस्य बाधोपमानतः ।
गेहावगतनास्तित्वे जीवंश्चैत्रो यदा बहिः ॥ ६६ ॥
नास्तीति साध्यते बाधस्तत्रार्थापत्तितो भवेत् ।
अग्नावदाहके साध्ये शब्दे चानभिधायके ॥ ६७ ॥
श्रोत्रादिनास्तितायां च शब्दानित्यत्वसाधने ।
श्रुतार्थापत्तिबाधोऽत्र यदसोक्तिनिवारिते ॥ ६८ ॥
दिवा भुजेर्निषेधेन हेतुना रात्रिभोजनम् ।
शशशृङ्गादिसद्भावविरोधोऽनुपलब्धितः ॥ ६९ ॥
एवं च धर्मसंबन्धबाधस्तावदुदाहृतः ।
धर्मधर्म्युभयेषां च स्वरूपत्वविशेषयोः ॥ ७० ॥

अत्यर्थाचिप्रयोर्वाक्ये वाच्यः सर्वप्रमाणकः ।
तृणादिविक्रियाहेतोरग्निमद्गिमसाधने ॥ ७१ ॥
प्रत्यक्षादागताच्छैत्यात्तद्विशेषोत्थबाधनम् ।
अधर्मो विहितो दुःखं करोत्यल्पमितीह तु ॥ ७२ ॥
विहितत्वादधर्मस्य स्वरूपस्यैव बाधनम् ।
तथा दुःखनिमित्तत्वं विशेषस्तस्यबाध्यते ॥ ७३ ॥
अयथार्था धियः सर्वा इत्युक्ते द्वयबाधनम् ।
स्वरूपस्वविशेषाभ्यां तद्धीमिथ्यात्वबोधनात् ॥ ७४ ॥
क्षणिकात्यन्तमिथ्यात्वे विशेषैा च द्वयोरिह ।
दर्शनादेकदेशस्येत्यनेनैतद्धुदस्यते ॥ ७५ ॥
यच्चैकस्योभयोर्वापि संशया धीविपर्यया: ।
शैत्यान्नदाहको वह्निश्चाक्षुषत्वादनित्यता ॥ ७६ ॥
शब्दस्येत्येवमादैा तु द्वयोः सिद्धो विपर्ययः ।
कृतकत्वगुणत्वादैा परोक्ते याज्ञिकं प्रति ॥ ७७ ॥
स्वोक्ते चैव प्रकारे स्यादसिद्धो ऽन्यतरस्य तु ।
बाष्पादिभावसंदिग्धो द्वयोरन्यतरस्य वा ॥ ७८ ॥
धूमस्त्रिधाप्यसिद्धः स्यादेवं तावत्स्वरूपतः ।
एतएव प्रकाराः स्युराश्रयासिद्धकल्पने ॥ ७९ ॥
ज्ञाते ऽपि हि स्वरूपेण नातद्धर्मे ऽस्ति हेतुता ।
सर्वच दृष्टकार्यत्वादात्मा सर्वगतस्त्विति ॥ ८० ॥
बैाद्धं प्रत्याश्रयासिद्धो लैाकिकादेस्तु संशयः ।
वाङ्माचासिद्धिमाचेण व्यवहाराप्रकल्पनात् ॥ ८१ ॥
द्वाभ्यां यस्तत्त्वतो ज्ञातस्तद्वचोदूषणं मतम् ।
इतरत्साधनं तु स्याद्वादिना यदि साध्यते ॥ ८२ ॥

निराकरणसिद्धौ वा दूषणं प्रति वादिनः ।
संदेहविपरीतत्वहेतू चात्र निराकृतौ ॥ ८३ ॥
ज्ञातसंबन्धवचनात्त्रयः संशयहेतवः ।
सत्साध्ये तदभावे च द्वाभ्यां व्यावृत्त एव च ॥ ८४ ॥
द्वौ विरुद्धार्थसंबद्धौ यावेकत्रैकदेशिनि ।
प्रमेयानित्यता ऽमूर्तिधर्मौ साधारणौ द्वयोः ॥ ८५ ॥
नित्यायत्नोत्थयत्नोत्था नित्येषु द्विरनित्यता ।
नित्याभूर्गन्धवत्त्वेन स्यादसाधारणस्त्वयम् ॥ ८६ ॥
निश्चयैकाङ्गवैकल्यादेष संशयकारणम् ।
साधारणो यथा दृष्टो बुद्धिद्वयनिमित्तकः ॥ ८७ ॥
विरुद्धैकानवाप्तेश्च संशये कारणं मतः ।
यत्रासाधारणो नास्ति तदभावमुखेन तु ॥ ८८ ॥
द्वयासत्त्वविरोधाच्च मतः संशयकारणम् ।
संदिग्धहेतुता चैषां विषयापेक्षयोच्यते ॥ ८९ ॥
निर्णयस्यापि हेतुत्वं दृष्टं साध्यान्तरे यतः ।
व्यवच्छेदान्वयौ लब्ध्वा निष्क्रियादावमूर्त्तिवत् ॥ ९० ॥
क्षित्येकदेशसिद्धत्वे गन्धवत्त्वस्य हेतुता ।
यत्राप्रत्यक्षता वायोररूपित्वेन साध्यते ॥ ९१ ॥
स्पर्शात्प्रत्यक्षता वायौ विरुद्धव्यभिचारिता ।
केचिज्जात्यन्तरं चैनां वर्णयन्त्यपरे पुनः ॥ ९२ ॥
साधारणत्वमंशेन समस्तं वाप्यसन्मयम् ।
प्रतिज्ञा यत्र बाध्येत पूर्वोक्तैर्यस्य साधनैः ॥ ९३ ॥
तत्परा ज्ञायतः कार्यो निर्णयो बाधवर्जनात् ।
क्वचित्संशयहेतू यौ प्रत्येकत्वेन लक्षितौ ॥ ९४ ॥

संघाते निर्णयस्ताभ्यामूर्ध्वता काकचत्ववत्।
प्रत्येकं सह तौ वापि गमकावविरोधिनौ ॥ ९५ ॥
तस्माद्भिन्नौ विरुद्धौ वा हेतू चात्र निदर्शितौ।
षोढा विरुद्धतामाहुश्चतुर्धा चैकतापि वा ॥ ९६ ॥
अत्यर्थोक्तस्य बाधायां प्रतिज्ञार्थस्य हेतुना।
नित्यत्वे कृतकत्वस्य धर्मबाधाद्विरुद्धता ॥ ९७ ॥
बाधो धर्मविशेषस्य यदा त्वेवं प्रयुज्यते।
अर्थवच्छब्दरूपं स्यात्प्राक्संबन्धावधारणात् ॥ ९८ ॥
विभक्तिमत्त्वात्पश्चाद्वत्स्वरूपेणेति चाश्रिते।
अस्वरूपार्थयोगस्तु पश्चाच्छब्दस्य दृश्यते ॥ ९९ ॥
तेन प्रागपि संबन्धादस्वरूपार्थता भवेत्।
इह प्रत्ययहेतुत्वाद्द्रव्यादेर्व्यतिरिच्यते ॥ १०० ॥
समवायं यथेहायं घट इत्यादिसंगतिः।
अत्राप्यसमवायत्वं संयोगस्येव सिध्यति ॥ १०१ ॥
तेन धर्मिस्वरूपस्य वैपरीत्याद्विरुद्धता।
यच्च सत्तावदेकत्वं समवायस्य कल्पितम् ॥ १०२ ॥
तच्च संयोगवद्भेदात्स्याद्विशेषविरुद्धता।
नित्यमात्मास्तिता कैश्चिद्यदा सौत्रान्तिकं प्रति ॥ १०३ ॥
साध्यते ऽवयवाभावाद्व्योमवद् द्रव्यबाधनम्।
तदोभयविशेषस्य बाधो ऽयं साध्यते यदा ॥ १०४ ॥
पारार्थ्यं चक्षुरादीनां संघाताच्छयनादिवत्।
शयने संघपारार्थ्ये भौतिकव्याप्तिहेतुके ॥ १०५ ॥
आत्मानं प्रतिपारार्थ्यमसिद्धमिति बाधनम्।
असंहतपरार्थत्वे इष्टे संहततापि च ॥ १०६ ॥

अनहंकारिकत्वं च चक्षुरादेः प्रसज्यते ।
गमकस्यैकदेशस्य व्याप्तिर्गम्येति भाषितुम् ॥ १०७ ॥
साध्यसाधर्म्यवैधर्म्यदृष्टान्तः प्रतिपाद्यते ।
तत्र हेत्वर्थमुद्दिश्य साध्योपादानमिष्यते ॥ १०८ ॥
उद्दिश्यो व्याप्यते धर्मो व्यापकश्चेतरो मतः ।
यद्वृत्तयोगः प्राथम्यमित्याद्युद्देशकम् ॥ १०९ ॥
तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ।
वदत्यर्थं स्वशक्त्या च शब्दो वक्त्रनपेक्षया ॥ ११० ॥
साध्यहेतुत्वमर्थानां व्याप्तिशक्त्यनुरोधतः ।
तत्राज्ञानाद्यदा वक्ता सह भावविवक्षया ॥ १११ ॥
विपर्ययेण वा हेतौ न व्याप्तत्वं विवक्षति ।
विवक्षन्नपि वा शब्दं तद्योग्यं न वदेद्यदि ॥ ११२ ॥
घटे कृतकनाशित्वे नाशिव्याप्तं कृतेन वा ।
न तदेष्टस्य हेतुत्वं स्यादनिष्टस्य चैव तत् ॥ ११३ ॥
तस्माद्व्याप्यत्वरूपेण वाच्यो हेतुत्वसम्मतः ।
यदा सम्यक्प्रयुक्ते ऽपि वाक्ये ऽर्थो न तथा भवेत् ॥ ११४ ॥
साध्यहेतूभयव्याप्तिशून्यत्वात्परमार्थतः ।
नित्योध्वनिरमूर्त्तत्वात्कर्मवत्परमाणुवत् ॥ ११५ ॥
घटवद्व्योमवच्चापि तदसद्वादिनं प्रति ।
धर्म्यसिद्धावपि ह्येवं दृष्टान्ताभासता भवेत् ॥ ११६ ॥
तत्सद्भावे ऽपि च व्योम्नि द्वययुक्ते ऽपि कीर्त्तिते ।
कर्माद्यालोचनाव्याप्तिर्हेतोर्नास्तीति वर्जनम् ॥ ११७ ॥
व्याप्त्या स धर्म्य उक्ते च न वैधर्म्यमपेक्ष्यते ।
सहभावित्वदृष्ट्या तु सदा व्याप्तिं न लक्षयेत् ॥ ११८ ॥

परः साधर्म्यदृष्टान्तस्तवनापेक्षते यदा ।
वक्ता वा सहभावित्वं शुद्धं तेन वदेद्यदा ॥ ११६ ॥
विपरीतान्वयं वापि तत्समाधित्सया तदा ।
पूर्वज्ञानोपमर्देन वैधर्म्येणेष्टसाधनम् ॥ १२० ॥
साहित्यमात्रं पूर्वोक्तं हेतोस्तत्रोपयुज्यते ।
व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ॥ १२१ ॥
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ।
धूमभावे ऽग्नि भावेन व्याप्ते ऽनग्निस्ततश्च्युतः ॥ १२२ ॥
अधूम एव विद्यतेत्येवं व्याप्यत्वमश्नुते ।
तथानग्नावधूमेन व्याप्ते धूमस्ततश्च्युतः ॥ १२३ ॥
अन्यथानवकाशत्वाद्व्याप्यते ध्रुवमग्निना ।
व्यापकौ तु यदोच्येते भावाभावौ तदा ततः ॥ १२४ ॥
नैव व्याप्या द्विपक्षस्य प्रच्युतिः कथिता भवेत् ।
तस्माद्धूमेन साध्यत्वमग्नेः प्रार्थ्यते यदा ॥ १२५ ॥
तदानग्निरधूमेन व्याप्यो वाच्यो न चान्यथा ।
अनग्न्यधूमसाहित्ये व्याप्ते वापि विपर्यये ॥ १२६ ॥
न प्रस्तुतो ऽपकारः स्यादन्यद्वापि प्रसाध्यते ।
यचाप्यर्थस्य शून्यत्वं द्वाभ्यामेकेन वा भवेत् ॥ १२७ ॥
यदनित्यं तु तन्मूर्तमणुवद्बुद्धिवत्खवत् ।
साध्येन व्याप्तिसिद्धैव व्यतिरेको ऽत्र कथ्यते ॥ १२८ ॥
यस्यायं नास्त्यसौ हेतुस्तेन साध्येन नाप्यते ।
तेन दृष्टे ऽपि साहित्ये न सर्वो गम्य इष्यते ॥ १२९ ॥
इह दृष्टिर्न संबन्धो व्याप्तिर्नैव च तावता ।
मूर्तानित्यत्वयुक्ते ऽपि तस्मादङ्गीकृते घटे ॥ १३० ॥

कर्मादौ व्याप्यभावेन न दृष्टान्तत्वमिष्यते ।
अशेषापेक्षितत्वाच्च सौक्ष्म्याच्चाप्यदर्शनात् ॥ १३१ ॥
साधनं यद्यपीष्टो ऽत्र व्यतिरेको ऽनुमां प्रति ।
तावता न ह्यनङ्गत्वं युक्तिः शाब्दे हि वक्ष्यते ॥ १३२ ॥
बोधप्रसङ्गो भेदानां न चाव्याप्तेर्भविष्यति ।
अस्ति सामान्यवस्त्वेषु व्यापिता तत्र गम्यताम् ॥ १३३
केचित्साधर्म्यदृष्टान्ते व्याप्त्यापि कल्पिते पुनः ।
वैधर्म्योक्तिमपीच्छन्तिव्यावृत्तिनियमेच्छया ॥ १३४ ॥
हेतौ साधर्म्यदृष्टान्तात्साध्येनैवावधारिते ।
व्यावृत्तिः सर्वतः प्राप्तासाध्याभावे नियम्यते ॥ १३५ ॥
तत्तु मन्दफलं यस्मात्पक्षेप्येवं निरूपितम् ।
व्यापकाभावमात्रं हि व्याप्यान्नित्यं निवर्त्तते ॥ १३६ ॥
तस्माद्यथैव शुक्लत्वे पटस्योक्ते विरोधिनाम् ।
निवृत्तिर्न तु दैर्घ्यादिस्तथाचापि भविष्यति ॥ १३७ ॥
द्वैविध्यं नोपपन्नं तु यथैव ह्यग्निधूमयोः ।
प्रत्यक्षदृष्टः संबन्धो गतिप्राप्त्योस्तथैव हि ॥ १३८ ॥
आदित्ये ऽनुपलब्धिश्चेन्न देशे ऽप्यधुनातने ।
क्व चित्तत्रोपलब्धिश्चेद्देवदत्ते ऽपि दृश्यताम् ॥ १३९ ॥
यदि धर्म्यन्तरापेक्षा तत्र सामान्यदृष्टता ।
स्यादग्निधूमयोः सैव तस्मादेवं प्रचक्षते ॥ १४० ॥
प्रत्यक्षदृष्टसंबन्धं ययोरेव विशेषयोः ।
गोमयेन्धनतज्जन्यविशेषादिमतिः कृता ॥ १४१ ॥
तद्देशस्थेन तेनैव गत्वा कालान्तरेपि तम् ।
यदाग्निर्बुध्यते तस्य पूर्वबोधात्पुनः पुनः ॥ १४२ ॥

संदिह्यमानसद्भाववस्तुबोधात्प्रमाणता ।
विशेषदृष्टमेतच्च लिखितं विन्ध्यवासिना ॥ १४३ ॥
आकृत्योरेव चैषेष्टा व्यवच्छेदेन केन चित् ।
हेतुसाध्यव्यवस्थेति विशेषो नोपदर्शितः ॥ १४४ ॥
अग्निधूमान्तरत्वे च वाच्ये सामान्यतो मतौ ।
सामान्यदृष्टमेकान्तदचेत्यादित्य उच्यते ॥ १४५ ॥
प्रत्यक्षविषयत्वं च सामान्यस्य प्रसाधितम् ।
वस्तुत्वं चात्र हेतुबद्वियस्याप्यभिधीयते ॥ १४६ ॥
धूमादग्न्यनुमानस्य वस्त्वालम्बनता भवेत् ।
अभावान्यप्रमाणत्वात्स्वार्थे श्रोत्रादिबुद्धिवत् ॥ १४७ ॥
सामान्यस्य च वस्तुत्वं प्रत्यक्षग्राह्यतापि च ।
अभावान्यप्रमेयत्वादसाधारणवस्तुवत् ॥ १४८ ॥
सामान्यं नानुमानेन विना यस्य प्रतीयते ।
न च लिङ्गविनिर्मुक्तमनुमानं प्रवर्त्तते ॥ १४९ ॥
उपसामान्यस्य लिङ्गत्वं न च केनचिदिष्यते ।
न चानवगतं लिङ्गं किं चिदस्ति प्रकाशकम् ॥ १५० ॥
तस्य वाप्यनुमानेन स्यादन्येन गतिः पुनः ।
तदुत्पत्तिश्च लिङ्गात्स्यात्सामान्यज्ञानसंहितात् ॥ १५१ ॥
तस्य चाप्यनुमानत्वाद्भवेल्लिङ्गेन चोद्भवः ।
अनुमानान्तरादेव ज्ञानेनैवं च कल्पने ॥ १५२ ॥
लिङ्गलिङ्ग्यनुमानानामानन्त्यादेकलिङ्गिनि ।
गतिर्युगसहस्रेषु बहुष्वपि न विद्यते ॥ १५३ ॥
अथ सामान्यभूते ऽपि लिङ्गात्त्वस्माद्गतिर्भवेत् ।
प्रमाणादप्रमाणाद्वा तया लिङ्गगतिर्भवेत् ॥ १५४ ॥

एवमप्यनुमानस्य नित्योच्छेदः प्रसज्यते ।
प्रमाणान्तरमेव स्यात्सामान्यस्यावबोधकम् ॥ १५५ ॥
अप्रमाणावबुद्धाद्वा लिङ्गाल्लिङ्गिनि या मतिः ।
सा मिथ्यैवंभवेन्नित्यं बाष्पजाताग्निबुद्धिवत् ॥ १५६ ॥
नन्वप्रमाणभूतापि संबन्धस्मृतिरिष्यते ।
तथा लिङ्गिगतो हेतुस्तथा लिङ्गगतिर्भवेत् ॥ १५७ ॥
तत्र यत्पूर्वविज्ञानं तस्य प्रामाण्यमिष्यते ॥
तदुपस्थानमात्रेण स्मृतेः स्याच्चरितार्थता ॥ १५८ ॥
न तु लिङ्गगतौ किं चित्प्रमाणमुपपद्यते ।
तदभावात्स्मृतिश्चात्र न कथं चित्प्रवर्त्तते ॥ १५९ ॥
स्मार्त्तमेतदभेदेन विज्ञानमिति यो वदेत् ।
तस्य वन्ध्यासुते ऽप्यस्ति नूनं स्मरणशक्तता ॥ १६० ॥
न चासाधारणो ऽर्थात्मा सामान्यज्ञानकारणम् ।
यस्मान्नास्याविनाभावस्तेन दृष्टः कथं च न ॥ १६१ ॥
स्याद्वा संबन्धदृष्ट्यासौ सामान्यं कृतकत्ववत् ।
न ह्यसाधारणं वस्तु पूर्वं ह च विद्यते ॥ १६२ ॥
न चाप्यव्यपदेशस्य विकल्परहितस्य च ।
विनापूर्वानुसन्धानाल्लिङ्गत्वमुपपद्यते ॥ १६३ ॥
कल्प्यन्ते च विशेषा ये ते ऽप्यलिङ्गमनन्वयात् ।
एतस्मादेव हेतोः स्यात्तज्ज्ञानस्याप्यलिङ्गता ॥ १६४ ॥
सामान्यरूपतायां वा तथैवानवधारणम् ।
क्वचिद्वा दृष्टसंबन्धे सर्वः प्रत्यायको भवेत् ॥ १६५ ॥
संबन्धानुभवो ऽवश्यमेषितव्यश्च लिङ्गिना ।
अनुमानप्रवृत्तेस्तु प्राग्ज्ञानं तत्र नास्तिते १६६ ॥

न चापि वासनामात्राल्लिङ्गज्ञानस्य संभवः ।
लिङ्गिज्ञानं च तद्वत्स्याच्चिद्रूपाल्लिङ्गतो न तत् ॥ १६७ ॥
तत्राभावस्य लिङ्गत्वं न चासावानुमानिकः ।
प्रमाणान्तरगम्यत्वात्तत्र दोषो न जायते ॥ १६८ ॥
प्रत्यक्षावगताल्लिङ्गाद्यस्य लिङ्गिगतिर्भवेत् ।
तस्य नातो ऽधिकं किं चित्प्रार्थनीयं प्रसज्यते ॥ १६९ ॥
यत्राप्यनुमिताल्लिङ्गाल्लिङ्गिनि ग्रहणं भवेत् ।
तत्रापि मौलिकं लिङ्गं प्रत्यक्षादेवगम्यते ॥ १७० ॥
लिङ्गत्वं कृतकत्वादौ क्रियायाः कारकस्य वा ।
प्रत्यक्षत्वं च तस्येष्टमिति दूरं न गम्यते ॥ १७१ ॥
एवं शब्दोपमानादौ सामान्याश्रयता यतः ।
तद्दौस्थित्येन दौस्थित्यं सर्वत्रातः प्रसज्यते ॥ १७२ ॥
तस्मात्प्रत्यक्षपूर्वत्वं प्रमाणान्तरइष्यते ।
प्रत्यक्षत्वं च सामान्ये नान्यथा हि गतिर्भवेत् ॥ १७३ ॥
प्रत्यक्षालम्बनत्वं च विशेषस्य कथं भवेत् ।
यदा वस्त्वन्तरापेक्षः सामान्यांशः स कीर्त्यते ॥ १७४ ॥
रूपादयो हि सामान्यं सर्वे नीलाद्यपेक्षया ।
स्वविशेषानपेक्ष्याथ नीलादीनां समानता ॥ १७५ ॥
ते चापि तावत्सामान्यं यावत्स्युः परमाणवः ।
द्व्यणुकस्यापि यद्रूपं तद्धि साधारणं द्वयोः ॥ १७६ ॥
न चान्त्येन विशेषेण व्यवहारो ऽस्ति कस्य चित् ।
न च प्रत्यक्षता तस्य संघाते केवलस्य वा ॥ १७७ ॥
भेदेन गृह्यमाणस्य नाभेदो ग्राह्यतां व्रजेत् ।
न च भिन्नेष्वभिन्नत्वबुद्धेर्ग्राह्यत्वसंभवः ॥ १७८ ॥

समुदायो न वाप्यस्ति भवतां न च सर्वदा ।
सर्वेषामसतार्थेन प्रत्ययोत्पत्तिसंभवः ॥ १७९ ॥
न चैकजातियोगेन विनास्ति समुदायता ।
समुदाये ऽपि चाणुत्वं नैतेषामपगच्छति ॥ १८० ॥
सामान्यमित्यदृश्यो ऽपि तेन सामान्य एव नः ।
व्यासंगिनि भवत्येषा धीर्विलाप्येककल्पनात् ॥ १८१ ॥
व्यासज्य वर्तमानस्य समान्यस्य यथेन्द्रियैः ।
ग्रहणं तद्वदेव स्यात्प्रतिव्यक्ति निवेशिनः ॥ १८२ ॥
मीमांसकैश्च नावश्यमिष्यन्ते परमाणवः ।
तद्बलेनोपलब्धस्य मिथ्यात्वं कल्पयेद्भवान् ॥ १८३ ॥
समूहरूपं प्रत्यक्षमदृश्यैः परमाणुभिः ।
यो ऽपन्हुते शशस्यापि सोभवं शृङ्गतो वदेत् ॥ १८४ ॥
समूहपरमार्थत्वे स्थिते तत्सिद्धिहेतुका ।
यदि नामावगम्येत परमाणवस्तिता पुनः ॥ १८५ ॥
तस्माद्यद्गृह्यते वस्तु येन रूपेण सर्वदा ।
तत्तथैवाभ्युपेतव्यं सामान्यमथ चेतरत् ॥ १८६ ॥
सत्तादिसामान्यमपेक्ष्य सर्वं गोत्वाद्यसाधारणतामुपैति ।
तस्मादसाधारणमक्षगम्यं वदन्न सामान्यमपन्हुवीत ॥ १८७ ॥
सामान्यरूपेण न गृह्यते चेत्किं वास्त्यसाधारणबुद्धिरच ।
यद्वस्तु लोकः प्रतिपद्यते ऽस्मिन्द्विधापि तच्छक्यतएव वक्तुम् ॥१८८॥

## ॥ अनुमानवार्त्तिकम् ॥

प्रत्यक्षादिषु वक्तव्यं शब्दमात्रस्य लक्षणम् ।
तदतित्वरितेनेह किं वा शास्त्रे ऽभिधीयते ॥ १ ॥

सामान्यलक्षणं त्यक्त्वा विशेषस्यैव लक्षणम् ।
न शक्यं केवलं वक्तुमितो ऽप्यस्य न वाच्यता ॥ २ ॥
यच्चोक्तं शब्दविज्ञानादर्थे ज्ञानमितीदृशम् ।
अविशिष्टं विशिष्टस्य न तच्छास्त्रस्य लक्षणम् ॥ ३ ॥
प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥ ४ ॥
स्वरूपकथनं तत्तुल्यस्य चित्तच दृश्यते ।
तदङ्गत्वेन तस्यापि शास्त्रत्वमवगम्यते ॥ ५ ॥
भावनायां समस्तायां वाक्यादेवोपजायते ।
प्रवृत्तिर्वा निवृत्तिर्वा तच्छास्त्रं न पदाद्यतः ॥ ६ ॥
अपरीक्षामिषेणापि लक्षणानि वदन्नयम् ।
न च तन्त्रोपयोगित्वनिरपेक्षाणि जल्पति ॥ ७ ॥
तच यल्लोकवाक्यस्थं कथयेच्छब्दलक्षणम् ।
वेदं व्याख्यातुकामस्य तन्नातीवोपयुज्यते ॥ ८ ॥
प्रत्यक्षाद्युपयोगं तु वर्णमाचादितः पुरः ।
शास्त्रार्थज्ञानवेलायां मत्वा तल्लक्षणं कृतम् ॥ ९ ॥
यत्तु गामानयेत्यादि वाक्यस्थं शब्दलक्षणम् ।
तस्य नेहोपयोगो ऽस्ति तस्माच्छास्त्रगतं कृतम् ॥ १० ॥
विशेषश्च न सामान्यमन्तरेणास्ति कश्च न ।
तस्मात्तमप्युदाहृत्य सामान्यं लक्षयेत्सुखम् ॥ ११ ॥
सामान्यरूपमप्येतदधिकाराद्विशिष्यते ।
चोदना चोपदेशश्च शास्त्रमेवेत्युदाहृतम् ॥ १२ ॥
यथा च चोदनाशब्दो वैदिक्यामेव वर्त्तते ।
शब्दज्ञानार्थविज्ञानशब्दौ शास्त्रे तथा स्थितौ ॥ १३ ॥

प्रत्यक्षाद्यपरीक्ष्यत्वे तदन्तर्भावहेतुकम् ।
शास्त्रस्याप्यपरीक्ष्यत्वमनयैव धियोदितम् ॥ १४ ॥
तच्चानुमानमेवेदं बौद्धैर्वैशेषिकैः श्रितम् ।
भेदः संख्यादिभिस्त्विष्टो न तूक्तं भेदकारणम् ॥ १५ ॥
पूर्वसंस्कारयुक्तान्त्य वर्णवाक्यादिकल्पना ।
विवक्षादि च धूमादौ नास्तीत्येतेन भिन्नता ॥ १६ ॥
येरुक्ता तत्र वै धर्मविकल्पसमजातिता ।
धूमानित्यविषाण्यादि विशेषान्न हि भिन्नता ॥ १७ ॥
वैलक्षण्यपरित्यागो यावन्न प्रतिपाद्यते ।
तावद्विशेषमात्रेण वदतो जातिता भवेत् ॥ १८ ॥
यथेष्टविनियोगेन प्रतीतिर्यापि शब्दतः ।
न धूमादेरितीहापि व्यभिचारोक्तवृत्तिभिः ॥ १९ ॥
हस्तसंज्ञादयो ये ऽपि यदर्थप्रतिपादने ।
भवेयुः कृतसङ्केतास्तेन लिङ्गमिति स्थितिः ॥ २० ॥
पुरुषाच्चिप्रतायां च तथैव व्यभिचारिता ।
यदवैदिकवाक्यानां न सत्यव्यापिता भवेत् ॥ २१ ॥
संबन्धानुभवश्चायं सो ऽन्यत्रापि विलक्षणः ।
एतस्मिन्पुरुषापेक्षो देशापेक्षो ऽग्निधूमयोः ॥ २२ ॥
कालाद्यपेक्षया चान्य उक्ता चान्यैरभिन्नता ।
आप्तवादाविसंवादसामान्यादनुमानतः ॥ २३ ॥
न चापूर्वादिशब्दानां भेदात्सर्वत्रभिन्नता ।
नचेहाश्वादिशब्देभ्यो भेदस्तेषां प्रतीयते ॥ २४ ॥
न चाप्यज्ञातसंबन्धं पदं किं चित्प्रकाशकम् ।
संबन्धाननुभूत्यातो न स्यादननुमानता ॥ २५ ॥

तुल्याकारतया ऽप्यत्र शब्दज्ञानार्थतद्धियाम् ।
अग्निधूमेष्वदृष्टत्वान्न भेदस्तन्निवारणात् ॥ २६ ॥
प्रतिबिम्बोप्यनैकान्तो बिंबं यादृग्घिदर्पणे ।
तादृङ्मुखादि बुध्यन्ते न चातानुमानता ॥ २७ ॥
प्रत्यक्षता तदाप्यत्र सदान्यैर्व्यभिचारिता ।
यत्र पादादिबिम्बेन गतानामनुमीयते ॥ २८ ॥
एकवाक्यात्सकृच्चोक्तान्नाप्यनेकस्य यत्क्षणम् ।
स्याद्विरुद्धाविरुद्धस्य बोधादेतस्य भिन्नता ॥ २९ ॥
लिङ्गस्यापि हि तादूप्यं दृष्टं हेतुविरुद्धयोः ।
विरोधान्नानुमानं चेत्स्यादनागमतापि ते ॥ ३० ॥
यत्र चैकार्थता वाक्ये तत्र स्यादनुमानता ।
सकृदुच्चरिते चास्मिन्विवक्षैकैव दृश्यते ॥ ३१ ॥
यस्त्वनिर्धारितार्थानामनेकप्रतिभोद्भवः ।
स लिङ्गे ऽथ स्फुटे दृष्टस्तस्मान्नैतेन भिद्यते ॥ ३२ ॥
दृष्टान्तानभिधानं च धूमादौ व्यभिचारितम् ।
प्रसिद्धत्वाद्धि तत्रापि न दृष्टान्तो ऽभिधीयते ॥ ३३ ॥
अनभ्यस्ते त्वपेक्षन्ते शब्दे संबन्धिनः स्मृतिम् ।
अत्र प्रयुक्त इत्येवं बुध्यन्ते हि चिरात्क्वचित् ॥ ३४ ॥
पुरोक्ता हेतवश्चात्र नाभेदस्य निवारिताः ।
शब्दानुमानयोरैक्यं धूमादग्न्यनुमानवत् ॥ ३५ ॥
अन्वयव्यतिरेकाभ्यामेकप्रत्यक्षदर्शनात् ।
संबन्धपूर्वकत्वाच्च प्रतिपत्तिरितो यतः ॥ ३६ ॥
प्रत्यक्षान्यप्रमाणत्वात्तददृष्टार्थबोधनात् ।
सामान्यविषयत्वाच्च त्रैकाल्यविषयाश्रयात् ॥ ३७ ॥

केश्चिन्मीमांसकैरुक्तो भेदो ऽत्र विषयान्तरात् ।
पूर्वाभ्यां ह्यपरिच्छिन्ने शास्त्रमर्थे प्रवर्त्तते ॥ ३८ ॥
तत्रापि नागमत्वं स्यात्पुरुषोक्तेस्तथास्तु चेत् ।
प्रत्ययः किंनिमित्तो ऽर्थे वक्तृबुद्धेः कुतो ऽन्वसौ ॥ ३९ ॥
न शब्दार्थस्य सा लिङ्गं न शब्दो ऽस्याः कथं च न ।
विशेषो गम्यतेताभ्यां न चैतस्यानुमेयता ॥ ४० ॥
तेन वक्तुरभिप्राये प्रत्यक्षाद्यनिरूपिते ।
पुरुषोक्तिरपि श्रोतुरागमत्वं प्रपद्यते ॥ ४१ ॥
न चाप्यननुमेयत्वमागमार्थस्य शक्यते ।
लिङ्गं हि शब्द एवास्य धूमो ऽग्नेरिव कल्पते ॥ ४२ ॥
न चार्थाननुमेयत्वात्प्रमाणान्तरगम्यता ।
रूपस्याश्रवणत्वेन न ह्यप्रत्यक्षतेष्यते ॥ ४३ ॥
एवं सति स्वयूथ्या न के चिन्नातिप्रयन्त्रितः ।
अनुमानविशेषो ऽयमीदृग् धर्मस्य बोधकः ॥ ४४ ॥
भविष्यत्यर्थरूपं तु लिङ्गं धर्मे निराकृतम् ।
संज्ञानुमानतेच्छा नु नदुष्येदागमेपि नः ॥ ४५ ॥
लक्षणेन त्वभिन्नत्वं यदि शब्दानुमानयोः ।
वेदज्ञानाप्रमाणत्वं स्यादतल्लक्षणत्वतः ॥ ४६ ॥
आप्तवादाविसंवादसामान्यान्नृवचस्सु हि ।
लक्षणेनानुमानत्वात्प्रामाण्यं सिद्धिमृच्छति ॥ ४७ ॥
वेदे त्वाप्तनराभावात्संबन्धानुभवादृते ।
लक्षणं नानुमानस्येत्यप्रामाण्यं प्रसज्यते ॥ ४८ ॥
मन्वेकदेशसत्यत्वे तस्यस्यादनुमानता ।
वेदत्वादग्निहोत्रादौ वापुञ्जेपिष्टवाक्यवत् ॥ ४९ ॥

नादित्ययूपेनैकान्त्यात्तद्बुद्धा गौणता भवेत् ।
नातः प्रत्यनुमानानामेवं पूर्वोक्तया दिशा ॥ ५० ॥
तस्माल्लक्षणभेदेन यदि शब्दप्रमाणता ।
समा लोके च वेदे च सिद्धा वेदप्रमाणता ॥ ५१ ॥
तेन चाप्तोपदेशत्वं न स्यादागमलक्षणम् ।
नाप्तस्य संभवो वेदे लोके नास्मात्प्रमाणता ॥ ५२ ॥
पुरस्ताद्वर्णितं ह्येतत्तस्माच्छब्देन या मतिः ।
तस्याः स्वतः प्रमाणत्वं न चेत्स्याद्दोषदर्शनम् ॥ ५३ ॥
अनुमानेन चेत्तस्य प्रामाण्यं केवलं समम् ।
पदे तावत्कृतो यत्नः परैरित्यत्र वर्ण्यते ॥ ५४ ॥
विषयो ऽन्यादृशस्तावद्दृश्यते लिङ्गशब्दयोः ।
सामान्यविषयत्वं च पदस्य स्थापयिष्यति ॥ ५५ ॥
धर्माधर्मविशिष्टश्च लिङ्गीत्येतच्च साधितम् ।
न तावदनुमानं हि यावत्तद्विषयं न तत् ॥ ५६ ॥
सामान्यादतिरिक्तं तु शाब्दे वाक्यस्य गोचरः ।
सामर्थ्यादनुमेयत्वादश्रुते ऽपि पदान्तरे ॥ ५७ ॥
संख्यादिमान्पदार्थश्चेन्न तावत्सो ऽव्ययादिषु ।
यत्रापि ते प्रतीयन्ते तत्र व्यक्तेर्विशेषणम् ॥ ५८ ॥
पदान्तराभिधेयस्य तादर्थ्याच्च क्रियात्मनः ।
वाक्यार्थे ऽपि पदं यत्र गोमदादि प्रयुज्यते ॥ ५९ ॥
सत्यप्यत्र विशिष्टत्वे सिद्धत्वान्नैव पक्षता ।
तावानेव हि तत्रार्थो यः पूर्वमवधारितः ॥ ६० ॥
भेदबुद्धेश्च वैषम्यं प्रकृतिप्रत्ययार्थयोः ।
विशेषणविशेष्यार्थस्वातन्त्र्यग्रहणं तव ॥ ६१ ॥

विशेष्यपूर्विका तत्र बुद्धिश्चात्र विपर्ययः ।
अथ शब्दो ऽर्थवत्त्वेन पक्षः कस्मान्न कल्प्यते ॥ ६२ ॥
प्रतिज्ञार्थैकदेशो हि हेतुस्तत्र प्रसज्यते ।
पक्षे धूमविशेषे च सामान्यं हेतुरिष्यते ॥ ६३ ॥
शब्दे च गमकं नात्र गोशब्दत्वं निषेत्स्यते ।
व्यक्तिरेव विशेष्यातो हेतुश्चैका प्रसज्यते ॥ ६४ ॥
भवेद्व्यञ्जकभेदाच्चेन्न त्वेवं प्रत्ययो ऽस्ति नः ।
कथं चास्य विशिष्टत्वं न तावद्देशकालतः ॥ ६५ ॥
तत्प्रतीतिविशिष्टश्चेत्परं किमनुमीयते ।
न प्रत्यायनशक्तिश्च विशेषस्यानुमीयते ॥ ६६ ॥
विशेषाणां न शक्तिर्हि सैकादेशे ऽग्निजातिवत् ।
सामान्यस्यैव शक्तत्वं पक्षो हेतुस्तदेव च ॥ ६७ ॥
तस्मादर्थविशिष्टस्य न शब्दस्यानुमेयता ।
कथं च पक्षधर्मत्वं शब्दस्येह निरूप्यते ॥ ६८ ॥
न क्रियाकर्तृसंबन्धादृते संबन्धनं क्वचित् ।
राजा भर्ता मनुष्यस्य तेन राज्ञः स उच्यते ॥ ६९ ॥
वृक्षस्तिष्ठति शाखासु ता वा तत्रेति तस्य ताः ।
देशे ऽग्निमति धूमस्य कर्तृत्वं भवनं प्रति ॥ ७० ॥
कार्यकारणभावादौ क्रिया सर्वत्र विद्यते ।
न चानवगताकारस्संबन्धो ऽस्तीति गम्यते ॥ ७१ ॥
न चास्त्यसति संबन्धे षष्ठीतत्पुरुषो ऽपि वा ।
तस्मान्न पक्षधर्मो ऽयमिति शक्यानिरूपणा ॥ ७२ ॥
निवृत्ते ऽन्यत्र संबन्धे ये ऽपि तद्विषयात्मना ।
वदेयुः पक्षधर्मत्वं शब्दस्यानुपलब्धिवत् ॥ ७३ ॥

तैरप्येतन्निरूप्यं तु शब्दस्तद्विषयः कथम् ।
न तद्देशादिसद्भावो नाभिमुख्यादि तस्य वा ॥ ७४ ॥
तस्मादुत्पादयत्येष यतो ऽर्थविषयां मतिम् ।
तेन तद्विषयश्शब्द इति कर्मत्वकल्पना ॥ ७५ ॥
तत्र वाचकतायां च सिद्धायां पक्षधर्मता ।
न प्रतीत्यङ्गतां गच्छेन्न चैवमनुमानता ॥ ७६ ॥
गमकत्वाच्च धर्मत्वं धर्मत्वाद्गमको यदि ।
स्यादन्योन्याश्रयत्वं हि तस्मान्नैषापि कल्पना ॥ ७७ ॥
न चागृहीतसंबन्धाः स्वरूपव्यतिरेकतः ।
शब्दं जानन्ति येनात्र पक्षधर्ममतिर्भवेत् ॥ ७८ ॥
न च स्वरूपमात्रेण धूमादेः पक्षधर्मता ।
न चापि पूर्वसंबन्धमपेक्ष्यैषा प्रसज्यते ॥ ७९ ॥
धूमवानयमित्येवमपूर्वस्यापि जायते ।
पक्षधर्ममतिस्तेन भिद्येतोत्तरलक्षणात् ॥ ८० ॥
नन्वत्र पूर्वसंबन्धादधिकापक्षधर्मता ।
न चार्थप्रत्ययात्पूर्वमित्यनङ्गमियं भवेत् ॥ ८१ ॥
न च धर्मी गृहीतो ऽत्र येन तद्धर्मता भवेत् ।
पर्वतादिर्यथा देशः प्राग्धर्मत्वावधारणात् ॥ ८२ ॥
यश्चात्र कथ्यते धर्मी प्रमेयो ऽस्य एव नः ।
न चानवधृते तस्मिंस्तद्धर्मत्वावधारणात् ॥ ८३ ॥
प्राग्भवेत्पक्षधर्मत्वाद् गृहीतः किं ततः परम् ।
पक्षधर्मादिभिर्ज्ञातैर्येन स्यादनुमानिता ॥ ८४ ॥
अन्वयो न च शब्दस्य प्रमेयेन निरूप्यते ।
व्यापारेण हि सर्वेषामन्वितत्वं प्रतीयते ॥ ८५ ॥

विशेष्यपूर्विका तत्र बुद्धिश्चात्र विपर्ययः ।
अथ शब्दो ऽर्थवत्त्वेन पक्षः कस्मान्न कल्प्यते ॥ ६२ ॥
प्रतिज्ञार्थैकदेशो हि हेतुस्तत्र प्रसज्यते ।
पक्षे धूमविशेषे च सामान्यं हेतुरिष्यते ॥ ६३ ॥
शब्दे च गमकं नात्र गोशब्दत्वं निषेत्स्यते ।
व्यक्तिरेव विशेष्यातो हेतुश्चैका प्रसज्यते ॥ ६४ ॥
भवेद्व्यञ्जकभेदाच्चेन्न त्वेवं प्रत्ययो ऽस्ति नः ।
कथं चास्य विशिष्टत्वं न तावद्देशकालतः ॥ ६५ ॥
तत्प्रतीतिविशिष्टश्चेत्परं किमनुमीयते ।
न प्रत्यायनशक्तिश्च विशेषस्यानुमीयते ॥ ६६ ॥
विशेषाणां न शक्तिर्हि सैकादेशे ऽग्निजातिवत् ।
सामान्यस्यैव शक्तत्वं पक्षो हेतुस्तदेव च ॥ ६७ ॥
तस्मादर्थविशिष्टस्य न शब्दस्यानुमेयता ।
कथं च पक्षधर्मत्वं शब्दस्येह निरूप्यते ॥ ६८ ॥
न क्रियाकर्तृसंबन्धादृते संबन्धनं क्वचित् ।
राजा भर्ता मनुष्यस्य तेन राज्ञः स उच्यते ॥ ६९ ॥
वृक्षस्तिष्ठति शाखासु ता वा तत्रेति तस्य ताः ।
देशे ऽग्निमति धूमस्य कर्तृत्वं भवनं प्रति ॥ ७० ॥
कार्यकारणभावादौ क्रिया सर्वत्र विद्यते ।
न चानवगताकारस्संबन्धो ऽस्तीति गम्यते ॥ ७१ ॥
न चास्त्यसति संबन्धे षष्ठीतत्पुरुषो ऽपि वा ।
तस्मान्न पक्षधर्मो ऽयमिति शक्यानिरूपणा ॥ ७२ ॥
निवृत्ते ऽन्यत्र संबन्धे ये ऽपि तद्विषयात्मना ।
वदेयुः पक्षधर्मत्वं शब्दस्यानुपलब्धिवत् ॥ ७३ ॥

तैरप्येतन्निरूप्यं तु शब्दस्तद्विषयः कथम् ।
न तद्देशादिसद्भावो नाभिमुख्यादि तस्य वा ॥ ७४ ॥
तस्मादुत्पादयत्येष यतो ऽर्थविषयां मतिम् ।
तेन तद्विषयश्शब्द इति कर्मत्वकल्पना ॥ ७५ ॥
तत्र वाचकतायां च सिद्धायां पक्षधर्मता ।
न प्रतीत्यङ्गतां गच्छेन्न चैवमनुमानता ॥ ७६ ॥
गमकत्वाच्च धर्मत्वं धर्मत्वाद्गमको यदि ।
स्यादन्योन्याश्रयत्वं हि तस्मान्नैषापि कल्पना ॥ ७७ ॥
न चागृहीतसंबन्धाः स्वरूपव्यतिरेकतः ।
शब्दं जानन्ति येनात्र पक्षधर्ममतिर्भवेत् ॥ ७८ ॥
न च स्वरूपमात्रेण धूमादेः पक्षधर्मता ।
न चापि पूर्वसंबन्धमपेक्ष्यैषा प्रसज्यते ॥ ७९ ॥
धूमवानयमित्येवमपूर्वस्यापि जायते ।
पक्षधर्ममतिस्तेन भिद्यतोत्तरलक्षणात् ॥ ८० ॥
नन्वत्र पूर्वसंबन्धादधिकापक्षधर्मता ।
न चार्थप्रत्ययात्पूर्वमित्यनङ्गमियं भवेत् ॥ ८१ ॥
न च धर्मी गृहीतो ऽत्र येन तद्धर्मता भवेत् ।
पर्वतादिर्यथा देशः प्राग्धर्मत्वावधारणात् ॥ ८२ ॥
यश्चात्र कथ्यते धर्मी प्रमेयो ऽस्य एव नः ।
न चानवधृते तस्मिंस्तद्धर्मत्वावधारणात् ॥ ८३ ॥
प्राग्भवेत्पक्षधर्मत्वाद् गृहीतः किं ततः परम् ।
पक्षधर्मादिभिर्ज्ञातैर्येन स्यादनुमानिता ॥ ८४ ॥
अन्वयो न च शब्दस्य प्रमेयेन निरूप्यते ।
व्यापारेण हि सर्वेषामन्वितत्वं प्रतीयते ॥ ८५ ॥

यत्र धूमो ऽस्ति तत्राग्नेरस्तित्वेनान्वयः स्फुटः।
न त्वेवं यत्र शब्दो ऽस्ति तत्रार्थो ऽस्तीति निश्चयः॥ ८६॥
न तावत्तत्र देशे ऽसौ तत्काले वावगम्यते।
भवेन्नित्यविभुत्वाच्चेत्सर्वार्थेषु च तत्समम्॥ ८७॥
तेन सर्वत्र दृष्टत्वाद्व्यतिरेकस्य वा गतेः।
सर्वशब्दैरशेषार्थप्रतिपत्तिः प्रसज्यते॥ ८८॥
अथैवं देशकालाभ्यामसत्यत्वप्रकल्पने।
वाचकप्रत्ययं कश्चिद् ब्रूयादर्थधियान्वितम्॥ ८९॥
नैवमप्यस्ति दृष्टो हि विनाप्यर्थधिया क्व चित्।
ननु येज्ञानसंबन्धास्तेषां दृष्टो ऽन्वयः स्फुटः॥ ९०॥
यद्येवमन्वयात्पूर्वं संबन्धः को ऽपि कल्पितः।
नागमार्थधियामेषाभवेदन्वयकल्पना॥ ९१॥
अन्वयाधीनजन्मत्वमनुमानस्य च स्थितम्।
ज्ञाते प्रतीतिसामर्थ्ये तद्वशादेव जायते॥ ९२॥
पश्चादन्वय इत्येष कारणं कथमुच्यते।
तस्मात्तन्निरपेक्षैव शब्दशक्तिः प्रतीयते॥ ९३॥
न च धूमान्वयात्पूर्वं शक्तत्वमगवम्यते।
व्यतिरेको ऽप्यविज्ञातादर्थाच्छब्दधियो यदि॥ ९४॥
सोऽपि पश्चात्स्थितत्वेन नार्थप्रत्ययसाधनम्।
संबन्धं यं तु वक्ष्यामस्तस्य निर्णयकारणम्॥ ९५॥
स्यादन्वयो ऽतिरेकश्च न त्वर्थाधिगमस्य तौ।
तस्मादननुमानत्वं शब्दे प्रत्यक्षवद्भवेत्॥ ९६।
त्रैरूप्यरहितत्वेन तादृग्विषयवर्जनात्।
सति चास्य प्रमाणत्वे भेदाभेदनिरूपणा॥ ९७॥

युक्ता न तु पदज्ञानात्पदार्थो ऽत्र प्रमीयते ।
पदं प्रयुज्यमानं हि चतुर्थो ऽर्थे प्रयुज्यते ॥ ९८ ॥
प्रत्यक्षे च परोक्षे च ज्ञाते ऽज्ञाते ऽपि वा पुरा ।
तत्र यत्पूर्वविज्ञाते प्रत्यक्षे च प्रयुज्यते ॥ ९९ ॥
प्रमिते च प्रयुक्तत्वादनुवादो ऽधिकाद्विना ।
अदृष्टपूर्वे त्वज्ञानसंबन्धप्रत्ययो ऽपि वा ॥ १०० ॥
संबन्धो न च तस्यार्थो योर्थः स त्वन्यगोचरः ।
परोक्षे ऽननुभूते च नाभिधेये मतिर्भवेत् ॥ १०१ ॥
परोक्षश्चानुभूतश्च यस्तत्र स्मृतिरिष्यते ।
प्रमिते च प्रवृत्तत्वात्स्मृतेर्नास्ति प्रमाणता ॥ १०२ ॥
परिच्छेदफलत्वाद्धि प्रामाण्यमुपजायते ।
तादात्विकपरिच्छेदफलत्वेन प्रमाणता ॥ १०३ ॥
प्रत्यभिज्ञानवत्कस्मात्स्मृतेरपि न कल्प्यते ।
यावान्पूर्वपरिच्छिन्नस्तावानेवावधार्यते ॥ १०४ ॥
स्मृत्या तदनुसारेण तदा सत्त्वे ऽस्यनैव धीः ।
पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते ॥ १०५ ॥
यदाधिक्यं भवेत्किं चित्तत्पदस्य न गोचरः ।
प्रमाणमनुमानं वा यद्यपि स्यात्पदान्मतिः ॥ १०६ ॥
वाक्यार्थस्यागमार्थत्वाद्दोषो नागमवादिनाम् ।
वाक्यार्थे तु पदार्थेभ्यः संबन्धानुभवादृते ॥ १०७ ॥
बुद्धिरुत्पद्यते तेन भिन्ना सावत्तबुद्धिवत् ।
वाक्याधिकरणे वास्य हेतोः सिद्धिर्भविष्यति ॥ १०८ ॥
सर्वेषां च परोक्षाणां वाक्याद्बुद्धावसिद्धता ॥ १०९ ॥

वाक्येष्वदृष्टेष्वपि सार्थकेषु पदार्थविन्मात्रतया प्रतीतिम्।
दृष्ट्वानुमानव्यतिरेकभीताः क्लिष्टाः पदाभेदविचारणायाम्॥१०१

॥ इति शब्दवादः॥

कीदृग्गवय इत्येवं पृष्टो नागरिकैर्यदि।
ब्रवीत्यारण्यको वाक्यं यथा गौर्गवयस्तथा॥ १॥
एतस्मिन्नुपमानत्वं प्रसिद्धं शाबरेषु नः।
तस्यागमाबहिर्भावादन्यथैवोपवर्णितम्॥ २॥
पुरुषप्रत्ययेनैव तच्चार्थः संप्रतीयते।
तदीयवचनत्वेन तस्मादागम एव सः॥ ३॥
सदृशादुपजायेत या मतिः सदृशान्तरे।
ध्यानादिस्मृतितुल्यत्वात्सा प्रमाणं कथं भवेत्॥ ४॥
देशकालादिभेदेन यथान्यच्च विशिष्यते।
प्रमेयं नैवमस्त्यत्र नगरस्थानुसारतः॥ ५॥
श्रुतातिदेशवाक्यानामारण्ये गवये मतिः।
या सोपमानं केषां चिद्गोसादृश्यानुरञ्जिता॥ ६॥
प्रत्यक्षो गवयस्तावत्सादृश्यस्मृतिरत्र तु।
ननु सादृश्ययुक्ते ऽर्थे न स्मृतिर्नेन्द्रियाद्गतिः॥ ७॥
पूर्ववाक्यार्थविज्ञानान्नाधिक्यं गवये यदि।
स्मरणादविशिष्टत्वात्संगतेर्न प्रमाणता॥ ८॥
अथ त्वधिकता का चित्प्रत्यक्षदिवसाद् भवेत्।
यावद्धीन्द्रियसंबद्धं तत्प्रत्यक्षमिति स्थितम्॥ ९॥
स्मर्यमाणस्य चांशस्य विवेकेनाप्रमाणता।
श्रुतातिदेशवाक्यत्वं न चातीवोपयुज्यते॥ १०॥

वाक्येष्वदृष्टेष्वपि सार्थकेषु पदार्थविन्मात्रतया प्रतीतिम्।
दृष्ट्वानुमानव्यतिरेकभीताः क्लिष्टाः पदाभेदविचारणायाम्॥१०१

॥ इति शब्दवादः ॥

कीदृग्गवय इत्येवं पृष्टो नागरिकैर्यदि।
ब्रवीत्यारण्यको वाक्यं यथा गौर्गवयस्तथा ॥ १ ॥
एतस्मिन्नुपमानत्वं प्रसिद्धं शाबरेषु नः।
तस्यागमाबहिर्भावादन्यथैवोपवर्णितम् ॥ २ ॥
पुरुषप्रत्ययेनैव तत्रार्थः संप्रतीयते।
तदीयवचनत्वेन तस्मादागम एव सः ॥ ३ ॥
सदृशादुपजायेत या मतिः सदृशान्तरे।
ध्यानादिस्मृतितुल्यत्वात्सा प्रमाणं कथं भवेत् ॥ ४ ॥
देशकालादिभेदेन यथान्यत्र विशिष्यते।
प्रमेयं नैवमस्त्यत्र नगरस्यानुसारतः ॥ ५ ॥
श्रुतातिदेशवाक्यानामारण्ये गवये मतिः।
या सोपमानं केषांचिद्गोसादृश्यानुरञ्जिता ॥ ६ ॥
प्रत्यक्षो गवयस्तावत्सादृश्यस्मृतिरत्र तु।
ननु सादृश्ययुक्तेऽर्थे न स्मृतिर्नेन्द्रियाद्गतिः ॥ ७ ॥
पूर्ववाक्यार्थविज्ञानान्नाधिक्यं गवये यदि।
स्मरणादविशिष्टत्वात्संगतेर्न प्रमाणता ॥ ८ ॥
अथ त्वधिकता काचित्प्रत्यक्षादिवसाद् भवेत्।
यावद्धीन्द्रियसंबद्धं तत्प्रत्यक्षमिति स्थितम् ॥ ९ ॥
स्मर्यमाणस्य चांशस्य विवेकेनाप्रमाणता।
श्रुतातिदेशवाक्यत्वं न चातीवोपयुज्यते ॥ १० ॥

ये ऽपि ह्यश्रुततद्वाक्यास्तेषामपि भवत्ययम् ।
प्रत्यक्षदृष्टगोत्वानां वने गवयदर्शिनाम् ॥ ११ ॥
अथ संज्ञानुसधानां तेषां नास्तीति वर्ण्यते ।
न नाम वस्तु तत्तावत्सर्वथा तैः प्रतीयते ॥ १२ ॥
न च शब्दार्थसंबन्धः प्रमेयो ऽच तदेष्यते ।
सादृश्यावधृते वाक्ये वाक्यादवगतो ह्यसौ ॥ १३ ॥
न वास्य प्रत्यभिज्ञानं पुनरुत्पद्यते वने ।
शक्त्योरतीन्द्रियत्वेन स्मृतिरेव हि सेष्यते ॥ १४ ॥
शब्दानुविद्धबोधे ऽपि प्रत्यक्षमुपपादितम् ।
तस्मात्सादृश्ययुक्तार्थः प्रमेयो ऽपूर्व उच्यताम् ॥ १५ ॥
व्यवसायात्मकत्वं तु प्रत्यक्षस्य यदेष्यते ।
जात्यादिवत्तदा तेन सादृश्यं किं न मीयते ॥ १६ ॥
प्रत्यक्षाभासमेतत्तु निर्विकल्पकवादिनाम् ।
प्रमेयवस्त्वभावाच्च नाभिप्रेता प्रमाणता ॥ १७ ॥
सादृश्यस्यापि वस्तुत्वं न शक्यमपबाधितुम् ।
भूयो ऽवयवसामान्ययोगो जात्यन्तरस्य तत् ॥ १८ ॥
सदृशावयवत्वं तु यच पद्मदलाक्षिवत् ।
तत्स्वावयवसामान्यभूम्ना तेषां भविष्यति ॥ १९ ॥
एवं जातिगुणद्रव्यक्रियाशक्तिस्वधर्मतः ।
एकैकद्विचिसामस्त्यभेदादेतस्य चित्रता ॥ २० ॥
न धर्मा एव सादृश्यं भूयस्तावत्तदाश्रया ।
भूयस्तु बुद्धिजात्यादिसदृशत्वेन दृश्यते ॥ २१ ॥
यमयोः कथतच्चेद्दृष्टत्वात्किमिहोच्यते ।
क्व चिद्धि भूयसामेतत्क्व चिदल्पीयसामपि ॥ २२ ॥

नैतावता विशेषेण वस्तुत्वं तस्य हीयते ।
सामान्यान्यपि चैतानि नाशीन्याश्रयनाशतः ॥ २३ ॥
अनात्ताश्रययोगाच्च न नाशो ऽन्यच विद्यते ।
तेन सर्वं न सामान्यं नित्यत्वेन प्रकल्प्यते ॥ २४ ॥
सामान्यानां न वा नाशः क्व चिदभ्युपगम्यते ।
सर्वस्यत्ह्याश्रयः कश्चिदस्ति देशान्तरादिषु ॥ २५ ॥
तेषां भूयस्तया चेदं सादृश्यमतिरिच्यते ।
तानि व्यस्तानि संत्येवं प्रत्यचे ऽपि क्व चित्क्व चित् ॥ २६ ॥
सदृशावयवत्वं तु यच नाम प्रतीयते ।
तदप्यवयवानां स्यात्समानावयवान्तरैः ॥ २७ ॥
एवं तावद्यतो नास्ति पराभेदप्रकल्पना ।
ततः परं तु सामान्यं भवेत्सादृश्यवर्जितम् ॥ २८ ॥
प्रधानानां तु सामान्यं यचैकं संप्रतीयते ।
स एवेति भवेत्तच तद्भेदे सदृशत्वधीः ॥ २९ ॥
चित्रादौ यच सादृश्यं सामान्यं तच किं भवेत् ।
तचापि पृथिवीवर्णविशेषादिसमानता ॥ ३० ॥
रूपगन्धरसानां च कस्य चित्तुल्यता क्व चित् ।
नावश्यं सर्वसामान्यात्सादृश्यमुपजायते ॥ ३१ ॥
पृथिव्यादिषु चैतेषां सतामेव स्वभावतः ।
परिमाणादिभिर्व्यक्तिर्यथा दृष्ट्यावधार्यते ॥ ३२ ॥
न हि शक्त्यात्मनाकिं चिदसज्जन्म प्रपद्यते ।
धर्माणां न च नानात्वमस्ति चावान्तरस्थितिः ॥ ३४ ॥
वस्तुत्वे सति चास्यैवं संबद्धस्य च चक्षुषा ।
द्वयोरेकच वा दृष्टः प्रत्यक्षत्वान्न वार्यते ॥ ३५ ॥

सामान्यवच्च सादृश्यमेकैकत्र समाप्यते ।
प्रतियोगिन्यदृष्टे ऽपि तस्मात्तदुपपद्यते ॥ ३६ ॥
तत्र यद्यपि गां स्मृत्वा तद्ज्ञानमुपजायते ।
सन्निधेर्गवयस्थत्वाद्भवेदिन्द्रियगोचरः ॥ ३७ ॥
तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥ ३८ ॥
प्रत्यक्षेणावबुद्धेपि सादृश्येविगतस्मृते ।
विशिष्टस्यान्यतो लोके प्रसिद्धेनुपमानता ॥ ३९ ॥
प्रत्यक्षे ऽपि यथा देशे स्मर्यमाणे च पावके ।
विशिष्टविषये चैनं नानुमानाप्रमाणता ॥ ४० ॥
यत्र च सदृशादेव कल्पयित्वोपजायते ।
सादृश्यप्रत्ययस्तत्र तद् भावासत्वकल्पना ॥ ४१ ॥
बाधकप्रत्ययाच्चैषा सादृश्याभासता मता ।
यथापलालकूर्मस्य सादृश्यं कुञ्जरादिना ॥ ४२ ॥
समीपस्थो ऽपि जानाति सादृश्यं नेति तत्र हि ।
न बध्यते समीपादौ यत्तु सादृश्यमेव तत् ॥ ४३ ॥
न चैतस्यानुमानत्वं पक्षधर्माद्यसंभवात् ।
प्राक् प्रमेयस्य सादृश्यं न धर्मत्वेन गृह्यते ।
गवये गृह्यमाणं च न गवामनुमापकम् ॥ ४४ ॥
प्रतिज्ञार्थकदेशत्वाद्गोगतस्य नलिङ्गता ।
गवयश्चाथ संबन्धान्न गोर्लिङ्गत्वमृच्छति ॥ ४५ ॥
सादृश्यं न च सर्वेण पूर्वं दृष्टं तदन्वयि ।
एकस्मिन्नपि दृष्टे ऽर्थे द्वितीयं पश्यतो वने ॥ ४६ ॥

नैतावता विशेषेण वस्तुत्वं तस्य हीयते ।
सामान्यान्यपि चैतानि नाशीन्याश्रयनाशतः ॥ २३ ॥
अनाताश्रययोगाच्च न नाशो ऽन्यच विद्यते ।
तेन सर्वं न सामान्यं नित्यत्वेन प्रकल्प्यते ॥ २४ ॥
सामान्यानां न वा नाशः क्व चिदभ्युपगम्यते ।
सर्वस्यत्ह्याश्रयः कश्चिदस्ति देशान्तरादिषु ॥ २५ ॥
तेषां भूयस्तया चेदं सादृश्यमतिरिच्यते ।
तानि व्यस्तानि संत्येवं प्रत्यक्षे ऽपि क्व चित्क्व चित् ॥ २६ ॥
सदृशावयवत्वं तु यच नाम प्रतीयते ।
तदप्यवयवानां स्यात्समानावयवान्तरैः ॥ २७ ॥
एवं तावद्यतो नास्ति पराभेदप्रकल्पना ।
ततः परं तु सामान्यं भवेत्सादृश्यवर्जितम् ॥ २८ ॥
प्रधानानां तु सामान्यं यच्चैकं संप्रतीयते ।
स एवेति भवेत्तच तद्भेदे सदृशत्वधीः ॥ २९ ॥
चिचादौ यच सादृश्यं सामान्यं तच किं भवेत् ।
तचापि पृथिवीवर्णविशेषादिसमानता ॥ ३० ॥
रूपगन्धरसानां च कस्य चित्तुल्यता क्व चित् ।
नावश्यं सर्वसामान्यात्सादृश्यमुपजायते ॥ ३१ ॥
पृथिव्यादिषु चैतेषां सतामेव स्वभावतः ।
परिमाणादिभिर्व्यक्तिर्यथा दृष्टावधार्यते ॥ ३२ ॥
न हि शक्त्यात्मनाकिं चिदसज्जन्म प्रपद्यते ।
धर्माणां न च नानात्वमस्ति चावान्तरस्थितिः ॥ ३४ ॥
वस्तुत्वे सति चास्यैवं संबद्धस्य च चक्षुषा ।
द्वयोरेकच वा दृष्टः प्रत्यक्षत्वान्न वार्यते ॥ ३५ ॥

सामान्यवच्च सादृश्यमेकैकत्र समाप्यते ।
प्रतियोगिन्यदृष्टे ऽपि तस्मात्तदुपपद्यते ॥ ३६ ॥
तत्र यद्यपि गां स्मृत्वा तद्ज्ञानमुपजायते ।
सन्निधेर्गवयस्थत्वाद्भवेदिन्द्रियगोचरः ॥ ३७ ॥
तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥ ३८ ॥
प्रत्यक्षेणावबुद्धेपि सादृश्येविगतस्मृते ।
विशिष्टस्यान्यतो लोके प्रसिद्धेनुपमानता ॥ ३६ ॥
प्रत्यक्षे ऽपि यथा देशे स्मर्यमाणे च पावके ।
विशिष्टविषये चैनं नानुमानाप्रमाणता ॥ ४० ॥
यत्र च सदृशादेव कल्पयित्वोपजायते ।
सादृश्यप्रत्ययस्तत्र तद् भावासत्वकल्पना ॥ ४१ ॥
बाधकप्रत्ययाच्चैषा सादृश्याभासता मता ।
यथापलालकूर्मस्य सादृश्यं कुञ्जरादिना ॥ ४२ ॥
समीपस्थो ऽपि जानाति सादृश्यं नेति तत्र हि ।
न बध्यते समीपादौ यत्तु सादृश्यमेव तत् ॥ ४३ ॥
न चैतस्यानुमानत्वं पक्षधर्माद्यसंभवात् ।
प्राक् प्रमेयस्य सादृश्यं न धर्मत्वेन गृह्यते ।
गवये गृह्यमाणं च न गवामनुमापकम् ॥ ४४ ॥
प्रतिज्ञार्थकदेशत्वाद्गोगतस्य नलिङ्गता ।
गवयश्चाथ संबन्धान्न गोर्लिङ्गत्वमृच्छति ॥ ४५ ॥
सादृश्यं न च सर्वेण पूर्वं दृष्टं तदन्वयि ।
एकस्मिन्नपि दृष्टे ऽर्थे द्वितीयं पश्यतो वने ॥ ४६ ॥

## ॥ अथ शारीरकमीमांसान्यायसंग्रहस्य ॥

### ॥ द्वितीयाध्याये तृतीयपादारम्भः ॥

### न वियदश्रुतेः ॥ १ ॥

क्वचित् तेजःसृष्टेः प्राथम्यमवगतं क्वचिदाकाशसृष्टेः, तत्राव क्रमेणैव सृष्टौ विवक्षितायां द्वयोः प्राथम्यानुपपत्तेः कस्यानुरोधेन किं ने व्यमिति विशये[1] तेजःप्राथम्योपादाने सत्याकाशसृष्टिस्तत्प्राथम्यं चोभ बाध्यं स्यात्, आकाशप्राथम्योपादाने तेजःप्राथम्यमेव बाध्यते, तेजःसृष् "वायोरग्नि"रिति स्थानान्तरलाभात्, तत्र धर्मिबाधकल्पनादुभयबाधप्र ञ्जकाद्धर्मबाधकल्पनमेव लघीय इति न्यायेन तेजःसृष्टेः प्राथम्यं बाधित्व आकाशसृष्टिस्तत्प्राथम्यं चोपादीयत इत्युक्तम् ॥ १ ॥

### असंभवस्तु सतोऽनुपपत्तेः ॥ २ ॥

ब्रह्म कस्यचित् कार्यं भवितुमर्हति कारणत्वाद् यत् कारणं त कस्यचित् कार्यं दृष्टं यथाकाश इत्यनुमानस्य ब्रह्म कार्यं न भवति सद सदनिर्वचनीयादिकारणशून्यत्वाद् यत् कारणशून्यं न तत् कार्यं यथा शश विषाणमिति प्रत्यनुमानविरोधः,"न चास्य कश्चिज्जनिते"त्यागमविरोधे हेतोरनवस्थापादनद्वारेण साध्यविपरीतसाधकत्वं च दर्शितम् ॥ २ ॥

### तेजोऽतस्तथा ह्याह ॥ ३ ॥

अत्र तेजसो ब्रह्मयोनित्ववायुयोनित्वयोः परस्परविरोधे प्राप्ते "तत् तेजोऽसृजते"ति श्रुतेर्निमित्तोपादानकारणत्वयोरविशेषाद् "बहु स्या"मिति बहुभवनाशासनमात्मविषयं] पुरस्कृत्य स्रष्टुरुपादानकारणत्वे लिङ्गमिति लिङ्गसिद्धं ब्रह्मयोनित्वं तेजसः, वायुयोनित्वं तु पञ्चमीश्रुत्यैव सिद्धम्, तत्र श्रुत्या लिङ्गं बाधित्वा वायुयोनित्वमेव मुख्यमुपादाय लिङ्ग परम्परया ब्रह्मयोनित्वविषयं वक्ष्यमाणन्यायेन ब्रह्मवायुसमुच्चयविषय वेति दर्शितम् ॥ ३ ॥

---

१ विशयः संशयः।

आपः ॥ ४ ॥

शब्दस्य प्रत्यक्षविरुद्धार्थतयावभासमानस्य विरुद्धार्थे विप्रामाण्यसं-विरोधात् परित्यागो न युक्तः प्रमित्यर्थत्वात् प्रयोगस्येति न्यायेन त्रिवृ-त्विषययोरप्तेजसोर्दाह्यदाहकभावेन प्रत्यक्षविरुद्धेऽपि प्रकृतिविकार-त्वागोचरयोरत्रिवृत्कृतयोरप्तेजसोः अन्या प्रकृतिविकारभावो दर्शितः, तेजस्त्वाविशेषेण तत्रापि विरोधानुमानं बाधित्वेति ॥ ४ ॥

पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ ५ ॥

यद्यपि रूपाधिकारशब्दान्तरलक्षणेभ्यो लिङ्गप्रकरणस्थानेभ्योऽन्नश-श्रुतिर्वर्षात्भूयिष्ठत्वलिङ्गं चान्नमात्रविषयमुभयं बलवत् तथापि लिङ्गा-भिः पृथिवीपरिग्रहे श्रुतिलिङ्गयोर्नात्यन्तबाधः स्वार्थात्मापरित्यागेन तदा-रपरिणतायां पृथिव्यां वृत्त्युपपत्तेः, श्रुतिलिङ्गाभ्यामन्नमात्रपरिग्रहे लिङ्ग-रणस्थानानामत्यन्तबाधः स्यात् पृथिव्या अनुपादानात् ।

अत्रायं न्यायः । द्वयोः प्रमाणयोरितरेतरविरोधेऽन्यतरस्यात्यन्त-धेनान्यतरोपादानाद्वरमन्यतरस्याल्पबाधयान्यतरोपादानमिति श्रुति-ङ्गयोरन्नमात्रनिष्ठत्वं बाधित्वा लिङ्गप्रकरणस्थानैरन्नाकारेण परिणम-ना पृथिव्येवोपादीयत इत्युक्तम् ॥ ५ ॥

तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ ६ ॥

आकाशादीनामुत्तरोत्तरभूतोपादानत्वमन्यानपेक्षमवगतं पञ्चमी-या तथा ब्रह्मणोऽप्यन्यानपेक्षं सर्वभूतोपादानत्वमवगतम्, "आकाशादेव त्पद्यन्ते" इत्यत्रान्यतरोपादानेऽन्यतरबाधप्रसङ्गाच्छ्रुतपदार्थबाधकल्प-द्वरमर्थसिद्धनैरपेक्ष्यधर्मबाधकल्पनमिति वियदधिकरणन्यायेन नैरपेक्ष्यधर्म धित्वा समुच्चयेनोपादानेन पूर्वपूर्वभूताकारपरिणतं ब्रह्मोत्तरोत्तरोपादा-मिति दर्शितम् ॥ ६ ॥

विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ ७ ॥

महाभूतप्रलयोऽपि क्रमसापेक्षो महाभूतोत्पत्तिप्रलययोरन्यतरत्वात्॰

१—त्तरभूतोपादानमिति पा॰ ।

उत्पत्तिवदित्यनुमानेनावश्यवक्तव्ये प्रलयक्रमे यद्यपि भूतसमवायी सृष्टिक्रम आकाङ्क्षासंनिधिभ्यामुपादेयः, यद्यपि च सति कारणे कार्यं लीयत इति लौकिको वा "जगत्प्रतिष्ठा देवर्षे" इति स्मार्तो वा विपर्ययक्रमो विप्रकृष्टस्तथाप्ययोग्यविषयाभ्यामाकाङ्क्षासंनिधिभ्यां विप्रकृष्टविषये अप्याकाङ्क्षायोग्यत्वे बलवत्तरे योग्यतानिमित्तत्वात् संबन्धस्येति न्यायेन प्रलयस्यापि विपरीतक्रमो दर्शितः ॥ ७ ॥

## अन्तराविज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ ८ ॥

"एतस्माज्जायते प्राणः" इत्यादिपाठक्रमाद् "आत्मन आकाशः संभूत" इत्याद्यर्थक्रमो बलवान् पाठक्रमस्याप्यर्थक्रमप्रतिपत्त्यर्थत्वादिति न्यायेनेन्द्रियाद्युत्पत्त्या भूतोत्पत्तिप्रलयक्रमस्याभङ्गो दर्शितः ॥ ८ ॥

## चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ ९ ॥

जातकर्ममरणेष्टी चेतनसंस्कारकर्मणी पुरुषसंस्कारेषु पाठादिति चेतनजन्ममरणोद्देशेन संस्कारकर्मविधानान्यथानुपपत्त्या चेतनजन्ममरणे प्राप्ते तत्संस्कारकर्मविधेश्च जन्मान्तरीयफलसाधनकर्मविषयतयोद्देश्योपादेययोः परस्परविरोधे प्राप्तेऽकृष्टाधिकरणन्यायेनोपादेयजन्मान्तरीयफलसाधनविधिविरोधिनोद्देश्यचेतनजन्ममरणयोर्देहोपाधित्वेनोपचरितत्वमुपादेयोपादेयजन्मान्तरफलसाधनकर्मसंबन्धयोग्यो जन्ममरणादिशून्य आत्मा दर्शितः ॥ ९ ॥

## नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १० ॥

"सर्व एत आत्मानो व्युच्चरन्ती"ति श्रुतिः "सहस्रशः प्रभवन्ते सरूपा" इत्यादिसमानरूपसृष्टिदृष्टान्तः सर्वविज्ञानप्रतिज्ञा ब्रह्मणो विस्फुलिङ्गत्वादीनि जीवकार्यत्वे लिङ्गानीति श्रुतिलिङ्गैर्जीवस्य कार्यत्वमवगतं "न जायते म्रियते वा" "तत् सृष्ट्वा तदेवानुप्राविश"दित्यादिश्रुतिलिङ्गैश्चाकार्यत्वमवगतम्। एवं विप्रतिपत्तौ यद्यपि तत्त्वमस्यादि-

प्रधानवाक्यं यण्डो गौरित्यादिवाक्यवन्नित्यानित्ययोस्तादात्म्येन विरुध्यते तथापि जीवस्य ब्रह्मात्मभावं प्रतिपाद्य फलावस्थायामपि "ब्रह्म वेद ब्रह्मैव भवती"ति ब्रह्मात्मना नित्यवदवस्थानं प्रतिपादयता प्रधानवाक्येन फलपर्यन्तेनाक्षिप्तं जीवस्य नित्यत्वमिति प्रधानवाक्याक्षिप्तनित्यत्वविपरीतानित्यत्वप्रतिपादकावान्तरवाक्यानुरोधेन प्रधानवाक्यविरुद्धकार्यत्वप्रतिपादकावान्तरवाक्यानामुपचरितार्थत्वं युक्तं दौर्बल्यादिति न्यायेनोत्पत्तिवाक्यैरौपाधिकोत्पत्तिविषयत्वमुपादाय जीवस्य नित्यत्वमेव दर्शितम् ॥ १० ॥

## ज्ञोऽत एव ॥ ११ ॥

आत्मा कादाचित्कज्ञानकार्यवान् तदर्थमुपादीयमानशरीरेन्द्रियसाधनत्वाद् भेदनार्थमुपादीयमानकुठारादिसाधनपुरुषवत् । तथात्मा ज्ञानान्तरप्रकाश्यो वस्तुत्वाद् घटवत् । तथा सर्वगतोऽयमात्मा न ज्ञानस्वभावः स्वसंसर्ग्यशेषवस्त्वनवभासकत्वाद् यः प्रकाशस्वभावः स स्वसंसर्ग्यशेषवस्त्ववभासको दृष्टो यथा सवितेति । अत्र प्रकृतिविकारभावाभावे द्रव्यवाचिपदयोः सामानाधिकरण्यमेकद्रव्यपर्यवसायि सोऽयं देवदत्त इत्यादौ दर्शनादिति चित्स्वभावब्रह्मैकधर्मित्वं जीवस्य प्रतिपादयता प्रधानवाक्येनाक्षिप्तजीवचित्स्वभावस्य प्रतिपादकै"रात्मैवास्य ज्योतिर्भवती"त्यादिवाक्यैस्तात्पर्यवद्भिरनुमानानां बाधो दर्शित इति ।

अथवा-आत्मा प्रकाशस्वभावः स्वसत्तायां प्रकाशव्यतिरेकशून्यत्वात् प्रदीपसंवेदनादिवदित्यनुमानसिद्धचित्स्वभावस्याप्यात्मनो व्यापारवद्द्रव्यैराकाशस्यासंसर्गितेव प्रकाश्यद्रव्यैः स्वभावतोऽसंसर्गितया प्रकाशकार्यमकुर्वाणस्यापि विषयसंबन्धोऽन्तःकरणोपरागनिमित्तः संभवति स्वभावतोऽसंसर्गिणोरपि मुखरक्तिमगुणयोरेकस्फटिकोपरागनिमित्तसंबन्धवदित्येवं संभाव्यमाने स्वभावचैतन्यस्यापि विषयसंबन्धासंबन्धे किमिन्द्रियाद्युपादानस्य विषयोपरक्तज्ञानोत्पत्तिः फलं किंवा सिद्धस्यैव ज्ञानस्य विषयोपरागः फलमिति विशये साध्यविवृद्ध्युपादानात् साध्यलेशोपादान-

मेव लघीय[1] इति न्यायेन सिद्धस्यैव ज्ञानस्य विषयोपरागनिमित्तमिन्द्रियादिकं दर्शितम् ॥ ११ ॥

उत्क्रान्तिगत्यागतीनाम् ॥ १२ ॥

यद्यप्यणुमहतोस्तत्त्वमस्यादौ षण्डो गौरितिवत् तादात्म्यव्यपदेशः संभवति तथाप्यकार्यकारणद्रव्योपादानेन सामानाधिकरण्यमेकद्रव्यपर्यवसायि सोऽयमित्यादिवदेकस्य द्रव्यस्यैकस्मिन् परिमाणे शास्त्रीयत्वान्महत्त्वे च गृहीतव्ये तत्त्वमस्यादिमहावाक्येन जीवस्य महत्त्वं प्रतिपादयता जीवाणुत्वविषयगुणभूतवाक्यानां विरोधे सति गौणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन चेदसंयोग इति न्यायेनाणुत्वश्रुतिलिङ्गानामौपाधिकोपचरितविषयत्वमुक्तम्। अथवा॰ अर्थवादानां लोकव्यवहारविरोधिनां लौकिकादपि न्यायाद् दौर्बल्यमिति न्यायेन सकलशरीरव्यापिशैत्याद्युपलब्ध्यन्यथानुपपत्तिनिमित्तेन महत्त्वेनाणुत्वश्रुतीनां बाधो दर्शितः ॥ १२ ॥

कर्ता शास्त्रार्थवत्त्वात् ॥ १३ ॥

अत्र यद्यपि चक्षुराद्यगोचरत्वान्मनसश्चक्षुरादिनिरपेक्षस्य प्रत्यक्षसाधनत्वाभावात् सत्येव मनस्यात्मनि कर्तृत्वोपलब्धेरसति च सुषुप्ते मनसि कर्तृत्वाद्यनुपलब्धेरित्यन्वयव्यतिरेकयोर्मनसः कर्तृत्वादिसत्ताकारणतयान्यथासिद्धेः कर्तृत्वविशिष्टात्मप्रतिपत्तिहेतुत्वकल्पनायोगादहं कर्तेति च प्रतिभासस्यात्मान्तःकरणयोः साधारणत्वाच्च प्रत्यक्षगम्यमात्मनि कर्तृत्वम्, तथापि ममेदं कर्तव्यमिति प्रतिपत्तिसमर्थस्य चेतनस्य विधिसंबन्धं प्रतिपादयता शास्त्रेण तस्य चेतनस्य विधिविषयकर्तृत्वमन्तरेणानुपपद्यमानेन चेतनस्य कर्तृत्वं श्रुतार्थापत्त्या प्रतिपादितम्, तथाऽकर्तृब्रह्मात्मना मोक्षेऽवस्थानं प्रतिपादयता तत्त्वमस्यादिप्रधानवाक्येन जीवस्याकर्तृत्वं प्रतिपादितम्, द्वयोः प्रमाणयोर्विरोधे सति कालभेदेनापि व्यवस्था न्याय्येति मोक्षावस्थायामकर्तृत्वं प्राक् तु कर्तृत्वमिति दर्शितम् ॥ १३ ॥

---

१ बलीय इति पा०।

## यथा च तक्षोभयथा ॥ १४ ॥

अत्र केवलस्यात्मनः क्रियासमवायः किं वाध्यासपरिनिष्पन्नाहंकारसंपिण्डितैकत्वापन्नात्मविशिष्टद्रव्यस्येति विशये सत्येव संपिण्डितैकद्रव्ये क्रियासमवायदर्शनादसति च तस्मिन् सुषुप्ते केवलात्मनि क्रियाऽदर्शनाद् विशिष्टद्रव्यस्य कारणत्वं तावदवगतम्, तत्र कार्यं प्रत्यन्वयव्यतिरेकवतो द्रव्यस्योपादानकारणस्यानगतस्यान्वयिकारणत्वमेव युक्तं न निमित्तकारणत्वम्·अभ्यर्हितत्वादुपादानकारणस्येति न्यायानुगृहीतेनान्वयव्यतिरेकप्रमाणेन क्रियान्वयि कारणत्वेन कल्प्यते ब्रह्मात्मप्रतिपादकशास्त्रोपबृंहितत्वादध्यासस्योपादानकारणत्वकल्पनाया इत्युक्तम् ॥ १४ ॥

## परात् तु तच्छ्रुतेः ॥ १५ ॥

अत्र कर्तुरात्मनः क्रियानिष्पत्तावन्वयव्यतिरेकवत्कारणादिकारककलापेऽवस्थिते सति कारणे पुनः कारणान्तरोपादानं केवलव्यतिरेकापेक्षम्, अतस्तदभावावेश्वरः कर्तृत्वं प्रति कारणमिति स्थितम्, श्रुतिश्चेश्वरस्य कारणत्वं ब्रवीति, तत्र द्वयोः प्रमाणयोर्विरोधे सति सुखाद्युत्पत्तौ दृष्टकारणसंपत्तावपि केवलव्यतिरेकशून्यस्यापि धर्मादेरागमात् सुखादिहेतुत्वप्रतिपत्तिवत् केवलव्यतिरेकस्य दृष्टकारणक्लृप्तिविषयत्वेनागमस्य चादृष्टकारणक्लृप्तिविषयतया व्यवस्थोपपत्तेरीश्वरसापेक्षं कर्तृत्वमिति दर्शितम् ॥ १५ ॥

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ १६ ॥

अत्यन्तभिन्नयोर्जीवब्रह्मणोर्निरवयवयोः संयोगाभावाद् भृत्यस्वामिसंबन्धस्य च संकल्पक्रियादिसापेक्षस्य सर्वज्ञीवविषयस्याभावाद्विशिष्टस्वरूपसंबन्धे विशेषणापाये विशिष्टापायाद् भेदाभेदसंबन्धस्य कार्यकारणगुणगुणिजातिव्यक्तिस्वरूपांशांशिभावविषयस्य ब्रह्मजीवयोस्तेषामभावेऽभावान्निरंशत्वादंशांशिभावसंबन्धायोगाद् ब्रह्मस्वरूपमात्रत्वे काल्पनिकौपाधिकभेदत्वे च जीवस्य नियन्तृत्वनियम्यत्वायोगाद् यद्यपि सर्वं

संबन्धा न संभवन्ति, तथाप्यैकात्म्यनियन्तृनियम्यत्वप्रमाणयोरितरेतरविरोधे सति प्रधानवाक्यानुगुण्येन घटाकाशमहाकाशवन्महति ब्रह्मद्रव्येऽल्पोपाधिपरिच्छिन्नतया भागबुद्धिगोचरस्य जीवस्य ब्रह्मणांशांशिसंबन्धमुपचरितं परिकल्प्य नियन्तृनियम्यभावापेक्षामूलः संबन्धो दर्शितः ॥ १६

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ * ॥ * ॥

## तथा प्राणाः ॥ १ ॥

"एतस्माज्जायते प्राण" इत्यादाविन्द्रियाणां जन्म श्रुत्यैव निर्दिष्टम्, "ऋषयो वाव तेऽग्र आसन्" "तदाहुः के त ऋषय इति प्राणा वा ऋषय" इत्युत्पत्तेः प्राक् प्राणानामवस्थानं तेषां जन्माभावे लिङ्गम्, तत्र लिङ्गस्य श्रुत्या बाधायामन्यतरस्यात्यन्तबाधकल्पनाद्वरं प्रबलाविरोधेन दुर्बलस्य विषयव्यवस्थाकल्पनमिति न्यायेन वियदादिभिः सहेन्द्रियाणामुत्पत्त्याम्नानलिङ्गान्महाप्रलयविपर्योत्पत्तिरवान्तरप्रलयविषयानुत्पत्तिरिति व्यवस्थोपादानेन प्राणानामुत्पत्तिः साधिता ॥ १ ॥

## सप्तगतेर्विशेषितत्वाच्च ॥ २ ॥

न्यूनाधिकसंख्याविरोधे बुद्धिलाघवान्न्यूनसंख्योपादानं युक्तमिति सप्तप्राणोपादानेन प्राप्तेऽधिकसंख्योपादाने न्यूनसंख्यायास्तत्रान्तर्भावाच्छ्रुतस्याबाधसिद्ध्येऽधिकसंख्योपादानमेव युक्तमिति न्यायेनैकादश प्राणाः कार्यनियमान्निरूपिताः, 'अपरा योजने'ति अनेकशरीरानुयायिनो जीवस्याव्यभिचारितयानुयायिनामनर्थहेतूनामेवेन्द्रियत्वेन कारणत्वे वक्तव्ये "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती"ति सर्वशब्दस्यानुयायिप्राणवाचिनः प्रकरणात् सप्तप्राणपरामर्शकत्वं प्राप्तम्, "दशमे पुरुषे प्राणा आत्मैकादशस्ते यदास्मान्मर्त्याच्छरीरादुत्क्रामन्ती"त्यनुयायिनामेवैकादशानां प्राणानां "सर्वे प्राणा" इत्यत्र प्राणशब्दः परामर्शकः प्राप्तः, तत्र प्रकरणोपस्थापितानुयायिसप्तप्राणपरिग्रहाद्वरं श्रुत्युपस्थापितानुयाय्येकादशप्राणपरिग्रह इति न्यायेनैकादशप्राणपरिग्रहः कृतः ॥ २ ॥

अणवश्च ॥ ३ ॥

इन्द्रियाणि सर्वगतानि सर्वत्र दृष्टकार्यत्वात्-आत्मवदित्यनुमानम्, तथा "त एते सर्व एव समाः सर्वेऽनन्ता" इति श्रुतिः, तत्र श्रुत्यनुमानाभ्यामानन्त्यं प्राणानां प्राप्तम्, "प्राणमनूत्क्रामन्ती"त्याद्युत्क्रान्तिश्रुतार्थापत्त्या प्राणानां परिच्छिन्नत्वमपि प्राप्तम्, तत्र श्रुतार्थापत्तिविरोधे सति "अथ यो हैताननन्तानुपास्त" इत्याद्युपासनापरमानन्त्याभिधानमन्यपरत्वादनुमानं च दुर्बलमिति परिच्छिन्नाः प्राणाः साधिताः ॥ ३ ॥

श्रेष्ठश्च ॥ ४ ॥

"एतस्माज्जायते प्राण" इति प्राणजन्मनि श्रुतिः॰ "आनीदवात"-मित्यननं प्राणव्यापारः प्रलयावस्थायां प्राणसद्भावे लिङ्गम्, तत्र द्वयोर्महाप्रलयविषयतयावान्तरप्रलयभेदेन व्यवस्थानुपपत्तौ द्वयोरन्यतरस्य गौणत्वे वक्तव्ये श्रुतिविरोधाल्लिङ्गस्यैव गौणत्वं युक्तमिति न्यायेनानीच्छब्दस्य मूलकारणविद्यमानताभिधायित्वकल्पनया प्राणस्य ब्रह्मणो जन्म दर्शितम् ॥ ४ ॥

अणुश्च ॥ ५ ॥

यद्यपि महान् प्राणः सर्वत्र दृष्टकार्यत्वादाकाशवदित्यनुमानस्य हेतोरसिद्धत्वाद्यत्र शरीरं तत्र सर्वत्र दृष्टकार्यत्वादिति विशेषणे शरीरतद्रूपादिष्वनैकान्तिकत्वाच्च प्राणमहत्त्वस्य प्रतिपादकत्वमस्ति तथापि "सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण"ति श्रौतेन लिङ्गेन प्राणस्य सर्वगतत्वमुक्तम्, "समुत्क्रामन्तं प्राणोऽनूत्क्रामती"ति परिच्छेदलिङ्गम्, तत्र द्वयोर्लिङ्गयोर्विरोधे प्राणस्वरूपाधिदैविकरूपाभ्यां व्यवस्थाप्रदर्शनेन परिच्छिन्नत्वमुक्तम् ॥ ५ ॥

न वायुक्रिये पृथगुपदेशात् ॥ ६ ॥

"यः प्राणः स वायु"रिति समानाधिकरणवाक्येन प्राणस्य वायुत्वमवगतम्, "एतस्माज्जायते प्राणः खं वायुर्ज्योति"रित्युत्पत्तिभेदलिङ्गात् स्वरूपभेदोऽवगतः, द्वयोश्च वाक्यलिङ्गयोर्विरोधे समीकरणस्वभा-

संबन्धा न संभवन्ति, तथाप्यैकात्म्यनियन्तृनियम्यत्वप्रमाणयोरितरेतरविरोधे सति प्रधानवाक्यानुगुण्येन घटाकाशमहाकाशवन्महति ब्रह्मन्द्रव्येऽल्पोपाधिपरिच्छिन्नतया भागबुद्धिगोचरस्य जीवस्य ब्रह्मणांशांशिसंबन्धमुपचरितं परिकल्प्य नियन्तृनियम्यभावापेक्षामूलः संबन्धो दर्शितः ॥ १६ ॥

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ * ॥ * ॥

## तथा प्राणाः ॥ १ ॥

"एतस्माज्जायते प्राणः" इत्यादाविन्द्रियाणां जन्म श्रुत्यैव निर्दिष्टम्, "ऋषयो वाव तेऽग्र आसन्" "तदाहुः के त ऋषय इति प्राणा वा ऋषय" इत्युत्पत्तेः प्राक् प्राणानामवस्थानं तेषां जन्माभावे लिङ्गम्, तत्र लिङ्गस्य श्रुत्या बाधायामन्यतरस्यात्यन्तबाधकल्पनाद्वरं प्रबलाविरोधेन दुर्बलस्य विषयव्यवस्थाकल्पनमिति न्यायेन वियदादिभिः सहेन्द्रियाणामुत्पत्त्याम्नानलिङ्गान्महाप्रलयविषयोत्पत्तिरवान्तरप्रलयविषयानुत्पत्तिरिति व्यवस्थोपादानेन प्राणानामुत्पत्तिः साधिता ॥ १ ॥

## सप्तगतेर्विशेषितत्वाच्च ॥ २ ॥

न्यूनाधिकसंख्याविरोधे बुद्धिलाघवान्न्यूनसंख्योपादानं युक्तमिति सप्तप्राणोपादानेन प्राप्तेऽधिकसंख्योपादाने न्यूनसंख्यायास्तत्रान्तर्भावाच्छ्रुतस्याबाधसिद्धयेऽधिकसंख्योपादानमेव युक्तमिति न्यायेनैकादश प्राणाः कार्यनियमान्निरूपिताः, 'अपरा योजने'ति अनेकशरीरानुयायिनो जीवस्याव्यभिचारितयानुयायिनामनर्थहेतूनामेवेन्द्रियत्वेन कारणत्वे वक्तव्ये "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती"ति सर्वशब्दस्यानुयायिप्राणवाचिनः प्रकरणात् सप्तप्राणपरामर्शकत्वं प्राप्तम्, "दशमे पुरुषे प्राणा आत्मैकादशस्ते यदास्मान्मर्त्याच्छरीरादुत्क्रामन्ती"त्यनुयायिनामेवैकादशानां प्राणानां "सर्वे प्राणा" इत्यत्र प्राणशब्दः परामर्शकः प्राप्तः, तत्र प्रकरणोपस्थापितानुयायिसप्तप्राणपरिग्रहाद्वरं श्रुत्युपस्थापितानुयाय्येकादशप्राणपरिग्रह इति न्यायेनैकादशप्राणपरिग्रहः कृतः ॥ २ ॥

## अणवश्च ॥ ३ ॥

इन्द्रियाणि सर्वगतानि सर्वत्र दृष्टकार्यत्वात् आत्मवदित्यनुमानम्, तथा "त एते सर्व एव समाः सर्वेऽनन्ता" इति श्रुतिः, तत्र श्रुत्यनुमानाभ्यामानन्त्यं प्राणानां प्राप्तम्, "प्राणमनूत्क्रामन्ती"त्याद्युत्क्रान्तिश्रुतार्थापत्त्या प्राणानां परिच्छिन्नत्वमपि प्राप्तम्, तत्र श्रुतार्थापत्तिविरोधे सति "अथ यो हैताननन्तानुपास्त" इत्याद्युपासनापरमानन्त्याभिधानमन्यपरत्वादनुमानं च दुर्बलमिति परिच्छिन्नाः प्राणाः साधिताः ॥ ३ ॥

## श्रेष्ठश्च ॥ ४ ॥

"एतस्माज्जायते प्राण" इति प्राणजन्मनि श्रुतिः· "आनीदवात"-मित्यननं प्राणव्यापारः प्रलयावस्थायां प्राणसद्भावे लिङ्गम्, तत्र द्वयोर्महाप्रलयविषयतयावान्तरप्रलयभेदेन व्यवस्थानुपपत्तौ द्वयोरन्यतरस्य गौणत्वे वक्तव्ये श्रुतिविरोधाल्लिङ्गस्यैव गौणत्वं युक्तमिति न्यायेनानीच्छब्दस्य मूलकारणविद्यमानताभिधायित्वकल्पनया प्राणस्य ब्रह्मणो जन्म दर्शितम् ॥ ४ ॥

## अणुश्च ॥ ५ ॥

यद्यपि महान् प्राणः सर्वत्र दृष्टकार्यत्वादाकाशवदित्यनुमानस्य हेतोरसिद्धत्वाद्यत्र शरीरं तत्र सर्वत्र दृष्टकार्यत्वादिति विशेषणे शरीरतद्रूपादिष्वनैकान्तिकत्वाच्च प्राणमहत्त्वस्य प्रतिपादकत्वमस्ति तथापि "सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेणे"ति श्रौतेन लिङ्गेन प्राणस्य सर्वगतत्वमुक्तम्, "समुत्क्रामन्तं प्राणोऽनूत्क्रामती"ति परिच्छेदलिङ्गम्, तत्र द्वयोर्लिङ्गयोर्विरोधे प्राणस्वरूपाधिदैविकरूपाभ्यां व्यवस्थाप्रदर्शनेन परिच्छिन्नत्वमुक्तम् ॥ ५ ॥

## न वायुक्रिये पृथगुपदेशात् ॥ ६ ॥

"यः प्राणः स वायु"रिति समानाधिकरणवाक्येन प्राणस्य वायुत्वमवगतम्, "एतस्माज्जायते प्राणः खं वायुर्ज्योति"रित्युत्पत्तिभेदलिङ्गात् स्वरूपभेदोऽवगतः, द्वयोश्च वाक्यलिङ्गयोर्विरोधे समीकरणस्वभा-

वैकत्वविषयं वाक्यं व्यक्तिभेदविषयं लिङ्गमिति विषयभेदेनाविरोधकल्पनया वायोः प्राणस्य च व्यक्तिभेदो दर्शितः, तथा वागादिप्राणानां संभूय शरीरचलनादिहेतुभूतसामान्यव्यापारसंभवेन प्राणपदार्थान्तरं कल्पनीयं कल्पनागौरवादिति न्यायमात्रस्य प्राणसंवादादौ प्राणस्य वागादीनां चेतरेतरसंवादलिङ्गेनोत्पत्तिभेदलिङ्गेन च प्राणस्येन्द्रियतद्व्यापारेभ्यो भिन्नपदार्थत्वप्रतिपादकेन प्रमाणभूतेन बाधात् करणव्यापारेभ्यो भिन्नः प्राणो दर्शितः ॥ ६ ॥

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ ७ ॥

करणानां स्वप्रवृत्तौ नैरपेक्ष्यमन्वयव्यतिरेकसिद्धम्, "अग्निर्वाग्भूत्वा मुख"मित्याद्यग्न्यादीनां चेतनानां वागाद्यचेतनभावानुपपत्तेर्वागादिकरणेष्वग्न्यादीनामैक्याभिमानमात्रावगमाच्चेतनस्य च वाय्वभिमानः प्रवर्तकतयेति जीवे दृष्टत्वादग्न्यादीनां वागाद्यैक्याभिमानसंबन्धप्रतिपादकशास्त्रान्यथानुपपत्त्याग्न्याद्यधीना करणप्रवृत्तिरित्यवगतम्, तत्र "परात् तु तच्छ्रुते"रित्यधिकरणन्यायेन केवलव्यतिरेकानपेतागमबलेन देवतानुगृहीतानां करणानां प्रवृत्तौ सिद्धायां देवता अपि चक्षुरादिजनितकर्मतत्फलसंबन्धिन्यः चक्षुरादिसाधनजन्यरूपाद्युपलब्ध्याश्रयत्वाभावात् उदासीनपुरुषान्तरवदित्यनुमानेन "न ह वै देवान् पापं गच्छती"ति श्रुत्यनुगृहीतेन बाधो दर्शितः। देवतानां च प्रदीपवत् करणानुग्राहकत्वं न स्वयं करणितया पृथक्करणवत्त्वादित्युक्तम् ॥ ७ ॥

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ ८ ॥

"त एतस्यैव सर्वे रूपमभव"न्निति वाक्या"देत एतेनाख्यायन्ते प्राणा" इति प्राणश्रुतेश्चेन्द्रियाणां प्राणमात्रत्वे प्राप्ते प्राणसंवादादिगतैर्बहुभिर्भेदलिङ्गैः प्राणादर्थान्तरत्वे सतीन्द्रियाणां वाक्यं बाध्यते, प्राणश्रुतिर्नेन्द्रियाणां प्राणत्वविधिपरा, किं त्विन्द्रियाणां पृथक् प्राणसंज्ञाविधिपरा इत्यन्यपरा श्रुतिर्लिङ्गैर्बाध्येत्युक्तम् ॥ ८ ॥

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ ९ ॥

यद्यपि 'जीवेने' तिपदस्य "व्याकरवाणी' ति प्रधानक्रियया संबन्धो युक्तो ना'नुप्रविश्ये' ति गुणभूतक्रियया, तथापि यत्राकाङ्क्षासंनिधियोग्यत्वं तेन संबन्धो युक्त इति न्यायेन नदीसमुद्रादिव्याकरणे योग्यताद्यभावात् प्रवेशने च योग्यतादिभावाज्जीवस्य प्रवेशनेन संबन्ध इति व्याकरणे सैन्यसंकलनवज्जीवलक्षणस्वतन्त्रकर्त्रन्तरव्यवधानाभावात्॰अव्यवधानेन ब्रह्मकर्तृकं नामरूपव्याकरणमित्युक्तम् ॥ ९ ॥

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे द्वितीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥ * * ॥

समाप्तश्च द्वितीयाध्यायः ॥ २ ॥ :: :: ॥

## तदन्तरप्रतिपत्तौ रंहतिसंपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

"वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती" ति यद्यप्यापः पुरुषवचसो भवन्तीति क्रियापदेन संबन्धः, तथाप्याहुतीनां होमद्रव्यापेक्षाणां संनिधानादर्थादाप एव पञ्चानामाहुतीनां होमद्रव्यतया संबध्यन्ते, ततश्चायं वाक्यार्थः संवृत्तः, अपां पञ्चभिराहुतिभिर्हूयमानानां पञ्चम्यामाहुतौ पुरुषाकारेण परिणाम इति, तथा "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती" त्युपसंहारवाक्यस्याप्ययमेवार्थो वाक्यसाम्यात्, एवमुपक्रमोपसंहारयोरपामेव पञ्चभिराहुतिभिः संबन्धे सिद्धे मध्यवर्तिश्रद्धासोमवृष्ट्यन्नरेतसामप्यपामेवावस्थाविशेषत्वोपपत्तौ द्रव्यभेदकल्पनाद्यनुपपत्तेर्द्युलोकाद्यधिकरणभेदादेवाहुतिभेदोपपत्तेश्च पूर्वापरमहावाक्यपर्यालोचनायामप्शब्दवाच्यानां त्रयाणां भूतानां पञ्चसु स्थानेषु हूयमानानां पञ्चम्यामाहुतौ पुरुषाकारपरिणामो वाक्यप्रमाणादवगतः, तथा प्रथमाहुतिपरिणामे सोमभावे पञ्चमाहुतिपरिणामे च गर्भेऽपां चेतनसंबन्धावगमलिङ्गान्नियमेन भूताधारप्राणपरिवृतस्य जीवस्य पञ्चसु स्थानेषु गमनलिङ्गाच्चाप्शब्दवाच्यभूतपरिवृतो जीवः पञ्चसु स्थानेषु रंहतीति वाक्यलिङ्गाभ्यां न भूतोपादाने प्रयोजनमस्ति सर्वत्र विद्यमानत्वादिति न्यायानुगृहीतं तृणजलौकादिदृष्टान्तलिङ्गं बाधित्वेति सिद्धम् ॥ १ ॥

कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ २ ॥

यद्यपि 'यत्किंचित्'·'यावत्संपातशब्दौ' वैहिकामुष्मिककॢप्तकर्मफलोपभोगवचनाववरोहतामनुशयाभावे लिङ्गभूतौ तथापि 'रमणीयचरणाः' 'कपूयचरणा' इति शब्दयोर्ब्राह्मण्यादिजात्यारम्भकाणामैहिककर्मणां सद्भावे लिङ्गत्वादैहिकामुष्मिककर्मोपभोगविषयसामान्यलिङ्गस्य·ऐहिककर्मसद्भावविषयविशेषलिङ्गेन संकोचोपपत्तेरामुष्मिककर्मविषयत्वाद् 'यत्किंचिद्' 'यावत्संपात' शब्दयोरैहिकभोगनिमित्तकर्मानुशयसद्भावो दर्शितः॥२

अनिष्टादिकारिणामपि च श्रुतम् ॥ ३ ॥

"ये वै के चास्माल्लोकात् प्रयन्ति" तीष्टानिष्टादिकारिणां सामान्यविषयं चन्द्रलोकगमनवाक्यम्, तथा "वैवस्वतं संगमनं जनाना" मिति चेष्टानिष्टादिकारिसामान्यविषयं यमलोकगमनवाक्यम्, तत्राविशेषेण चन्द्रगमनवाक्यं विद्याकर्मविशेषितमार्गद्वयभ्रष्टानामनिष्टादिकारिणां तृतीयस्थानगमनविषयविशेषवाक्येनेष्टादिकारिविषयविशेषे नियम्यते तथा· अविशेषेण यमलोकगमनविषयं वाक्यमिष्टादिकारिणां चन्द्रगमनविषयवाक्येनानिष्टादिकारिविषयविशेषे नियम्यत इति सामान्यवाक्यद्वयं विशेषवाक्याभ्यां नियम्यानिष्टादिकारिणां यमगमनमुक्तमित्युक्तम् ॥ ३ ॥

स्वाभाव्यापत्तिरुपपत्तेः ॥ ४ ॥

यद्यपि भवतिधातुर्जीवस्याकाशादिभावपरिणामे· श्रुतिर्भवति तथाप्युत्तरत्र रमणीयचरणादिसंयुक्तस्य चेतनस्याकाशादितिलमाषादिभ्यः स्वेनैव रूपेणाभिनिष्क्रमणान्यथानुपपत्तिलक्षणया श्रुतार्थापत्त्यान्यस्य पूर्वसिद्धान्यभावानुपपत्तिगृहीतया विरोधाच्छ्रुतेरुपचरिततद्भावापत्तिविषयत्वमुक्तम् ॥ ४ ॥

नातिचिरेण विशेषात् ॥ ५ ॥

यद्यप्याकाशादिसाम्यं गतस्या "तो वै खलु दुर्निष्प्रपतर" मिति- 'अतः' शब्दस्य प्रकृतसर्वविषयत्वाच्छीघ्रनिष्क्रमणकारणं नोपलभ्यते तथा

पि "त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्त" इत्येकवाक्योपात्तव्रीह्यादिभावा'दतः'शब्दपरामृष्टादतिदुःखेन निष्क्रमणं तरप्रत्ययेन विशेष्यमाणं भिन्नवाक्योपात्तादाकाशादिवर्षणान्तात् प्रकृतात् सुखेन निष्क्रमणमर्थापत्त्या गमयतीत्युक्तम् ॥ ५ ॥

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ६ ॥

यद्यपि व्रीह्यादिभावेन जन्मश्रुतिर्मुख्यमेवानुशयिनां जन्म प्रतिपादयति तथापि न व्रीह्यादिभावेनानुशयिनां मुख्यं जन्म संभवति, अस्मिन् प्रकरणे कर्मव्यापारसंकीर्तनशून्यतयाभिधानादाकाशादिभावाभिधानवदित्यनुमानात्, तथा ब्राह्मणत्वादिजन्मनः कर्मव्यापारपूर्वकत्वसंकीर्तनं व्यर्थं प्रागपि व्रीह्यादिभावेन जन्मास्ति चेत्, अतस्तत्रास्तीति श्रुतार्थापत्त्या च तथोत्तराहुतिसंबन्धश्रुतिर्नोपपद्यते,व्रीह्यादिभावे तत्कण्डनादौ प्रवासप्रसङ्गादिति श्रुतार्थापत्त्यन्तरेण जन्मश्रुतेरुपचरितार्थत्वं दर्शितमिति ॥ ६ ॥

## अशुद्धमिति चेन्नशब्दा ॥ ७ ॥

यद्यपि पशुहिंसनस्य प्रतिषेधसामर्थ्यादनर्थहेतुत्वं क्रतुविधिसामर्थ्याच्च क्रतूपकारश्चेत्युभयं न विरुध्यते, एकस्यापि साधनस्य लोकेऽर्थानर्थहेतुत्वदर्शनात्, तथाप्यनर्थं परिहृत्यैव क्रतूपकारद्वारेणार्थबाहुल्यहेतुत्वाभावे विधानमनुपपन्नमित्यर्थानर्थहेतुतया विरोधमुद्भाव्य सावकाशनिरवकाशतया प्रामाण्यं व्यवस्थापितम् । तथा करणांशे प्रवृत्तौ रागनिबन्धनेति कर्तव्यतांशे प्रवृत्तिर्विधिनिबन्धनेति विभागं कल्पयित्वा श्यनयागे हिंसात्मके करणरूपे रागनिबन्धना प्रवृत्तिरिति तत्र प्रतिषेधविध्यवकाशमङ्गीकृत्य पशुहिंसायां विधिनिबन्धनप्रवृत्तिकायां प्रतिषेधविधिर्निरस्त इति ॥ ७ ॥

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे तृतीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥ * ॥ * ॥

## संध्ये सृष्टिराह हि ॥ १ ॥

स्वप्ने द्रष्टव्यतिरिक्ताः सर्वे पदार्था अर्थक्रियासामर्थ्यलक्षणसत्त्वोपेताश्चेतनेनाभिसंधिपूर्वकं निर्मीयमाणत्वात्॰जाग्रद्वत्,आगामिशुभाशुभविषयविज्ञानस्य स्वप्नस्यादिदर्शनजन्यत्वमन्वयव्यतिरेकलक्षणार्थापत्तिसमधिगतमित्यनुमानार्थापत्तिभ्यां स्वप्नप्रपञ्चस्यार्थक्रियाकारित्वे प्राप्ते देशकालविशिष्टार्थक्रियासमर्थप्रमात्रादिविषयबाधकप्रत्यक्षेणार्थक्रियासमर्थरूपस्यैव बाधान्यथानुपपत्त्या "न तत्र रथा" इति श्रौतनिषेधान्यथानुपपत्त्या चार्थक्रियासमर्थाधिष्ठानवैपरीत्यस्यार्थक्रियाशून्यत्वस्यावगमादनुमानबाधो दर्शितः, पदार्थस्वरूपप्रयुक्तार्थक्रियाशून्यतया सत्त्वेऽपि शुभाशुभादिना व्याप्तिलक्षणधर्मोपाधावर्थक्रियाकारित्वस्याङ्गीकरणात् पदार्थानां स्वरूपतो मिथ्यात्वं दर्शितम्, स्थूलशरीरोपाधावेवात्मनो व्यावहारिकवस्तुसंस्पर्श इति दर्शयितुमिति ॥ १ ॥

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ २ ॥

नाडीपुरीतद्ब्रह्मसु प्रत्येकमधिकरणसप्तमीश्रवणात्॰ उपाधिविशिष्टजीवाधारत्वसंभवाच्च प्रत्येकमधिकरणत्वे प्राप्ते विकल्पपक्षे चान्यतमपदार्थबाधप्रसङ्गात् सति संभवे नैरपेक्ष्यधर्ममेव बाधित्वा समुच्चयोपादानमेव युक्तमिति न्यायस्य च नाडीपुरीततोरधिकरणसप्तमीबाधप्रसङ्गादसंभवे प्राप्ते नाडीपुरीतद्ब्रह्मणां समुच्चयविषयैः श्रौतैर्लिङ्गैर्नाडीपुरीतत्सप्तम्योः सामीप्यमर्थमुपादाय ब्रह्मण्यधिकरणसप्तमीपरिग्रहेण च नाडीपुरीतत्समीपवर्तिब्रह्म सुप्तिस्थानं दर्शितम् ॥ २ ॥

## स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॥ ३ ॥

इहोपाधिभेदाज्जीवभेदाज्जीवभेदो देहान्तरेषु प्रसिद्धः सुप्तस्यापि पूर्वोपाधिप्रविलयात्॰उत्तरोपाध्युत्पत्तौ चोपाधिभेदात् सुप्तादन्यस्य जीवस्योत्थाने प्राप्ते कर्मानुस्मृतिशब्दविधिभिः प्रतिपन्नजीवैक्योपपादनाय ज्ञानमेवादिसिद्धं स्थूलसूक्ष्मापक्षस्वकार्यान्तःकरणावच्छिन्नं सज्जीवोपाधिरित्युक्तम् ॥ ३ ॥

## मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ ४ ॥

जीवस्यावस्थाचतुष्टयप्रसिद्धिनियमाच्चतसृभ्यो लक्षणभेदप्रतिभासो मुग्धावस्थायां बलवान् प्रसिद्धिनियमस्य मुग्धावस्थायाः सर्वजीवविषयत्वाभावात् सुषुप्त्युत्क्रान्त्योरंशसांकर्यादप्युपपत्तेः,अतो लक्षणभेदात् पञ्चम्यवस्था मुग्धिरित्युक्तम् ॥ ४ ॥

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ५ ॥

आकाशादिकार्यभेदैस्तदुपाध्यवच्छिन्नचिद्भेदैश्च कार्यकारणभावेन वांशांशिभावेन वा सामान्यविशेषभावेन वा ब्रह्मणो भिन्नाभिन्नत्वं सप्रपञ्चता सम्यग्ज्ञानानन्दलक्षणपरापरसामान्यत्रयावलम्बनैकव्यक्तिमात्रात्मता निष्प्रपञ्चता तदुभयमुभयविधश्रुतिप्राप्तं विकारान्तर्बहिर्देशभेदेन ब्रह्मणि व्यवस्थापयितुं न शक्यते देशलक्षणभेदाभ्यां ब्रह्मभेदप्रसङ्गात्, नापि स्थितिप्रलयकालभेदेन ब्रह्ममात्रोपाधिश्रवणविरोधात्, नापि कार्यकारणब्रह्मभेदेन कारणब्रह्मण एवोभयाकारश्रवणात्, नापि कारणं तद्विनिर्मुक्तब्रह्मभेदेन ब्रह्मद्वयाभावात्, एकस्यैवोभयलक्षणत्वधर्मिभेदादिति,यद्यप्येवमसांकर्येण रूपद्वयव्यवस्था न संभवति तथाप्युभयविधश्रुतिसामर्थ्यादविवेकोपाधावुभयात्मकं ब्रह्मेति निश्चिनुमः, यद्यपि निष्प्रपञ्चब्रह्मपरनिषेधवाक्यप्रकरणस्थानां "द्वे वाव ब्रह्मणो रूपे" इत्यादीनां निषेध्यवस्तुसमर्पणेनैवोपक्षयाच्च पृथक् सप्रपञ्चं प्रतिपादयितुं तात्पर्यमस्ति तथाप्युपासनाप्रकरणपठितानां सप्रपञ्चवाक्यानां स्वशेष्युपासनविरोधाभावात् तत्परनिषेधवाक्यविरोधेऽपि स्वार्थे प्रामाण्यात् सप्रपञ्चं ब्रह्मेति प्राप्ते न्यायोऽवतार्यते, चेतनस्य भेदासंसर्गितया पुरुषार्थ इति श्रुतिसुषुप्त्योर्दर्शनात् तत्परनिषेधवाक्यविरोधे सत्यन्यपराणां सविशेषवाक्यानां स्वशेषिविरोधाभावेऽपि दौर्बल्यात् तत्परवाक्यविरोधे सत्यतत्पराणां दौर्बल्यमित्येतावत्त्वात् स्वशेषिवाक्यविरोधेऽप्यन्यपरत्वमेव दौर्बल्यनिमित्तमिति न्यायेन सप्रपञ्चत्वमुपचरितमुपादाय निष्प्रपञ्चमेव ब्रह्मेति निरूपितम्, अथवैकस्योभयरूपविरोधे सति "इन्द्रो मायाभि" "नो-

सदासीन्नो सदासीत्" "तम आसी"दिति सदसद्विलक्षणानिर्वचनीयमाया-व्यपाश्रयेण तत्त्वातत्त्वविषयभेदाद्रूपद्वयं व्यवस्थापितमिति ॥ ५ ॥

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ ६ ॥

वस्त्वन्तराभावविशिष्टवस्त्वन्तरज्ञानस्यैव निषेधशब्दार्थत्वात् सति संभवे प्राप्तस्य कृत्स्ननिषेधकल्पनायोगादेकांशस्यैव निषेधकल्पनं लघीय इति न्यायेन ब्रह्मतद्रूपयोरन्यतराभावविशिष्टतयान्यतरस्य प्रतिपत्तव्यत्वे प्राप्तेऽर्थतः प्राधान्येऽपि ब्रह्मणः शब्दतो राजवद् गुणभूतत्वाच्छब्दतः प्रधानतया प्रकृतं रूपद्वयमितिशब्देन परामृश्य प्रतिषिध्यते, ब्रह्म तु केवलं प्रतिषेधादीनां द्रष्टृमात्रं निष्प्रपञ्चं परिशिष्यत इति दर्शितम् ॥ ६ ॥

## परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ७ ॥

ब्रह्म सद्वितीयं सेतुव्यपदेशवत्त्वात् प्रसिद्धसेतुवत्, ब्रह्म सद्वितीयम् उन्मानव्यपदेशवत्त्वाद् गवादिवत्, ब्रह्म सद्वितीयं संबन्धव्यपदेशवत्त्वाद् रज्जुघटवत्, ब्रह्म सद्वितीयं भेदव्यपदेशवत्त्वाद् घटादिवत्, इत्यनुमानचतुष्टयस्यै"कमेवाद्वितीय" "यस्मात् परं नापरमस्ति किंचि"-दित्यागमविरुद्धत्वं हेतूनां चोपचरितविषयत्वेन मुख्यासिद्धत्व च दर्शितम् ॥ ७ ॥

## फलमत उपपत्तेः ॥ ८ ॥

'यागेन स्वर्गं भावये"दिति वाक्यार्थे फलभावनां प्रति यागस्य करणभावनया भाव्यमानस्य करणत्वमवगम्यमानं भाव्यस्वर्गादिनिर्वर्तन-द्वारेण यागः फलभावनां प्रति करणमित्यवगमयति. फलभावनाकरणस्य कुठारादेः स्वयं करणभावनाविषयीकृतस्य द्वैधीभावनिर्वर्तनेन फलभाव-नाकरणत्वदर्शनात्, ततश्च यागस्य फलभावनाकरणत्वमवगम्यमानं कालान्तरभाविस्वर्गसाधनत्वसमर्थं यागजन्यमपूर्वं नाम किंचिदर्थापत्त्या कल्पयति, अपूर्ववाक्यार्थपक्षेऽपि लिङाद्रिप्रत्ययेन धात्वर्थकर्तव्यतायां लोके गृहीतसंबन्धेन वेदेऽपि स्वर्गकामस्य यागकर्तव्यतायामभिहितायां तदन्यथानुपपत्त्या यागस्य स्वर्गसाधनत्व सिध्यति पुनश्च तदन्यथानुप

पत्त्या॰अपूर्वं परिकल्प्य लिङादेस्तदभिधायकत्वं च कल्पयित्वा॰अपूर्वंवाक्यार्थः परिकल्प्यते, अपूर्वव्यतिरिक्तनियोगवाक्यार्थपक्षेऽपि स्वर्गकामस्य यागे नियोगान्यथानुपपत्त्या यागस्य स्वर्गसाधनत्वं परिकल्प्य ततश्चापूर्वं परिकल्प्यते, एवं त्रिष्वपि पक्षेषु यागस्य स्वर्गसाधनत्वान्यथानुपपत्तिः स्वर्गसाधनसमर्थं निरपेक्षमर्थं कल्पयन्ती परमेश्वरमर्थवादप्राप्तं फलदातारं निरुणद्धीति प्राप्ते शुभाशुभव्यामिश्रकर्मफलं कर्मतत्फलसंप्रदानदेशकालनिमित्तविपाकादिविषयविज्ञानवता केनचित् प्रदीयमानं भवितुमर्हति व्यवहितकर्मफलत्वात् सेवादिकर्मफलवदित्यनुमानानुगृहीतश्रुत्युपस्थापितेश्वरपदार्थबाधकल्पनाद्वरमपूर्वनैरपेक्ष्यधर्मबाधकल्पनं वियदधिकरणन्यायेनेत्यन्वयव्यतिरेकसिद्धशरीरेन्द्रियादिसाधनव्यपेक्षादपूर्वात् फलसिद्धिवदीश्वरापेक्षादपूर्वादपूर्वापेक्षादीश्वरात् फलसिद्धिः, अथवा श्रुत्यनुमानप्राप्तेश्वरेऽप्यतिवृत्तकर्मानुसंधानेन लौकिकेश्वरवत् फलदातरि सति श्रुतकल्प्ययोः श्रुतस्यैव बलवत्त्वमिति न्यायेनार्थापत्तेः श्रुतेश्वरेणोपक्षयाच्चापूर्वकल्पनावकाश इति दर्शितम् ॥ ८ ॥

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे तृतीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥ * * ॥

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

'यजेत' 'दद्यात्' 'जुहुया'दिति प्रकृतिशब्दभेदात् प्रकृत्यर्थानुबन्धभेदेन प्रत्ययार्थकर्मभेदो निरूपितः, "समिधो यजति" "तनूनपातं यजती"त्यादौ गुणविधानार्थत्वमन्तरेण यजत्यर्थाभ्यासाद्वात्वर्थभेदं कल्पयित्वा कर्मभेद उक्तः, "तिस्र आहुतीर्जुहोती"ति विहिताहुत्यनुवादेन संख्याविधाने॰ एकस्यैव कर्मण आवृत्तिरेव स्यात्, संख्याविशिष्टकर्मविधाने कर्मभेद एवेत्युक्तम्, "वैश्वदेव्यामिक्षा" "वाजिभ्यो वाजिन"मिति वाजिशब्दोदितवैश्वदेवदैवत्ये कर्मणि वाजिगुणभेदाद् द्रव्यदेवतात्मकयागरूपभेदेन कर्मभेद उक्तः, "मासमग्निहोत्रं जुहोति" "मासं दर्शपौर्णमासाभ्यां यजेते"ति प्रसिद्धाग्निहोत्रविधिप्रकरणाद् भिन्नप्रकरणत्वा-

दग्निहोत्रात् कर्मान्तरमेव मासगुणविशिष्टं विधीयत इत्युक्तम्, "अथै सर्वज्योति" "रथैष विश्वज्योति"रिति प्रसिद्धज्योतिष्टोमशब्दार्थात् समाख्यान्तरत्वात् सहस्रदक्षिणत्वादिगुणविशिष्टं कर्मान्तरमित्युक्तम्, एवं शब्दान्तराभ्याससंख्यागुणप्रक्रियानामधेयानि कर्मभेदहेतवः, 'एकं वा संयोगरूपचोदनाख्याविशेषा'दिति फलसंयोगैक्यं कतिपयगुणविशिष्टकर्मैक्यं विधायकपदचोदनैक्यं कर्मनामधेयैक्यं च शाखाभेदेऽपि कर्मैक्यहेतव उक्ताः, तत्र यथायोगमेतैर्हेतुभिर्विद्याभेदाभेदौ निरूप्येते, तत्र रूपभेदावितरेभ्यो हेतुभ्यो बलवत्तरावन्तरङ्गत्वात्, अस्मिन्नधिकरणे शाखाभेदेऽपि यासु विद्यासु संयोगादयो विकल्पेन समुच्चयेन वा यथायोगमवगम्यन्ते तासामेकत्वमिति सामान्येन दर्शितम् ॥ १ ॥

## उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने च ॥ २ ॥

उपास्यरूपैक्येऽप्यत्त्यादित्यस्थानभेदनिर्दिष्टाहरहर्गुणव्यवस्थावदुपास्यैक्येऽपि शाखाभेदस्थाननिर्दिष्टाना गुणानां व्यवस्थायां प्राप्तायां शाखाभेदस्थानस्यात्त्यादित्यस्थानवदुपास्यविशेषणतया गुणव्यवस्थापकत्वाभावाद् धर्म्युपाधिविहिततया तेनाविनाभूतानां गुणानां सर्वत्र गतेनापि धर्मिणा· अविनाभावेनानुमीयमानतया सर्वत्र संबन्धसिद्धेः शाखाभेदेऽपि सर्वगुणविशिष्टो गुणी तत्तच्छाखागतैर्गुणैर्गुणिप्रतिपादकशब्दैरनुमानानुगृहीतैः प्रमीयत इति विद्यैक्ये गुणोपसंहारः सिद्धोऽनुमानानुगृहीताच्छब्दप्रमाणादिति ॥ २ ॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ३ ॥

उद्गीथसंज्ञाविशेषाद् बह्वर्थवादाविशेषाच्च बहिरङ्गभूतात् सकलोद्गीथभक्तेः कर्ता प्राणः क्वचिदुपास्यः क्वचिदुद्गीथावयव ओङ्कारः प्राणदृष्टिविशिष्ट उपास्य इत्यन्तरङ्गोपास्यरूपभेदस्य बलवत्तरत्वाद् रूपभेदेन विद्याभेदो दर्शित इति ॥ ३ ॥

## व्याप्तेश्च समञ्जसम् ॥ ४ ॥

"अक्षरमुद्गीथ"मिति सामानाधिकरण्यस्याध्यासालम्बनत्वेऽपूर्वसं-

बन्धकल्पना प्रयोजनकल्पना॰ उद्गीथशब्दस्याक्षरे विप्रकृष्टलक्षणाकल्पना चेति कल्पनागौरवात् प्रमाणान्तरसिद्धसामान्यविशेषसंबन्धावलम्बनेन विशेषणविशेष्यभावेनोद्गीथावयवोङ्कारानुवादे वाक्यभेदाभावादुपासनाविधानार्थतया प्रयोजनवत्त्वाच्च पूर्वोक्तकल्पनात्रयाभावेन बुद्धिलाघवाद्विशेषणविशेष्यभावसंबन्धो लघीयानित्युक्तम् ॥ ४ ॥

## सर्वाभेदादन्यत्रेमे ॥ ५ ॥

छान्दोग्यादौ श्रैष्ठ्यादिगुणविशिष्टप्राणधर्मतया प्राणविद्याविषयत्वेन 'य एवं वेद'त्येवंशब्देन समर्पितानां वशिष्ठत्वादिगुणानां कौषीतकिशाखायामपि श्रैष्ठ्यादिगुणविशिष्टप्राणप्रत्यभिज्ञानेनाविनाभावादनुमानेन प्राप्तानां श्रुत्यैव संनिहितविशिष्टप्राणपरामर्शकेन "तथा एवं विद्वानि"त्येवंशब्देनानुमानबाधकेन बाधायां प्राप्तायां श्रैष्ठ्यादिशब्दसंकीर्तितप्राणाविनाभावोपस्थापितत्वाद् गुणानां श्रुत्यर्थाभ्यां प्रकृतस्य परामर्शकत्वमेवंशब्दस्य विद्यत इति धर्म्यविनाभावप्राप्तानामपि वशिष्ठत्वादिगुणानामेवंशब्देनानुमानानुगृहीतेन परामर्शाद् गुणोपसंहारः सिद्ध इति दर्शितम् ॥ ५ ॥

## आनन्दादयः प्रधानस्य ॥ ६ ॥

यद्यपि शब्दगुणोपसंहारानुपसंहाराभ्यां वेद्यस्य निर्विकारस्य ब्रह्मणः सगुणविद्यायामिवोपचयापचयौ न स्तः, तथापि सत्यज्ञानानन्दात्मानन्तपदानां निरुपाधिभावरूपब्रह्मसमर्पकाणां सत्यत्वज्ञानत्वानन्दात्मत्वपरिपूर्णत्वलक्षणपरापरसामान्याभिधानमुखेन स्वार्थं परित्यज्य सर्वसामान्यालम्बनमेकामानन्दव्यक्तिमुपलक्ष्यासाधारणब्रह्मस्वरूपसमर्पकत्वं यदा सिध्यति तदैव ब्रह्मासाधारणं लक्ष्यते नान्यथेति पञ्च पदार्थाः सर्वत्रैवोपसंहर्तव्या निर्विकारब्रह्मप्रमेयाविशेषात् प्रमाणाविशेषेणापि भवितव्यमिति न्यायेन, न च प्रपञ्चोपचयापचयोपाध्युपचितापचितरूपाणां सर्वज्ञसर्वशक्तिसर्वेश्वरत्वप्रियशिरस्त्वादिरूपाणामेकरूपे ब्रह्मणि प्राप्तिः किंतु सगुणे ते चात्रापि सिद्धस्य ब्रह्मणो गुणा इत्युच्यन्ते नानन्दादयः, तेषां ब्रह्मस्वरूपलक्षणत्वादिति दर्शितम् ॥ ६ ॥

## आध्यानाय प्रयोजनाभावात् ॥ ७ ॥

"तद्विष्णोः परमं पदं" 'पुरुषान्न परं किंचि'दिति चोपक्रमोपसंहारैकरूप्यात् पुरुषस्य सर्वस्मात् परत्वे प्रयोजनवति च प्रतिपादयितव्येऽवान्तरवाक्यानां प्रयोजनवदेकवाक्यतायां संभविन्यां वाक्यभेदप्रयोजनकल्पने न युक्तं कल्पनागौरवादिति न्यायेन पुरुषपरत्वमवान्तरवाक्यानां दर्शितमिति ॥ ७ ॥

## आत्मगृहीतिरितरवदुत्तरात् ॥ ८ ॥

सूत्रात्मविषयलोकसृष्ट्यादिबहुलिङ्गानामुपक्रमोपसंहारगतात्मब्रह्मश्रुतिभ्याम्॰ "एक एवाग्र आसीत्॰" "एतया द्वारे"ति चावधारणप्रवेशादिलिङ्गैश्च बाधात् परमेव ब्रह्म वाक्यगम्यमित्युक्तम्। "अपरा योजने"ति "कतम आत्मे"त्युपक्रम्य"स वा एष महानज आत्मे"त्यन्तं त्वंपदार्थप्रतिपादनपरं वाक्यं "सदेवे"त्युपक्रम्य"स आत्मे"त्यन्तं तत्पदार्थपरं वाक्यम्, अनयोश्च वाक्यार्थान्वयितत्त्वंपदार्थभेदाद् वाक्यच्छायाभेदाच्चातुल्यार्थत्वे प्राप्ते समानाधिकरणपदयोर्वाच्यार्थभेदात् प्रतिपाद्यैकत्वसिद्धये लक्षणार्थपरिग्रहवल्लक्ष्यमाणार्थभेदेऽपि लक्षणान्तरपरिग्रहः स्यादित्यनवस्थापरिहाराय लक्ष्यमाणार्थैक्यमेव युक्तमिति न्यायेन त्वंपदार्थोऽप्यद्वितीयपर्यन्तः॰ तत्पदार्थोऽपि प्रत्यगात्मपर्यन्त इति लक्ष्यमाणत्वंपदार्थप्रतिपादकेन 'कतम आत्मे'त्यनेन वाक्येन लक्ष्यमाणतत्पदार्थप्रतिपादकं 'सदेवे'ति वाक्यं प्रत्यगात्मभूतसदुपक्रमत्वात् तुल्यार्थमित्युक्तम् ॥ ८ ॥

## कार्याख्यानादपूर्वम् ॥ ९ ॥

आचमनानग्नताचिन्तनयोरेकवाक्यताप्रतीतावपि॰"अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्य" इतिवदपूर्वत्वाद्वाक्यभेदेनाप्युभयविधाने प्राप्ते सामान्यविषयस्मार्ताचमनस्य "तद्विद्वांस आचामन्ती"ति प्राणविद्विशेषविषयाचमनस्य मूलत्वानुपपत्तेर्विदुषोऽपि सामान्यप्राप्ताचमनस्यानुवादेनाचमनीयास्वप्सु वासश्चिन्तनमेव विधीयते प्रसिद्धानुवादेनाप्रसिद्धं विधीयत इति न्यायेनेत्युक्तम् ॥ ९ ॥

## समान एवं चाभेदात् ॥ १० ॥

एकस्यां शाखायां मनोमयत्वादिगुणविशिष्टाभ्यासस्य यजतेरभ्या-
ग्रवदुपासनाकर्मभेदनिमित्तत्वाद् गुणविधानार्थे गुणिमात्रानुवाद एव
यादिति विद्याभेदे प्राप्ते गुणान्तरविधानायाग्निहोत्रानुवादवद् गुणा-
तरविधानार्थं गुणविशिष्टगुण्यनुवादस्य स्पष्टप्रत्यभिज्ञानार्थत्वे संभवति
ततिपयविशिष्टधर्मैक्यलक्षणरूपाविशेषाद् विद्यैक्यमित्युक्तम् ॥ १० ॥

## संबन्धादेवमन्यत्रापि ॥ ११ ॥

यद्यप्यक्ष्यादित्यस्थानयोरहरहमिति नामद्वयसंबन्धाभावात् सत्या-
योपास्यब्रह्मण एव तत्संबन्धादितरेतरस्थानगतनामवद् ब्रह्मप्रत्ययेन
ादविनाभूतनामद्वयसंबन्धानुमानादुभयत्र प्राप्तिस्तथापि 'तस्योपनिषदह'-
त्तस्योपनिषदह''मिति वाक्यद्वयेन नाम्नोः स्थानद्वयविशिष्टे ब्रह्मणि
च्छब्दाभ्यां प्रकृतविशिष्टानुवादेन व्यवस्थया संकीर्तनपरेण उपसंहारा-
मानबाधया नामद्वयं व्यवस्थयोपास्यमिति निर्णीतम् ॥ ११ ॥

## संभृतिद्युव्याप्त्यपि चातः ॥ १२ ॥

संभृतिद्युव्याप्त्यादिब्रह्मधर्माणां पृथगुपासनतत्फलकल्पनालघीयो-
द्यब्रह्मैक्यद्वारेण शाण्डिल्यादिविद्यासंबन्धकल्पनमिति प्राप्ते कतिपय-
र्मविशिष्टस्य ब्रह्ममात्रस्य रूपैक्यनिमित्तत्वाभावात् संभृत्यादिधर्मवि-
शिष्टस्य ब्रह्मणः शाण्डिल्यविद्याद्युपास्यमानमनोमयत्वादिगुणविशिष्ट-
ह्मणश्च रूपभेदाद् विद्यैक्यायोगात् संभृत्यादिरूपासनान्तरमेव कल्प्यत
त्युक्तम् ॥ १२ ॥

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ १३ ॥

उभयत्र मरणावभृथत्वविशिष्टसांपादिकपुरुषयज्ञत्वलक्षणरूपैक्या-
द्विद्यैक्ये प्राप्ते यद्यपि 'विदुषो यज्ञस्ये' त्यभिहितत्वात्त्रिपादस्यपति-
यायेन सामानाधिकरण्यमेव युक्तं तथाप्याध्यात्मिकापूर्वसंबन्धकल्पनात्
माणान्तरप्रसिद्धविद्वत्संबन्धियज्ञानुवादेन वाक्यभेदं च परिहृत्य ब्रह्म-

विद्याप्रशंसार्थस्य विद्वत्संबन्धियज्ञस्य पत्न्यादिसंपादनमेकत्र क्रियत इति वरं प्रतिपत्तुं परत्र पुरुष एव फलार्थितया यज्ञत्वेन संपाद्यत इत्यपुरुषलक्षणादन्यप्रशंसार्थादसांपादिकात् प्रातरादिसवनत्रयविशिष्टात् पुरुषलक्षणस्यानन्यशेषस्यायुःसवनत्रयविशिष्टस्य सांपादिकयज्ञस्य रूपभेदाद्विद्याभेद उक्तः ॥ १३ ॥

## वेधाद्यर्थभेदात् ॥ १४ ॥

यद्यप्येकस्याग्निहोत्रस्य काम्यनित्यविनियोगद्वयवदुपनिषत्प्रारम्भपठितानां मन्त्रकर्मणां लिङ्गवाक्यादिभिः कर्मान्तरेषु विनियोगे सत्यपि संनिधिलक्षणात् प्रकरणप्रमाणाद् विद्यास्वपि विनियोगो न विरुध्यत इति प्राप्तं तथाप्येकस्यैवोभयार्थतायां स्वतो विरुद्धायां तुल्यप्रमाणसंबन्धादविरोधोऽग्निहोत्रे कल्पितः, इह तु वाक्यलिङ्गैः संनिधेर्दुर्बलतया बाधादध्ययनधर्मसामान्येनापि संनिध्युपपत्तेर्न विद्यासु विनियोग इत्युक्तम् ॥ १४ ॥

## हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत् तदुक्तम् ॥ १५ ॥

यद्यपि छान्दोग्याथर्वणयोर्निर्गुणब्रह्मविद्याविषयं सुकृतदुष्कृतहानं स्वतो नोपायनमपेक्षते, उपायनमन्तरेणापि हानोपपत्तेरर्थवादत्वेन प्रयोजनाभावाच्च, तथापि विवादाध्यासितं हानम् उपायनसंबन्धिविदुषः सुकृतदुष्कृतहानत्वात् कौषीतक्यादिगतसुकृतदुष्कृतहानवदित्यनुमानेन स्तुतिवृद्धिप्रयोजनायोपायनमुपसंह्रियत इति । अथवेति यद्यपि गुणस्यादृष्टस्वरूपेण वा स्वाश्रयसर्वगतात्मद्रव्यकल्पनद्वारेण वा कम्पनं न संभवति तथापि विद्यया प्रतिबन्धाददृष्टस्य कंचित् कालं फलदानायोन्मुखीभावलक्षणात् स्वभावात् प्रच्यवनं कम्पमानेऽपि वस्तुनि विद्यमानधर्मो धूननशब्देन लक्षणयाभिधीयते न हानमिति शङ्क्यते, तत्र मुख्यार्थासंभवेन शब्दस्य लक्षणोपादाने सत्राधिकरणन्यायेन संनिहितपदानुसारेण लक्षणा न्याय्येत्युपायनशब्दसंनिधानाद्धानमेव लक्ष्यत इत्युक्तम् ॥ १५ ॥

## सांपराये तर्तव्याभावात् तथा ह्यन्ये ॥ १६ ॥

"तां मनसात्येति" "तत् सुकृतदुष्कृते विधूनुते" इति वाक्येन व्यध्वनि हानमवगतम्, "अश्व इव रोमाणी"ति वाक्येन देहत्यागात् प्रागेव हानमवगतम्, तत्र वाक्ययोर्विरोधे सति पुष्कलकारणेऽनन्तरं कार्यं भवति नासति न कालान्तर इति लौकिकन्यायानुगृहीतेनाप्रतिबद्ध[1]विद्यापौष्कल्यानन्तरं हानस्य प्रतिपादकेन ताण्डिवाक्येन व्यध्वनि सुकृतदुष्कृताद्यनुगमनहानयोः प्रयोजनकारणशून्यतया कारणोपपत्तिशून्ये व्यध्वनि हानविषयं वाक्यं बाधित्वा देहवियोगात् प्रागेव हानं दर्शितम् ॥ १६ ॥

## गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ १७ ॥

निर्विशेषब्रह्माविर्भावलक्षणविद्यार्चिरादिगतिसंबन्धिनी ब्रह्मविद्यात्वात् सगुणब्रह्मविद्यावदित्यनुमानस्य न निर्गुणब्रह्मविदर्चिरादिगतिमान् मुक्तिफलत्वात् प्रलये मुच्यमानहिरण्यगर्भवदिति प्रत्यनुमानबाधात् "शतं चैका च पुरुषस्य नाड्य" इति काठकवाक्यस्य प्राकरणिकनिर्गुणसंबद्धस्य दहरविद्यायामर्थसाम्यलिङ्गसंबन्धेन बाधाच्च देशाद्यव्यवहितवस्तुप्राप्तौ न गत्यपेक्षेति लौकिकन्यायानुगृहीतेन "निरञ्जनः परमं साम्यमुपैती"ति वाक्येन गतिबाधो दर्शितः ॥ १७ ॥

## अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ १८ ॥

सगुणासु विद्यासु यासु श्रूयते गतिस्तास्वेव प्रकरणान्नियमः प्राप्तः, तत्र "ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसंभवन्ती"ति सत्यशब्देन सत्यार्थवचनपरिग्रहात् सत्यार्थपरिग्रह एव लघीयानिति न्यायेन "न तत्र दक्षिणा यन्ती"ति निषेधाच्च सत्यशब्देन ब्रह्मैवोपादाय तद्रूपासकानां सर्वेषां वाक्यप्रमाणादेव गतिसंबन्धप्रतिपादनात् प्रकरणानियमो बाध्यत इत्युक्तम् ॥ १८ ॥

१—नाप्रतिबन्धं इति पा० ।

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ १९ ॥

वशिष्ठादीनां विद्यासंबन्धिशरीराच्छरीरान्तरग्रहणं पूर्वशरीरारम्भकेभ्यः कर्मभ्यः कर्मान्तरनिबन्धनं शरीरान्तरग्रहणत्वात् प्राकृतपुरुषशरीरान्तरग्रहणवत्, ततश्च सर्वेषामपि ब्रह्मविदामनारब्धकर्मनिमित्तमेव शरीरान्तरग्रहणं भवितुमर्हति ब्रह्मविद्यावत्त्वात्॰ अधिकारिपुरुषवदित्यनुमानेनाविर्भूतब्रह्मणोऽप्यनारब्धकर्मनिमित्तशरीरग्रहणे प्राप्ते "क्षीयन्ते चास्य कर्माणि" "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुत" इति चागमेनानारब्धकर्माद्यभावेऽवगते सत्यधिकारिपुरुषाणामितरेषां सर्वेषां च विदुषामनारब्धकर्मनिमित्तं शरीरान्तरं नोत्पद्यते॰ अविद्याकामकर्मलक्षणनिमित्ताभावात्॰ यन्निमित्तशून्यं न तदुत्पद्यते यथा बीजाभावेऽङ्कुर इति प्रत्यनुमानात्॰ श्वशूकरखरोष्ट्राणां गोजवीत्यादिब्रह्महत्याफले च शरीरान्तरग्रहणस्य पूर्वशरीरारम्भकब्रह्महत्यानिमित्तत्वेन तत्रानैकान्तिकत्वाच्च पूर्वपक्षानुमानं बाधित्वाविर्भूतब्रह्मणोऽनारब्धकर्मनिमित्तं शरीरग्रहणं नास्तीत्युक्तम् ॥ १९ ॥

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसद्वत् तदुक्तम् ॥ २० ॥

यद्यपि प्रपञ्चनिषेधमुखेन सर्वत्र ब्रह्मणि प्रतिपाद्ये तत्र तत्र श्रुतानामेव निषेधशब्दानां स्थालीपुलाकन्यायेन सर्वप्रपञ्चनिषेधेन ब्रह्मावगमयितुं सामर्थ्यमस्ति तथाप्यश्रुतप्रपञ्चनिषेधाय शब्दस्य लक्षणापरिग्रहः प्रपञ्चैकदेशपरिशेषो वा स्यात्, ततोऽपरं ब्रह्मणि प्रपञ्चनिषेधकतया क्लृप्तसर्वशब्दोपसंहारेणैकवाक्योपपादनं निषेधशब्दाश्च न स्थूलादिभ्योऽन्यविषयाः किंतु मुख्यत्वादभावविषया इत्युक्तम्, आनन्दादय इति प्रपञ्चपदार्थाभावे ब्रह्मस्वरूपमेव न सिध्यतीत्युक्तम्, इह तु सिद्धे ब्रह्मणि प्रपञ्चनिषेधाय शब्दोपसंहारो दर्शितः ॥ २० ॥

## इयदामननात् ॥ २१ ॥

"द्वा सुपर्णावृतं पिबन्ता" विति च यद्यपि वाक्यच्छायायां प्रति-

पादनप्रकारभेदाद्रूपभेदेनातुल्यार्थत्वं प्राप्तं तथापि वाक्यार्थनिरूपणायां संसारिणो जीवादन्योऽशनायाद्यतीतो निष्प्रपञ्चः परमात्मैव प्रतिपाद्यत इति प्रतिपाद्यरूपैक्यस्य प्रतिपादनप्रकारभेदादन्तरङ्गत्वात् प्रतिपाद्यरूपैक्यात् तुल्यार्थत्वं मन्त्रयोरुक्तम् ॥ २१ ॥

## अन्तरा भूतग्रामवत् स्वात्मनः ॥ २२ ॥

"यत् साक्षात्"॰"यदेव साक्षा"दित्येकस्यां शाखायामनेकगुणविशिष्टस्य धर्मिणोऽभ्यासाद् यजत्यभ्यासवद् वाक्यशेषवशाच्च जीवपरमात्मरूपेण वेद्यभेदादाम्नाययोरतुल्यार्थत्वे प्राप्ते ऽभ्यासस्य विशेषविधानार्थत्वोपपत्तौ सत्यां द्वयोः सर्वान्तरत्वानुपपत्त्यनुगृहीतया "यदेव साक्षा"दित्यवधारणश्रुत्यानेकगुणविशिष्टधर्मिप्रत्यभिज्ञानेन च रूपैक्यावगतेस्तुल्यार्थत्वमाम्नाययोरित्युक्तम्, सर्वत्र चाभ्यासस्य विशेषविधानार्थत्वाभावे कर्मभेदकत्वमिति द्रष्टव्यम् ॥ २२ ॥

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ २३ ॥

निकृष्टवत्युत्कृष्टबुद्धिः फलवती नोत्कृष्टे निकृष्टबुद्धिरिति लौकिकन्यायात् ब्रह्मणि जीवबुद्धेरफलत्वाज्जीवे ब्रह्मबुद्धिमात्रस्यैव प्राप्तौ वचनादन्यत्रैव लौकिको न्यायः सावकाश इति न्यायेन व्यतिहारवचनसामर्थ्याज्जीवब्रह्मणोरितरेतरात्मतादृष्टिः फलाय चोद्यत इत्युक्तमुपासनापक्षे, ऐकात्म्यपक्षे तु जीवगतस्यापि निकर्षस्य निवृत्तेर्ब्रह्मणि निकर्षबुद्ध्यभावान्न लौकिन्यायावतार इति ॥ २३ ॥

## सैव हि सत्यादयः ॥ २४ ॥

"जयतीमाँल्लोकान्" "हन्ति पाप्मान"मिति च फलसंयोगभेदात् सत्यनामाक्षरत्रयविशिष्टस्याद्यादित्याधिकरणाहरहंगुणविशिष्टस्य च रूपभेदाद् विद्याभेदे प्राप्ते "तद् यत् तत् सत्यम्॰" "असौ स आदित्य" इति वाक्यप्रमाणात् सत्यनामाक्षरत्रयविशिष्टस्यैव ब्रह्मण उत्तरत्र स्थानगुणसंबन्धप्रतिपादनाद्रूपैक्यसिद्धेर्विद्यैक्ये सत्ययं न्यायः प्रदर्श्यते, यत्र विध्युद्देशः फलवांस्तत्राङ्गानां प्रधानान्वयद्वारेण फलसंबन्धसिद्धेरर्थवादगतानि

गुणफलान्युपेक्ष्यन्ते, यत्र तु प्रधानतदङ्गानामर्थवादात् फलं सत्रन्यायेन कल्प्यते तत्र विहितानां फलाकाङ्क्षाऽविशेषादर्थवादात् फलकल्पनाऽविशेषाच्च यत् किंचिदर्थवादगतं फलं तत् सर्वमेकीकृत्य गुणविशिष्टस्य गुणिनः फलत्वेन कल्पनीयमिति न संयोगभेद इति दर्शितम् ॥ २४ ॥

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ २५ ॥

वशित्वादिगुणसमुदायस्यापहतपाप्मादिगुणसमुदायस्य च सगुणनिर्गुणविद्याभेदाद् विद्यान्तरवदितरत्रानुपसंहारोऽनुमानात् प्राप्तः, तत्र वशित्वादेः प्रपञ्चोपाधिकस्य तदुपचयापचयाभ्यामुपचयापचयवतो निर्विशेषे ब्रह्मणि वेद्यत्वानुपपत्तेः प्रशंसामात्रेण कृतार्थत्वायोगात् क्वचिदुपास्याकाङ्क्षा विद्यते, स्तूयमानस्य च ब्रह्मणः स्तुतिपौष्कल्याकाङ्क्षास्ति, हृदयायतनाद्यर्थद्वारेण संनिधानं चास्ति, दहरस्य च वशित्वादिसंबन्धयोग्यता विद्यते, ब्रह्मणश्चापहतपाप्मत्वादिस्तुतियोग्यता, एवं ब्रह्मणः स्तुत्याकाङ्क्षासंनिधियोग्यत्वैरपहतपाप्मत्वादिगुणानां निर्गुणविद्यायां स्तावकतयोपसंहारान्निर्गुणविद्यागतोपचितापचितगुणानां चोपास्यत्वाकाङ्क्षायां सगुणासूपसंहारं च कल्पयित्वा तद्वाक्यानां चोपसंहृतगुणविशिष्टार्थप्रतिपादनसामर्थ्यकल्पनेनानुमानस्य बाधो दर्शितः ॥ २५ ॥

## आदरादलोपः ॥ २६ ॥

कुण्डपायिनामयने "मासमग्निहोत्रं जुहुती"त्यग्निहोत्रशब्दः प्रसिद्धादग्निहोत्रात् प्रकरणभेदात् कर्मान्तरविषयोऽपि प्रसिद्धाग्निहोत्रधर्मसाम्याद्यथा प्रयुज्यते, एवं "य एवं विद्वानग्निहोत्रं जुहोती"ति प्राणाद्याहुतिपञ्चकविषयोऽग्निहोत्रशब्दः प्रसिद्धाग्निहोत्रधर्मान् पयआदीनुपस्थापयति, तदपवादेन 'तद्यद्भक्त'मिति द्रव्यान्तरं होम्यत्वेन विधीयते, तत्रापवादाभाव उत्सर्गस्य स्थितिरिति न्यायेन भोजनाभावेऽप्याहुतिपञ्चकं पयआदिना कर्तव्यमिति प्राप्तम्, तत्र "तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीय"मित्यन्यार्थागतद्रव्योद्देशेनाहुतिकर्मविधानादाहवनीयाभावे होमाभाववदुद्देश्याभावे उपादेयाप्रवृत्तेरामिक्षार्थदध्यानयनाभावाद्वाजिकर्माभाव-

वदिति न्यायेन भोजनार्थद्रव्यलोपे लोप एवाग्निहोत्रशब्दस्यार्थवादगतस्य स्तुतित्वेनाप्युपपत्तेरग्निहोत्रधर्माप्रापकत्वादित्युक्तम् ॥ २६ ॥

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ २७ ॥

अङ्गाश्रितोपासनानि प्रधानार्थमङ्गानि प्रयोजयता प्रयोगवचनेन क्रत्वङ्गतयोपादेयानि साध्यफलव्यपदेशशून्यत्वे सति क्रत्वङ्गव्यपाश्रयेण विहितत्वाद् यदेवं तत् तथा यथा पर्णमयीत्वादीत्यनुमानं "तेनोभौ कुरुतः यश्चैतदेवं वेद यश्च न वेद नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" "तां चेदविद्वानुद्गास्यसी"त्यादिश्रौतैर्लिङ्गैर्विद्यारहितानामपि साङ्गे कर्मणि प्रवृत्तिविषयैः श्रुतार्थापत्तिलक्षणैर्विद्यानामनङ्गत्वसाधकैर्बाध्यते, सति चानङ्गत्वे सत्रन्यायेन फलं च साध्यतया विपरिणम्यत इत्युक्तम् ॥ २७ ॥

## प्रदानवदेव तदुक्तम् ॥ २८ ॥

"यः प्राणः स वायु"रित्यैक्यव्यपदेशस्य प्रयोजनान्तराभावाद् वागादिसंवर्गस्य प्राणस्याग्न्यादिसंवर्गस्य च वायोरैक्यचिन्तनमेव प्रयोजनमिति वाक्यतात्पर्यादैक्यचिन्तनमेव प्राप्तम्। "तौ वा एतौ द्वौ संवर्गा" विति वाक्यस्याप्युपास्यसंवर्गगुणविशिष्टभेदाभिधानस्य भेदेनानुचिन्तने तात्पर्याद् वाक्यभेदेनाप्यनुचिन्तनं प्राप्तम्। तत्रोपास्यतया प्रधानभूतसंवर्गगुणविशिष्टवायुप्राणधर्मिभेदविषयेण वाक्येन गुणभूतसमीरणस्वभावैक्यविषयं वाक्यमध्यात्माधिदैवासाधारणसंबन्धप्रतिपत्तिप्रयोजनं बाध्यत इत्युक्तम् ॥ २८ ॥

## लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥ २९ ॥

क्रत्वङ्गभूतेष्टकामयाग्निचयनप्रकरणात् "तेषामेकैक एव तावान् यावानसौ पूर्व" इति क्रत्वङ्गतालक्षणसादृश्यसापेक्षादतिदेशाच्च मनश्चिदादीनां भावनामयानां पुरुषायुषत्वेन क्लृप्तशतवर्षान्तर्गतषट्त्रिंशत्सहस्राहोरात्रावच्छिन्नैर्मनोवाक्चक्षुःश्रोत्रवृत्तिनिचयैरिष्टकात्वेन भाव्यमानैश्चीयमानानां प्राकृतेष्टकामयचयनेन विकल्प्य क्रत्वङ्गत्वे प्राप्ते "ते है-

विद्याचित एव सर्वदा सर्वाणि भूतानि चिन्वन्ति विद्यया हैवैत एव विदश्चिता भवन्ती"ति श्रुतिलिङ्गवाक्यैः प्रकरणातिदेशयोर्मुख्याग्निसंनिधे संपादनसौकर्यार्थत्वादतिदेशस्य चयनत्वसामान्यविषयत्वादिति प्रयोजनान्तरं परिकल्प्य मनश्चिदादीनां क्रत्वङ्गतायां प्रकरणातिदेशयोः प्रामाण्यं चापबाध्य फलार्थतया स्वातन्त्र्यमेव परिकल्पितमिति ॥ २९ ॥

## एक आत्मनः शरीरे भावात् ॥ ३० ॥

अहं मनुष्य इति संसर्गप्रत्ययात् सति शरीरे चैतन्योपलब्धेरसति चानुपलब्धेरित्यन्वयव्यतिरेकाभ्यां चैतन्यस्य देहधर्मत्वावगमाद् देह एवात्मेति प्राप्तम्,स्वप्नावस्थायामहं पश्यामीति द्रष्टर्यबाध्यमानप्रत्यक्षस्य स्थूलशरीराकाररहितस्य शरीरव्यतिरिक्तात्मविषयत्वात्, द्वयोश्च प्रत्यक्षयोर्विरोधे व्यतिरेकप्रत्यक्षस्य गत्यन्तराभावात्, अहं मनुष्य इति संसर्गप्रत्ययस्याध्यासनिबन्धनत्वोपपत्तेः, असति देहे चैतन्याभावस्यासिद्धत्वाद् व्यतिरेकासिद्धेः, सति च देहे चैतन्याभावदर्शनाद् घटवदतद्धर्मत्वादिति प्रत्यक्षानुमानाभ्यां देहव्यतिरिक्त आत्मा सिद्धः पूर्वप्रत्यक्षानुमानबाधेनेति दर्शितम् ॥ ३० ॥

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ३१ ॥

"उद्गीथमुपासीत" "इदमेवोक्थम्" "इयं वै पृथिवी" अयं लोकोऽग्निश्चित" इत्यादीनि त्रिवेदविहितान्युपासनानि·उद्गीथोक्थपृथिव्यादीनामालम्बनानां त्रिवेदविहितप्रधानकर्माङ्गत्वेन प्रयुज्यमानानां प्रतिवेदमुपांशुस्वरादिभेदेन भेदादुद्गीथादिश्रुतिभिरुपासनालम्बनानामुद्गीथादीनां सामान्येनोपात्तानां विशेषाकाङ्क्षायां तत्तद्वेदविहितप्रधानकर्माङ्गत्वेन प्रयुज्यमानोद्गीथादिविशेषेषु प्रकरणान्नियम्यन्त इति प्राप्तम् । तत्र सामान्यप्रवृत्तायाः श्रुतेर्विशेषाकाङ्क्षायां प्रकरणाद्विशेषनियमः स्यात्, इह तूद्गीथादिसामान्येऽप्युपासनासंभवाच्छ्रौतेन सामान्येन प्राकरणिकस्य विशेषनियमस्य बाधात् सर्वशाखाविहितप्रधानकर्माङ्गत्वेन प्रयुज्यमानसर्वोद्गीथादिविशेषेषु तदालम्बनोपासनानामुपसंहार उक्तः ॥ ३१ ॥

## भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ३२ ॥

"आत्मनो वैश्वानरस्य मूर्धैव सुतेजा" इत्यादिवाक्यप्रकरणाभ्यां समस्तोपासनाङ्गत्वेन तदन्तर्भावेऽपि व्यस्तोपासनानाम "त्यत्तं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्त" इति प्रत्यवयवमुपासनानां विधिफलयोः श्रवणात् स्वातन्त्र्येणापि पृथग्विधानं कल्प्यते, वाजपेयाङ्गस्य बृहस्पतिसवस्य प्रकरणान्तरे स्वातन्त्र्यवदिति प्राप्ते विहितानामपि व्यस्तोपासनानां प्रकरणवाक्याभ्यां समस्तोपासनान्तर्भावेन प्रयाजदर्शपूर्णमासवदेकप्रयोगत्वे सिद्धे प्रधानतदङ्गफलानां चार्थवादगतानामेकीकृत्य साङ्गप्रधानस्य फलत्वेन सत्राधिकरणन्यायेन कल्पयितव्यत्वेन प्रकरणान्तरविहितबृहस्पतिसववद् व्यस्तोपासनानां प्रयोगपृथक्त्वं युक्तमित्युक्तम् ॥ ३२ ॥

## नाना शब्दादिभेदात् ॥ ३३ ॥

गायत्रीशाण्डिल्यषोडशकलोपकोशलवैश्वानरदहरसत्यब्रह्मादिविद्यानामर्चिरादिफलसंयोगैक्यादुपास्यब्रह्मरूपैक्याच्छब्दमात्रभेदेऽपि प्रकृत्यर्थोपासनावच्छिन्नप्रत्ययार्थप्रयत्नचोदनैक्याद् ब्रह्मविद्यासमाख्यैक्याच्च समुच्चित्यैकप्रयोगत्वे प्राप्ते "पूर्णामप्रवर्तिनीं श्रियं लभते"·"एतमितः प्रेत्याभिसंभवितास्मि"·"ज्योतिष्मतो ह लोकान् जयति"·"एवंविदि पापं कर्म न श्लिष्यते" "सर्वेष्वात्मस्वन्नमत्ति"·"सर्वेषु लोकेषु कामचारो भवति"·"जयतीमाल्लोकानि" त्याद्यवान्तरफलसंयोगभेदाद् ब्रह्ममात्रैक्येऽपि तत्तत्प्रकरणविहितगुणकलापविशिष्टोपास्यरूपभेदादुपास्यानुबन्धभेदभिन्नोपासनानुबन्धभेदेन प्रयत्नचोदनाभेदात् प्रतिविद्यं नामधेयभेदात् काण्डपाठ्ययनवत् प्रकरणभेदात् कृत्स्नोपसंहारस्याशक्यप्रयोगत्वाच्च प्रधानफलैक्येऽपि स्वर्गकामाग्निहोत्रदर्शपूर्णमासवद् विद्यानां भेद एवेत्युक्तम् ॥ ३३ ॥

## विकल्पोऽविशिष्टफलत्वात् ॥ ३४ ॥

यद्यपि विकल्पसमुच्चययोरहंग्रहोपासनानां नियमहेत्वभावात् "तं

यथा यथोपासत" इति न्यायेनोपास्यगुणोपचयापचयाभ्यां ब्रह्मलोकेऽपि फलोपचयापचयसंभवेन तत्कामिनो याथाकाम्येनानुष्ठानं प्राप्तं तथापि "यस्य स्यादद्धे"त्यादिशास्त्रादुपास्यसाक्षात्करणेऽन्त्यकाले वक्तव्ये द्वयो- स्तदसंभवाद् द्वयोः साक्षात्करणपर्यन्तसंस्कार उपचयापचयसंभवाच्चित्त- विक्षेपाच्च विकल्प एवेत्युक्तम् ॥ ३४ ॥

## काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्व- हेत्वभावात् ॥ ३५ ॥

अनहंग्रहाण्यकर्माङ्गावबद्धानि च "मनो ब्रह्मेत्युपासीते"त्यादी- न्यभ्युदयफलान्यपि नियमेन विकल्प्येरन्० उपासनात्वात्० अहंग्रहोपासन- वदिति प्राप्ते याथाकाम्येनानुष्ठेयानि० अविरुद्धभिन्नफलत्वात् स्वर्गपशु- र्धेचित्राज्योतिष्टोमवदिति विशेषानुमानेन याथाकाम्यमुक्तम् ॥ ३५ ॥

## ॥ अङ्गेषु यथाश्रयभावः ॥ ३६ ॥

अङ्गाश्रितान्युपासनानि नियमेन क्रतौ समुच्चित्यानुष्ठेयानि निय- मेन समुच्चीयमानाङ्गव्यपाश्रयत्वात्० अङ्गाश्रितोपाङ्गवदिति प्राप्ते क्रतौ समुच्चित्य नियमेन नानुष्ठेयानि० अङ्गाश्रितत्वे सति तद्भिन्नफलत्वाद्गोदो- हनवदिति विशेषानुमानेनात्रापि याथाकाम्यमेवोक्तम् ॥ ३६ ॥

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे तृती- यस्याध्यायस्य तृतीयः पादः ॥ ३ ॥ * * ॥

## पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

निर्विशेषब्रह्माविर्भावलक्षणं तत्त्वज्ञानं कर्माङ्गभूतकर्तृद्वारेण प्रयो- गविधिनोपादेयं कर्माङ्गभूतकर्तृव्यपाश्रयेण शास्त्रप्रतिपन्नत्वाद् यजमान- संस्कारभूताञ्जनादिवत्, तथा तत्त्वज्ञानं प्रयोगविधिनोपादेयं साध्यफल- व्यपदेशशून्यत्वे सति कर्माङ्गव्यपाश्रयत्वात् पर्णमयत्वादिवत्, जनका- दीनां विद्यया सह कर्मानुष्ठानं विद्याया मोक्षसाधनत्वे व्यर्थमिति स- हानुष्ठानं विद्यायाः स्वातन्त्र्याभावेन कर्माङ्गत्वे लिङ्गं "यदेव विद्यये"ति

च श्रुतिः, तदेवं श्रुतिलिङ्गानुमानैर्विद्यायाः कर्माङ्गत्वं प्राप्तम्, तत्र यथा स्वर्गादिकामिनो यागादौ नियोगानुपपत्त्या यागादेः स्वर्गादिसाधनत्वं प्रतीयते न शब्देनैव तथा "ब्रह्म वेद ब्रह्मैव भवति" "तरति शोकमात्मवि"दित्यादिवचनैर्ज्ञानफलयोरितरेतरसाध्यसाधनताकाङ्क्षायोग्यतासंनिधिमतोरेकपुरुषसंबन्धसंनिधाननिर्देशोऽन्यथानुपपत्त्या साध्यसाधनसंबन्धं गमयति, शब्देन च "विद्ययामृतमश्नुत" इत्युक्तम्, सर्वत्र च फलश्रुतीनां न वर्तमानताव्यपदेशोऽर्थवादत्वे निमित्तं किंतु प्रमाणान्तरविरोधः, "यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते"इत्यादेर्वर्तमानत्वे योग्यत्वे सत्यनुपलम्भात्, ब्रह्मविद्याफले तु वर्तमानव्यपदेशेऽपि न प्रमाणान्तरविरोधः, ब्रह्माविर्भावसमय एवाविर्भावफलस्य शोकादिनिवृत्तेः, ब्रह्मात्मावाप्तेश्च स्वानुभवसिद्धत्वात् प्रमान्तरायोग्यत्वाच्च ब्रह्मज्ञानस्योचितमेव वर्तमानफलोपदेशनमिति न सत्रवत् फलविपरिणामापेक्षा । तत्रायं प्रयोगः । ब्रह्मज्ञानं न क्रतुप्रयोगविधिनोपादेयं क्रत्वङ्गसंबन्धित्वे सत्यपि स्वोचितफलान्तरसंबन्धित्वाद् गोदोहनवत्, तथा न ब्रह्मज्ञानं क्रत्वङ्गव्यपाश्रयं प्रकरणान्तरसंबन्धित्वे सति कर्तृत्वेनाविनियुक्तपुरुषमात्रसंबन्धित्वाद् रात्रिसत्रवत्, तथाकर्तृ ब्रह्मात्मज्ञानं न क्रतुप्रयोगविधिनोपादेयम्, उपादीयमानक्रत्वङ्गविरोधित्वात् क्रतुप्रयोगविधिनोपादीयमानोदितहोमविरोध्यनुदितहोमवदिति, तथा ब्रह्मज्ञानकर्मणी न परस्पराङ्गाङ्गिभूते परिव्राजकादिष्वितरेतरव्यतिरेकित्वात् क्रतुगमननैष्ठिकव्रतवत्, इति विशेषानुमानैरनुगृहीतया फलश्रुत्या स्वतन्त्रमेव ब्रह्मज्ञानं फलसाधनमिति दर्शितम् ॥ १ ॥

## परामर्शं जैमिनिरचोदना चापवदति हि ॥ २ ॥

स्मृत्याचारयोराश्रमचतुष्टयविषययोर्भ्रान्तित्वासंभवेन मूलकल्पनायां विधिसंयुक्तवाक्यकल्पनाल्लघीयः, "त्रयो धर्मस्कन्धा" इत्यादिषु स्कन्धानां धर्मत्रित्वोपाधित्वेन प्रतिपन्नेष्वाश्रमेषु विधिकल्पनमित्यन्यपरेष्वपि वाक्येषूपरिधारणवद् विधिमाश्रमाणां कल्पयित्वा यथाधिकारमि-

च्छयाश्रमविकल्पसमुच्चयप्रतिपत्तिरुक्ता। अथवा यज्ञाध्ययनदानतपआचार्यकुलवासानां कथंचित् सर्वाश्रमसाधारण्ये संभवत्यपि तत्प्राधान्येनासाधारणसंबन्धमाश्रित्यैकैकेन धर्मकलापेनैकैक एवाश्रमः परामृश्यते यथ तथा ब्रह्मसंस्थताया अपि कथंचित् सर्वाश्रमसंबन्धेऽपि सर्वशास्त्रेषु परिव्राजकमाश्रित्य नियमेन विधानात् तेनासाधारण्यादन्यनिन्दया विधीयमानब्रह्मसंस्थतया तदाश्रयत्वेन लिङ्ग्यमानपारिव्राज्येन सहैव ब्रह्मसंस्थता विधीयते, अनाश्रमिसंबन्धानुपपत्तेरित्युक्तम् ॥ २ ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ३ ॥

उद्गीथादिपदार्थेषूत्कृष्टपदार्थाध्यासप्रत्ययाः स्तुतयो विधिपदरहितत्वे सति विहिततया स्तुत्यपेक्षेष्वङ्गेषूत्कृष्टपदार्थाध्यासप्रत्ययत्वात् "स्वर्गो वै लोक आहवनीय" इत्यादिप्रत्ययवदिति "स एष रसानां रसतम इयमेवर्गग्निः सामे"त्यादिप्रत्ययानां स्तुतित्वे प्राप्ते नैते प्रत्ययाः स्तुतयः प्रकरणान्तरत्वे सति विशिष्टफलसंबन्धितयापूर्वत्वात् क्रत्वन्तरवदित्यनुमानेन स्तुतित्वकल्पनाद् विधिकल्पनमेव युक्तमनुष्ठानफललाभादिति न्यायोपबृंहितेन विधिरेव दर्शितः ॥ ३ ॥

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ ४ ॥

आख्यानानां गुरुशिष्यसमाचारप्रदर्शनद्वारेण बुद्धिसौकर्यद्वारेण च वाक्यार्थप्रत्ययहेतुत्वं सामर्थ्यलिङ्गसिद्धम्, "अस्य च पारिप्लवमाचक्षीते"ति पारिप्लवश्रुत्याख्यानानामन्यपरत्वप्रतिपादिकयापवादे प्राप्ते सामान्यश्रुते- "मनुर्वैवस्वतो राजे"ति विशेषसंकीर्तनवैफल्यपरिहाराय विशेषपरतया संकोचप्रदर्शनेन श्रुत्या लिङ्गस्य बाधो दर्शितः ॥ ४ ॥

## अत एवाग्नीन्धनाद्यनपेक्षा ॥ ५ ॥

यद्यपि परिव्राजकादिषु ज्ञानकर्मणोरितरेतरव्यतिरेकाच्च संबन्धस्तेषु ज्ञानोत्पत्त्यर्थकर्मव्यतिरिक्तस्वतन्त्रकर्माभावात्, यद्यपि चेश्वराज्ञापरिपालनादिनादृष्टार्थतया धर्मत्वाभावात् कर्मशून्येषु देवादिषु ब्रह्मविद्या मोक्षफला, यद्यपि च दर्शपूर्णमासाभ्यां स्वर्गकामः स्वर्गाय हि

लोकाय दर्शपूर्णमासाविज्येते इतिवज्ज्ञानकर्मभ्यां मोक्ष इति विध्युद्देशार्थवादौ न स्तः, नापि "विद्यां चाविद्यां चे"ति साहित्यमेकफलोपाधा"वविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत"इति फलभेदावगमात्,नापि "तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्चे"ति ज्ञानकर्मणोरेकस्मिन् पुरुषे समुच्चयः॰ ब्रह्मवित्पुण्यकृत्पुरुषयोर्मार्गसमुच्चयावगमात्, अन्वाचयार्थेन चकारेणैकैकस्य पुरुषस्यान्योन्यनिरपेक्षमार्गसंबन्धसिद्धेः, पुण्यकृदिति वा मानवपुरुषपर्यन्तमर्चिरादिना गच्छतां प्रतीकालम्बनानामभिधानसिद्धेश्च, नापि "तान्याचरथ नियतं सत्यकामा" इति समुच्चयसिद्धिरप्रतीतेः, सत्यशब्दस्य च "एष वः पुण्यः सुकृतो ब्रह्मलोक" इति वाक्यशेषात् "प्लवा ह्येत" इति निन्द्यमानत्वाच्च सत्यलोकविषयत्वात् "सत्येन लभ्यस्तपसा ह्येष आत्मे"ति च तपःशब्देन "मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तप"इति तपसोऽभिधानात्, न च ब्रह्मात्मताऽविद्यानिवृत्तौ कर्मसाध्ये कर्मवासना विज्ञानेनैव निवर्तते श्रवणात्, शरीरेन्द्रियसंबन्धस्तु कर्माभावात् स्वयमेव निवर्तते, तस्मात् प्रमाणाभावात् फलाभावाच्च न समुच्चयसिद्धिर्यद्यपि तथापि"विविदिषन्ति यज्ञेने"तीच्छासंयोगाज्ज्ञानस्य साध्यताप्रतीतौ'यज्ञेने'ति करणतायाः साध्यज्ञानेनैवान्वयाद् यज्ञादीनामिष्यमाणापरोक्षज्ञानसाधनत्वमवगतम्, ज्ञानस्य च प्रमाणायत्तत्वात् कर्मणामनुपयोगाज्ज्ञानसाध्यमोक्षं प्रत्येव कर्मणा साधनत्व वाक्यतात्पर्येण प्रतीयत इति प्राप्तम्। तत्र काष्ठैः पचतीति ज्वालोत्पादनद्वारेण पाकसाधनेष्वपि काष्ठेषु करणविभक्तिदर्शनात् कर्मसु चित्तस्य मनःपरिशोधनद्वारेण प्रत्यक्प्रवणतामापाद्यापरोक्षज्ञानहेतुषु ज्ञानकरणत्व न बाध्यते,मोक्षान्वये तु कर्मणां श्रुतज्ञानकरणत्वं बाध्यते श्रुतसाध्यपरित्यागेन च साध्यान्तरकल्पनायां "नास्त्यकृतः कृतेन॰" "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः॰" "नान्यः पन्था विद्यतेऽयनाये"त्यादिशास्त्रविरुद्धमोक्षहेतुत्वकल्पनाद्वरं "कषायपक्तिः कर्माणि" "ज्ञानमुत्पद्यते पुंसा"मित्यादिशास्त्रप्रतिपन्नचित्तशोधनद्वारेण ज्ञानहेतुत्वकल्पनमिति शास्त्रान्तरानुसाराज्ज्ञानकरणत्वावधारणाच्च ज्ञानहेतुषु कर्मसु वेदानुवचनादिवाक्यप्रतिपन्नेषु न ज्ञानं मोक्षेऽग्नीन्धनाद्यपेक्षत इत्युक्तम् ॥ ५ ॥

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

अपरोक्षज्ञानस्यापि प्रामाण्याभ्युपगमे प्रमाणायत्तत्वात् तत्सिद्धे सत्सु प्रमाणहेतुषु कर्मोपासनाशमाद्यभावे ज्ञानानुत्पत्त्यदर्शनात् केवलव्यतिरेकाभावात् कर्मादीनां च ज्ञानोत्पत्तावुपकारविशेषानवगमादपरोक्षज्ञानोत्पत्तौ कर्मादीनामसाधनत्वं प्राप्तम्, तत्र "यज्ञेन विविदिषन्ती"ति कर्मणां ज्ञानसाधनत्वं विधीयते, "शान्तो दान्त" इति तेषामपि ज्ञानसाधनत्वं विदितम्, "ततस्तु तं पश्यते निष्कलं ध्यायमानः" "निदिध्यासितव्य" इति च ब्रह्मणि प्रत्ययाभ्यासोऽपरोक्षज्ञानाय विहितः, "तं त्वौपनिषद"मिति च वेदान्तानामपरोक्षब्रह्मावगतिसाधनत्वं तद्धितप्रत्ययेनोक्तम्, तत्र यद्यपि प्रथमं शाब्दं प्रमाणज्ञानं प्रमाकारणादेव भवतीत्यपरोक्षज्ञानस्यापि प्रमाणादेवोत्पत्तिः केवलव्यतिरेकाभावात् प्राप्ता तथाप्यागमस्य केवलव्यतिरेकानपेक्षत्वात् कर्माभ्यासशमादिसहकृताद् वेदान्तवाक्यात् पूर्वानुभवसंस्कारसहितात् संप्रयोगादभिज्ञानव्यतिरिक्तप्रत्यभिज्ञाप्रत्यक्षवद् ब्रह्मात्मविषयं शाब्दज्ञानव्यतिरिक्तं प्रत्यक्षज्ञानान्तरमुत्पद्यत इत्यवगम्यते तदुद्देशेन साधनविधानसामर्थ्यादिति, द्वारं च कर्मणामन्तःकरणशुद्धिद्वारेण प्रत्यक्प्रवणता, शमादीनां च विपरीतप्रवृत्तिलक्षणप्रतिबन्धनिरोधः, निदिध्यासनस्य च ब्रह्मणि प्रत्ययाभ्यासजनितं चित्तैकाग्र्यम्, तत्र परोक्षज्ञानहेतुरपि शब्दः कर्मादिपरिमार्जितप्रत्यक्प्रवणेन शमादिनिरुद्धविपरीतप्रवृत्तिप्रतिबन्धकेन प्रत्ययाभ्यासजनितसंस्कारप्रचयनिमित्तब्रह्मैकाग्र्यवृत्तिचित्तदर्पणेन सहकारिणानुगृहीतोऽपरोक्षज्ञानमुत्पादयति शास्त्रीयसंस्कारसंस्कृताग्न्यधिकरण इव होमोऽपूर्वमिति। अथवा शब्दादेव प्रथममपरोक्षज्ञानमुत्पद्यते, शब्दजन्यसंवेदनस्य ब्रह्मप्रकृतितयाभेदात् संवेदनस्य विषयजन्यतया तदभेद एव लोकेऽप्यपरोक्षज्ञानता नामेति। ततश्च भ्रान्त्या परोक्षवदवभासमाने प्रथमज्ञाने वर्णितचित्तदर्पणसामर्थ्यादेव देहाद्यध्यासाद् विविक्ते त्वंपदार्थे प्रत्यक्षतोऽवभासमाने तत्पदार्थे च चेतसि सम्यगवधृते पारोक्ष्यभ्रमनिमित्तस्याध्यासस्य निवृत्तेस्तदेव वाक्यार्थविषयं शाब्दज्ञानमपरोक्षावभासमवतिष्ठत इति सर्वथापि

यज्ञशमनिदिध्यासनादिसापेक्षादेव शब्दादपरोक्षज्ञानसिद्धेर्विधिप्रामाण्यादिति स्थितम् ॥ ६ ॥

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ७ ॥

वामदेव्योपासनाव्रते सर्वस्त्रीगमनवत् सर्वान्नभक्षणं प्राणविदः सामान्यप्रवृत्तभक्ष्याभक्ष्यविभागशास्त्रमपबाध्य विधीयत इति प्राप्ते ऽश्रूयमाणविशेषविधेः सामान्यविधिबाधकत्वमयुक्तम्, विशेषविधिकल्पना तु सामान्यविधिनापि बाध्यते ऽविरोधापेक्षत्वात् कल्पनाया इति न्यायेन सामान्यविधिना विरोधादशक्यविधेयत्वाच्च सर्वान्नभक्षणं स्तुतिरित्युक्तम् ॥ ७ ॥

## विहितत्वाच्चाश्रमकर्मापि ॥ ८ ॥

एकस्योभयार्थताविरोधाल्लिङर्थे लेडिति लेट्परिग्रहेण 'विविदिषन्ती'ति कर्मणां विद्यासंयोगे विहिते यावज्जीवादिश्रुतेराश्रमकर्मतया नित्यत्वे च विहिते विद्यासंयोगस्य मोक्षफलतयोत्कृष्टत्वात् तेन नित्यविनियोगबाधादाश्रममात्रेणाननुष्ठेयत्वं कर्मणां प्राप्तम्, अनुष्ठेयत्वे वा कौण्डपायिनामयने ऽग्निहोत्रस्य प्रकरणभेदात् प्रसिद्धादग्निहोत्रात् कर्मान्तरत्ववत् प्रकरणभेदादेव प्रसिद्धेभ्यो ऽग्निहोत्रादिभ्यः कर्मान्तराण्येव 'विविदिषन्ती'ति विद्यासंयुक्ततया विधीयन्ते विरोधपरिहारायेति प्राप्ते, तत्रापां प्रणयनस्य यथा स्वरूपेण दर्शपूर्णमासक्रत्वङ्गत्वं गोदोहनोपरक्ततया पश्वर्थत्वं चोभयविधविनियोगसामर्थ्यात् तथेहाप्युभयविधविनियोगसामर्थ्यान्नित्यता विद्यार्थता चेत्युभयं न विरुध्यते, कुण्डपायिनामयने ऽग्निहोत्रशब्दस्याख्यातपरतन्त्रतया तदुक्तार्थाभिधायिनो देशान्तरवर्त्यग्निहोत्रस्य स्वातन्त्र्येण परामर्शकत्वानुपपत्तेः, जुहोतेश्चाख्यातस्य संनिहितद्रव्यगुणकर्मरूपितं कर्मान्तरं विहाय व्यवहिताग्निहोत्रपरामर्शकत्वानुपपत्तेः कर्मान्तरमेव विहितमित्युक्तम्, इह तु यज्ञदानतपःशब्दाना लौकिकाभिधानतया स्वातन्त्र्यात् प्रकरणान्तरविहिताग्निहोत्रादिपरामर्शकत्वसंभवात् प्रसिद्धकर्मानुवादेन विद्यासंयोगमात्रं विधीयत इत्युक्तम् ॥ ८ ॥

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ ६ ॥

अपरोक्षज्ञानस्यापि प्रामाण्याभ्युपगमे प्रमाणायत्तत्वात् तत्सिद्धे सत्सु प्रमाणहेतुषु कर्मोपासनाशमाद्यभावे ज्ञानानुत्पत्त्यदर्शनात् केवलव्यतिरेकाभावात् कर्मादीनां च ज्ञानोत्पत्तावुपकारविशेषानवगमादपरोक्षज्ञानोत्पत्तौ कर्मादीनामसाधनत्वं प्राप्तम्, तत्र "यज्ञेन विविदिषन्ती"ति कर्मणां ज्ञानसाधनत्वं विधीयते, "शान्तो दान्त" इति तेषामपि ज्ञानसाधनत्वं विदितम्, "ततस्तु तं पश्यते निष्कलं ध्यायमानः" "निदिध्यासितव्य" इति च ब्रह्मणि प्रत्ययाभ्यासोऽपरोक्षज्ञानाय विहितः, "तं त्वौपनिषद"मिति च वेदान्तानामपरोक्षब्रह्मावगतिसाधनत्वं तद्धितप्रत्ययेनोक्तम्, तत्र यद्यपि प्रथमं शाब्दं प्रमाणज्ञानं प्रमाकारणादेव भवतीत्यपरोक्षज्ञानस्यापि प्रमाणादेवोत्पत्तिः केवलव्यतिरेकाभावात् प्राप्ता तथाप्यागमस्य केवलव्यतिरेकानपेक्षत्वात् कर्माभ्यासशमादिसहकृताद् वेदान्तवाक्यात् पूर्वानुभवसंस्कारसहितात् संप्रयोगादभिज्ञानव्यतिरिक्तप्रत्यभिज्ञाप्रत्यक्षवद् ब्रह्मात्मविषयं शाब्दज्ञानव्यतिरिक्तं प्रत्यक्षज्ञानान्तरमुत्पद्यत इत्यवगम्यते तदुद्देशेन साधनविधानसामर्थ्यादिति, द्वारं च कर्मणामन्तःकरणशुद्धिद्वारेण प्रत्यक्प्रवणता, शमादीनां च विपरीतप्रवृत्तिलक्षणप्रतिबन्धनिरोधः, निदिध्यासनस्य च ब्रह्मणि प्रत्ययाभ्यासजनितं चित्तैकाग्र्यम्, तत्र परोक्षज्ञानहेतुरपि शब्दः कर्मादिपरिमार्जितप्रत्यक्प्रवणेन शमादिनिरुद्धविपरीतप्रवृत्तिप्रतिबन्धकेन प्रत्ययाभ्यासजनितसंस्कारप्रचयनिमित्तब्रह्मैकाग्र्यवृत्तिचित्तदर्पणेन सहकारिणानुगृहीतोऽपरोक्षज्ञानमुत्पादयति शास्त्रीयसंस्कारसंस्कृताग्न्यधिकरण इव होमोऽपूर्वमिति । अथवा शब्दादेव प्रथममपरोक्षज्ञानमुत्पद्यते, शब्दजन्यसंवेदनस्य ब्रह्मप्रकृतितयाभेदात् संवेदनस्य विषयजन्यतया तदभेद एव लोकेऽप्यपरोक्षज्ञानता नामेति । ततश्च भ्रान्त्या परोक्षवदवभासमाने प्रथमज्ञाने वर्णितचित्तदर्पणसामर्थ्यादेव देहाद्यभ्यासाद् विविक्ते त्वंपदार्थे प्रत्यक्षतोऽवभासमाने तत्पदार्थे च चेतसि सम्यगवधृते पारोक्ष्यभ्रमनिमित्तस्याध्यासस्य निवृत्तेस्तदेव वाक्यार्थविषयं शाब्दज्ञानमपरोक्षावभासमवतिष्ठत इति सर्वथापि

यज्ञशमनिदिध्यासनादिसापेक्षादेव शब्दादपरोक्षज्ञानसिद्धिर्विधिप्रामाण्यादिति स्थितम् ॥ ६ ॥

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ७ ॥

वामदेव्योपासनाव्रते सर्वस्त्रीगमनवत् सर्वान्नभक्षणं प्राणविदः सामान्यप्रवृत्तभक्ष्याभक्ष्यविभागशास्त्रमपबाध्य विधीयत इति प्राप्ते॰ऽश्रूयमाणविशेषविधेः सामान्यविधिबाधकत्वमयुक्तम्, विशेषविधिकल्पना तु सामान्यविधिनापि बाध्यते॰ऽविरोधापेक्षत्वात् कल्पनाया इति न्यायेन सामान्यविधिना विरोधादशक्यविधेयत्वाच्च सर्वान्नभक्षणं स्तुतिरित्युक्तम् ॥ ७ ॥

## विहितत्वाच्चाश्रमकर्मापि ॥ ८ ॥

एकस्योभयार्थताविरोधाल्लिङर्थे लेडिति लेट्परिग्रहेण 'विविदिषन्ती'ति कर्मणां विद्यासंयोगे विहिते यावज्जीवादिश्रुतेराश्रमकर्मतया नित्यत्वे च विहिते विद्यासंयोगस्य मोक्षफलतयोत्कृष्टत्वात् तेन नित्यविनियोगबाधादाश्रममात्रेणाननुष्ठेयत्वं कर्मणां प्राप्तम्, अनुष्ठेयत्वे वा कौण्डपायिनामयनेऽग्निहोत्रस्य प्रकरणभेदात् प्रसिद्धादग्निहोत्रात् कर्मान्तरत्ववत् प्रकरणभेदादेव प्रसिद्धेभ्योऽग्निहोत्रादिभ्यः कर्मान्तराण्येव 'विविदिषन्ती'ति विद्यासंयुक्ततया विधीयन्ते विरोधपरिहारायेति प्राप्तम्, तत्रापां प्रणयनस्य यथा स्वरूपेण दर्शपूर्णमासक्रत्वङ्गत्वं गोदोहनोपरक्ततया पश्वर्थत्वं चोभयविधविनियोगसामर्थ्यात् तथेहाप्युभयविधविनियोगसामर्थ्यान्नित्यता विद्यार्थता चेत्युभयं न विरुध्यते, कुण्डपायिनामयनेऽग्निहोत्रशब्दस्याख्यातपरतन्त्रतया तदुक्तार्थाभिधायिनो देशान्तरवर्त्यग्निहोत्रस्य स्वातन्त्र्येण परामर्शकत्वानुपपत्तेः, जुहोतिश्चाख्यातस्य संनिहितद्रव्यगुणकर्मरूपितं कर्मान्तरं विहाय व्यवहिताग्निहोत्रपरामर्शकत्वानुपपत्तेः कर्मान्तरमेव विहितमित्युक्तम्, इह तु यज्ञदानतपःशब्दानां लौकिकाभिधानतया स्वातन्त्र्यात् प्रकरणान्तरविहिताग्निहोत्रादिपरामर्शकत्वसंभवात् प्रसिद्धकर्मानुवादेन विद्यासंयोगमात्रं विधीयत इत्युक्तम् ॥ ८ ॥

## अन्तरा चापि तु तद्दृष्टेः ॥ ९ ॥

"यज्ञेन दानेने"ति पृथक्करणविभक्तिनिर्देशादूर्ध्वरेतसां चाग्निहो-त्रादिरहितानां विद्यासंबन्धाद्यज्ञादीनां विकल्पेन विद्यासाधनत्वसिद्धेर्वर्णधर्माणामपि दानतपःप्रभृतीनामन्तरेणाश्रमधर्मं स्वातन्त्र्येण विद्यासाधनत्वे सिद्धेऽपि वर्णधर्मसहितानामाश्रमधर्माणां वैयर्थ्यप्रसङ्गपरिहाराय केवलवर्णधर्माधिकृतानामनधिकारं विद्यायां प्राप्य साधनोपचयापचयाभ्यां विद्यायाश्चिराचिराभिव्यक्तिविशेषोपादानेन वर्णमात्रधर्माधिकृतानामपि विद्यायामधिकारो दर्शितः ॥ ९ ॥

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ १० ॥

आश्रमावरोहोऽपि कर्तव्य आश्रमारोहावरोहयोरन्यतरत्वादारोहवदित्यनुमानानुगृहीतात् सर्वाश्रमधर्माणां विद्यासाधनत्ववचनात् प्रत्यवरुह्यानुष्ठितानामपि गृहधर्माणां विद्यासाधनत्वे प्राप्ते त्रयाणामूर्ध्वरेतसां प्रत्यवरोहस्य शास्त्रेण निषिद्धत्वादनुमानाप्रवृत्तेः, अत एव तेषां गार्हस्थ्येनाश्रमाभावा"च्चाण्डालाः प्रत्यवसिता" इत्यादि स्मृतेः पतितत्वाच्चानधिकारादनधिकारिणा कृतमकृतमिति न्यायेन तदनुष्ठितानां वर्णाश्रमधर्माणां न विद्याङ्गभाव इत्युक्तम् ॥ १० ॥

## नचाधिकारिकमपि पतनानुमानात् तदयोगात् ॥ ११ ॥

ऊर्ध्वरेतसामप्रच्युताश्रमाणामिव ब्रह्मचर्यविलोपे प्रायश्चित्ताभावस्मृतेरकृतप्रायश्चित्तानां च पतितानां कर्मानधिकारात् तेषां यावदायुर्विद्यायामनधिकारः प्राप्तः, तत्र महापातकेष्वगणनात् ततः परस्य दोषस्याभावादवरत्वे चोपपातकादिसामान्यप्रायश्चित्तावताराद् विशेषप्रायश्चित्तवचनाच्च कृतप्रायश्चित्तानां कर्माधिकाराद् विद्याधिकारो दर्शितः ॥ ११ ॥

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ १२ ॥

शिष्टव्यवहारयोग्यानां दोषेणापवादे प्राप्ते प्रायश्चित्तेन च तस्मिन्

निराकृतेऽपवादाभावे॰उत्सर्गस्थितिरिति न्यायेन तैः शिष्टसंव्यवहाराद्याचारस्य धर्मतया विद्याङ्गत्वं प्राप्तम्, ब्रह्महत्यादिविषये "नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते कलुषं तु निहृण्यत" इति स्मृतिलिङ्गादाचाराच्च बहिःकर्तव्यत्वान्न तैर्व्यवहारलक्षणस्याचारस्य विद्याङ्गतेत्युक्तम् ॥ १२ ॥

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ १३ ॥

अङ्गाश्रितोपासनेषूद्गीथादीनां प्राप्त्योद्देशनत्वात् ऋत्विधिकारिण एव प्राप्तेरन्यस्यांप्राप्तेरुद्देशनासंभवात् तदाश्रितान्युपासनानि गोदोहनवदधिकृताधिकारीणि ऋत्विधिकारिण एव गोदोहनफलवद्विद्याफलसंबन्धः, तत्र यः कर्ता स॰फलीति न्यायानुगृहीताद् "वर्षत्यस्मै य उपास्त" इति लिङ्गात् स्वामिकर्मण्यङ्गोपासने प्राप्ते॰"एवं विदुद्गाता आत्मने यजमानाय वा॰ एवंविदुद्गाता ब्रूयात् कं ते काम"मित्यादिश्रौतलिङ्गैरङ्गतत्संबन्ध्युपाङ्गगोदोहनादिकर्तृत्वस्यार्त्विज्यस्य यजमानेन दक्षिणया क्रीतत्वात् कर्तुरेव फलं युक्तमिति न्यायानुगृहीतैरुपासनानां यजमानगामिफलत्वमृत्विक्कर्तृत्वं च दर्शितम् ॥ १३ ॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ १४ ॥

वाक्यभेदप्रसङ्गाच्चतुर्थाश्रमवाचित्वाभावा"न्मन ज्ञान" इति धात्वर्थानुगमे "पाण्डित्यं निर्विद्ये"ति विहितत्वाद"थ मुनि"रित्यनुवादमात्रमिति प्राप्ते मुनिरिति ज्ञानोत्कर्षवति पुरुषे प्रसिद्धत्वा"न्मौनं च निर्विद्ये"ति पुरुषाज्ज्ञानोत्कर्षं निष्कृष्य निर्वेदनीयत्वाभिधानलिङ्गाद्युक्तिभिर्ज्ञाननिर्मलीकरणस्य च विद्ययापेक्षितत्वादपूर्वत्वाच्च॰उपरिधारणवन्मौनं वाक्यभेदेन विद्यासहकारित्वेन विधीयत इत्युक्तम् ॥ १४ ॥

## अन्तरा चापि तु तद्दृष्टेः ॥ ९ ॥

"यज्ञेन दानेने"ति पृथक्करणविभक्तिनिर्देशादूर्ध्वरेतसां चाग्निहोत्रादिरहितानां विद्यासंबन्धाद्यज्ञादीनां विकल्पेन विद्यासाधनत्वसिद्धे र्वर्णधर्माणामपि दानतपःप्रभृतीनामन्तरेणाश्रमधर्मं स्वातन्त्र्येण विद्यासाधनत्वे सिद्धेऽपि वर्णधर्मसहितानामाश्रमधर्माणां वैयर्थ्यप्रसङ्गपरिहाराय केवलवर्णधर्माधिकृतानामनधिकारं विद्यायां प्रापय्य साधनोपचयापचयाभ्यां विद्यायाश्चिराचिराभिव्यक्तिविशेषोपादानेन वर्णमात्रधर्माधिकृतानामपि विद्यायामधिकारो दर्शितः ॥ ९ ॥

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ १० ॥

आश्रमावरोहोऽपि कर्तव्य आश्रमारोहावरोहयोरन्यतरत्वादारोहवदित्यनुमानानुगृहीतात् सर्वाश्रमधर्माणां विद्यासाधनत्ववचनात् प्रत्यवरुह्यानुष्ठितानामपि गृहधर्माणां विद्यासाधनत्वे प्राप्ते त्रयाणामूर्ध्वरेतसां प्रत्यवरोहस्य शास्त्रेण निषिद्धत्वादनुमानाप्रवृत्तेः, अत एव तेषां गार्हस्थ्येनाश्रमाभावा"च्चाण्डालाः प्रत्यवसिता" इत्यादि स्मृतेः पतितत्वाच्चानधिकारादनधिकारिणा कृतमकृतमिति न्यायेन तदनुष्ठितानां वर्णाश्रमधर्माणां न विद्याङ्गभाव इत्युक्तम् ॥ १० ॥

## नचाधिकारिकमपि पतनानुमानात् तदयोगात् ॥ ११ ॥

ऊर्ध्वरेतसामप्रच्युताश्रमाणामेव ब्रह्मचर्यविलोपे प्रायश्चित्ताभावस्मृतेरकृतप्रायश्चित्तानां च पतितानां कर्मानधिकारात् तेषां यावदायुर्विद्यायामनधिकारः प्राप्तः, तत्र महापातकेष्वगणनात् ततः परस्य दोषस्याभावादवरत्वे चोपपातकादिसामान्यप्रायश्चित्तावताराद् विशेषप्रायश्चित्तवचनाच्च कृतप्रायश्चित्तानां कर्माधिकाराद् विद्याधिकारो दर्शितः ॥ ११ ॥

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ १२ ॥

शिष्टव्यवहारयोग्यानां दोषेणापवादे प्राप्ते प्रायश्चित्तेन च तस्मिन्

निराकृतेऽपवादाभावे॰उत्सर्गस्थितिरिति न्यायेन तैः शिष्टसंव्यवहाराद्वा-चारस्य धर्मतया विद्याङ्गत्वं प्राप्तम्, ब्रह्महत्यादिविषये "नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते कलुषं तु निहण्यत" इति स्मृतिलिङ्गादाचाराच्च बहिःकर्तव्यत्वात्र तैर्व्यवहारलक्षणस्याचारस्य विद्याङ्गतेत्युक्तम् ॥ १२ ॥

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ १३ ॥

अङ्गाश्रितोपासनेषूद्गीथादीनां प्राप्त्योद्देशनत्वात् क्रत्वधिकारिण एव प्राप्तेरन्यस्याप्राप्तेरुद्देशनासंभवात् तदाश्रितान्युपासनानि गोदोहन-वदधिकृताधिकारीणि क्रत्वधिकारिण एव गोदोहनफलवद्विद्याफलसंबन्धः, तत्र यः कर्ता स॰फलीति न्यायानुगृहीताद् "वर्षत्यस्मै य उपास्त" इति लिङ्गात् स्वामिकर्मण्यङ्गोपासने प्राप्ते॰"एवं विदुद्गाता आत्मने यजमा-नाय वा॰ एवंविदुद्गाता ब्रूयात् कं ते काम"मित्यादिश्रौतलिङ्गैरङ्गतत्सं-बन्ध्युपाङ्गगोदोहनादिकर्तृत्वस्यार्त्विज्यस्य यजमानेन दक्षिणया क्रीतत्वात् कर्तुरेव फलं युक्तमिति न्यायानुगृहीतैरुपासनानां यजमानगामिफलत्वमृ-त्विक्कर्तृत्वं च दर्शितम् ॥ १३ ॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ १४ ॥

वाक्यभेदप्रसङ्गाच्चतुर्थाश्रमवाचित्वाभावा"न्मन ज्ञान" इति धा-त्वर्थानुगमे "पाण्डित्यं निर्विद्ये"ति विहितत्वाद"थ मुनि"रित्यनुवादमा-त्रमिति प्राप्ते मुनिरिति ज्ञानोत्कर्षवति पुरुषे प्रसिद्धत्वा"न्मौनं च निर्वि-द्ये"ति पुरुषाज्ज्ञानोत्कर्षं निष्कृष्य निर्वेदनीयत्वाभिधानलिङ्गाद्युक्तिभि-र्ज्ञाननिर्मलीकरणस्य च विद्ययापेक्षितत्वादपूर्वत्वाच्च॰उपरिधारणवन्मौनं वाक्यभेदेन विद्यासहकारित्वेन विधीयत इत्युक्तम् ॥ १४ ॥

## अनाविष्कुर्वन्नन्वयात् ॥ १५ ॥

बालस्य भावः कर्म वेति बाल्यशब्दव्युत्पत्तौ कर्मपक्षे श्रूयमाणवि-धियोग्यत्वात् सामान्यप्रवृत्तनियमशास्त्रस्य ब्रह्मविद्विषये यथोपपादं मूत्र-पुरीषत्वादिविशेषविधिसामर्थ्यादन्यत्र संकोचाद्बालकर्मैव विधीयत इति

अन्तरा चापि तु तद्दृष्टेः ॥ ९ ॥

"यज्ञेन दानेने"ति पृथक्करणविभक्तिनिर्देशादूर्ध्वरेतसां चाग्निहोत्रादिरहितानां विद्यासंबन्धाद्यज्ञादीनां विकल्पेन विद्यासाधनत्वसिद्धेर्वर्णधर्माणामपि दानतपःप्रभृतीनामन्तरेणाश्रमधर्मं स्वातन्त्र्येण विद्यासाधनत्वे सिद्धेऽपि वर्णधर्मसहितानामाश्रमधर्माणां वैयर्थ्यप्रसङ्गपरिहाराय केवलवर्णधर्माधिकृतानामनधिकारं विद्यायां प्राप्य साधनोपचयापचयाभ्यां विद्यायाश्चिराचिराभिव्यक्तिविशेषोपादानेन वर्णमात्रधर्माधिकृतानामपि विद्यायामधिकारो दर्शितः ॥ ९ ॥

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ १० ॥

आश्रमावरोहोऽपि कर्तव्य आश्रमारोहावरोहयोरन्यतरत्वादारोहवदित्यनुमानानुगृहीतात् सर्वाश्रमधर्माणां विद्यासाधनत्ववचनात् प्रत्यवरुह्यानुष्ठितानामपि गृहधर्माणां विद्यासाधनत्वे प्राप्ते त्रयाणामूर्ध्वरेतसां प्रत्यवरोहस्य शास्त्रेण निषिद्धत्वादनुमानाप्रवृत्तेः, अत एव तेषां गार्हस्थ्ये नाश्रमाभावा"च्चाण्डालाः प्रत्यवसिता" इत्यादि स्मृतेः पतितत्वाच्चानधिकारादनधिकारिणा कृतमकृतमिति न्यायेन तदनुष्ठितानां वर्णाश्रमधर्माणां न विद्याङ्गभाव इत्युक्तम् ॥ १० ॥

नचाधिकारिकमपि पतनानुमानात् तदयोगात् ॥ ११ ॥

ऊर्ध्वरेतसामप्रच्युताश्रमाणामेव ब्रह्मचर्यविलोपे प्रायश्चित्ताभावस्मृतेरकृतप्रायश्चित्तानां च पतितानां कर्मानधिकारात् तेषां यावदायुर्विद्यायामनधिकारः प्राप्तः, तत्र महापातकेष्वगणनात् ततः परस्य दोषस्याभावादवरत्वे चोपपातकादिसामान्यप्रायश्चित्तावताराद् विशेषप्रायश्चित्तवचनाच्च कृतप्रायश्चित्तानां कर्माधिकाराद् विद्याधिकारो दर्शितः ॥ ११ ॥

बहिस्तूभयथापि स्मृतेराचाराच्च ॥ १२ ॥

शिष्टव्यवहारयोग्यानां दोषेणापवादे प्राप्ते प्रायश्चित्तेन च तस्मि

निराकृतेऽपवादाभावे॰उत्सर्गस्थितिरिति न्यायेन तैः शिष्टसंव्यवहाराद्या-चारस्य धर्मतया विद्याङ्गत्वं प्राप्तम्, ब्रह्महत्यादिविषये "नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते कलुषं तु निर्हण्यत" इति स्मृतिलिङ्गादाचाराच्च बहिःकर्तव्यत्वान्न तैर्व्यवहारलक्षणस्याचारस्य विद्याङ्गतेत्युक्तम् ॥ १२ ॥

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ १३ ॥

अङ्गाश्रितोपासनेषूद्गीथादीनां प्राप्त्योद्देशनत्वात् क्रत्वधिकारिण एव प्राप्तेरन्यस्याप्राप्तेरुद्देशनासंभवात् तदाश्रितान्युपासनानि गोदोहन-वदधिकृताधिकारीणि क्रत्वधिकारिण एव गोदोहनफलवद्विद्याफलसंबन्धः, तत्र यः कर्ता स॰फलीति न्यायानुगृहीताद् "वर्षत्यस्मै य उपास्त" इति लिङ्गात् स्वामिकर्मण्यङ्गोपासने प्राप्ते॰"एवं विदुद्गाता आत्मने यजमा-नाय वा॰ एवंविदुद्गाता ब्रूयात् कं ते काम" मित्यादिश्रौतलिङ्गैरङ्गतत्सं-बन्ध्युपाङ्गगोदोहनादिकर्तृत्वस्यार्त्विज्यस्य यजमानेन दक्षिणया क्रीतत्वात् कर्तुरेव फलं युक्तमिति न्यायानुगृहीतैरुपासनानां यजमानगामिफलत्वमृ-त्विक्कर्तृत्वं च दर्शितम् ॥ १३ ॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ १४ ॥

वाक्यभेदप्रसङ्गाच्चतुर्थाश्रमवाचित्वाभावा"न्मन ज्ञान" इति धा-त्वर्थानुगमे "पाण्डित्यं निर्विद्ये" ति विहितत्वाद् "थ मुनि" रित्यनुवादमा-त्रमिति प्राप्ते मुनिरिति ज्ञानोत्कर्षवति पुरुषे प्रसिद्धत्वा"न्मौनं च निर्वि-द्ये" ति पुरुषाज्ज्ञानोत्कर्षं निष्कृष्य निर्वेदनीयत्वाभिधानलिङ्गाद्युक्तिभि-र्ज्ञाननिर्मलीकरणस्य च विद्ययापेक्षितत्वादपूर्वत्वाच्च॰उपरिधारणवन्मौनं वाक्यभेदेन विद्यासहकारित्वेन विधीयत इत्युक्तम् ॥ १४ ॥

## अनाविष्कुर्वन्नन्वयात् ॥ १५ ॥

बालस्य भावः कर्म वेति बाल्यशब्दव्युत्पत्तौ कर्मपक्षे श्रूयमाणवि-धियोग्यत्वात् सामान्यप्रवृत्तनियमशास्त्रस्य ब्रह्मविद्विषये यथोपपादं मूत्र-पुरीषत्वादिविशेषविधिसामर्थ्यादन्यत्र संकोचाद्बालकर्मैव विधीयत इति

प्राप्ते बालकर्मणो बालभावस्यैवार्थ्यार्हितत्वात् तद्धितस्य भावेऽप्यविशेषात् सामान्यशास्त्राविरोधकल्पनापरिहाराच्च प्रशान्तेन्द्रियत्वादि यत्साध मुमुक्षोर्विधीयत इत्युक्तम् ॥ १५ ॥

ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ १६ ॥

परिदृश्यमानसंसारनिमित्तशोकपरिहाराय विद्यासाधनोपादाना-च्छ्रवणादीनां दृष्टद्वारेण चक्षुरादिवद्विद्यासाधनत्वाच्च कारीर्यवघातवत् समानजन्मन्येव विद्याफलहेतुत्वमन्यथा स्वनिर्बन्धः कारणपौष्कल्याभावो वा श्रवणादीनां कल्प्यत इति प्राप्ते परिदृश्यमानसंसारनिमित्तशोकस्या-नेकजन्मानुयायित्वमवगच्छतो यदा कदाचिदनर्थनिवृत्तिः स्यादित्यभिसंधि-संभवाद् विधानादेवादृष्टद्वारेणापि साधनत्वा"दनेकजन्मसंसिद्ध" इत्या-दिस्मृतिलिङ्गाच्च श्रवणादीनां पौष्कल्येऽपि पश्वादिफलचित्राद्यियागवत् प्रतिबन्धक्षयमपेक्ष्येह जन्मनि जन्मान्तरे वा विद्योदयफलं कल्प्यत इति नानैकान्तिकत्वं विद्यासाधनानामित्युक्तम् ॥ १६ ॥

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ १७ ॥

काष्ठोपचयापचयाभ्यां ज्वालोपचयापचयदर्शनाच्छ्रवणाद्यन्तरङ्गब-हिरङ्गतदभ्यासादिसाधनोपचयापचयाभ्यां विद्यायामप्युपचयादिभावान्मु-क्तावप्युपचयापचयादिभावे स्वर्गादिफलवत् प्राप्ते मुक्तिस्वरूपब्रह्मैकरूपवि-द्यावधारणशास्त्राविरोधादनुमानस्य निर्वर्तनीयचित्तविक्षेपोपचयादिभावात् तन्निवृत्तावेव साधनोपचयादेरुपक्षयात् कलुषादिप्रतिबन्धनिवृत्तिचिराचि-रत्वद्वारेण विद्यायामपि चिराचिराभिव्यक्तिसंभवाच्च न मुक्तावुपचयादि-भाव इत्युक्तम् ॥ १७ ॥

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे तृती-याध्यायस्य चतुर्थः पादः ॥ ४ ॥ * * ॥

समाप्तश्च तृतीयाध्यायः ॥ ३ ॥ :: :: ॥

॥ शेषमग्रे ॥

## ॥ श्लोकवार्त्तिकम् ॥

सादृश्येन सहैवास्मिंस्तदेवोत्पद्यते मतिः ।
शृङ्गत्वादेरथोच्येत संबन्धाल्लिङ्गता गवि ॥ ४७ ॥
न तेषां गवयज्ञानव्यापारं प्रत्युपक्षयात् ।
यदि तेभ्यः प्रतीतिः स्यान्निस्सादृश्यैव सा भवेत् ॥ ४८ ॥
न गोशृङ्गादिसदृशी सदृशं गवयेन तु ।
सदृशप्रत्ययं दृष्ट्वा शृङ्गादिप्रत्ययात्परम् ॥ ४९ ॥
गवयप्रत्ययादेव गोज्ञानमुपजायते ।
सदृशावद्धवत्वे तु तेषामेवोपमा भवेत् ॥ ५० ॥
न च शृङ्गादयो यत्र तत्र गौरनुमीयते ।
इत्थं चानुमिमानस्य भ्रान्तज्ञानं प्रसज्यते ॥ ५१ ॥
नगरस्तं तु गोज्ञानं स्मरणान्नातिवर्त्तते ॥ ५२ ॥
भिन्नमनुमानादुपमेयमुक्तासौर्यादिवाक्यरसद्वापि दृष्टम् ।
सादृश्यतोऽन्यादियुतं कथं नु प्रत्याययामेत्युपयुज्यते नः॥५३॥
प्रतिनिधिरपि चैवं व्रीहिसादृश्ययोगा-
द्भवति तदुपकारे यत्र नीवारजातौ ।
तदपि फलमभीष्टं लक्षणस्योपमायाः
प्रकृतिरपि च गौणैर्बाध्यते यत्र चान्यैः ॥ ५४ ॥
यदि सुसदृशमन्यल्लभ्यते तत्र मिथ्या
भवति विसदृशत्वान्मन्दसादृश्ययुक्तम् ।
मतिरपि च तथैव द्रागिवोत्पद्यते ऽस्मि-
न्नितरविषयबाधे ऽसत्यपीत्थं च बाधः ॥ ५५ ॥

॥ इत्युपमानम् ॥

प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत् ।
अदृष्टं कल्पयेदन्यं साऽर्थापत्तिरुदाहृता ॥ १ ॥
दृष्टः पञ्चभिरप्यस्माद्भेदेनोक्ता श्रुतोद्भवा ।
प्रमाणग्राहिणीत्वेन यस्मात्पूर्वविलक्षणा ॥ २ ॥
तत्र प्रत्यक्षतो ज्ञाताद्दाहाद्दहनशक्तता ।
वन्हेरनुमितात्सूर्ये यानात्तच्छक्तियोग्यता ॥ ३ ॥
श्रुतार्थापत्तिरत्रैव परस्तादभिधास्यते ।
गवयोपमिताया गोस्तद्ज्ञानग्राह्यता मता ॥ ४ ॥
अभिधानप्रसिध्यर्थमर्थापत्त्यावबोधितात् ।
शब्दे बोधकसामर्थ्यात्तन्नित्यत्वप्रकल्पनम् ॥ ५ ॥
अभिमानान्यथा सिध्येदिति वाचकशक्तताम् ।
अर्थापत्त्यावगम्यैवं तदनन्यगतेः पुनः ॥ ६ ॥
अर्थापत्त्यन्तरेणैव शब्दनित्यत्वनिश्चयः ।
दर्शनस्य परार्थत्वादित्यस्मिन्न भिधास्यते ॥ ७ ॥
प्रमाणाभावनिर्णीतचैत्राभावविशेषितात् ।
गेहाच्चैत्रबहिर्भावसिद्धिर्या त्विह दर्शिता ॥ ८ ॥
तामभावोत्थितामन्यामर्थापत्तिमुदाहरेत् ।
पक्षदोषेषु चान्यासामुदाहरणविस्तरः ॥ ९ ॥
अभावावगताच्चैत्राद्बहिर्भावस्य सूचनम् ।
पक्षधर्मावनङ्गत्वाद्भिन्नेत्राप्यनुमानतः ॥ १० ॥
बहिर्देशविशिष्टेऽर्थे देशे चातद्विशेषिते ।
प्रमेये यो गृहाभावः पक्षधर्मस्त्वसौ कथम् ॥ ११ ॥
तदभावविशिष्टं तु गृहं धर्मो न कस्य चित् ।
गृहाभावविशिष्टस्तु तदासौ न प्रतीयते ॥ १२ ॥

गम्यते तु गृहं तत्र न च चैत्रः प्रतीयते ।
न चात्र दर्शनं हेतुर्यथाभावे भिधास्यते ॥ १३ ॥
तेन वेश्मन्यदृष्टत्वादिति हेतुर्न कल्प्यते ।
अदर्शनादभावे च प्रमेयस्यावधारिते ॥ १४ ॥
बहिर्भावमतिर्नासौ तेनादर्शनहेतुका ।
चैत्राभावस्य हेतुत्वं गेहे ऽभावश्च संस्थितः ॥ १५ ॥
पूर्वं न चागृहीतस्य धर्मिणः स्यात्प्रमेयता ।
न चात्र बाह्यदेशो वा चैत्रो वा गृह्यते पुरा ॥ १६ ॥
नदीपूरेण या वृष्टिरुपरिष्टात्प्रतीयते ।
देशे कथमदृष्टे तु पक्षधर्मत्वसंभवः ॥ १७ ॥
वृष्टिमत्परदेशत्वं नदीपूरवतो ऽत्र तु ।
देशस्य प्रतिपद्यन्ते यद्वार्थापत्तिरेव सा ॥ १८ ॥
जीवतश्च गृहाभावः पक्षधर्मो ऽत्र कल्प्यते ।
तत्संवित्तिर्बहिर्भावं न चाबुध्वोपजायते ॥ १९ ॥
अग्निमत्तानपेक्षा तु धूमवत्ता प्रतीयते ।
न तद्ग्रहणवेलायामग्न्यधीनं हि किं चन ॥ २० ॥
गेहाभावस्तुयः शुद्धोविद्यमानत्ववर्जितः ।
स मृतेष्वपि दृष्टत्वाद्बहिर्वृत्तेर्न साधकः ॥ २१ ॥
विद्यमात्वसंसृष्टगृहाभावधियानया ।
गेहादुत्कालितश्चैत्रो विद्यते बहिरेव हि ॥ २२ ॥
गेहाभावत्वमात्रं तु यत्स्वतन्त्रं प्रतीयते ।
न तावता बहिर्भावश्चैत्रस्यैवावधार्यते ॥ २३ ॥
सिद्धे सद्भावविज्ञाने गेहाभावधियात्र तु ।
गेहादुत्कालिता सत्ता बहिरेवावतिष्ठते ॥ २४ ॥

तेनास्थ्यनिरपेक्षस्य व्यभिचारो मृतादिना।
यस्य त्वव्यभिचारित्वं न ततो ऽन्यत् प्रतीयते ॥ २५ ॥
तस्मात्प्रत्यक्षतो गेहे चैत्राभावे ह्यभावतः।
ज्ञाते यत्सत्त्वविज्ञानं तदेवेदं बहिः स्थितम् ॥ २६ ॥
पक्षधर्मात्मलाभाय बहिर्भावः प्रवेशितः।
यद्विशिष्टो ऽनुमेयः स्यात्पक्षधर्मान्वयादिभिः ॥ २७ ॥
पक्षधर्मादिविज्ञानं बहिः संबोधतो यदि।
तेष्वतद्बोधतो ऽवश्यमन्योन्याश्रयता भवेत् ॥ २८ ॥
अन्यथानुपपत्तौ तु प्रमेयानुप्रवेशिता।
तादूप्येणैव विज्ञानान्न दोषः प्रतिभाति नः ॥ २९ ॥
अविनाभाविता चात्र तदैव परिकल्प्यते।
न प्रागवधृतेत्येवमन्यथैषा न कारणम् ॥ ३० ॥
गृहाभावबहिर्भावौ न च दृष्टौ नियोगतः।
साहित्ये तु प्रमाणं च तयोरन्यन्न विद्यते ॥ ३१ ॥
अन्यथानुपपत्त्यैवं ह्येकेनान्यत् प्रतीयते।
तथा न कल्प्यते तच्चेत्साहित्यं न प्रतीयते ॥ ३२ ॥
तेनसंबन्धवेलायां संबन्ध्यन्यतरो ध्रुवम्।
अर्थापत्त्यावगन्तव्यः पश्चादस्त्यनुमानता ॥ ३३ ॥
गृहद्वारि स्थितो यस्तु बहिर्भावं प्रकल्पयेत्।
यदैकस्मिन्नयं देशे न तदान्यत्र विद्यते ॥ ३४ ॥
तदास्य विद्यमानत्वं न सर्वत्र प्रतीयते।
न चैकदेशेनास्तित्वाद्ग्राह्यप्रिहेतोर्भविष्यति ॥ ३५ ॥
नन्वत्राविद्यमानत्वं गम्यते ऽनुपलब्धितः।
सा चाप्रयत्नसाध्यत्वादेकस्यस्यैव सिध्यति ॥ ३६ ॥

नैतयानुपलब्ध्याच वस्त्वभावः प्रतीयते ।
तद्देशागमनात्सा हि दूरस्थेष्वस्ति सत्स्वपि ॥ ३७ ॥
गत्वा गत्वा तु तान्देशान्यद्यर्थो नोपलभ्यते ।
ततो ऽन्यकारणाभावादसन्नित्यवगम्यते ॥ ३८ ॥
ननु चाग्न्याद्यभावे ऽपि संबन्ध्यनुपलब्धितः ।
नैवाभावस्य भावेन दृष्टत्वादुपपद्यते ॥ ३९ ॥
साहित्ये मितदेशत्वात्प्रसिद्धे चाग्निधूमयोः ।
व्यतिरेकस्य चादृष्टेर्गमकत्वं प्रकल्प्यते ॥ ४० ॥
इह साहित्यमेवेदमेकस्य सह भाविनः ।
अनन्तदेशवर्तित्वान्न तावदुपपद्यते ॥ ४१ ॥
ननु देशान्तरं शून्यं चैत्रेणैवं प्रतीयते ।
तद्देशव्यतिरेकत्वात्समीपस्थितदेशवत् ॥ ४२ ॥
विरुद्धाव्यभिचारित्वं तद्वदेव हि गम्यते ।
समीपद्देशभिन्नत्वाच्चैत्राधिष्ठितदेशवत् ॥ ४३ ॥
पुरुषस्य तु कार्त्स्न्येन यदेकत्रोपलम्भनम् ।
तस्यान्यथा न सिद्धिः स्यादित्यन्येष्वस्य नास्तिता ॥ ४४ ॥
तेनार्थापत्तिपूर्वत्वमत्र यत्र च कारणे ।
कार्यदर्शनतश्शक्तेरस्तित्वं संप्रतीयते ॥ ४५ ॥
कार्यस्य ननु लिङ्गत्वं न संबन्धानपेक्षणात् ।
दृष्टासंबन्धिनी चैषा शक्तेर्गम्येत नान्यथा ॥ ४६ ॥
तद्दर्शने तदानीं च प्रत्यक्षादेरसंभवात् ।
अर्थापत्तेः प्रमाणत्वं वैलक्षण्याद्विना भवेत् ॥ ४७ ॥
अनुमानादभिन्नत्वान्नोक्तौ जयपराजयौ ।
वध्यघातकभावेन यौ सर्पनकुलादिषु ॥ ४८ ॥

तेनास्यनिरपेक्षस्य व्यभिचारोऽमृतादिना ।
यस्य त्वव्यभिचारित्वं न ततो न्यत् प्रतीयते ॥ २५ ॥
तस्मात्प्रत्यक्षतो गेहे चैत्राभावे ह्यभावतः ।
ज्ञाते यत्सत्वविज्ञानं तदेवेदं बहिः स्थितम् ॥ २६ ॥
पक्षधर्मात्मलाभाय बहिर्भावः प्रवेशितः ।
यद्विशिष्टो ऽनुमेयः स्यात्पक्षधर्मान्वयादिभिः ॥ २७ ॥
पक्षधर्मादिविज्ञानं बहिः संबोधतो यदि ।
तेष्वतद्बोधतो ऽवश्यमन्योन्याश्रयता भवेत् ॥ २८ ॥
अन्यथानुपपत्तौ तु प्रमेयानुप्रवेशिना ।
तादूप्येणैव विज्ञानान्न दोषः प्रतिभाति नः ॥ २९ ॥
अविनाभाविता चात्र तदैव परिकल्प्यते ।
न प्रागवधृतेत्येवमन्यथैषा न कारणम् ॥ ३० ॥
गृहाभावबहिर्भावो न च दृष्टो नियोगतः ।
साहित्ये तु प्रमाणं च तयोरन्यन्न विद्यते ॥ ३१ ॥
अन्यथानुपपत्त्यैव ह्येकेनान्यत् प्रतीयते ।
तथा न कल्प्यते तच्चेत्साहित्यं न प्रतीयते ॥ ३२ ॥
तेनसंबन्धवेलायां संबन्ध्यन्यतरो ध्रुवम् ।
अर्थापत्त्यावगन्तव्यः पश्चादस्त्यनुमानता ॥ ३३ ॥
गृहद्वारि स्थितो यस्तु बहिर्भावं प्रकल्पयेत् ।
यदैकस्मिन्नयं देशे न तदान्यत्र विद्यते ॥ ३४ ॥
तदाऽथ विद्यमानत्वं न सर्वत्र प्रतीयते ।
न चैकदेशेनास्तित्वाद्धात्रिहेतोर्भविष्यति ॥ ३५ ॥
नन्वत्राविद्यमानत्वं गम्यते ऽनुपलब्धितः ।
सा चाप्यत्रसाध्यत्वादेकस्यस्यैव सिध्यति ॥ ३६ ॥

नैतयानुपलब्ध्याच वस्त्वभावः प्रतीयते ।
तद्देशागमनात्सा हि दूरस्थेष्वस्ति सत्स्वपि ॥ ३७ ॥
गत्वा गत्वा तु तान्देशान्यद्यर्थो नोपलभ्यते ।
ततो ऽन्यकारणाभावादसन्नित्यवगम्यते ॥ ३८ ॥
ननु चाग्न्याद्यभावे ऽपि संबन्ध्यनुपलब्धितः ।
नैवाभावस्य भावेन दृष्टत्वादुपपद्यते ॥ ३९ ॥
साहित्ये मितदेशत्वात्प्रसिद्धे चाग्निधूमयोः ।
व्यतिरेकस्य चादृष्टेर्गमकत्वं प्रकल्प्यते ॥ ४० ॥
इह साहित्यमेवेदमेकस्य सह भाविनः ।
अनन्तदेशवर्तित्वान्न तावदुपपद्यते ॥ ४१ ॥
ननु देशान्तरं शून्यं नैवेणैवं प्रतीयते ।
तद्देशव्यतिरेकत्वात्समीपस्थितदेशवत् ॥ ४२ ॥
विरुद्धाव्यभिचारित्वं तद्वदेव हि गम्यते ।
समीपद्देशभिन्नत्वान्नैवाधिष्ठितदेशवत् ॥ ४३ ॥
पुरुषस्य तु कार्त्स्न्येन यदेकत्रोपलम्भनम् ।
तस्यान्यथा न सिद्धिः स्यादित्यन्येष्वस्य नास्तिता ॥ ४४ ॥
तेनार्थापत्तिपूर्वत्वमत्र यत्र च कारणे ।
कार्यदर्शनतश्शक्तेरस्तित्वं संप्रतीयते ॥ ४५ ॥
कार्यस्य ननु लिङ्गत्वं न संबन्धानपेक्षणात् ।
दृष्टासंबन्धिनी चैषा शक्तेर्गम्येत नान्यथा ॥ ४६ ॥
तद्दर्शने तदानीं च प्रत्यक्षादेरसंभवात् ।
अर्थापत्तेः प्रमाणत्वं वैलक्षण्याद्विना भवेत् ॥ ४७ ॥
अनुमानादभिन्नत्वान्नोक्तौ जयपराजयौ ।
वध्यघातकभावेन यौ सर्पनकुलादिषु ॥ ४८ ॥

पीनो दिवा न भुङ्क्ते चेत्येवमादिवचः श्रुतौ।
रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते ॥ ४९ ॥
तामर्थगोचरां केचिदपरे शब्दगोचराम्।
कल्पयन्त्यागमाच्चैनामभिन्नां प्रतिजानते ॥ ५० ॥
प्रायशश्चानया वेदे व्यवहारो व्यवस्थितः।
सोऽवैदिकः प्रसज्येत यद्येषा भिद्यते ततः ॥ ५१ ॥
वचनस्य श्रुतस्यैव सोप्यर्थः कैश्चिदाश्रितः।
तदर्थोपप्लुतस्यान्यैरिष्टो वाक्यान्तरस्य तु ॥ ५२ ॥
न तावच्छ्रूयमाणस्य वचसोऽर्थोयमिष्यते।
न ह्यनेकार्थता युक्ताबाह्ये वाचकता तथा ॥ ५३ ॥
पदार्थान्वयरूपेण वाक्यार्थो हि प्रतीयते।
न रात्र्यादिपदार्थश्च दिवा वाक्येन गम्यते ॥ ५४ ॥
न दिवादिपदार्थानां संसर्गो रात्रिभोजनम्।
न भेदो येन तद्वाक्यं तस्य स्यात्प्रतिपादकम् ॥ ५५ ॥
अन्यार्थव्यापृतत्वाच्च न द्वितीयार्थकल्पना।
तस्माद्वाक्यान्तरेणायं बुद्धिस्थेन प्रतीयते ॥ ५६ ॥
तस्य चागमिकत्वेपि यत्तद्वाक्यं प्रतीयते।
प्रमाणं तस्य वक्तव्यं प्रत्यक्षादिषु यद्भवेत् ॥ ५७ ॥
न ह्यनुच्चारिते वाक्ये प्रत्यक्षं तावदिष्यते।
नानुमानं न वेदं हि दृष्टं तेन सह क्वचित् ॥ ५८ ॥
यदि त्वनुपलब्धेऽपि संबंधे लिङ्गतेष्यते।
तदुच्चारणमात्रेण सर्ववाक्यमितिर्भवेत् ॥ ५९ ॥
न चार्थापत्तिगम्यानि सर्वैस्सर्ववचांसि हि।
संबद्धान्युपलब्धानि येन तेष्वनुमा भवेत् ॥ ६० ॥

न च सत्तानुमानेन विशेषो वानुमीयते ।
इह वाक्यविशेषस्य सत्तैव त्ववगम्यते ॥ ६१ ॥
पूर्वसिद्धः स्वतन्त्रो ऽर्थः स्वतन्त्रेण विशेषतः ।
धर्माधर्मविशिष्टो ऽत्र नानुमेयः प्रतीयते ॥ ६२ ॥
अप्यश्रुतस्य वाक्यस्य मीयते तद्विशिष्टता ।
ततः पक्षो ऽभ्युपेतस्यादप्रसिद्धविशेषणः ॥ ६३ ॥
किं च लिङ्गातराभावादेतस्य यदि लिङ्गता ।
प्रतिज्ञार्थैकदेशत्वं पदवत्ते प्रसज्यते ॥ ६४ ॥
तद्वदेव निराकार्या वचसो धर्मधर्मिता ।
नागृहीते हि तद्धर्मो गृहीते नानुमेयता ॥ ६५ ॥
क्रियाकारकसंबन्धादृते नास्ति तु धर्मता ।
अवाचकतया चैवधर्मो हि विषयात्मना ॥ ६६ ॥
प्रतीतेर्वाचकत्वं चेत्प्रसक्तानेकशक्तिता ।
अनुमाविषयेत्थं तुधर्मत्वं निष्फलं भवेत् ॥ ६७ ॥
पदार्थैरपि तद्वाक्यं नासंबन्धात्प्रतीयते ।
सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि ॥ ६८ ॥
ननु वाक्यान्तरेणैषां विना किं चिन्न सिध्यति ।
न वाप्यन्यः प्रकारो ऽस्ति तेन वाक्येन संगतौ ॥ ६९ ॥
अथैष तद्वाचिकल्प्यो वाक्यमन्यत्तथैव च ।
प्रसङ्गात्तप दूरे ऽपि नासंबन्धात्प्रमुच्यते ॥ ७० ॥
अतश्च प्रथमादेव न तज्ज्ञातुमसङ्गतात् ।
अन्वयव्यतितिरेकौ च प्रतिषेध्यो पदे यथा ॥ ७१ ॥
श्रुतवाक्येन सादृश्यं नाश्रुतस्यास्ति किं चन ।
तस्मादनुपमानस्यमर्थस्याप्यनया दिशा ॥ ७२ ॥

पीनो दिवा न भुङ्क्ते चेत्येवमादिवचः श्रुतौ ।
रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते ॥ ४९ ॥
तामर्थगोचरां केचिदपरे शब्दगोचराम् ।
कल्पयन्त्यागमाच्चैनामभिन्नां प्रतिजानते ॥ ५० ॥
प्रायशश्चानया वेदे व्यवहारो व्यवस्थितः ।
सोऽवैदिकः प्रसज्येत यद्येषा भिद्यते ततः ॥ ५१ ॥
वचनस्य श्रुतस्यैव सोऽप्यर्थः कैश्चिदाश्रितः ।
तदर्थापश्रुतस्यान्यैरिष्टो वाक्यान्तरस्य तु ॥ ५२ ॥
न तावद्ब्रूयमाणस्य वचसोऽर्थोऽयमिष्यते ।
न ह्यनेकार्थता युक्ताबाह्ये वाचकता तथा ॥ ५३ ॥
पदार्थान्वयरूपेण वाक्यार्थो हि प्रतीयते ।
न रात्र्यादिपदार्थश्च दिवा वाक्येन गम्यते ॥ ५४ ॥
न दिवादिपदार्थानां संसर्गो रात्रिभोजनम् ।
न भेदो येन तद्वाक्यं तस्य स्यात्प्रतिपादकम् ॥ ५५ ॥
अन्यार्थव्यापृतत्वाच्च न द्वितीयार्थकल्पना ।
तस्माद्वाक्यान्तरेणायं बुद्धिस्थेन प्रतीयते ॥ ५६ ॥
तस्य चागमिकत्वेपि यत्तद्वाक्यं प्रतीयते ।
प्रमाणं तस्य वक्तव्यं प्रत्यक्षादिषु यद्भवेत् ॥ ५७ ॥
न ह्यनुच्चारिते वाक्ये प्रत्यक्षं तावदिष्यते ।
नानुमानं न वेदं हि दृष्टं तेन सह क्वचित् ॥ ५८ ॥
यदित्वनुपलब्धे ऽपि संबंधे लिङ्गतेष्यते ।
तदुच्चारणमात्रेण सर्ववाक्यमितिर्भवेत् ॥ ५९ ॥
न चार्थापत्तिगम्यानि सर्वैस्सर्ववचांसि हि ।
संबद्धान्युपलब्धानि येन तेष्वनुमा भवेत् ॥ ६० ॥

न च सत्तानुमानेन विशेषो वानुमीयते ।
इह वाक्यविशेषस्य सत्तैव त्ववगम्यते ॥ ६१ ॥
पूर्वसिद्धः स्वतन्त्रो ऽर्थः स्वतन्त्रेण विशेषतः ।
धर्माधर्मविशिष्टो ऽत्र नानुमेयः प्रतीयते ॥ ६२ ॥
अप्यश्रुतस्य वाक्यस्य मीयते तद्विशिष्टता ।
ततः पक्षो ऽभ्युपेतस्यादप्रसिद्धविशेषणः ॥ ६३ ॥
किं च लिङ्गान्तराभावादेतस्य यदि लिङ्गता ।
प्रतिज्ञार्थैकदेशत्वं पदवत्ते प्रसज्यते ॥ ६४ ॥
तद्वदेव निराकार्या वचसो धर्मधर्मिता ।
नागृहीते हि तद्धर्मो गृहीते नानुमेयता ॥ ६५ ॥
क्रियाकारकसंबन्धादृते नास्ति तु धर्मता ।
अवाचकतया चैवधर्मो हि विषयात्मना ॥ ६६ ॥
प्रतीतेर्वाचकत्वं चेत्प्रसक्तानेकशक्तिता ।
अनुमाविषयोत्थं तुधर्मत्वं निष्फलं भवेत् ॥ ६७ ॥
पदार्थैरपि तद्वाक्यं नासंबन्धात्प्रतीयते ।
सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि ॥ ६८ ॥
ननु वाक्यान्तरेणैषां विना किं चिन्न सिध्यति ।
न वाप्यन्यः प्रकारो ऽस्ति तेन वाक्येन संगतो ॥ ६९ ॥
अथैष तद्वाचिकल्प्यो वाक्यमन्यत्तथैव च ।
प्रसङ्गात्तत्र दूरे ऽपि नासंबन्धात्प्रमुच्यते ॥ ७० ॥
अतश्च प्रथमादेव न तज्ज्ञातुमसङ्गतात् ।
अन्वयव्यतितिरेकौ च प्रतिषेध्यौ पदे यथा ॥ ७१ ॥
श्रुतवाक्येन सादृश्यं नाश्रुतस्यास्ति किं चन ।
तस्मादनुपमानस्यमर्थस्याप्यनया दिशा ॥ ७२ ॥

पीनो दिवा न भुङ्क्ते चेत्येवमादिवचः श्रुतौ ।
रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते ॥ ४६ ॥
तामर्थगोचरां केचिदपरे शब्दगोचराम् ।
कल्पयन्त्यागमाच्चैनामभिन्नां प्रतिजानते ॥ ५० ॥
प्रायशश्चानया वेदे व्यवहारो व्यवस्थितः ।
सो ऽवैदिकः प्रसज्येत यद्येषा भिद्यते ततः ॥ ५१ ॥
वचनस्य श्रुतस्यैव सोप्यर्थः कैश्चिदाश्रितः ।
तदर्थापप्लुतस्यान्यैरिष्टो वाक्यान्तरस्य तु ॥ ५२ ॥
न तावद्भूयमाणस्य वचसो ऽर्थोयमिष्यते ।
न ह्यनेकार्थता युक्ताबाह्ये वाचकता तथा ॥ ५३ ॥
पदार्थान्वयरूपेण वाक्यार्थो हि प्रतीयते ।
न रात्र्यादिपदार्थश्च दिवा वाक्येन गम्यते ॥ ५४ ॥
न दिवादिपदार्थानां संसर्गो रात्रिभोजनम् ।
न भेदो येन तद्वाक्यं तस्य स्यात्प्रतिपादकम् ॥ ५५ ॥
अन्यार्थव्यापृतत्वाच्च न द्वितीयार्थकल्पना ।
तस्माद्वाक्यान्तरेणायं बुद्धिस्थेन प्रतीयते ॥ ५६ ॥
तस्य चागमिकत्वेपि यत्तद्वाक्यं प्रतीयते ।
प्रमाणं तस्य वक्तव्यं प्रत्यक्षादिषु यद्भवेत् ॥ ५७ ॥
न ह्यनुच्चारिते वाक्ये प्रत्यक्षं तावदिष्यते ।
नानुमानं न वेदं हि दृष्टं तेन सह क्व चित् ॥ ५८ ॥
यदित्वनुपलब्धे ऽपि संबंधे लिङ्गतेष्यते ।
तदुच्चारणमात्रेण सर्ववाक्यमितिर्भवेत् ॥ ५६ ॥
न चार्थापत्तिगम्यानि सर्वैस्सर्ववचांसि हि ।
संबद्धान्युपलब्धानि येन तेष्वनुमा भवेत् ॥ ६० ॥

न च सत्तानुमानेन विशेषो वानुमीयते।
इह वाक्यविशेषस्य सत्तैव त्ववगम्यते ॥ ६१ ॥
पूर्वसिद्धः स्वतन्त्रो ऽर्थः स्वतन्त्रेण विशेषतः।
धर्माधर्मविशिष्टो ऽत्र नानुमेयः प्रतीयते ॥ ६२ ॥
अप्यश्रुतस्य वाक्यस्य मीयते तद्विशिष्टता।
ततः पक्षो ऽभ्युपेतस्यादप्रसिद्धविशेषणः ॥ ६३ ॥
किं च लिङ्गान्तराभावादेतस्य यदि लिङ्गता।
प्रतिज्ञार्थैकदेशत्वं पदवत्ते प्रसज्यते ॥ ६४ ॥
तद्वदेव निराकार्या वचसो धर्मधर्मिता।
नागृहीते हि तद्धर्मो गृहीते नानुमेयता ॥ ६५ ॥
क्रियाकारकसंबन्धादृते नास्ति तु धर्मता।
अवाचकतया चैवधर्मो हि विषयात्मना ॥ ६६ ॥
प्रतीतेर्वाचकत्वं चेत्प्रसक्तानेकशक्तिता।
अनुमाविषयोत्थं तुधर्मत्वं निष्फलं भवेत् ॥ ६७ ॥
पदार्थैरपि तद्वाक्यं नासंबन्धात्प्रतीयते।
सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि ॥ ६८ ॥
ननु वाक्यान्तरेणैषां विना किं चिन्न सिध्यति।
न वाप्यन्यः प्रकारो ऽस्ति तेन वाक्येन संगतौ ॥ ६९ ॥
अथैष तद्विचिकल्प्यो वाक्यमन्यत्तथैव च।
प्रसङ्गान्तप दूरे ऽपि नासंबन्धात्प्रमुच्यते ॥ ७० ॥
अतश्च प्रथमादेव न तज्ज्ञातुमसङ्गतात्।
अन्वयव्यतितिरेकौ च प्रतिषेध्यौ पदे यथा ॥ ७१ ॥
श्रुतवाक्येन सादृश्यं नाश्रुतस्यास्ति किं चन।
तस्मादनुप्रमानस्यमर्थस्याप्यनया दिशा ॥ ७२ ॥

उपमानत्वलिङ्गेन वाक्यं प्रति निवारिते ।
अर्थे ऽपि चैवमेव स्यात्तस्मात्पूर्वेष्वसंभवः ॥ ७३ ॥
अतः श्रुतस्य वाक्यस्य यदर्थप्रतिपादनम् ।
तदात्मलाभ एव स्याद्विना नेत्येतदिष्यते ॥ ७४ ॥
एतदर्थाद्विना नायमित्यर्थः किं न कल्प्यते ।
वाक्यार्थवच्च किं नायमागमार्थः प्रतीयते ॥ ७५ ॥
सविकल्पकविज्ञानैश्शब्दः पूर्वं प्रतीयते ।
लब्धप्रयोजने वाक्ये परं नैव कथं चन ॥ ७६ ॥
ननु चासति संबन्धे सति वानवधारिते ।
गम्यज्ञानमिदं वाक्यं प्रसज्येताप्रमाणकम् ॥ ७७ ॥
संबन्धस्य प्रमाणत्वं स्थितं किं चेश्वराज्ञया ।
प्रत्यक्षस्य प्रमाणत्वं कथं वा संगतेर्विना ॥ ७८ ॥
अस्तीन्द्रियार्थसंबन्धस्तत्र चेज्ज्ञानवेलयात् ।
न हि प्रत्यक्षवेलायां सर्वेणासौ निरूप्यते ॥ ७९ ॥
येनापि तु निरूप्येत पश्चादनुभवादसौ ।
नस्यादेव प्रमाणाङ्गमसता तुल्य एव सः ॥ ८० ॥
अप्राप्यकारिणी येषां चक्षुः श्रोत्रे च ते यथा ।
तद्ज्ञानस्य प्रमाणत्वमिच्छन्त्येवं भविष्यति ॥ ८१ ॥
तस्मादसत्त्वे सत्त्वे वा संबन्धस्य यदेव नः ।
जयिना भङ्गुरं ज्ञानं तस्यैव स्यात्प्रमाणता ॥ ८२ ॥
न चाप्यस्याः प्रमाणत्वे कश्चिद्विप्रतिपद्यते ।
भेदाभेदे विसंवादः कृतस्तत्र च निर्णयः ॥ ८३ ॥
ज्ञाते यत्र च संबन्धाद्बुद्धिरेव न जायते ।
तत्र किं क्रियतां सोऽपि प्रमाण्यनेव कारणम् ॥ ८४ ॥

स्मृत्या श्रुतिर्या परिकल्प्यतेऽस्मिल्लिङ्गादिभिर्या विनियोजिका च।
फलादिभिर्यत्परिपूरणं च संबन्धदृक्तच न काचिदस्ति॥ ८५॥

तत्सर्वमित्याद्यसमञ्जसं स्यात्
न चेदियं स्यादनुमानतान्या।
एवं स्वभावाप्यनुमानशब्दं
लभेत चेदस्ति यथेप्सितं पयः॥ ८६॥

॥ इत्यर्थापत्तिः॥

प्रमाणपञ्चकं यत्र वस्तुरूपेण जायते।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता॥ १॥
वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यसमाश्रया।
क्षीरे दध्यादि यन्नास्ति प्रागभावस्सउच्यते॥ २॥
नास्तिता पयसो दध्नि प्रध्वंसाभाव इष्यते[1]।
गवि यो ऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते॥ ३॥
क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः।
शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्तिरात्मनि॥ ४॥
अप्सु गन्धो रसश्चाग्नौ वायौ रूपेण तौ सह।
व्योम्नि संस्पर्शिता नैव न वेदस्य प्रमाणता॥ ५॥
न च स्याद्व्यवहारो ऽयं कारणादिविभागतः।
प्रागभावादिभेदेन नाभावो विद्यते यदि॥ ६॥
न चावस्तुन एते स्युर्भेदास्तेनास्य वस्तुता।
कार्यादीनामभावः को यो ऽभावः कारणादि नः॥ ७॥
यद्वानुवृत्तिव्यावृत्तिबुद्धिग्राह्यो यतस्त्वयम्।
तस्माद्गवादिवद्वस्तु प्रमेयत्वाच्च गम्यते॥ ८॥

१ प्रध्वंसाभावलक्षणमिति पाठान्तरम्।

न चैापचारिकत्वं वा भ्रान्तिर्वापि यदृच्छया*।
भवत्यतो न सामान्यविशेषात्मकता मृषा ॥ ९ ॥
प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते ।
सात्मनो ऽपरिणामो वा विज्ञानं वान्यवस्तुनि ॥ १० ॥
स्वरूपपररूपाभ्यां नित्यंसदसदात्मके ।
वस्तुनि ज्ञायते कैश्चिद्रूपं किं चित्कदाचन ॥ ११ ॥
यस्य यत्र यदोद्भूतिर्जिघृक्षा वोपजायते ।
चेत्यते ऽनुभवस्तस्य तेन च व्यपदिश्यते ॥ १२ ॥
तस्योपकारकत्वेन वर्त्ततेंशस्तदेतरः ।
उभयोरपि संवित्तावुभयानुगमो ऽस्ति हि ॥ १३ ॥
अयमेवेति यो ह्येष भावे भवति निर्णयः ।
नैषवस्त्वन्तराभावः संवित्त्यनुगमादृते ॥ १४ ॥
नास्तीत्यपि च संवित्तिर्न वस्त्वनुगमादृते ।
ज्ञानं न जायते किं चिदुपष्टम्भनवर्जितम् ॥ १५ ॥
प्रत्यक्षाद्यवतारस्तु भावांशो गृह्यते यदा ।
व्यापारस्तदनुत्पत्तेरभावांशे जिघृक्षिते ॥ १६ ॥
न तावदिन्द्रियैरेषा नास्तीत्युत्पद्यते मतिः ।
भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि ॥ १७ ॥
ननु भावादभिन्नत्वात्संप्रयोगो ऽस्ति तेन च ।
न ह्यत्यन्तमभेदो ऽस्ति रूपादिवदिहापि नः ॥ १८ ॥
धर्मयोर्भेददृष्टा हि धर्म्यभेदे ऽपि नः स्थिते ।
उद्भवाभिभवात्मत्वाद्ग्रहणं चावतिष्ठते ॥ १९ ॥
इदमेव निमित्तं च विवेकस्य प्रतीयते ।
भावभावधियोरक्षैः संबन्धे ऽक्षानपेक्षणम् ॥ २० ॥

रूपादिरपि भेदं च के चिद्ग्राहकभेदतः ।
वर्णयन्ति यथैकस्य पुंसः पुत्रादिरूपताम् ॥ २१ ॥
बुद्धिमात्रकृतो भेदो रूपादौ नित्यमेव हि ।
न च देशाद्यभिन्नानां समुदायावकल्पना ॥ २२ ॥
सद्गुणाद्द्रव्यरूपेण रूपादेरेकतेष्यते ।
स्वरूपापेक्षयाचैषां परस्परविभिन्नता ॥ २३ ॥
यदि तद्रूदपेक्षात्र न स्याद्भेदो ऽत्र नैव हि ।
सदसद्रूपता बुद्धेर्भवेदन्यतरत्र नः ॥ २४ ॥
तत्संबन्धे सदित्येवं तद्रूपत्वं प्रतीयते ।
नास्त्यत्रेदमितीच्छन्तु तदसंयोगहेतुकम् ॥ २५ ॥
गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।
मानसं नास्तिताज्ञानं जायते ऽक्षानपेक्षया ॥ २६ ॥
स्वरूपमात्रं दृष्ट्वापि पश्चात्किं चित्स्मरन्नपि ।
तत्रान्यनास्तितां पृष्टस्तदैव प्रतिपद्यते ॥ २७ ॥
न चाप्यत्रानुमानत्वं लिङ्गाभावात्प्रतीयते ।
भावांशो ननु लिङ्गं स्यात्तदानीं नाजिघृक्षणात् ॥ २८ ॥
अभावावगतेर्जन्म भावांशे ह्यजिघृक्षिते ।
तस्मिन्प्रतीयमाने तु नाभावे जायते मतिः ॥ २९ ॥
न चैष पक्षधर्मत्वं पदवत्प्रतिपद्यते ।
सह सर्वैरभावैश्च भावो ऽनैकान्तिको मतः ॥ ३० ॥
क्व चिद्भावे ऽपि तद्भावो ज्ञातो यस्य कदा च न ।
तस्याभावो ऽपि तत्रैव कदाचिदवगम्यते ॥ ३१ ॥
यत्राप्यदृष्टपूर्वत्वं यदभावस्य तत्र च ।
तदभावमतिर्दृष्टा संबन्धेक्षानपेक्षया ॥ ३२ ॥

कस्य चिद्यदि भावस्य स्यादभावेन केन चित्।
संबन्धदर्शनं तत्र सर्वमानं प्रसज्यते ॥ ३३ ॥
गृहीते ऽपि च भावांशे नैवाभावे ऽन्यवस्तुनः।
सर्वस्य मतिरित्येवं व्यभिचारादलिङ्गता ॥ ३४ ॥
संबन्धे गृह्यमाणे च संबन्धिग्रहणं ध्रुवम्।
तत्राभावमतिः केन प्रमाणेनोपजायते ॥ ३५ ॥
तदानीं न हि लिङ्गेन संबन्धिग्रहणं भवेत्।
तत्रावश्यमभावस्य प्रमाणान्तरतो गतिः ॥ ३६ ॥
प्रत्यक्षादेरनुत्पत्तिर्न तु लिङ्गं भविष्यति।
न विशेषेण संबन्धस्तस्याः सामान्यतो भवेत् ॥ ३७ ॥
न चाप्यभावसामान्ये प्रमाणमुपजायते।
व्यभिचाराद्विशेषास्तु प्रतीयेरन्कथं तया ॥ ३८ ॥
न चानवगतं लिङ्गं गृह्यते वेदसाक्यपि (?)।
अभावत्वादभावेन गृह्येतान्येन हेतुना ॥ ३९ ॥
स वान्येन गृहीतव्ये नागृहीते हि लिङ्गता।
तद्गृहीतिर्हिलिङ्गेन स्यादन्येनेत्यनन्तता ॥ ४० ॥
लिङ्गाभावे तथैव स्यादनवस्थेयमित्यतः।
क्वाप्यस्य स्यात्प्रमाणत्वं लिङ्गत्वेन विना ध्रुवम् ॥ ४१ ॥
नास्तीति धीः फलं चैषा प्रत्यक्षादेरजन्मनः।
तस्यैव च प्रमाणत्वमानन्तर्यात्प्रतीयते ॥ ४२ ॥
त्रिलक्षणेन या बुद्धिर्जन्यते सानुमेष्यते।
न चानुत्पत्तिरूपस्य कारणापेक्षिता क्वचित् ॥ ४३ ॥
मानं कथमभावश्चेत्प्रमेयं चास्य कीदृशम्।
मेयो यद्वदभावो हि मानमप्येवमिष्यताम् ॥ ४४ ॥

भावात्मके तथा मेये नाभावस्य प्रमाणता ।
तथाभावप्रमेये ऽपि न भावस्य प्रमाणता ॥ ४५ ॥
भावात्मकस्य मानत्वं न च राजाज्ञया स्थितम् ।
परिच्छेदफलत्वाद्धि प्रामाण्यं स्याद्द्वयोरपि ॥ ४६ ॥
यदि चास्य प्रमाणत्वमभावत्वेन नेष्यते ।
वस्तुनः करणत्वं हि दृष्टमित्याभिमानिता ॥ ४७ ॥
न लिङ्गत्वप्रमेयत्वे भवेतां तद्वदेव हि ।
तथा सति च पूर्वोक्तो व्यवहारो न सिध्यति ॥ ४८ ॥
प्रमाणानामनुत्पत्तेर्नाभावस्य च धर्मता ।
यत्राभावो ऽस्ति तेनास्याः संबन्धो नैव विद्यते ॥ ४९ ॥
यो न सन्निहितस्तत्र तस्य धर्मो भवेदियम् ।
न च तस्य प्रमेयत्वं धर्मधर्मित्ववर्जनात् ॥ ५० ॥
अभावेन तु संबन्धो भवेत्तद्विषयत्वतः ।
तज्ज्ञानाद्विषयत्वं च ज्ञानेमेयं न विद्यते ॥ ५१ ॥
संयोगसमवायादि संबन्धो नैव विद्यते ।
नागृहीते हि धर्मत्वं गृहीते सिद्धसाधनम् ॥ ५२ ॥
अभावशब्दवाच्यत्वात्प्रत्यज्ञादेश्च भिद्यते ।
प्रमाणानामभावो हि प्रमेयाणामभाववत् ॥ ५३ ॥
अभावो वा प्रमाणेन स्वानुरूपेण मीयते ।
प्रमेयत्वाद्यथा भावस्तस्माद्भावात्मकात्पृथक् ॥ ५४ ॥
कर्माणि सर्वाणि फलैस्समस्तैः सर्वैर्यथावच्च यदङ्गकाण्डैः ।
न संगतानीह परस्परं हि नाङ्गंनदेतत्प्रभवं क्रतूनाम् ॥ ५५ ॥
युक्त्यागमाभ्यामतितर्कितो ऽयं प्रमाणषट्कं प्रविभज्यभाष्ये ।
ततो ऽधिकं यद्द्वयमिष्टमन्यैर्भेदो न तस्येत्यपि सिद्धमेतत्॥५६

इह भवति शतादौ संभवाद्यासहस्रा-
न्मतिरवियुतभावात्सानुमानादभिन्ना।
जगति बहु न तथ्यं नित्यमैतिह्ययुक्तं
भवति तु यदि सत्यं नागमाद्भिद्यते तत् ॥ ५७ ॥

॥ इत्यभावप्रामाण्यवादः ॥

परलोकफलाः पूर्वमाक्षिप्ताश्चोदनाः परैः।
इदानीमैहिकाक्षेपस्सूचकारेण चोच्यते ॥ १ ॥
चित्रापशुफलत्वादिविषयाश्चोदना मृषा।
प्रत्यक्षाद्यधिकारे ऽपि तैरर्थासंगतिर्यतः ॥ २ ॥
यदीदृक्तन्मृषा दृष्टं विप्रलिप्सोर्यथा वचः।
नदीतीरे फलानीति तथादृश्यानि तानि चेत् ॥ ३ ॥
न वापश्वफला चित्रा स्वकाले तददानतः।
स्नानभुजादिवत्तेपि तत्साध्या न भवन्ति वा ॥ ४ ॥
तदुत्पत्तावसद्भावात्स्वर्गतृप्तिसुखादिवत्।
वैधर्म्येणोभयत्रापि भवेतां सुखदर्शने ॥ ५ ॥
आनन्तर्यमनुक्तं चेन्न सामर्थ्यावबोधनात्।
शब्दैकदेशभूतेन तेन तत्प्रतिपादितम् ॥ ६ ॥
कालान्तरानुपादानात्कर्म स्वाभाव्यतो ऽपि च।
चोद्यमानस्य चित्रादेरानन्तर्यं विशेषणम् ॥ ७ ॥
अत्र तावदसंवादो विरोधश्चोत्तरत्र तु।
स्वर्गयानविरुद्धो हि भस्मीभावो ऽत्र दृश्यते ॥ ८ ॥
यत्नायुधिवचो मिथ्याप्रत्यक्षेण विरोधतः।
साधर्म्येण शिलावाक्यं वैधर्म्येणाप्रभाषितम् ॥ ९ ॥

शरीराद्यदि चान्यः स्यान्नासौ यज्ञायुधी भवेत् ।
न चास्य यजमानत्वं सद्भावो ऽपि हि दुर्लभः ॥ १० ॥
यदि स्याद्विधिशब्दो ऽत्र नैवादर्शनतो भवेत् ।
विशेषो ऽस्येति भेदेन नोपात्तं स्यादिदं ततः ॥ ११ ॥
विधिशब्दे भविष्यत्वं फलस्य परिकल्प्य हि ।
विरोधपरिहारः स्याद्वर्तमाने ऽपि नास्त्यसौ ॥ १२ ॥
फलं च न भवेदेवं भस्मीभावाद्विधावपि ।
तत्सामान्येन यान्यापि कल्पना तन्निषेधति ॥ १३ ॥
प्रायश्चैवंप्रकारत्वमर्थवादेषु दृश्यते ।
मन्त्रेषु चेति ते सर्वे पक्षीकार्याः प्रयत्नतः ॥ १४ ॥
एवं सत्यग्निहोत्रादिवाक्येष्वपि मृषार्थता ।
वेदवाक्यैकदेशत्वाच्चित्रादिवचनेष्विव ॥ १५ ॥

॥ इति चित्राक्षेपवार्तिकम् ॥

स्वपक्षसाधनं तावदमृषा वैदिकं वचः ।
स्वार्थैवक्त्रनपेक्षत्वात्पदार्थपदबुद्धिवत् ॥ १ ॥
तत्कृतः प्रत्ययस्सम्यङ्नित्यवाक्योद्भवत्वतः ।
वाक्यबुद्धिवदेवात्र पूर्वोक्ताश्चापि हेतवः ॥ २ ॥
नित्याश्शब्दार्थसबन्धानाश्रित्योक्तेन हेतुना ।
स्वतः प्रामाण्यसिद्ध्यर्थमप्रामाण्ये निराकृते ॥ ३ ॥
असंबन्धोद्भवत्वेन परो मिथ्यात्वमब्रवीत् ।
संबन्धो ऽस्ति च नित्यश्चेत्यक्तमौत्पत्तिकादिना ॥ ४ ॥
मिथ्यात्वस्य निरासार्थं तत्परैर्जेष्यते द्वयम् ।
नैव वास्त्यत्र संबन्धः कृतको वेति वक्ष्यते ॥ ५ ॥

असंभवेन शेषाणां संश्लेषः परिशिष्यते ।
अस्मिन्नेव च संबन्धे प्रतीतिर्लौकिकी ध्रुवम् ॥ ६ ॥
तन्निषेधमतः प्राह न शब्दोऽर्थेन संगतः ।
तद्देशानन्तरादृष्टेर्वन्ध्यो हिमवता यथा ॥ ७ ॥
एवमर्थो द्वयं वापि साधनीयमसंगतम् ।
क्षुरेत्यादि च सिद्ध्यर्थं हेतोरुक्तमथापरः ॥ ८ ॥
शक्तिरूपं गृहीत्वाह संश्लेषो यदि वार्यते ।
संबन्धासिद्धसाध्यत्वमथसंबन्धमात्रकम् ॥ ९ ॥
पितापुत्रादिसंबन्धैरनैकान्तः प्रसज्यते ।
एकभूम्यादिसंबन्धाद्दृष्टान्ते साध्यहीनतः ॥ १० ॥
वाच्यवाचकसंबन्धनिषेधे लोकबाधनम् ।
विरोधश्च स्ववाक्येन न हि संबन्धवर्जितैः ॥ ११ ॥
प्रतिज्ञार्थं पदैश्शक्यः प्रतिपादयितुं परः ।
अभिधानक्रियायां हि कर्मत्वं वाच्यसंश्रितम् ॥ १२ ॥
शब्दानां करणत्वं वा कर्तृत्वं वा निरूपितम् ।
प्रतिपत्तावुपादानात्साहित्ये च विवक्षिते ॥ १३ ॥
नियम्यते यदेकस्यां संबन्धस्स्वार्थशब्दयोः ।
तत्र यद्यप्यसंबन्धः कारकाणां परस्परम् ॥ १४ ॥
तथापि यत्क्रिया तस्यामुपकार्योपकारिता ।
सत्क्रियासंगतेः पश्चात्संबन्धः कीर्त्यते तयोः ॥ १५ ॥
न चात्राप्यविनाभाव उपयोगीति साधितम् ।
संकेतिगमकत्वं चेन्न तदङ्गमियं भवेत् ॥ १६ ॥
गमयन्तीं श्रुतिं दृष्ट्वा कल्प्यते व्यवहारतः ।
न चैषा गमयत्यर्थं संबंधेऽन वधारिते ॥ १७ ॥

तस्माद्गमकता पश्चाद्धूमादेरिव जायते ।
सानङ्गं तद्वदेव स्यादेवं धूमादिभिस्समा ॥ १८ ॥
निरूपिते ऽविनाभावे तच्च तत्कारिता ह्यसौ ।
गमकत्वेन पूर्वं च तच्च नोत्पद्यते मतिः ॥ १९ ॥
इह वाचकतायाः प्राङ् नाविनाभाविताम्मतिः ।
यदैव चेह संबन्धं वृद्धेभ्यः प्रतिपद्यते ॥ २० ॥
तदैव गमको ऽस्यायमिति नान्यस्वरूपतः ।
कथयन्ति क्व चित्तावद्वोद्धव्यो ऽस्मादयं त्विति ॥ २१ ॥
क्व चिद्वाचक इत्येवं वाच्यो ऽयमिति चोच्यते ।
क्व चिदुच्चरिताच्छब्दाद्वृष्ट्वार्थविषयां क्रियाम् ॥ २२ ॥
केषां चित्तच्च बोद्धृत्वमनुमानात्प्रतीयते ।
एतेनास्माद्यतश्शब्दादर्थो ऽयमवधारितः ॥ २३ ॥
तेन नूनमिमौ लोके सिद्धौ वाचकशक्तिकौ ।
इत्थं वाचकता सिद्धा संकीर्णापि ततः परम् ॥ २४ ॥
अन्वयव्यतिरेकाभ्यां निष्कृष्टे ऽर्थे ऽवधार्यते ।
बहुजातिगुणद्रव्यकर्मभेदावलम्बिनः ॥ २५ ॥
प्रत्ययात्सहसा जाताच्छ्रोतलाचणिकात्मकात् ।
न लोकः कारणाभावान्निर्धारयितुमिच्छति ॥ २६ ॥
बलाबलादिसिद्ध्यर्थं वाक्यज्ञास्तु विविञ्चते ।
कक्षान्तरितसामान्यविशेषेषु हि दुर्बलम् ॥ २७ ॥
सामान्यवचनश्शब्दो जायते लक्षणाबलात् ।
तेनावश्यं विवेक्तव्यं शब्देन कियदुच्यते ॥ २८ ॥
कियद्वा नित्यसंबन्धादभिधानेन लक्ष्यते ।
तच्च प्रयोगबाहुल्यात्तत्प्रयोगेष्वसत्स्वपि ॥ २९ ॥

प्रयोगात्परसामान्ये सति चाथ प्रयोगतः।
सास्नाद्येकार्थसंबन्धिगोत्वमात्रस्य वाचकाः॥ ३० ॥
गोशब्द इति विज्ञानमन्वयव्यतिरेकजम्।
तस्माद्गमकतैवादावभिधायकता पुनः॥ ३१ ॥
तन्निमित्तेतिसंबन्धः संज्ञासंज्ञित्वलक्षणः।
संबन्धनियमो यत्तु याविनाभावितोच्यते॥ ३२ ॥
संबन्धग्रहणात्पूर्वं यस्मान्न गमयत्यतः।
गवादेर्नाभिधाशक्तिर्देवदत्तपदे यथा॥ ३३ ॥
यथैव गमकश्शब्दो व्यवहारात्प्रतीयते।
तथैव शक्तिर्विज्ञानं तस्योपायो ऽवगम्यते॥ ३४ ॥
स्वरूपग्रहणं चास्य यथा व्याप्रियते फले।
तथा संबन्धविज्ञाने नाशक्तिस्तत्कृता भवेत्॥ ३५ ॥
यत्साधकतमत्वेन कस्य चित्किं चिदुच्यते।
तस्यानुग्राहकापेक्षा न स्वशक्तिविघातिनी॥ ३६ ॥
न हि तत्कारणं लोके वेदे वा किं चिदीदृशम्।
इतिकर्तव्यता साध्ये यस्य नानुग्रहे ऽर्थिता॥ ३७ ॥
प्रत्यात्मनियतत्वाच्च यथैव करणं भवेत्।
बाह्यान्तरविभागेन क्वचित्स्याद्वा विवक्षया॥ ३८ ॥
उद्विग्नो ह्यन्धकारेण कश्चिदेवं ब्रवीत्यपि।
किं चक्षुषा ममैतेन दृष्टं दीपेन यन्मया॥ ३९ ॥
नित्यवृत्तो तु नान्धानां दृष्टिर्दीपशतैरपि।
रूपादिदर्शने यस्मात्तस्माच्चक्षुः प्रकाशकम्॥ ४० ॥
शरीरात्ममनोयोगादसाधारणता बलात्।
विज्ञानासत्तिभावाच्च चक्षुः कारणमिष्यते॥ ४१ ॥

तथैवेहापि संबन्धज्ञानमङ्गप्रसिद्धितः ।
गौरवात्करणत्वेन मतं चेत्केन वार्यते ॥ ४२ ॥
यदा चक्षुरितीदं तु व्यभिचारित्वमुच्यते ।
देवदत्ते ऽपि चाव्यक्तां शक्तिमिच्छन्ति युक्तितः ॥ ४३ ॥
प्रकाशे ऽवस्थिते बाह्ये नान्धैरूपं प्रतीयते ।
फलासन्नतयतश्चापि चक्षुः कारणमिष्यते ॥ ४४ ॥
पुरुषाधीनविज्ञानस्तेभ्यः प्रागनिरूपितः ।
यस्संज्ञासंज्ञिसंबन्धस्स चेष्टश्चेद् ध्रुवं कृतः ॥ ४५ ॥
भिन्नदेशाद्यधिष्ठानाद्यथा रज्जुघटादिषु ।
सम्मं नास्त्यनयोः किं चितेनासंगतता स्वतः ॥ ४६ ॥

संबन्धाक्षेपवार्त्तिकम् ॥

आधारात्मनि विज्ञाते सुखमाधेयबोधनम् ।
तस्यैव तावत्प्रस्तावादथ गौरित्यतो ऽब्रवीत् ॥ १ ॥
प्रत्यक्षे ऽपि विसंवादो येषां कः स्वयमुत्तरम् ।
तेभ्यो दद्यादिति ज्ञात्वा वृद्धानां मतमब्रवीत् ॥ २ ॥
तत्रार्थप्रत्ययद्वारं कृतं शब्दनिरूपणम् ।
येरासतां तु ते तावत्प्रत्यक्षेण परीक्ष्यते ॥ ३ ।
प्रत्यक्षं नासमर्थं नस्तेन चार्थे ऽवधारिते ।
न हेतुर्बलवानन्यः परीक्ष्येत यतस्ततः ॥ ४ ॥
तस्माच्छ्रोत्रपरिच्छिन्नो यद्यर्थं गमयेन्न वा ।
सर्वथा तस्य शब्दत्वं लोकसिद्धं न हीयते ॥ ५ ॥
यदि त्वर्थगतौ शक्तिर्न स्यादस्य मतः पुनः ।
वस्त्वन्तरं प्रकल्प्येत विना शब्दप्रसिद्धितः ॥ ६ ॥

अग्न्यादीनामयत्नो ऽपि शब्दा धूमादयो न हि।
न वा प्रत्याय्यकत्वात्स्यादेकवर्णेष्वशब्दता ॥ ७ ॥
न च प्रागर्थविज्ञानाच्छ्रोत्रग्राह्येन शब्दधीः।
न चार्थज्ञानतः पश्चादश्रोत्रे ऽपि च शब्दता ॥ ८ ॥
परस्परानपेक्षाश्च श्रोत्रबुद्ध्या स्वरूपतः।
वर्णा एवावगम्यन्ते न पूर्वापरवस्तुनी ॥ ९ ॥
अल्पीयसापि यत्नेन शब्दमुच्चरितं मतिः।
यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥ १० ॥
पृथक् न चोपलभ्यन्ते वर्णस्यावयवाः क्वचित्।
न च वर्णेष्वनुस्यूता दृश्यन्ते तन्तुवत्पटे ॥ ११ ॥
तेषामनुपलब्धेश्च न ज्ञाता लिङ्गसंगतिः।
नागमस्तत्परश्चास्ति नादृष्टे चोपमा क्वचित् ॥ १२ ॥
न चाप्यनुपपत्तिः स्याद्वर्णस्यावयवैर्विना।
यथान्यावयवानां हि विनाप्यवयवान्तरैः ॥ १३ ॥
प्रत्यक्षेणावबुध्यश्च वर्णो ऽवयववर्जितः।
किं न स्याद्व्योमवच्चात्र लिङ्गं तद्रहिता मतिः ॥ १४ ॥
तद्वच्चास्यैकबुद्धित्वाद्देशभेदे ऽप्यभिन्नता।
ननु भेदमतिर्न स्यात्तवाप्येकत्वधीः कुतः ॥ १५ ॥
सामान्येषु ममैका धीस्तद्व्यक्तिषु च भेदधीः।
न हीष्टं भेदमात्रं हि न स्यादेकत्वधीर्यतः ॥ १६ ॥
व्यक्तेस्तावन्न सामान्यं भिन्नरूपं प्रतीयते।
वर्णेष्वन्यच्च शब्दत्वान्नान्यच्चेद्वर्ण एव सः ॥ १७ ॥
स एवेति मतिर्नापि सादृश्यं न च तत्क्वचित्।
विनावयवसामान्याद्वर्णेष्ववयवा न च ॥ १८ ॥

प्रत्यक्षविषयत्वाच्च नान्यापोहो ऽपियुज्यते ।
वाचकश्चात्र लिङ्गं वा न तदानीं प्रतीयते ॥ १६ ॥
गकारादिषु सामान्यं शब्दत्वं कल्प्यते यथा ।
गोत्वं च शाबलेयादौ तथैतत्किं न कल्प्यते ॥ २० ॥
शाबलेयगकारादीन्निष्पन्नान्व्यक्तिरूपतः ।
सामान्यधीर्न गृह्णातीत्यतो जातिरपीष्यते ॥ २१ ॥
न तु द्रुतादिभेदे ऽपि निष्पन्ना संप्रतीयते ।
गव्यक्त्यन्तरविच्छिन्ना गव्यक्तिरपरा स्फुटा ॥ २२ ॥
तेनैकत्वेन वर्णस्य बुद्धिरेकोपजायते ।
विशेषबुद्धिसद्भावो भवेद्व्यञ्जकभेदतः ॥ २३ ॥
यथैव तव गत्वादि गम्यमानं द्रुतादिभिः ।
विशेषैरपि नानेकमेवं वर्णो ऽपि नो भवेत् ॥ २४ ॥
त्वायाप्यव्यञ्जकव्यक्तिभेदाद्भेदो ऽभ्युपेयते ।
ममापि व्यञ्जकैर्नादैर्भेदबुद्धिर्भविष्यति ॥ २५ ॥
तेन यत्प्रार्थ्यते ज्ञाते तद्वर्णादेव लभ्यते ।
व्यक्तिलभ्यं च नादेभ्य इति गत्वादिधीर्वृथा ॥ २६ ॥
कल्पयित्वापि तत्पश्चाद्विभुत्वैकत्वनित्यता ।
प्रत्येकवृत्तिता वास्य भवेयुर्महतः श्रमात् ॥ २७ ॥
द्वयसिद्धस्तु वर्णात्मा नित्यत्वादि यथैव च ।
कल्पितस्येष्यते तद्वत्सिद्धस्यैवाभ्युपेयताम् ॥ २८ ॥
प्रत्येकसमवाये च क्लेशो नैवं भविष्यति ।
व्यञ्जनेषु च धीभेदो नैव तादृक्प्रतीयते ॥ २९ ॥
दृश्यते ऽजनुरागेण भेदो यो नाम तत्र नः ।
विवेको ऽस्त्येव न ह्येष केवलानां प्रतीयते ॥ ३० ॥

अस्त्वप्येवं परोपाधिर्द्रुतादिप्रत्ययो भवेत् ।
वर्णाश्रितत्वाद्वर्णत्वव्यञ्जनप्रत्ययो यथा ॥ ३१ ॥
गकारो ऽत्यन्तनिष्कृष्टगत्वाधारो न गम्यते ।
गान्यबुद्ध्यनिरूप्यत्वात्परैः कल्पितगत्ववत् ॥ ३२ ॥
अवस्तुत्वेन साध्यत्वान्निषेधाद्धेतुसाध्ययोः ।
सपक्षे ऽन्यतरासिद्धिर्न दोषायाच जायते ॥ ३३ ॥
वर्णत्वाच्चापि साध्यो ऽयं घकारादिवदेव च ।
व्यतिरिक्तस्य चादृष्टेर्नोच दृष्टं निवर्तकम् ॥ ३४ ॥
गोत्वादिवारणे त्वेवं दृष्टबाधः स्फुटो भवेत् ।
नान्यथा हि मतिस्तत्र स्यात्सामान्यविशेषयोः ॥ ३५ ॥
न चाप्यनेकवस्तुत्वे भेदो व्यञ्जकभेदतः ।
न पिण्डमतिरेकेण व्यञ्जको ऽत्र ध्वनिर्यथा ॥ ३६ ॥
पिण्डव्यङ्ग्यैव गोत्वादिर्जातिर्नित्यं प्रतीयते ।
तेन भिन्नेषु पिण्डेषु जातिरेका प्रतीयते ॥ ३७ ॥
ननु यस्य द्वयं श्रोत्रं तस्य बुद्धिद्वयं भवेत् ।
भवतो ऽतीन्द्रियत्वात्तु कथं नादैर्विशेषधीः ॥ ३८ ॥
नादेन संस्कृताच्छ्रोत्राद्यदा शब्दः प्रतीयते ।
तदुपश्लेषतस्तस्य बोधं के चित्प्रचक्षते ॥ ३९ ॥
नैव वा ग्रहणं तेषां शब्दे बुद्धिस्तु तद्वशात् ।
संस्कारानुकृतेस्सो ऽपि महत्त्वाद्यवबुध्यते ॥ ४० ॥
मधुरं तिक्तरूपेण श्वेतं पीततया तथा ।
गृह्णन्ति पित्तदोषेण विषयं भ्रान्तचेतसः ॥ ४१ ॥
तथा वेगेन धावन्तो नाव्यारूढाश्च गच्छतः ।
पर्वतादीन्विजानन्ति भ्रमेण भ्रमतश्च तान् ॥ ४२ ॥

मण्डूकवसयात्ताचा वंशानुरगबुद्धिभिः ।
व्यत्यल्पत्वमहत्वाभ्यां सामान्यं च तदाश्रयम् ॥ ४३ ॥
गृह्णन्ति यद्वदेतानि निमित्तग्रहणादिना ।
व्यञ्जकस्थमबुध्वैव व्यङ्गे भ्रान्तिर्भविष्यति ॥ ४४ ॥
वर्णान्तरत्वमेवाहुः केचिद्दीर्घप्लुतादिषु ।
न हि द्रुतादिवत्तत्र प्रयोगो नान्तरीयकः ॥ ४५ ॥
तथा च सति सामान्यं त्रित्वं कैश्चिदिष्यते ।
सामान्यकल्पना त्वन्येर्न युक्तेत्यभिधीयते ॥ ४६ ॥
अत्वमित्युच्यमानं हि न दीर्घप्लुतयोर्भवेत् ।
आत्वं न ह्रस्वप्लुतयोस्त्रैमात्र्यं न च पूर्वयोः ॥ ४७ ॥
सर्वसाधारणत्वेन तद्विज्ञातुं न शक्यते ।
प्रत्येकं शाबलेयादिरूपे गोत्वं यथा स्फुटम् ॥ ४८ ॥
अवर्णकुलशब्दोऽपि स्थानसाम्याद्वनादिवत् ।
समुदायार्थवाचीति न जातिवचनो भवेत् ॥ ४९ ॥
स्वतो ह्रस्वादिभेदस्तु नित्यवादे विरुध्यते ।
सर्वदा यस्य सद्भावः स कथं मात्रिकः स्वयम् ॥ ५० ॥
तस्मादुच्चारणं तस्य मात्राकालं प्रतीयते ।
द्विमात्रं वा त्रिमात्रं वा न वर्णो मात्रिकः स्वयम् ॥ ५१ ॥
दीर्घादेर्न त्वनङ्गत्वं वाचको धर्मतो भवेत् ।
इत्थं प्रतीयमानाः स्युर्वर्णाः न प्रतिपादकाः ॥ ५२ ॥
यादृशात्पूर्वदृष्टोऽसावर्थो गम्येत तादृशात् ।
भ्रान्त्या कथं प्रतीतिश्चेन्नासावर्थमितिं प्रति ॥ ५३ ॥
यथाश्वादिजवः पुंसां कार्याङ्गत्वं प्रकल्पयेत् ।
परधर्मोऽपि वर्णानां ध्वनिधर्मस्तथैव नः ॥ ५४ ॥

ननु दीर्घाद्यनित्यत्वादनित्यो वाचको भवेत् ।
आनुपूर्वीवदेवास्य परिहारो भविष्यति ॥ ५५ ॥
तथासन्नादिभेदानां संस्कारवशगा मतिः ।
तेषां दीर्घादिवद्भेदो न कदाचित्प्रतीयते ॥ ५६ ॥
तचैकवर्णरूपत्वे भेदोऽपि स्याद्द्रुतादिवत् ।
नात्र वर्णान्तरव्यक्तिर्व्यक्तिध्वन्यन्तरोद्भवः ॥ ५७ ॥
तएव मृदुतीव्रत्वशीघ्रत्वादिसमन्विताः ।
अभेदे चापि वर्णस्य ध्वनीनां द्विप्रकारता ॥ ५८ ॥
केचित्स्वरूपबोधार्थाः केचिद्बोधानुवर्त्तिनः ।
युगपत्क्रमरूपेण संस्कारोत्पादहेतवः ॥ ५९ ॥
तत्र दीर्घादिबोधः स्यात्पूर्वेषां प्रचयो यदा ।
वर्णात्मैव हि कालेन तावता ते प्रतीयते ॥ ६० ॥
युगपत्प्रचितैस्तैश्च स्यादुदात्तादिकल्पना ।
व्यत्यये त्वितरेषां स्याद्वृत्तिभेदो द्रुतादिकः ॥ ६१ ॥
वर्णात्मन्यवबुद्धेऽपि तद्रूपामेव ते मतिम् ।
शनैरुत्पादयन्तीति नान्यो वर्णः प्रतीयते ॥ ६२ ॥
व्यक्त्याकृतिकृतो भेदो यद्यप्येकान्ततो भवेत् ।
वर्णेषु जैमिनेः पक्षस्तथापि न विरुध्यते ॥ ६३ ॥
नित्यत्वयत्नः सर्वोऽपि गत्वादिषु भविष्यति ।
गकारादिवचश्चैतत्तेष्वेव न विरोत्स्यते ॥ ६४ ॥
विच्छिन्नयत्नव्यङ्ग्यैश्च नित्यैस्सर्वगतैरपि ।
व्यतिरिक्तपदारम्भो वर्णैर्नोपपद्यते ॥ ६५ ॥
अनारब्धे च गोशब्दे गोशब्दत्वं कथं भवेत् ।
वर्णात्सामान्यवच्चापि न तत्कल्पनमर्हति ॥ ६६ ॥

वर्णात्मनामभेदाच्च सिद्धासामान्यधीरपि ।
समुदायो ऽपि तेभ्यो ऽन्यो वारणीयो ऽनया दिशा ॥ ६७ ॥
अभेदसमुदायस्तु तेषां धर्मो न दुष्यति ।
तेषामस्ति हि सामर्थ्यमर्थप्रत्यायनं प्रति ॥ ६८ ॥
यावन्तो यादृशा ये च यदर्थप्रतिपादने ।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ॥ ६९ ॥
तेषां तु गुणभूतानामर्थप्रत्यायनं प्रति ।
साहित्यमेककर्चादिक्रमश्चापि विवक्षितः ॥ ७० ॥
कर्त्त्रेकत्वे निमित्ते च क्रमे सति नियामकम् ।
प्रयुञ्जानस्य यत्पूर्वं वृद्धेभ्यः क्रमदर्शनम् ॥ ७१ ॥
यौगपद्यत्वशक्यत्वान्नैव तेषामिहाश्रितम् ।
कर्तृभेदश्च तत्र स्यान्न चैवं दृश्यते भिधा ॥ ७२ ॥
युगपद्दृश्यसामर्थ्या नैव शक्ताः क्रमे यथा ।
भवास्तथा क्रमे शक्ता यौगपद्येन शक्नुयुः ॥ ७३ ॥
दृष्टश्च पूर्णमासादेः क्रमः संहत्य कारिणः ।
अभ्यासानां च लोके ऽपि स्वाध्यायग्रहणादिषु ॥ ७४ ॥
साधनादित्रयाणां च व्यापारस्यैककालता ।
सर्वत्रास्तीतिनेहस्यादुपालम्भःक्रमं प्रति ॥ ७५ ॥
निष्पन्ना एव दृश्यन्ते व्यापरास्सर्वएव हि ।
सूक्ष्माव्यापारभेदास्तु दृश्यन्ते न कदा च न ॥ ७६ ॥
एकसाधनसंस्थाश्च व्यापारावयवा यदा ।
स्वरूपतो निरीक्ष्यन्ते यौगपद्यमसत्तदा ॥ ७७ ॥
किं पुनर्बहवो भिन्ना भिन्नसाधनसंश्रिताः ।
भवेयुर्यौगपद्येन व्यापाराः क्रमवर्त्तिनः ॥ ७८ ॥

यदा त्वाद्यपरिस्पन्दाप्रवृत्त्या फललाभतः ।
क्रियापूर्वापरीभूता लक्ष्यते वर्त्तते सदा ॥ ७९ ॥
तेनाचापि विवक्षातः प्रभृत्यार्थावबोधनात् ।
साकल्येनेक्ष्यमाणे स्याद्व्यापारे वर्त्तमानता ॥ ८० ॥
प्रत्येकं येपुनस्तत्र व्यापारास्तन्निरूपणम् ॥ ८१ ॥
फलानिष्पत्तितो न स्यान्नास्तित्वं न च तावता ।
फलानुमेयतायां च व्यापारस्य फलं प्रति ॥ ८२ ॥
कारकाणां यथास्थानं व्यापारे वर्त्तमानता ।
अवश्यभाविनी तत्र प्रत्यासत्तिश्च कस्यचित् ॥ ८३ ॥
न तावता व्यवेतत्वादितरेषामनङ्गता ।
ह्यन्तरैकान्तरत्वेन गकारौकारयोर्ध्रुवम् ॥ ८४ ॥
अर्थप्रत्यायने सक्तिस्तत्रस्थौ गमकौ यतः ।
यथा विसर्जनीयस्य व्यवधानेन शक्तता ॥ ८५ ॥

## ॥ अथ शारीरकमीमांसान्यायसंग्रहस्य ॥

### ॥ चतुर्थाध्यायस्य प्रथमपादारम्भः ॥

### आवृत्तिरसकृदुपदेशात् ॥ १ ॥

फलमुद्दिश्य विहितानां ज्योतिष्टोमादीनां यावच्छब्दपरिमितं कर्मस्वरूपं तावत् सकृदनुष्ठानादेव कृतार्थत्वदर्शनादहंग्रहोपासनेषु श्रवणादिषु च यावच्छास्त्रपरिमितमुपासनादिकर्मरूपं तावतः सकृदनुष्ठानादेव फलसिद्धेरावृत्त्यनपेक्षेति सामान्यन्यायेन प्राप्तम्, तत्र "यस्य स्यादद्धा" "देवो भूत्वे"ति च लिङ्गादुपास्यमानसाक्षात्कारणलक्षणदृष्टफलद्वारेणादृष्टसाधनत्वे वक्तव्ये यावद्दृष्टफलं तावदवघातादिविधिवदर्थसिद्धावृत्तिगुणविशिष्टमेवोपासनाकर्म विधीयते, फलपर्यन्तमेव हि कर्म विधिविषय इति विशेषन्यायेनावृत्तिरहंग्रहोपासनेषु श्रवणादिषु च विहितेत्युक्तम् ॥ १ ॥

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ २ ॥

द्रष्टृद्रष्टव्यनियन्तृनियन्तव्याधिष्ठात्रधिष्ठेयेशित्रीशितव्यत्वादिसंबन्धैर्जीवब्रह्मणोर्भेदलिङ्गै"र्द्वा सुपर्णावृतं पिबन्ता"विति द्वित्वश्रुतेश्च जीवब्रह्मणोर्भेदे सिद्धेऽसंसार्यात्मत्वस्य संसारिजीवप्रत्यक्षेण विरोधाच्च ममेश्वर इति प्रतिपत्तौ प्राप्तायां"नान्योऽतोऽस्ति द्रष्टा" "नान्यदतोऽस्ति द्रष्टा" "नेह नानास्ति किंचने"ति फलवत्प्रमाणान्तरानधिगतभेदप्रतिषेधविषयतया तात्पर्यवत्या भेदनिषेधश्रुत्या·अविवक्षितभेदलिङ्गानां बाधाद् भेदाभेदे निषिध्यमानभेदस्यैव सत्त्वे·एकस्यैवैकोप.धौ सत्त्वासत्त्वप्रसङ्गात् "स यश्चायं पुरुषे यश्चासावादित्ये स एक" इति प्रमाणान्तरानधिगतफलत्वाभ्यां तात्पर्यवदेकत्वश्रुत्या पूर्वसिद्धद्वित्वानुवादिकाया "द्वासुपर्णा"ति द्वित्वश्रुतेश्चन्द्रैकत्वेन द्वित्वस्येव बाधात् सत्यप्येकत्वे द्वित्वस्यातुल्यप्रमाणेन व्यवस्थापयितुमशक्यत्वाद् दुःखित्वादिधर्मप्रत्यक्षस्य विप्रकृष्टस्य संनिहिततरेण ब्रह्मात्मताप्रत्ययेनानुमानस्येव बाधाद् बिम्बप्रतिबिम्बवत् सर्वप्रकारविरोधाभावादहं ब्रह्मास्मीति तादात्म्यवाक्यैरात्मा ब्रह्मेति प्रतिपत्तव्यमित्युक्तम् ॥ २ ॥

## न प्रतीके न हि सः ॥ ३ ॥

ब्रह्मदृष्टियुक्तानि प्रतीकान्यप्यहमित्येव प्रतिपत्तव्यानि ब्रह्मद्वारेणात्मनाऽभिन्नत्वाद् यत्र·उपास्यस्यात्मनाऽभेदस्तत्राहंबुद्धिर्दृष्टा यथाहं ब्रह्मास्मीति प्राप्तम्, तत्र ब्रह्मोपासनेषु "तत् त्वमसि" "स एष आत्मान्तर्हृदि" "एष आत्मापहतपाप्मा" इत्येवमाद्यैक्यव्यपदेशात् सगुणनिर्गुणोपासनेष्वहंबुद्धिरुक्ता, इह तु न प्रतीकान्यहमित्युपास्यानि·ऐक्यचोदनाभावे सति स्वरूपतो भिन्नत्वात्·उद्गीथादिवदित्यनुमानाद् यथाप्रतिभासं भेदेनैवोपास्यानि प्रतीकानीति सिद्धम् ॥ ३ ॥

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ४ ॥

"आदित्यो ब्रह्मे"त्यादिसामानाधिकरण्याविशेषे तयोः कस्योपास्यत्वमिति विशये सत्युत्कृष्टनिकृष्टयोरुत्कृष्टमेवोपास्यं फलविशेषवत्त्वात्·

राजादिवदित्यनुमानेनादित्यादिनिकृष्टबुद्धिविशिष्टमपि ब्रह्म चोदनावशात् फलविशेषाय ब्रह्मसंबन्धिप्रतीकोपासनेषूपास्यमिति प्राप्तम्, तत्रा॰ "दित्य ब्रह्मेत्युपास्ते" "मनो ब्रह्मेत्युपास्ते"॰ "आकाशं ब्रह्मेत्युपास्ते"॰ इत्यादित्यादीनामिव द्वितीयाश्रुत्या॰ उपासनाकर्मत्वप्रतिपादिकया ब्रह्मशब्दस्यार्थपरत्वं बाधित्वा प्रत्ययपरत्वप्रतिपादिकया चेति शब्दश्रुत्योपबृंहितया निकृष्टमुत्कृष्टं बुद्ध्या वेदनीयमिति च न्यायानुगृहीतयानुमानबाधादसंजातविरोधितया प्रथमश्रुता आदित्यादय एव चरमश्रुततया संजातविरोधत्वात् प्रत्ययमात्रपरब्रह्मदृष्टिविशिष्टा विशेषणतयोपास्यमानब्रह्मसामर्थ्यलब्धफलविशेषा उपास्या विष्णुदृष्टिविशिष्टेव प्रतिमेत्युक्तम् ॥ ४ ॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ५ ॥

कर्माङ्गानां क्रियासमवायात् क्रियात्मकानां फलसाधनतयोत्कृष्टत्वात्॰ "असौ वा आदित्य उद्गीथ" इत्यादौ चरमश्रुतत्वाच्च पूर्वाधिकरणन्यायेनाङ्गदृष्टिविशिष्टानामादित्यादीनामुपास्यत्वे प्राप्ते॰ "उद्गीथमुपासीत" "सामोपासीते" त्यादौ कर्माङ्गानामेवोपासनाकर्मत्वप्रतिपादिकया द्वितीयाश्रुत्या फलसाधनभूताङ्गेभ्यः फलभूतानामादित्यादीनामुत्कृष्टत्वादुत्कृष्टबुद्ध्या निकृष्टं वेदनीयमिति न्यायानुगृहीतया प्रथमश्रुताभिरप्यादित्यादिदृष्टिभिर्विशिष्टानि कर्माङ्गान्येवोपास्यतया विधीयन्ते, प्रथमश्रुतन्यायस्य श्रुतेर्बलवत्त्वादित्युक्तम् ॥ ५ ॥

## आसीनः संभवात् ॥ ६ ॥

मनःशरीरयोर्भिन्नत्वान्मनोव्यापारोपासनं प्रति शरीरव्यापारस्यानुपकारित्वाद् यया कयाचिदवस्थया वर्तमानेऽपि शरीरे मानसमुपासनं सुगममिति प्राप्ते मनःशरीरयोर्बहिःप्रवृत्तिनिवृत्त्योरैकयोगक्षेमत्वाच्छरीरेऽनवस्थिते मनोऽनवस्थायाः प्रत्यक्षत्वादासीनेऽचलावयवे शरीरे प्रतिष्ठितेन मनसानङ्गाश्रितान्युपासनानि कर्तव्यानीत्युक्तम् ॥ ६ ॥

## यत्रैकाग्रता तत्राविशेषात् ॥ ७ ॥

अनङ्गोपासनान्यपि दिग्देशकालनियतानि चोदनालक्षणत्वाद्, यागादिवत्,तत्रोपास्ये वस्तुनि चित्तैकाग्र्यमन्तरङ्गम्,तच्च रजस्तमःपरिक्षयेण सत्त्ववृत्त्युद्भवापेक्षम्, स चोद्भवः कदाचित् प्राक्प्रवणादिदेशे प्रदोषादिकाले प्राच्यादिदिशि चोत्पद्यते कदाचिद्देशकालदिगन्तरेषूत्पद्यत इति सत्त्ववृत्त्युद्भवेनापन्नचित्तैकाग्र्यं कालान्तरादावुत्पन्नमनपेक्ष्यैव प्रदोषादिकालाद्यपेक्षमाणस्य तत्र चित्तैकाग्र्याभावादुपासनाऽयोगाच्छ्रुतिविरोधादनुमानस्य यत्रैकाग्र्यं तत्रोपास्यमित्युक्तम् ॥ ७ ॥

## आ प्रायणात् तत्रापि हि दृष्टम् ॥ ८ ॥

अहंग्रहोपासनेषूपास्याविर्भावसिद्धे दृष्टफले तद्द्वारेणादृष्टसिद्धेरवघातादिवदा प्रायणादननुष्ठाने प्राप्ते॰ अवघातादिष्वपि दृष्टफलस्य तण्डुलादेरदृष्टसाधनत्वव्यवधानमन्तरेणैवादृष्टक्रतुफलसाधनत्वादिहापि देहपातादनन्तरमारभ्यमाणविद्यासाध्यादृष्टफलं प्रति व्यवहितस्यापरोक्षस्यापि प्रत्ययस्योपकारकत्वाभावाददृष्टफलारम्भाय तत्संनिहितेऽपरोक्षान्त्यप्रत्ययदृष्टफले वक्तव्ये भावनाविच्छेदे तदयोगात् कर्मणामपि स्वफलविषयान्त्यभावनाजनकत्वप्रसङ्गेन विद्यायाः पाक्षिकफलत्वप्रसङ्गात् कर्मनिरोधद्वारेणोपास्यान्त्यप्रत्ययजननायाभिनवतया प्राबल्यसिद्ध्यर्थमा प्रायणादुपासनं कर्तव्यमित्युक्तम् ॥ ८ ॥

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ ९ ॥

यद्यपि यथा प्रायश्चित्तस्य दुरितक्षयहेतुत्व प्रायश्चित्तविध्यन्यथानुपपत्त्या प्रतीयते शब्देनैव तथा "विद्वान् पुण्यपापे विधूय विदित्वा न लिप्यते कर्मणा पापकेने"ति ज्ञानदुरितनाशयोरितरेतरसाध्यसाधनभावसाकाङ्क्षयोरेकपुरुषसंबन्धनिर्देशान्यथानुपपत्त्या विज्ञानस्य दुरितक्षयहेतुत्वं पुरुषार्थाधिकरणन्यायेन प्रमातुं शक्यते, तथापि "कलञ्जं न भक्षये"दित्यादिप्रतिषेधविध्यन्यथानुपपत्त्या दुरितस्यानिष्टफलपर्यन्तत्वेऽवगतेनार्थवादान्यथानुपपत्त्या विद्यया दुरितक्षयः प्रमातुं शक्यत इति प्राप्तम्, तत्रापहतपाप्मादिलक्षणब्रह्मात्मज्ञानमात्मन्यशेषदुरितनिवर्तकं तस्मिन्

दुरितकर्तृत्वादिबाधकत्वात् स्वप्नगसुरापानादिकर्तृत्वबाधकतया तन्निमित्तदुरितबाधकजाग्रत्प्रबोधवदिति विद्यासामर्थ्येन मोक्षशास्त्रप्रामाण्यान्यथानुपपत्त्या चानुगृहीतयार्थवादप्रतिपन्नविद्यादुरितक्षयैकपुरुषसंबन्धान्यथानुपपत्त्या सामान्यप्रवृत्तां प्रतिषेधविध्यन्यथानुपपत्तिमप्रबाध्य ब्रह्मविद्विशेषविषये विद्यया दुरितक्षयः प्रमीयत इत्युक्तम् ॥ ९ ॥

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १० ॥

न विद्यापुण्ये बाध्यबाधकभूते चोदनालक्षणत्वात्, अग्निहोत्रदर्शपूर्णमासवदित्यनुमानानुगृहीतया पुण्यस्य फलपर्यन्ततापतिपादकविध्यन्यथाविरोधा "द्विद्वान् पुण्यपापे विधूय", "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावर" इत्याद्यर्थवादगततया विद्यापुण्यक्षययोरितरेतरसाध्यसाधनभावसाकाङ्क्षयोरेकपुरुषसंबन्धेन संनिधानान्यथानुपपत्त्या न विद्यानिमित्तः पुण्यनाशः प्रतिपत्तुं शक्यत इति प्राप्तम्, तत्र पूर्ववद्विद्यासामर्थ्यमोक्षशास्त्रान्यथानुपपत्त्यनुगृहीतया पूर्वोक्तयानुपपत्त्या सामान्यप्रवृत्तां कर्मविध्यनुपपत्तिं बाधित्वा ब्रह्मविद्विशेषविषये विद्यया पुण्यक्षयः साधितः ॥ १० ॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ११ ॥

विद्यासामर्थ्यानुगृहीताच्छ्रुतिसामान्याद्विद्वच्छरीरारम्भककर्मणोऽपि विनाशः प्राप्तः, तत्र "तस्य तावदेव चिरं यावन्न विमोक्ष्य" इति शरीराद्विमोक्षणं संसारानुगमस्य मुक्त्यारम्भस्य चावधिरित्युक्तम्, यदि विज्ञानसमकालमेव सर्वकर्मक्षयान्मुक्तिः स्याद् विज्ञानमेवावधिं ब्रूयात्, तत्श्चावध्यन्तरकरणलिङ्गाद् विज्ञानादुत्तरकालमपि कंचित् कालं शरीरमनुवर्तमानं कर्मसद्भावं गमयति, तत्रोद्दालकवसिष्ठादीनां तत्त्वदर्शिनामेव शरीरधारणविषयैः श्रुतिस्मृतिलिङ्गैस्तत्त्वदर्शिभिरपि गुरुशिष्यसंबन्धनिर्देशान्यथानुपपत्त्या चानुगृहीतं "तस्य तावदेव चिर"मिति लिङ्गं तत्त्वज्ञानस्यारम्भककर्मनिवर्तने पाटववैकल्यं प्रतिबन्धं कल्पयित्वारब्धकर्म परिशेषयति सामान्यश्रुतिं बाधित्वेति दर्शितम्, तदुपभोगापेक्षितद्वैतद-

शनं वा विसंस्कारैः संस्कारतया स्मृतिहेतुभिरपि चैतन्यस्याविद्यावद्दोषतया परोक्षभ्रमहेतुभिर्वोपपद्यत इत्युक्तम् ॥ ११ ॥

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १२ ॥

नित्याग्निहोत्रादीनां स्वर्गादिसमुद्दिष्टफलाभावात् सगुणविद्याभिः सहाप्येकफलारम्भकत्वसंभवेन विरोधाभावाद् विद्यया तेषां क्षयाभावप्राप्तावपि सुकृतक्षयत्वसाम्यात् क्षय एव प्राप्तः, तत्र सुकृतक्षयशब्दस्य काम्येष्वपि सावकाशत्वात् सगुणविद्यासाध्यफलविरोधाभावे च सति नित्यकर्मविधिसामर्थ्यादेव सगुणविद्वदनुष्ठितकर्मविशेषक्षये सामान्यश्रुतिमपबाध्य विद्यया सहैकफलत्वं दर्शितम् ॥ १२ ॥

## भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १३ ॥

निर्गुणब्रह्मविदुषामारब्धकर्मक्षयानन्तरमपि संसारी विद्यावत्त्वेऽपि संसारसंबन्धयोग्यत्वात् पूर्वकालीनब्रह्मविद्वदित्यनुमानेन संसारनिमित्तकल्पना "अथ संपत्स्य" इत्यादिश्रुत्या बाधित्वारब्धकर्मक्षयानन्तरं मुक्तिरुक्ता ॥ १३ ॥

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे चतुर्थाध्यायस्य प्रथमः पादः ॥ १ ॥ * * ॥

## प्राङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

यद्यपि मनसि वृत्तिमत्येव वाचो लयदर्शनस्येन्द्रियतद्वृत्त्योः साधारणत्वादिन्द्रियतद्वृत्त्योरप्रकृतित्वेन मनसि लयासंभवस्य तुल्यत्वाच्च 'वाङ्मनसी'ति शब्दानुसारेणेन्द्रियाणामेव मनसि लयः प्राप्तः, तथापि "प्राणमनु सर्वे प्राणा अनूत्क्रामन्ती"त्युत्क्रान्तिसमयेऽपीन्द्रियलिङ्गाद्प्रकृतौ लयाभावाच्चेन्द्रियाणां वृत्तिविरोधिनि मनःसंसर्गविशेषे सति मनसि वृत्तिलय इत्युपचर्यते शब्दस्य मुख्यार्थसंभवादित्युक्तम् ॥ १ ॥

## तन्मनः प्राण उत्तरात् ॥ २ ॥

अबन्नयोः प्रकृतिविकृतिभावान्मनसः प्राणवंश्यत्वलिङ्गेन प्राणाकारपरिणतानाममात्राणां मनःसंस्थिताकारपरिणामात् प्राणप्रकृतेर्मनस-

स्तत्र यथाशब्दं स्वरूपलये प्राप्ते मनःपरिस्पन्दस्य प्राणायत्ततामात्रेण मनःप्राणयोः स्वरूपेण प्रकृतिविकारभावाभावादसंभवन्मुख्यार्थे शब्दे मनसः प्रवृत्तिविरोधिनि प्राणसंसर्गविशेषे प्राणे वृत्तिलय उपचर्यते ॥ २॥

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ३ ॥

"इममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ती"ति लयश्रुतेरभिसमागमनशब्दात् "तमुत्क्रामन्तं प्राणोऽनूत्क्रामती"त्यात्मानुगमनलिङ्गाच्च प्राणस्यात्मनि लयेऽवगते "प्राणस्तेजसी"त्यव्यवधानश्रुतिं बाधित्वोभयविधश्रुत्यनुग्रहाय जीवे प्रलीय जीवेन सह प्राणस्य तेजसि वृत्तिलयः संसर्गविशेषो दर्शितः ॥ ३ ॥

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ४ ॥

"विद्ययामृतमश्नुत" इति सगुणोपासकानामप्यमृतत्वफलेऽवगते"ऽस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि" "तमुत्क्रामन्त"मिति च सामान्यपुरुषमात्रसंबन्ध्युत्क्रान्तेः सगुणोपासकादन्यत्रैव नियमे प्राप्ते "मनसैतान् कामान् पश्यन् स एकधा भवती"ति श्रुतेरर्चिरादिमार्गगमनेन शरीरेन्द्रियवता भोक्तव्यफलत्वान्निरुपाधिकामृतत्वफलाभावात् कर्मिणामिव साधारण्येवोत्क्रान्तिः सगुणोपासकानामित्युक्तम् ॥ ४ ॥

## तदापीतेः संसारव्यपदेशात् ॥ ५ ॥

"परस्यां देवताया"मिति सत्संपत्तिरात्यन्तिकी० अन्तकालीनसत्संपत्तित्वात् परब्रह्मविदः सत्संपत्तिवदित्यनुमानं देहान्तरोपभोग्यकर्मज्ञानविध्यन्यथानुपपत्त्या बाधित्वा पुनरुत्थानयोग्यसावशेषसत्संपत्तिरुक्ता ॥ ५ ॥

## प्रतिषेधादिति चेन्न शारीरात् ॥ ६ ॥

"न तस्मात् प्राणा उत्क्रामन्ती"ति माध्यंदिनश्रुत्यनुसारेण "न तस्य प्राणा उत्क्रामन्ती"ति काण्वश्रुतिसंबन्धसामान्यषष्ठ्यर्थविषयामपादानकारकसंबन्धविशेषपरतयोन्नीय जीवात् प्राणानामुत्क्रान्तिं प्रतिषिध्य शरीरादुत्क्रान्तिः सामान्यश्रुतिस्मृतिलोकप्राप्ता परविदोऽपि प्रापिता,

तत्र "यत्रायं पुरुषो म्रियत" इति यच्छब्दनिर्दिष्टां सशब्देन परामृश्योच्छ्रयनादिधर्मनिर्देशाद् यच्छब्देन शरीरमभिधाय "उदस्मात् प्राणा उत्क्रामन्ती"ति यच्छब्दार्थमुद्दिश्यगतमिदंशब्देनोपादेयवाक्यगतेन सर्वनाम्ना नित्यसंबन्धाच्छरीरमेवोपादानत्वेन परामृश्य प्रश्नपूर्वकमुत्क्रान्तिप्रतिषेधाद् विद्याप्रकरणाद् ब्रह्मविदः शरीरात् प्राणानामुत्क्रान्तिरार्तभागप्रश्ने प्रतिषिद्धा, तत्रोभाभ्यामपि वाक्याभ्यां शरीराज्जीवाच्च प्राणानामुत्क्रान्तिं प्रतिषिध्यतामुभयोरपि वाक्ययोः'अत्रैव समवनीयन्त' इत्युत्क्रान्तिप्रतिषेधापादाने जीवे शरीरे च संनिहिताभिधायिसर्वनामनिर्दिष्टे प्रासादे पर्यङ्के मृत इतिवदात्मनि प्राणानां लयस्य प्रतिपादनात् "परब्रह्मविदो न कुतश्चिदपि प्राणानामुत्क्रान्ति"रिति सामान्योत्क्रान्तिश्रुतेरत्रानवकाश इत्युक्तम्। अथवा "न तस्य प्राणा उत्क्रामन्ती"त्यपादानकारणापेक्षायां चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्य इति शरीरावयवानामुत्क्रान्त्यपादानत्वेन प्रकृतानामिह संबन्धात् प्राप्तोत्क्रान्तिप्रतिषेधपरत्वाच्च वाक्यस्य "न तस्य प्राणाः शरीरावयवेभ्य उत्क्रामन्ती"ति वाक्यं परिणम्यते प्रकरणसामर्थ्यात् "प्राणेन रक्षन्नवरं कुलायमेकोभवति न पश्यती"त्याहुः, "प्राणेषु हृद्यन्तर्ज्योतिः पुरुषो विज्ञानमयः प्राणमयो मनोमय" इत्यादौ कर्तृकरणसंबन्धविशेषस्याधिष्ठेयाधिष्ठातृसंबन्धविशेषस्योपाध्युपहितसंबन्धविशेषस्य च प्रकृतस्य "न तस्य प्राणा" इति संबन्धसामान्यषष्ठ्या समुच्चित्योपादानाच्च शाखान्तरगतापादानविशेषापेक्षा, ततश्च तस्य करणाधिष्ठेयोपाधिभूताः प्राणाः शरीरावयवेभ्यो नोत्क्रामन्तीति वाक्यार्थसिद्धेरुभाभ्यां माध्यंदिनकाण्वाभ्यां "नोत्क्रामन्ति मुनेः प्राणा व्यापी सर्वगतो हि सः। तेन प्राप्तमिदं सर्वं कुत उत्क्रम्य यास्यती"ति स्मृत्यनुगृहीताभ्यां विरोधादप्राप्तप्रतिषेधप्रसङ्गाच्च तस्येति विभक्तेस्तस्मादिति परिणामप्रसङ्गाच्च "तस्मात् प्राणा" इत्यपि तच्छब्देन जीवाद्भिन्नं शरीरमेवोपलक्ष्य विदुषः शरीरात् प्राणा नोत्क्रामन्तीत्युक्तमिति दर्शितम्॥ ६॥

## तानि परे तथाह्याह॥ ७॥

"गताः कलाः पञ्चदश प्रतिष्ठा" इति श्रुतेः प्रकृतावेव विकार-

लय इति न्यायानुगृहीतया भूतेषु ब्रह्मवित्करणलय इति प्राप्ते "पुरुषं प्राप्यास्तं गच्छन्ती"ति श्रुत्यनुसारेणाप्यविद्याकृतभूतसूक्ष्मेषु लीनाः सह भूतसूक्ष्मैर्ब्रह्मण्यस्तं गच्छन्तीति कल्प्यते, अविद्याकृतभूतसूक्ष्मोपादानं लिङ्गशरीरमितरदीश्वरमायोपादानमिति पक्षेऽपि सह भूतसूक्ष्मैर्ब्रह्मणि लयो वाक्यद्वयसामर्थ्यात् कल्प्यत इति दर्शितम् ॥ ७ ॥

## अविभागो वचनात् ॥ ८ ॥

विदुषः परस्मिन् ब्रह्मणि कलाप्रलयः सावशेषो भवितुमर्हति ब्रह्मणि कलाप्रलयत्वात्· उत्क्रान्तौ कलाप्रलयवदित्यनुमानस्य ब्रह्मभावमोक्षशास्त्रान्यथानुपपत्त्यनुगृहीतया "भिद्येते तासां नामरूपे" इत्यस्तं गतानामपि सूक्ष्मनामरूपश्रुत्या बाधान्निरवशेषलयो दर्शितः ॥ ८ ॥

## तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ ९ ॥

"चक्षुषो वा मूर्ध्नो वे"त्यविशेषशास्त्रात् सगुणविदोऽपि यया कयाचिन्नाड्या निष्क्रमणप्राप्तौ "तयोर्ध्वमाय"न्निति विद्याप्रकरणामृतत्वफलाभ्यां मूर्धन्यनाड्या गच्छतीत्युक्तम् ॥ ९ ॥

## रश्म्यनुसारी ॥ १० ॥

नाडीरश्मिसंबन्धस्य रात्रौ योग्यानुपलब्धिविरुद्धत्वान्निशि मृतानां रश्म्यनालम्बनत्वदिवसप्रतीक्षयोरनुपपत्तेर्नादित्यगमनेन विद्याफलप्र यक्रिरिति तत्र कलाविशेषेण नाडीरश्मिसंबन्धशास्त्रान्यथानुपपत्त्या रा प्ति-ष्णोपलब्धिलिङ्गाच्च मन्दान्धकारापवरकान्तरिवोपलब्ध्ययोग्यसूक्ष्मसंबन्धकल्पनया निशि मृतानामप्यादित्यगमनं रश्मिसंबन्धद्वारेण न पाक्षिकफला ब्रह्मविद्येत्युक्तम् ॥ १० ॥ रेण "न

## अतश्चायनेऽपि दक्षिणे ॥ ११ ॥

यामपा-लोकप्रसिद्धिभीष्मादिशिष्टाचाराभ्यां दक्षिणायनमरणं प्रतिषिध्य त्वादुत्तरायणस्य मार्गपर्वस्याभावप्रसङ्गाद्विदुषामपि दक्षिणेऽपि प्रापिता

विद्याफलसंगम इति प्राप्तौ फलमुद्दिश्य विद्याविधानान्यथानुपपत्त्या लोकप्रसिद्ध्यादिबाधादुत्तरायणाभिमानिदेवताया नित्यत्वेन दक्षिणायनेनापि मार्गपर्वसंभवाद्दक्षिणायनमृतानां विद्याफलप्राप्तिरस्तीत्युक्तम् ॥ ११ ॥

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे चतुर्थाध्यायस्य द्वितीयः पादः ॥ २ ॥ * * ॥

## अर्चिरादिना तत्प्रथितेः ॥ १ ॥

प्रतिप्रकरणं विद्याभेदाद् गतिभेदानामपि विद्यागुणत्वेन चिन्तयितव्ये गुणिभेदाद् गुणभूतगतिभेदे प्राप्ते॰ अर्चिरादिमार्गविशेषणानामादित्यवाय्वादीनां गतिभेदेषु प्रत्यभिज्ञानाद् गन्तव्याभेदाच्चार्चिर्धूमादिमार्गस्य द्वयव्यतिरेके तृतीयस्थानत्वलिङ्गाच्चोपासनाभेदेऽप्युपास्यब्रह्मैक्यवद् गुणभूतगत्यैक्योपपत्तेरर्चिरादिकैव गतिरित्युक्तम् ॥ १ ॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

"देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकमागच्छति" पाठक्रमादर्चिरनन्तरमह्नश्च प्राग्वायोर्निवेशे प्राप्ते "स वायुमागच्छति तस्मै स तत्र विजिहीते" इति श्रुत्यन्तरे वायुप्रवृत्तेन मार्गेणोर्ध्वमादित्यमाक्रमत इत्यर्थक्रमदर्शनेन पाठक्रमं बाधित्वा॰ आदित्यात् पूर्वो वायुर्निवेशितः ॥ २ ॥

## तडितोऽधिवरुणः संबन्धात् ॥ ३ ॥

"वायुलोकं स वरुणलोक"मिति वरुणादीनां पाठक्रमेण वायोरूर्ध्वमादित्यात् प्रागर्थक्रमविरोधेन निवेशानुपपत्तेर्निवेशस्थानान्तरादर्शनाच्च वरुणादीनां मार्गपर्वत्वेन संबन्धाभावे प्राप्ते विद्युदुपरिष्टाज्जलगर्भितमेघदर्शनादागन्तूनामन्ते निवेश इति न्यायाच्च तडितोऽधिवरुणादयो निविशेयुरित्युक्तम् ॥ ३ ॥

## आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

निर्देशसारूप्याल्लोकशब्दश्रवणाच्च मार्गचिह्नत्वे भोगभूमित्वे वा प्राप्ते चेतनस्य स्वप्रयत्नरहितस्य॰ ऊर्ध्वगमनं चेतनान्तराधीनमिति लौकि-

कन्यायेनाहुः, शुक्लपक्षोत्तरायणानां कालान्तरेषु मार्गचिह्नत्वभोगभूमित्वा-संभवात् तदभिमानिदेवताभिरेभिर्भवितव्यमिति न्यायेनानुगृहीताद्वैद्युताद्रुपर्यमानवपुरुषोच्चयनलिङ्गान्मानवाश्चेतनाश्चोन्नेतारोऽर्चिरादय इत्युक्तम् ॥ ४ ॥

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ५ ॥

यद्यपि वृद्धव्यवहारे प्रयोगप्रत्ययाभ्यां ब्रह्मशब्दस्य परापरब्रह्मणोः शाब्दं मुख्यत्वमविशिष्टं तथाप्यर्थतोऽनवच्छिन्नतयार्थतोऽपि मुख्यत्वाद-नावृत्त्यमृतत्वलिङ्गाभ्यामुपबृंहितमुभयमुख्यत्वं शब्दस्यार्चिरादिना गन्तव्यं ब्रह्मेति गमयतीति प्राप्तम्, तत्रैकस्य शब्दस्यैकस्मिन् प्रयोगे रूढ्यर्थोपादाने यौगिकलक्षणार्थमुख्यत्वस्याप्युपादानानुपपत्तेः शब्दमुख्यत्वस्योभयत्राविशेषात् कस्योपादानं न्याय्यमिति विशये वाजसनेयके "ब्रह्मलोकान् गमयती"ति ब्रह्मलोकशब्दस्य सत्यलोके रूढस्य यौगिकत्वेऽपि प्रयोगबाहुल्यात् तत्रैव प्रथमतरबुद्धिहेतोर्ब्रह्मैव लोक इति व्युत्पत्तौ लोकशब्दस्य भोगभूमिविशेषे प्रसिद्धस्य 'ब्रह्मलोकानि'ति बहुवचनस्य भोगभूमिभेदेन सत्यलोके मुख्यस्य 'तस्मिन् वसती'त्यधिकरणसप्तम्यास्तृतीयशब्दस्य च "प्रजापतेः सभां वेश्म प्रतिपद्यत" इति सभावेश्मशब्दयोः "पञ्चाग्निविद्यायाः शुद्धः पूतः पुण्यलोको भवती"ति पुण्यलोकशब्दस्य विकारास्पृष्टे परे ब्रह्मण्यत्यन्तोपचरितार्थत्वप्रसङ्गात्, "तथैरंमदीयस्य सरसोऽश्वत्थस्य च सोमसवनस्यापराजितायाः पुरः प्रभुविमितस्य च वेश्मनोऽरण्यत्वारण्येत्यवर्णयोः" पर्यङ्कविद्यागतानां च विशेषणानां गन्तव्यब्रह्मलोकसंबन्धिनां विकारास्पृष्टे ब्रह्मण्यसंभवाद् बहूनां शब्दानामर्थानां चोपचारकल्पनादेकस्यैव शब्दस्यार्थोपचारकल्पनया शब्दमुख्यत्वेन कार्यमेव ब्रह्माभिधेयमिति वरं प्रतिपत्तुमित्युक्तम् ।

किंच पञ्चाग्निविदामपि परब्रह्मप्राप्तौ 'तमेव विदित्वे'ति बहुशास्त्रविरोधः स्यात्, अप्राप्तौ "स एतान् ब्रह्म गमयती"त्येतच्छब्दविरोधः स्यात्, तेन च प्राधान्येन प्रकृतपञ्चाग्निविद्व्यतिरिक्तानां ग्रहणायोगात् तेषामपि निर्दिष्टगतित्वप्रसङ्गाच्च ।

किंच परब्रह्मप्राप्तानामुपचितापचितैश्वर्ये ब्रह्मणः सर्वेश्वरत्व-विरोधः स्यात्, एकरूपैश्वर्ये गुणप्रत्ययावृत्त्युपचयापचयात्मकसाधनवै-षम्यविधिवैयर्थ्यं स्यात्, साधनोपचयापचयाभ्यां च फलोपचयापचयद-र्शनेन विरोधः स्यात् ।

किंच परब्रह्मभूतस्य मनःशरीरवत्तया भोगसंबन्धे ऽ“थायमशरीरो-ऽमृतोऽप्राणो ब्रह्मैवे”ति श्रुतिविरोधः स्यात्, कलाप्रलयाधिकरणविरो-धश्च, अशरीरत्वे “मनसैतान् कामान्” “स एकधा भवती”त्यादिवाक्य-विरोधः स्यात् ।

किंच मुक्तस्य ब्रह्मभूतस्य पित्रादिसंकल्पैर्भोगाभ्युपगमे “ब्रह्मण आप्तकाम”इत्यादिश्रुतिविरोधः, अनभ्युपगमे “तेन पितृलोकेन संपन्नो महीयत” इत्यादिश्रुतिविरोधः ।

किंच वैश्वानराद्युपासकस्यानिवृत्ताविद्यस्यैवोपास्यत्रैलोक्यात्म-त्वादिफलप्राप्तौ विकारातिवर्तिब्रह्मगमनायोगात्, अप्राप्तौ “तं यथा यथोपासत” इति विरोधाद् विकारातिवर्तिब्रह्मप्राप्तिद्वारेण पुनर्विका-रसंबन्धाभ्युपगमे विकारातिवर्तिगमनकल्पनावैयर्थ्यम्, अनिवृत्ताविद्यस्य च ब्रह्मात्मापत्तिरुक्ता स्यात् ।

किंच ब्रह्मणो भेदेनावस्थानाभ्युपगमे ब्रह्मैव भवती”ति श्रुति-विरोधो गन्तृगम्येनाभेदायोगात् ।

अपिच सांपरायाधिकरणन्यायेन मध्ये लिङ्गशरीरविलयकारणाभा-वाद् विद्यया प्रविलये शरीरत्यागात् प्रागेव तेनैव न्यायेन प्रसङ्गात्, अमानवकरस्पर्शस्य लयकारणत्वे वैद्युतस्थाने विकारान्तरेऽपि लयप्रसङ्गात् सत्यप्यमानवकरस्पर्शे पुष्कलकारणे विकारमतिक्रम्यैव लयकल्पनायां प्र-माणाभावाच्च कलाप्रविलयसिद्धि“र्जगद्व्यापारवर्जं भोगसाम्यलिङ्गा”दित्या-दिसूत्राणां चात्यन्ताघटनात्, “एतेन प्रतिपद्यमाना नावर्तन्त” इत्युभयोर्व-र्तमानत्वनिर्देशाद् गमनसमयेनावृत्तेरप्राप्तप्रतिषेधात्, नावर्तिष्यन्त इत्य-श्रुतभाव्यर्थकल्पनायां यत् कृतकं तदनित्यमित्यनुमानविरोधात् क्रममुक्त्य-

भिप्रायेणापि वाक्योपपत्तेरिममिहेति च विशेषणार्थवत्त्वायास्मिन् कल्पे प्रतिपन्ना अस्मिन् कल्पे नावर्तन्ते किंतु कल्पान्तर इत्यस्माकं प्रतिपत्तिः, कल्पान्तरप्रतिपत्तॄणामप्यस्मिन् कल्पे प्रतिपन्ना अस्मिन्नेव कल्पे नावर्तन्ते किंतु कल्पान्तर इति कल्पभेदेन प्रतिपत्तॄषु प्रतिपत्तव्यव्यवस्थोपपत्तेर्न सगुणोपासनामात्रेणानावृत्तिसिद्धिः, तथा मूर्धन्यनाड्यैव गच्छतां प्रतीकपञ्चाग्निविदामापेक्षिकामृतत्वदर्शनात् कार्यब्रह्मणोऽपि सर्वगतत्वे भोगशरीरस्य व्यवहितदेशत्वाद् ब्रह्मणो गन्तव्यस्य सर्वत्राविशिष्टपुरुषार्थत्वान्नार्चिरादिमार्गेण गच्छतां मुख्यामृतत्वसिद्धिः।

ननु परब्रह्मगमनेऽप्याविर्भूतब्रह्मस्वरूपस्य सर्वात्मभावापत्तेः, सर्वाणि च फलभोगवचनानि "संकल्पादेवास्य पितरो मनसैतान् कामानित्यादीनि"तस्मिन्नुपपद्यन्त इति।

तत्र यदि तावन्मुक्तः पित्रादिभिः कामैः प्रागनुत्पन्नं भोगमस्मदादिवदुत्पाद्य मुख्यमेव भुञ्जीत तदाप्तकामता निरतिशयानन्दोपलब्ध्यात्मता च बाध्येत, प्रागनुपलभ्यमानसुखो हि सुखाय साधनानि लोक आदत्त इति भोगार्था च सृष्टिः स्यात्, सुखजन्माभ्युपगमे च "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति नित्यसिद्धब्रह्मसुखावच्छेदानामेव विषयैरभिव्यङ्ग्यतया भोग्यत्वश्रुतिर्बाध्येत।

अथ मुक्तोऽपि प्रागनभिव्यक्तं सुखं पित्रादिकामैरभिव्यनक्तीति न सर्वज्ञत्वादिश्रुतेरनभिव्यक्तत्वस्वभावात्, स्वरूपावरणस्य च सम्यग्ज्ञानेनैव प्रध्वस्तत्वात्।

अथ मुक्तस्य सर्वजीवात्मतावाप्तेर्हिरण्यगर्भादिजीवगतानां भोगैश्वर्याणां तस्मिन्नन्वयान्मुख्यैव भोगैश्वर्यवचनानां तस्मिन्नुपपत्तिरिति, तर्हि तिर्यङ्नारकस्थावरादिजीवापत्तेस्तद्गतदुःखानैश्वर्याद्यपि मुक्तस्यापद्येत इत्यपुरुषार्थता स्यात्, तस्मान्मुक्तोऽमुक्तजीवगतैर्भोगैर्न संबध्यते।

यदि मतं मुक्तो निरतिशयानन्दमात्मानं प्राप्नुवंस्तदानन्दपरिच्छेदत्वाद्विषयानन्दानां तानपि प्राप्नुवन् पित्रादिभिर्भुङ्क्त इत्युपचर्यत इति,

नैतत् सारम्, एकस्य ब्रह्मशब्दस्य मुख्यार्थलाभेन सर्वासां परिच्छिन्नभोगैश्वर्यश्रुतीनामुपचरितार्थत्वकल्पनायोगात्, कार्ये तु ब्रह्मणि गन्तव्ये यथोपदेशं सर्वासां मुख्यार्थत्वमुपपद्यते ।

ननु निर्गुणब्रह्मविद्यायामपि "मनसैतान् कामान्" "स एकधा भवती"त्यादीनि भोगवचनानि सन्ति, सत्यम्, तेषां प्रकरणाद्वाक्यसामर्थ्याद्वा निर्गुणब्रह्मविद्यया संबन्धोऽवगतः॰ भोगैश्वर्यलक्षणादर्थसाम्यलिङ्गात्, भोगैश्वर्यफलवता दहराद्युपासनेन च संबन्धोऽवगतः, तत्रोभयविधप्रमाणानुग्रहाय शरीरेन्द्रियभोगशून्ये निर्गुणज्ञाने स्तुतित्वेनान्वयः विशिष्टसंबन्धिनि दहराद्युपासने फलत्वेनान्वय इति, तस्मात् सर्वश्रुतिव्याकोपपरिहाराय कार्यमेव ब्रह्म गन्तव्यमिति ॥ ५ ॥

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च ॥ ६ ॥

पितृयानतृतीयस्थानसंबन्धहीनत्वात् प्रतीकविषयकत्वेन ब्रह्मणोऽप्युपास्यत्वाद् "ये चामी अरण्ये श्रद्धां सत्यमुपासते" इति वाक्ये तेषामप्युपादानात् "स एतान् ब्रह्म गमयती"त्येतच्छब्देन प्रतीकालम्बनानामपि परामर्शसिद्धेस्तानपि ब्रह्म गमयतीति प्राप्तम्, तत्र च ब्रह्मदृष्टिविशिष्टप्रतीकानामेवोपास्यत्वाद् 'ये चामी अरण्ये' इति वाक्ये परामर्शाभावात् फलान्तरनिर्देशाच्च परिशेषादर्चिरादिसंबन्धो न वाक्येन ततश्च 'ये चामी अरण्ये'इति वाक्योपात्तप्रकृतपरामर्शकेन 'स एता'निस्येतच्छब्देन प्रतीकानामपरामर्शाद् विद्युत्पर्यन्तमेवैतेषां गमनमिति स्थितम् ॥ ६ ॥

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे चतुर्थाध्यायस्य तृतीयः पादः ॥ ३ ॥ * * ॥

## संपद्याविर्भावः स्वेनशब्दात् ॥ १ ॥

मुच्यमानस्य यन्मोक्षरूपं तदागन्तुकं भवितुमर्हति॰ अनुष्ठितसाधनफलत्वे सति शरीरात् समुत्थितस्य फलत्वात् स्वर्गादिवदित्यनुमाना

नुगृहीताभिनिष्पत्तिश्रुत्या आगन्तुकं मोक्षरूपमिति प्राप्तम्, तत्रास्यानुमानस्य "स्वेन रूपेणे"ति विशेषणश्रुत्या बाधो दर्शितः, अभिनिष्पत्तिशब्दस्य शरीरात् समुत्थितस्यानादिप्रवृत्तफलान्तराभिनिष्पत्तिप्रवाहानुवादेन मुक्तौ स्वेनेति विशेषणविधिपरस्य विधीयमानस्य विरोधे सत्युपचरितार्थत्वं दर्शितम् ॥ १ ॥

## अविभागेन दृष्टत्वात् ॥ २ ॥

'तदस्य स्वरूपं ब्रह्मैव न भवति स तत्र पर्येती'ति प्रकृते ब्रह्मण्याधाराधेयनिर्देशात् फलवचनस्य साध्यविषयस्य तादात्म्यवाक्यात् साधनविषयादपि प्रधानत्वाद् बन्धनिवृत्तिव्यतिरेकेणात्मस्वरूपस्यैव पुनर्ब्रह्मतावन्मात्रताप्राप्ते"र्ब्रह्म वेद ब्रह्मैव भवती"त्यादिना फलान्तरस्येष्टत्वादिति प्राप्तम्, तत्राभिनिष्पन्नस्वरूपस्य "स उत्तमः पुरुष" इति परमात्मभावेऽवगते तादात्म्यवाक्यानुकूले फले तद्विरोधिनः फलान्तरस्य प्रकरणात् "मनसैतान् कामान् पश्यन् रमते" "य एते ब्रह्मलोके" इति ब्रह्मलोकसंबन्धिलक्षणादिलिङ्गस्य बलवत्त्वात् सगुणविद्याफलेन संबन्धः, सर्वत्र चार्थतः साधनात् फलस्य प्राधान्येऽपि शब्दतः फलवचनस्य साधनस्तुतिव्यतिरेकेण प्रयोजनाभावात् साधनवाक्यं प्रति गुणभूतत्वमिद्धिरित्युक्तम्, न चाविद्याक्लेशनिवृत्तिलक्षणस्वरूपाविर्भावव्यतिरेकेण ब्रह्मतावन्मात्रता नामास्ति तत्त्वज्ञानेन साध्या तत्त्वज्ञानविषयतयैव नित्यसिद्धत्वात्, तस्यास्तादात्म्यं तत्त्वज्ञानविषयं तावन्मात्रताफलमिति चेत्, किं तत् तादात्म्यं नाम भेदतावन्मात्रताविरोधः, तत्र तर्हि तादात्म्यं तत्त्वज्ञानेन निवर्तते न वा, निवर्तते चेत् ज्ञानस्य स्वविषयनिवर्तकत्वं ज्ञाननिवर्त्यस्य चाज्ञानवन्मिथ्यात्वं ज्ञानस्य स्वविषयबाधद्वारेण स्वेनैव बाध्यत्वं च स्यादिति सुनिरूपितं भवता वेदान्तप्रामाण्यम् ।

अथ न निवर्तते तादात्म्यम्, कथं तर्हि तस्मिंस्तावन्मात्रे विरोधिनि सति तावन्मात्रतापत्तिः,

किंच तावन्मात्रशब्देन यदि ब्रह्म जीवो वाभिधीयते, तयोरनादिसिद्धत्वान्न ज्ञानसाध्यता,

अथ जीवस्य ब्रह्मतावन्मात्रत्वमिति, तदपि जीवो ब्रह्मैव वा तत्रोक्तदोषः,

अथ तृतीयं किंचित्, तस्यापि कर्मत्वे क्षणिकतापत्तिः, गुणत्वे विज्ञानजन्यसंस्कारवदनित्यत्वप्रसङ्गः, संस्कारस्यापि कार्यान्तरवत् कर्मजन्यत्वं ब्रुवाणस्य विरम्य व्यापारशून्यज्ञानेनान्वयव्यतिरेकविरोधः, न द्रव्यत्वमुपादानान्तराभावात्, न जीवब्रह्मोपादानता ब्रह्मोपादानद्रव्यान्तरोत्पत्तौ जीवोपादानद्रव्यान्तरोत्पत्तौ वा ब्रह्मभावस्यासिद्धेः, तस्मात् स्वभावत एव ब्रह्मतावन्मात्रस्यैव सतो विद्यादिक्लेशहान्या प्रतिबन्धस्वरूपावभासो ब्रह्मभाव इति ॥ २ ॥

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ३ ॥

ऐश्वर्यचिन्मात्रावस्थानयोरन्यतरोपादानेऽन्यतरबाधादेकत्रोभयासंभवादसमञ्जसे विद्याफले प्राप्ते चिन्मात्रस्यैव सतोऽविद्यादिक्लेशहान्या तत्त्वातत्त्वविभागापेक्षया वा मायोपाधिवशाद् ब्रह्मेश्वरविभागापेक्षया वा विद्याविद्याकृतावस्थापेक्षया वोभयथा भावोपपत्तिरुक्ता ॥ ३ ॥

## अभावं बादरिराह ह्येवम् ॥ ४ ॥

शरीरेन्द्रियभावाभावयोरन्यतरोपादानेऽन्यतरबाधादुभयोर्यौगपद्यासंभवाच्च सगुणविद्याफलविरोधे प्राप्ते कालभेदेन संकल्पभेदात् क्रमेणोपपत्तिरुक्ता ॥ ४ ॥

## संकल्पादेव तु तच्छ्रुतेः ॥ ५ ॥

मुक्तस्य पित्रादिभोगसाधनसंपत्तिः संकल्पव्यतिरिक्तोचितप्रयत्नादिसाधनसामग्रीसव्यपेक्षा भोगसाधनसंपत्तित्वात् अस्मदादिभोगसाधनसंपत्तिवदित्यनुमानस्य संकल्पादेवेत्यवधारणश्रुत्या विद्याया मन्त्रौषधादिवदचिन्त्यसामर्थ्यत्वादिति न्यायानुगृहीतया बाधो दर्शितः ॥ ५ ॥

## प्रदीपवदावेशस्तथाहि दर्शयति ॥ ६ ॥

एकस्मिन् शरीरे समनस्कायां चैतन्याभिव्यक्तौ सर्वगतस्यात्मनः शरीरान्तरेषु मनोभेदाभावाच्चैतन्याभिव्यक्तेर्मनोभेदे च लोकवज्जीवभे-

द्वाद् भोगाननुसंधानप्रसङ्गादेकस्मादितराणि निरात्मकानीति प्राप्तम्। तत्र विदुष एव "स एकधा भवती"त्यादिनानेकधा भावावगमादनुपपत्त्या-उपाधिभेदेनानेकधा भावे कल्प्यमाने सर्वेषां सात्मकत्वमन्तरेण विदुषोऽनेकधा भावायोगात् स्वतन्त्रानादिमनोभेदे सत्येव जीवभेदाच्छ्रुत्यनुपपत्त्या-एकमनःसंकल्पप्रसूतानेकमनःशरीरेन्द्रियोपाधावभिव्यक्तचैतन्यो विद्वानैश्वर्यं भुङ्क्त इत्युक्तम् ॥ ६ ॥

## जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ ७ ॥

"आप्नोति स्वाराज्य"मित्यादिश्रुतेः परापरब्रह्मकार्ये भूतभौतिकसृष्ट्यादिविषयैश्वर्येऽपि सगुणब्रह्मविदां प्राप्ते प्रलयादुत्थानसमये भूतभौतिकानां यः स्रष्टा तस्यैव स्थितिनियमनादावपि कर्तृत्वनिर्देशात् सृष्ट्युत्तरकालभाविनामुपासकानां तदानीमभावात् कल्पान्तरोपासकानां प्रलये मुक्तत्वात् तद्भोगमात्रसाम्यलिङ्गाच्च जगद्व्यापारं वर्जयित्वा स्वभोगसाधनसंपत्तावेव सगुणविदामैश्वर्यं क्रमेण च मुक्तिरित्युक्तम्।

अत्र केचिदागमार्थसंप्रदायहीनाः स्वबुद्ध्या च शास्त्रार्थविभागं पर्यालोचयितुमशक्नुवन्तः परब्रह्मणि मुक्तस्यैव पित्रादिभिर्भोगविशेषं प्रक्लृप्तं सर्वमुपवर्ण्यास्याधिकरणस्य शास्त्रसिद्धान्तेनासंगतिं पश्यन्तो द्वैतिनां मुक्तेरङ्गीकरणवादोऽयमिति जल्पन्ति।

तत्र! किं क्रियत इति वक्तव्यम्,! किं द्वैतिनां मुक्तिरित्थंभूतेति प्रकारविशेषः प्रदर्श्यते! किं वा तेषां मुक्तिरित्थंभवितव्येति साध्यते! किं वा नेत्थंभवितव्येत्याक्षिप्यते! किंवा तन्मुक्तिस्वरूपमङ्गीकृत्य तैरभिप्रेतं धर्मान्तरं साध्यते दूष्यते वेति।

न तावज्जगद्व्यापारं वर्जयित्वा ब्रह्मणा भोगमात्रसाम्यतन्मुक्तिस्वप्रकारः, गुणपुरुषयोर्द्रष्टृदृश्यसंबन्धविच्छेदलक्षणायाः सांख्यमुक्तेर्विज्ञानादिनवगुणोच्छेदेन निःसंबोधलक्षणाया वैशेषिकादिमुक्तेरालोकाकाशशरीरेन्द्रियविषयोपलब्धिशून्यतया सततोर्ध्वगमनलक्षणायाश्चार्हतमुक्तेर्विशुद्धज्ञानोदयप्रवाहस्य सर्वज्ञसंताने स्वलक्षणमुत्पाद्य तदेकत्वलक्षणस्य संता-

नशून्यतालक्षणस्य च सुगतमुक्तेर्वासुदेवे कारणे प्रकृतिविलयलक्षणायाः पाञ्चरात्रमुक्तेरीश्वरप्राप्तिलक्षणायाः शैवमुक्तेश्चानेवंप्रकारत्वात्।

अथैतेषां मुक्तिरेवंभवितव्येति साध्यते, तदपि न, जगद्व्यापारवर्जनेन सिद्धसाधनत्वात्, कार्यब्रह्मणो भोगसाम्यलिङ्गानां वैदिकविद्यागतानामवैदिकविद्यान्तरकर्मान्तरफलत्वेनाङ्गीकृतमोक्षविशेषप्रतिपादने संबन्धाभावादनङ्गीकरणाच्च तैर्मोक्षे कार्यब्रह्मणि भोगसाम्यस्य न च परब्रह्मणो भोगोऽस्तीत्युक्तम्।

न च जगद्व्यापारवर्जनेन भोगसाम्यं तन्मुक्तेर्दूषणमुच्यते, जगद्व्यापारस्यानङ्गीकरणादेव तद्वर्जनस्यादूषणत्वात्, द्वैतिनां मुक्तेर्भोगमात्रसाम्यप्रापकाभावात्, नहि वेदेऽपि विद्यान्तरे फलं विद्यान्तरे संगच्छते, कुतश्चावैदिकविद्याकर्मफले वैदिकफलविशेषप्राप्तिः, अत एव द्वैतिनां मुक्तिमङ्गीकृत्य न धर्मान्तरसाधनं वा दूषणं वा क्रियते, जगद्व्यापारवर्जनस्य सिद्धत्वाददूषणत्वाच्च भोगसाम्यस्याप्राप्तेः साधयितुमशक्यत्वात्, अत एव तेनादूष्यत्वात्, तस्माद्विप्रलम्भमात्रं द्वैतिनां मुक्तेरङ्गीकरणवाद इति।

न च वेदान्तैकदेशिनां द्वैतिनामेवंविधा मुक्तिः, न च तान् प्रतिसाधयितुं शक्यते जगद्व्यारवर्जनेऽपि सिद्धसाधनत्वात्, विद्यान्तरगोचरभोगसाम्यस्य मुक्तावप्राप्तेः, अत एव दूषयितुमशक्यम्॰ अदूषणत्वादप्राप्तेश्च, स्वरूपमङ्गीकृत्य धर्मान्तरदूषणसंभवेऽपि तथा, तस्मात् कार्यब्रह्मप्राप्तिः सगुणविद्याविषयिकेयमिति सिद्धम् ॥ ७ ॥

इति भगवत्प्रकाशात्मविरचिते शारीरकमीमांसान्यायसंग्रहे चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तश्चायं शारीरकमीमांसान्यायसंग्रहः ॥ :: :: ॥

## ॥ अथ शारीरकमीमांसान्यायसंग्रहस्य ॥

### ॥ उपसंहारः ॥

शारीरकशब्दादि-
मीमांसान्यायसंग्रहः शब्दः ।
यं ब्रूतेऽङ्कनविधिना
स समाप्तिमितो मितो ग्रन्थः ॥ १ ॥

परमेश्वरकृपयायं
विदुषां मोदायनं भूयात् ।
येन ममापि नितान्तं
सफलः स्यान्मुद्रणायासः ॥ २ ॥

लोके प्रसिद्ध्यभावा-
दध्ययनाध्यापनाद्यभावाच्च ।
जीर्णतमादर्शवशात्
क्वचित् क्वचिल्लुप्तवर्णत्वात् ॥ ३ ॥

शोधकमुद्रकदोषा-
न्ममापि च भ्रान्तितः क्वापि ।
या लभ्येताशुद्धिः
सा विद्वद्भिर्विशोध्या ॥ ४ ॥

युग्मम्।

गुणग्रहणचेतसः सुविदुषः पुनः प्रार्थये
दयामयधिया स्वया जहति पक्षपातं च ये।
विचारयत पश्यत प्रतिदिनं मुदं प्राप्स्यथ
प्रसिद्धिमयतामयं सफलतां च येनाधुना॥ ५॥

मनीषितं यो विदधाति पूर्णं
विश्वंभरं तं प्रणतः प्रयाचे।
संदर्भ एष प्रथितोऽस्तु लोके
भवत्प्रसादात् खलु सर्वसिद्धिः॥ ६॥

काशीस्थराजकीय-
प्रधानपाठालयीयसंख्यावान्।
सांख्याध्यापनकारी
वेचनरामोऽस्मि कान्यकुब्जोऽहम्॥ ७॥



॥ श्रीगणेशाय नमः ॥

साम्प्रतं प्रचरितेषु धर्मशास्त्रनिबन्धेषु वर्णाश्रमधर्मास्तिथिविशे कृत्यानि च भारतवर्षीयजनोपकारबद्धदीक्षैः प्रेक्षावद्भिरोरबैमहता परि श्रमेण विविधश्रुतिस्मृतिपुराणैकवाक्यतानिरूपणपुरःसरं निरूपितानि विज्ञायन्ते । परमिमानि शमदमादिसामान्यधर्मविमुखैर्यथावदाचरितान्यपि न संपादयन्ति यथोक्तं फलमिति मन्दादराइव क्रमेणाविदितानाचरित सामान्यधर्मा वर्णाश्रमधर्मेष्वप्यधुनातना बहवो जनाः । मन्ये चेमे धर्मा संकलश्रुतिस्मृतिप्रभृतिषु भृशं नित्यतया प्रशंसिता अपि तादात्विकैः स र्वैरेव भारतवर्षीयैराश्रितत्वात् ताननाचरतां पशुप्रायतया निश्चयात् संक्षिप्य नोपदर्शिताः प्राक्तनैर्बुधवरैः । ते च मन्वादिस्मृतिभ्यो महाभा रतादिमान्यनिबन्धेभ्यश्च निष्कृष्य निरूपणीया इति चिरादासीद्वाराण सीस्थसंस्कृतसमाजमधितिष्ठतां महाशयानामाशयः । अत्रान्तरे निखि लमहीपरिपालनार्थमवतीर्णा भगवतः परमेश्वरस्य मूर्तिरिव श्रीमती वि जयिनीदेवी नानाविधद्वीपवास्तव्यमनुजमौलिमालिकायमानशासनानि निजैकानुव्रतेषु भारतजनेषु परममनुग्रहमाविश्चक्रीर्षुस्स्वीकरोति भारत वर्षराजराजेश्वरीति पदमिति प्रहृष्यतां भारतवर्षीयाणां सर्वेषु नगरेषु प्रावर्तत महोत्सवः । यस्मिंश्च प्रवर्तमाने काशिकायाम् ।

आशागजश्रुतिपथातिथिभिः शतघ्नी-
घोषैर्दुलङ्घनधियेव चलद्भिरुच्चैः ।
सम्राट्सभावसुमतीं समया स्तवैश्च
साम्राज्यघोषमयतां व्रजति स्म सर्वम् ॥

राज्याः पदं सककुदं सकलेश्वरेभ्यो
भूपाः परं न सममन्वत साधुवादैः ।
आशान्तरालविततप्रतिनाददम्भा-
द्दिक्पालकैरपि सुरैरिदमन्वमोदि ॥

पुष्पाञ्जलीन् विसृजतां करकुड्मलेभ्यः
कूलंकषप्रमदमेदुरमानसानाम् ।
साहायकं विदधिरे सपदि प्रजानां
पुष्पोपमा वियति काल्पनिकाः प्रदीपाः ॥

चित्राम्बुधौ न निरमज्जयदाशु केषां
चेतोऽद्भुता वियति दीपततिर्भ्रमन्ती ।
दासीभवत्सकलदिग्वनिताकराग्र-
नीराजनाभ्रममहो हृदये दिशन्ती ॥

ये सौख्यशायनिकतामगमन्नुडूनां
नामान्तरत्वमभजन्त च ये प्रदीपाः ।
ते तत्प्रतापमवनौ गगने च सन्तं
कस्यान्तरन्तरितबाधमबोधयन्न ॥

एवंविधे महोत्सवे मिलितेषु परमेश्वरप्रार्थनया महाराज्ञीदैनंदिनसाम्राज्यसंपदं सभाजयितुं संस्कृतसमाजसभ्येषु श्रीयुतपण्डितबापूदेवशास्त्रिमदीयगुरुवरश्रीद्बालशास्त्रिप्रमुखेषु चिराभिलषितं सामान्यधर्मनिरूपणं प्रकृतमहोत्सवस्मारकतया विस्तरपर्यालोचनाक्षमजनोपयोगितया च निश्चिन्वता श्रीयुतप्रमदादासमित्रमहाशयेन प्रोत्साहितोऽहं प्रावर्तिषि संग्रहीतुं मन्वादिस्मृतिभ्यो महाभारताच्च विशेषतः प्रकृतोपयोगिनो विषयान् । तानिमानतिसंक्षिप्य निबन्धुमुत्सुकोऽपि रामणीयकातिशयेन बहुत्र विवेचनार्हतया चोपयुक्तांशपरिपूरणपुरःसरं किंचित्सविस्तरमेव संग्रथ्य समार्पयमुक्तमहाशयेभ्यः । तैश्च सप्रसादमर्हत्येष निबन्धो नानाविधदेशवासिमहाशयनेत्रपात्रतां शक्यति च कृतस्तोकसंस्कृतपरिचयानपि साधु बोधयितुं शमदमादिनित्यधर्माणामवश्यानुष्ठेयतां सोपपत्तिकमित्यभिहितो वाराणसेयप्रधानपाठशालाध्यक्षश्रीयुतर्निस्फल्डसाहिबमहाशयैर्वितीर्णकाशीविद्यासुधानिधिपत्रद्वारकप्रकाशनानुमतिश्चोपक्रमे

क्रमेणामुं मुद्रयितुम्। प्रार्थये च महाशयान् कल्याणौपयिकप्रवृत्तिमन्मादृशाल्पज्ञजनहस्तावलम्बनधुरंधरान् पूरयितुममुं न्यूनांशबोधनेन संशोधनेन च बुद्ध्यपराधजनितानां दोषाणामनुग्रहीतुं च मामयुष्मिन्नयनार्पणायासेनेति।

मानवल्ल्युपनामको गङ्गाधरशास्त्री

## ॥ शाश्वतधर्मदीपिका ॥

श्रीमानेकरदो देवः सिद्धिदोऽस्तु नमस्यताम्।
लम्बोदरो नमद्विघ्नकबलीकरणादिव ॥ १ ॥
योगाञ्जनैरिव दृशौ विशदे विधाय
त्रैकालिकेक्षणविचक्षणतां तनोति।
भक्त्यैकवारमपि या नमतां नृणां सा
वागीश्वरी मम धियं विदधातु शुद्धाम् ॥ २ ॥
अज्ञानसंतमचन्द्रमसं विवेकं
ये चिन्त्यमानचरणा रचयन्ति चित्ते।
श्रीमद्गुरून् सुरतरूपमितानुकम्पां-
स्तानानतोऽस्मि सकलेप्सितसिद्धिहेतोः ॥ ३ ॥
अस्ति स्वस्तटिनीसमीपवसतिः संकेतभूः श्रेयसां
काशी नाम पुरी श्रुतिस्तुतगुणा विश्वेश्वराधिष्ठिता।
दुष्प्रापं विजितेन्द्रियैरपि पदं तद् ब्रह्मणः शंभुना
यस्यामेव सदा विनश्वरतनूमूल्येन विक्री[१]यते ॥ ४ ॥
आसीत्तत्र महोत्सवो जनमनोनेत्रश्रुतिप्रीतिसू-
रागोपालनृपालमानवमुखोद्गीतस्तुतिर्जातु चित्।

१ अनेन प्रदर्शितमूल्येतरप्रतिबन्धकराहित्यं व्यज्यते।

भाग्यैर्भारतराजराजपदवीमस्माकमद्योहते
श्वेतद्वीपनिकेतना विजयिनीत्यार्यैः सहर्षैर्भृतः ॥ ५ ॥
स्वस्वानुरूपमथ तत्र विचार्य कार्य-
मार्येषु मोदविवशेषु समाचरत्सु ।
काशीस्थसंस्कृतसमाजमवाप्य सभ्याः
संतन्वते स्म परमेश्वरसाधुवादान् ॥ ६ ॥
तत्रान्तरे सकलभारतवासिलोक-
संपत्तिकीर्त्युचितधर्मपथा कथाऽऽसीत् ।
प्रायेण सार्वजनिकोपकृतावयत्नं
शश्वत्प्रवृत्तिरिति येन सतां निसर्गः ॥ ७ ॥
अस्मास्वनुग्रहमवग्रहहीनमद्य
सा श्रीमती विजयिनी विदधात्यवश्यम् ।
नानान्तरीपनृपलालितशासनाऽपि
याऽऽर्येश्वरीति पदवीं बहुमन्यते स्म ॥ ८ ॥
एतादृशे सुसमये निरुपद्रवाणा-
मस्माकमुन्नतिविधावुचितः प्रयत्नः ।
आलस्यमानमदवैरमुखान्विहाय
दोषान्परस्परहिताय कृतोद्यमानाम् ॥ ९ ॥
प्राग्भारतीयमनुजैः सकलान्यलोक-
मान्याज्ञतामुपगतैरपि दैवयोगात् ।
दोषैरमीभिरिदमुन्नतिहारि दैन्यं
संप्राप्यतेवमितिहासविदां प्रवादः ॥ १० ॥
सर्वे विदन्ति हि तृणैरपि रज्जुभावं
प्राप्तैः क्षणेन गजराडपि बध्यते यत् ।

तेनैकमत्यमथ नित्यमुपेत्य कृत्यं
कुर्मः परस्परहितावहमञ्जसेति ॥ ११ ॥
श्रुत्वेति प्रमदादासमित्रनामा महाशयः।
व्यजिज्ञपदथोत्थाय विनयेन सभासदः ॥ १२ ॥
साध्विदं चिन्तितं प्राज्ञैर्धर्म्यं न्याय्यं च भाषितम्।
न केवलमियं नीतिर्धर्मोप्येष महान्हि नः ॥ १३ ॥
धृतिक्षमादमास्तेयशौचेन्द्रियजयाक्रुधाम्।
सत्यविद्याधियामाह धर्मलक्षणतां मनुः ॥ १४ ॥
इदमेव पुरस्कृत्य ग्रन्थ एको निबध्यताम्।
बाला अपि यथा विद्युरक्षमा विस्तरेक्षणे ॥ १५ ॥
उत्सहेतात्र यः कार्ये धर्मकीर्त्तौ स विन्दतु।
पारितोषिकसत्कारं मत्सकाशात्तदन्विति ॥ १६ ॥

श्रुत्वेति कौतूहलचापलाभ्यां मया महाभारतरत्नराशेः।
समाहृताः काश्चन सूक्तिमुक्ता यथोपयोगं विनिवेशिताश्च ॥ १७ ॥
सूक्तानि रत्नानि च यु[1]क्त्यभावे विचित्रवर्णा[2]न्यपि नोल्लसन्ति।
औचित्यमालोच्य तु योजितानि पुमांसमेतानि विभूषयन्ति ॥ १८ ॥
महानयं धर्मपथोऽस्य तत्त्वं वेदा गुहायां निहितं वदन्ति।
अतो भवेदत्र मम प्रवृत्तिर्महाधियां केवलहासहेतुः ॥ १९ ॥
अख[3]ण्डरूपोऽपि निमि[4]त्तभेदाद्दशा[5]वतारैः सुधियोऽनुगृह्णन्।

१ योजना। उपपत्तिश्च।

२ रूपाणि। अक्षराणि च।

३ प्रदर्शयिष्यमाणवचनानुसारेण सर्वभूतहितकारिताया ऐकरूप्येण धर्मत्वलाभात्। परब्रह्मणोप्यखण्डत्वाभ्युपगमाच्च।

४ विषयभेदात्। रावणवधादिप्रयोजनभेदाच्च।

५ धत्यादिभिर्मत्स्यादिभिश्च।

प्रकाश[1]शीलोऽपि निगूढतत्त्वो[2] विचिन्त्यते विष्णुरिवात्र धर्मः ॥ २० ॥

इह किल प्रायः सर्वे प्रेक्षावन्तो निःश्रेयसमभिलष्यन्तो विविधप्रकारमपि स्वस्वसमयभेदेन किंचन धर्म इति नितरामाद्रियन्ते। उद्यो॰अ॰४०

नित्योधर्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्य इति१२।

पुरुषं विविधानि धनधराधान्यादीन्यवशतया विमुच्यामुत्र प्रतिष्ठमानमेको धर्म एवानुगच्छति।

अन्यो धनं प्रेतगतस्य भुङ्क्ते वयांसि चाग्निश्च शरीरधातून्।

द्वाभ्यामयं सह गच्छत्यमुत्र पुण्येन पापेन च वेष्ट्यमानः ॥

मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ।

विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छतीति च ॥

य एवैको नरस्य पश्वादिभ्यो विशेषमादधातीति।

आहारनिद्राभयमैथुनं च सामान्यमेतत्पशुभिर्नराणाम् ॥

धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समाना इति।

यद्यपि संभवति धनकृतोऽपि विशेषस्तथापि केवलं स्वाम्यमात्रनिबन्धनोऽसौ प्रभूतसुवर्णादिविविधधातुनिचितेभ्यः पर्वतादिभ्योऽविशिष्ट एवेति नोत्कर्षहेतुः। अनुचितपात्रप्रतिपादनेन तु स एव प्रत्युत निन्दाहेतुतामावहतीति स्पष्टमेव। योग्यविनियोगे च स धर्मरूप एवेति युक्तं धर्म एव पुरुषस्य पश्वादिभ्यो विशेष इति।

अर्थोऽपि धर्माचरणसुलभ इत्याहुः। उ॰अ॰३७

अर्थसिद्धिं परामिच्छन् धर्ममेवादितश्चरेत्।

न हि धर्मादपैत्यर्थः स्वर्गलोकादिवामृतमिति ॥ ४८

मोक्षश्च धर्मैकमूलक इति निश्चितमेव विपश्चिताम्। लोकेऽपि धार्मिकस्यैव स्वस्वसमयानुगुणाचरणशालिनस्तत्तत्सामयिकेषु प्रशंसाऽधा-

१ प्रकाशस्वभावः। शीलैकपर्यवसानश्च।

२ श्रुतिर्विभिन्नेत्यादियतोवाचोनिवर्तन्तइत्यादिवचनात्।

र्मिकस्य निन्दा च प्रसिद्धतमैवेति नासौ वचनादिप्रमाणसापेक्षो विषयः। स चायं धर्मः सर्वैरेव नितरामाद्रियमाणो न घटादिरिव नयनयोर्गोचरः, स्वस्वरूपविषये विविधानि दर्शनान्याश्रयद्भिः प्रमाणतया विपश्चिद्भिः परस्परं प्रशंसनेन स्वस्वमतानामधिक्षेपेण चेतरमतानां बहुधा विप्रतिपत्तिगोचरीक्रियमाणस्तमनुतिष्ठासतां केषां न चेतसि संशयकलुषिते ऽनिश्चीयमानः खेदमुत्पादयति, नवा स वैक्र लिकीं स्वस्वरूपनिर्णये विशेषोत्सुकताम्। यद्यपि श्रुत्युक्त एव धर्मस्तद्विरुद्धश्चाधर्म इति निर्भरेण व्यवास्थाप्येव प्राक्तनैरभियुक्तैर्मीमांसकतार्किकप्रभृतिभिः, तथाप्यसौ साम्प्रतिकानां तादृगूहापोहाप्रगल्भानामज्ञानश्रुतानां दुरवबोध एव, किं बहुना प्रमाणपारीणानामपि। तथा हि। न तावदिदं सुवचं श्रुत्युक्ता एव धर्मा नान्योक्ता इति। स्मृत्युक्तानामपि धर्माणां सत्वात्। अनुक्तानां च सदाचारबोधितानां तथाभावात्। यदाह भगवान् याज्ञवल्क्यः।

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक् संकल्पजः कामो धर्ममूलमिदं स्मृतमिति॥

अथात्र भवान् सर्वेषामेषां श्रुत्युन्नायकतया श्रुतिबोधितत्वं धर्ममात्रे ऽव्याहतमिति ब्रूते तत्रेदमपि भवता निर्वचनीयं कोऽसौ सदाचारो नाम। सतां सत्त्वं हि वेदप्रामाण्यस्वीकर्तृत्वं तदुक्तकर्मानुष्ठातृत्वरूपं च तथाविधानां चैषां न क्रियामात्रं धर्मो ऽपि तु काचनैव क्रिया, तत्र का सा क्रियेति जिज्ञासितमेव। किंच तेषां सत्त्वमुत्पत्तिकालतः प्राप्तमिति कथमपि न शक्यते वक्तुमिति वेदोक्तधर्मानुष्ठातॄणामपि तेषां य एव श्रुतिष्वनुपलभ्यमान आचारः परिदृश्येत स एव संशयमुत्पादयेत्सत्वे तेषाम्। साम्प्रतमपि चिरं स्वस्वसमयाचारं परिपाल्याचारान्तरमाचरतो ऽधार्मिकत्वव्यवहारदर्शनात्। मन्ये चेदमेव पर्यालोच्य भगवतः साक्षाद्धर्मस्य रूपान्तरप्रायेण महाराजयुधिष्ठिरेण सूक्तम्।

श्रुतिर्विभिन्ना स्मृतयो विभिन्ना
नैको मुनिर्यस्य मतं प्रमाणम् ।
धर्मस्य तत्वं निहितं गुहायामिति ।

एतदुत्तरमेव यदुक्तं महाजनो येन गतः स पन्था इति तदेव सदाचारप्रमापकमिति मा वोचस्तेनैव पितामहं शान्तनवं प्रति स्वानेकविधसंशयप्रकाशनस्य शान्तिपर्वणि करणात् । मो·अ ८७

न धर्मः परिपाठेन शक्यो भारत वेदितुम् ।
अन्यो धर्मः समस्थस्य विषमस्थस्य चापरः ॥
आपदस्तु कथं शक्याः परिपाठेन वेदितुम् ।
सदाचारो मतो धर्मः सन्तस्त्वाचारलक्षणाः ॥
साध्यासाध्यं कथं श[1]क्यं सदाचारो ह्यलक्षणः ।
दृश्यते धर्मरूपेण अधर्मं प्राकृतश्चरन् ॥
धर्मं चाधर्मरूपेण कश्चिदप्राकृतश्चरन्[2] ।
पुनरस्य प्रमाणं हि निर्दिष्टं शास्त्रकोविदैः[3] ॥
वेदवादाश्चानुयुगं ह्रसन्तीतीह नः श्रुतम् ।
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ॥
अन्ये कलियुगे धर्मा यथाशक्ति कृता इव ।
आम्नायवचनं सत्यमित्ययं लोकसंग्रहः ॥
आम्नायेभ्यः पुनर्वेदाः[4] प्रसृताः सर्वतोमुखाः ।

---

१ साध्यं धर्मत्वमसाध्यमधर्मत्वं वा सत्त्वाज्ञाने कथं ज्ञातुं शक्यमित्यर्थः । अतश्च फलितमाह । सदाचार इति ।

२ मूलएव व्याख्यातम् ।

३ पूर्वान्वयि । एवमनियमेपि सदाचाराणां धर्मे प्रामाण्यं निर्दिष्टमित्ययुक्तमिदमिति भावः ।

४ वेदयन्त्याम्नायार्थमिति वेदाःस्मृतयः ।

ते चेत्सर्वे प्रमाणं वै प्रमाणं ह्यत्र विद्यते[१] ॥
प्रमाणेऽप्यप्रमाणेन विरुद्धे शास्त्रता कुतः।
धर्मस्य क्रियमाणस्य बलवद्भिर्दुरात्मभिः ॥
याया विक्रियते संस्था ततः सापि प्रणश्यति।
विद्म चैनं नवा विद्म शक्यं वा वेदितुं नवेति ॥

अनेन हि सन्दर्भेणोपक्रमे धर्मस्य परिपाटमात्रेण ज्ञानं दुःशक-मित्युद्भाव्य विश्वामित्रादिकृतश्वजाघनीभक्षणादिभिर्दृष्टान्तैरापद्धर्माणां विचित्रत्वात्तदनवगमो हेतुरुक्तः। सदाचारस्य चान्योन्याश्रयत्वादलक्ष-णतोक्ता। प्राकृतानामपि शूद्रादीना मुमुक्षूणां श्रुतिभ्यो वेदान्तादिश्रवण-दर्शनादुपलम्भाच्च श्रद्धादावपि पात्रमविविच्यैव दानादेर्विविधबहुला-नाचारादगस्त्यादीनामपि महात्मनां बहुहिंसाकरशापादिदानदर्शनाच्च। तेन चैषामाचारमात्रं न धर्म इति विशदमेव। अत एवोक्तम्।

अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम् ॥
नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेदिति।

युगभेदेनापि धर्मभेदप्रतिपादनाल्लोकानुरोधिनीव स्मृतिरप्रमाणं स्यादित्याह। तथाच स्मृतिः।

तपः परं कृतयुगे त्रेतायां सत्यमुच्यते।
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे इति ॥

ज्ञानिनां महर्षीणामनुयुगं ह्रासात्कलौ कृता इवेत्युच्यते। आम्ना-यवचनमेव सत्यमिति च नास्तीत्याह आम्नायेभ्य इत्यादि। अपि च त-दुन्नायकता स्मृतीनामप्यसिद्धा। वैसर्जनीयवासोग्रहणादीनां लोभमूल-कतया धर्मत्वाभावेन तादृशैकदेशघटितस्य स्मृतिमात्रस्याप्तोक्तत्वानि-श्चयात्।

१ ते वेदाः अत्र स्मृतिषु प्रमाणं चेत्सर्वस्याः स्मृतेर्वैसर्जनीयवासोग्रहणादिबोधि-कायाः अपि प्रमाणत्वं विद्यते प्राप्नोतीत्यर्थः। अथ विरोधाच्च प्रमाणत्वं तर्हि तादृशैकदेशघटितत्वेन सर्वस्या अप्यप्रमाणत्वमेवानुमीयेतेति कथमनुष्ठापकत्वलक्षणं शास्त्रत्वमित्युत्तरार्द्धार्थः।

निह्नुते लिखितं नैकमेकदेशविभावितः ।

दाप्यः सर्वं नृपेणार्थं

इत्यस्य तुल्यन्यायत्वात् । एवमेव किल श्रुतीनां प्रामाण्यमसाध्यत भगवता गौतमेन मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादिति ।

धर्मस्य क्रियमाणस्येत्यादिना च केषुचित्सदाचारप्राप्तेषु क्रमेणोत्सवैकपर्यवसानेषु मूलधर्मोच्छेदस्तन्मूलकश्च कल्पितधर्मोच्छेद इत्युच्यते । अतश्चायं धर्मः स्वज्ञापकहेतूनां दुर्निर्णेयत्वाद्दुरवबोध इति साधु शङ्कितम् । तदुत्तरं च तेनैव । मोक्ष· ८७

अणीयान् क्षुरधाराया गरीयानपि पर्वतात् ।

गन्धर्वनगराकारः प्रथमं संप्रदृश्यते ॥

अन्वीक्ष्यमाणः कविभिः पुनर्गच्छत्यदर्शनम् ।

इत्यनेन दुरवबोधतायां कारणमुक्तम् । एवं क्रमेण हानिं प्राप्यमाणो धर्मः कलेरन्ते सर्वथा हानिमाप्स्यति श्रुत्यादिविलयादित्याह । मो·क्ष· ८७

निपानानीव गोभ्योऽपि क्षेत्रे कुल्ये च भारत ।

स्मृतिर्हि शाश्वतो धर्मो विप्रहीणो न दृश्यते इति ॥

यथा गोभ्यः परिकल्पितानि जलाधारस्थानानि क्षेत्रकुल्यादिषु नीयमानजलानि शून्यतामापद्यन्ते तथैव धर्मोऽपि क्रमेण दुराचारेष्वेव पर्यवसाने नश्येदित्यर्थः ।

अत्रहेतुः । मो·अ· ८७

कामादन्येच्छया चान्ये कारणैरपरैस्तथा ।

असन्तो ऽपि वृथाचारं भजन्ते बहवोऽपरे इति ॥

श्रद्धाविहीना अपि धनादिलोभैर्यज्ञाध्यापनादीनि परबलात्काराच्च स्वस्वक्रमाप्राप्तानप्याचारान् परवञ्चनार्थं च बहून् स्वेनैव कल्पितान् वृथाचारानाचरन्तो दाम्भिकाः कथं धर्मे प्रमाणभावमाप्नुयुरित्यर्थः ।

तन्मूलकमेवाह। मो॰ अ॰ ८१

धर्मो भवति सक्षिप्र[1]: प्रलापस्त्वेव साधुषु।
अथैतानाहुरुन्मत्तानपि चावहसन्त्युत॥
महाजना ह्युपावृत्ता[2] राजधर्मं समाश्रिताः।
न हि सर्वहितः कश्चिदाचारः संप्रवर्त्तते॥
तेनैवान्यः प्रभवति सोऽपरं बाधते पुनः।
दृश्यते चैव स पुनस्तुल्यरूपो यदृच्छया॥
येनैवान्यः सभवति सोऽपरानपि बाधते।
आचाराणामनैकाग्र्यं[3] सर्वेषामुपलक्षये इति॥

एवं च परस्परं विगानात्केषां प्रमाण्यमभ्युपेयमित्यत्र नियामकानुपलम्भाद्धर्मस्याप्रमाणत्वमाशङ्क्य स्वभाव एव सुखदुःखादिहेतुर्भविष्यतीत्याह। मो॰ अ॰ ८१

चिराभिन्नः कविभिः पूर्वं धर्म उदाहृतः।
तेनाचारेण पूर्वेण संस्था भवति शाश्वतीति॥

यश्चिरप्राप्तः स्वभावः स एव धर्मपदवाच्य इत्यर्थः।

एवं परापरविदुषा ऽपि महाराजयुधिष्ठिरेण जनानुकम्पावशंवदचेतसानुयुक्तो भीष्मो यदुवाच स एव धर्मविषये सिद्धान्तः।

तथा हि। मोक्ष॰ अ॰ ८६

युधिष्ठिर उवाच।

इमे वै मानवाः सर्वे धर्मं प्रति विशङ्किताः।
कोऽयं धर्मः कुतो धर्मस्तन्मे ब्रूहि पितामह॥
धर्मस्त्वयमिहार्थः किममुत्रार्थोऽपि वा भवेत्।
उभयार्थो हि वा धर्मस्तन्मे ब्रूहि पितामह॥

१ स क्षिप्रमित्यपि पाठः। कल्पिताचारोऽपि धर्मत्वेन क्षिप्रमेव प्रसिद्धो भवतीत्यर्थः
२ स्वविहितधर्मविमुखाः। ३ एकरूपत्वाभावम्।

भीष्म उवाच ।

सदाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम् ।
चतुर्थम[1]र्थमित्याहुः कवयो धर्मलक्षणम् ॥
अपि ह्युक्तानि धर्म्याणि व्यवस्यन्त्युत्तरावरे ।
लोकयात्रार्थमेवेह धर्मस्य नियमः कृत[2]: ॥
उभयत्र सुखोदर्क इह चैवापरत्र च ।
अलब्ध्वा[3] निपुणं धर्मं पापः पापेन युज्यते ॥
न च पापकृतः पापान्मुच्यन्ते केचिदापदि[4] ।
अपापवादी भवति यथा भवति धर्मवित् ॥
धर्मस्य निष्ठा[5] त्वाचारस्तमेवाश्रित्य भोत्स्यसे ।
यथा ऽधर्मसमाविष्टो धनं गृह्णाति तस्करः ॥
रमते निर्हरंस्तेनः परवित्तमराजके ।
यदास्य तद्धरन्त्यन्ये तदा राजानमिच्छति ॥
तदा तेषां स्पृहयते ये वै तुष्टाः स्वकैर्धनैः ।
अभितः शुचिरभ्येति राजद्वारमशङ्कितः ॥
न हि दुश्चरितं किंचिदन्तरात्मनि पश्यति ।

---

१ उपकारम् । यथाहुः । परिनिर्मथ्य वाग्जालमिदमेव सुनिश्चितम् । नोपकारात्परं पुण्यं नापकारादघं परमिति । अतश्च परपीडाकरः स्वार्थोऽधर्मलक्षणमित्यप्यकारप्रश्लेषेण बोध्यम् ।

२ जनकादीनां गृहस्थानामपि मोक्षदर्शनेऽपि सर्वेषां यतमानानां चित्तविक्षेपादि मा भूदिति प्रव्रज्यादिनियमः कृत इत्यर्थः । लोकव्यवहारपरिरक्षणार्थमेव धर्मशास्त्रं प्रणीतमित्यन्ये ।

३ अज्ञात्वा । पापमाचरन् अधर्मेण युज्यतइत्यर्थः । ४ अनापदि पापशीला आपदि कृतैः पापैर्न मुच्यन्ते ऽन्येत्यापन्मात्रे पापमाचरन्तो ऽपि मुच्यन्ते यथा विश्वामित्रादयइत्यर्थः । एतन्मूलकमेवाह । अथापवादीति । ५ अन्त्यं प्रमाणम् ।

सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
सत्येन विधृतं सर्वं सर्वं सत्ये प्रतिष्ठितम् ॥
अपि पापकृतो रौद्राः सत्यं कृत्वा पृथक् पृथक् ।
अद्रोहमविसंवादं प्रवर्त्तन्ते तदाश्रयाः ॥
ते चेन्मिथोऽधृ[1]तिं कुर्युर्विनश्येयुरसंशयम् ।
न हर्त्तव्यं परधनमिति धर्मः सनातनः ॥
मन्यन्ते बलवन्तस्तं दुर्बलैः संप्रवर्त्तितम् ।
यदा नियति[2]दौर्बल्यमथैषामेव रोचते ॥
न ह्यत्यन्तं बलवन्तो भवन्ति सुखिनोपि वा ।
तस्मादनार्जवे बुद्धिर्न ते कार्या कथंचन ॥
असाधुभ्योऽस्य न भयं न चोरेभ्यो न राजतः ।
अकिंचित्कस्य चित्कुर्वन् निर्भयः शुचिरावसेत् ॥
सर्वतः शङ्कितः स्तेनो मृगो ग्राममिवैयिवान् ।
बहुधा चरितं पापमन्यत्रैवानुपश्यति ॥
मुदितः शुचिरभ्येति सर्वतो निर्भयः सदा ।
न हि दुश्चरितं किंचिदात्मनोऽन्येषु पश्यति ॥
दातव्यमित्ययं धर्म उक्तो भूतहिते रतैः ।
तं मन्यन्ते धनयुताः कृपणैः संप्रवर्त्तितम् ॥
यदा नियति[3]कार्पण्यमथैषामेव रोचते ।
न ह्यत्यन्तं धनवन्तो भवन्ति सुखिनो ऽपि वा ॥
यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
न तत्परेषु कुर्वीत जानन्नप्रियमात्मनः ॥

१ नियमपरित्यागम् । २ दैवप्रातिकूल्यम् । ३ दैवस्य कार्पण्यं तेनैव सर्वेषां धनप्राप्तेः ।

योन्यस्य स्यादुपपतिः स कं किं वक्तुमर्हति ॥
यद[1]न्यस्य ततः कुर्यान्न मृष्येदिति मे मतिः ।
जीवितं यः स्वयं चेच्छेत्कथं सोन्यं प्रघातयेत् ॥
यद्यदात्मनि चेच्छेत तत्परस्यापि चिन्तयेत् ।
अ[2]तिरिक्तैः संविभजेद्भोगैरन्यानकिंचनान् ॥
एतस्मात्कारणाद्धाता कुसीदं संप्रवर्तितम् ।
यस्मिंस्तु देवाः समये संतिष्ठे[3]रंस्तथा भवेत् ॥
अथ[4] वा लाभसमये स्थितिर्धर्मेपि शोभना ।
सर्वं प्रियाभ्युपगतं धर्ममाहुर्मनीषिणः ॥
पश्यैतं लक्षणो[5]द्देशं धर्माधर्मे युधिष्ठिर ।
लोकसंग्रहसंयुक्तं विधात्रा विहितं पुरा ॥
सूक्ष्मं[6] धर्मार्थनियतं सतां चरितमुत्तमम् ।
धर्मलक्षणमाख्यातमेतत्ते कुरुसत्तम ॥
तस्मादनार्जवे बुद्धिर्न ते कार्या कथंचनेति ।

अयं भावः ।

सुसूक्ष्मे हि धर्मपथे प्रथमं प्रमाणं श्रुतिरेवेति निर्विवादमेवास्तिकानाम् । तदनुसारित्वाच्च स्मृतयोऽपि प्रमाणमेव ।

---

१ ततः तत्रोपपत्यविषये यत् यदि अन्यस्य अन्यं कुर्यात् प्रत्यक्षमिति शेषः तर्हि न सहेतेत्यर्थः । २ अधिकैर्धनैर्दरिद्रान् भागिनः कुर्यादित्यर्थः । दातुमसामर्थ्ये कुसीदार्थतयैव परानुपकुर्यादित्यर्थे हेतुमाह । एतस्मादिति । ३ संमुखा भवेयुः । ४ दानादिसामर्थ्येऽपि विहितमार्गेणैव दानादियुक्तं यज्ञादिद्वारा नतु यथाकथंचिदित्यर्थः । अलाभसमयआपद्यपि धर्मे स्थितिस्तदनुल्लङ्घनं शुभावहम् । सक्तुप्रस्थाद्याख्यानेन प्रदर्शयिष्यमाणेन विपद्यपि धर्मानतिक्रमस्य फलातिशयप्रदत्वलाभादित्यन्ये । ५ सामान्यतः स्वरूपम् । ६ सूक्ष्मं संक्षिप्तं धर्मार्थयोः नियतं अव्यभिचारि । सूक्ष्मधर्मार्थं सूक्ष्मधर्मलाभाय नियमितमिति टी० ।

यथाह ।

य: कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तित: ।
स सर्वो ऽभिहितो वेदे सर्वज्ञानमयो हि स इति ॥

धर्म एव गगनकुसुमायते वैयर्थ्यात्स्वभावेनैव सुखदु:खादिभावोपपत्तेरिति तु नि:सारमेव । कार्यवैलक्षण्येन कारणवैचित्र्यस्यावश्यमभ्युपेतव्यत्वादाकस्मिकत्ववादस्य दृश्यमानभावविपरीततांशङ्कया[1] दुर्वचत्वात् । यथा हि क्षित्यङ्कुरादिभि: कार्यैरस्मदादिभिरनुत्पाद्यैरीश्वर: सिध्यति तथैवास्मदादीनां सुखदु:खादिभिर्धर्माधर्मावपि सुसाधावेव । एतदेवोक्तं मोक्षधर्मोत्तरे । २९१

सौवर्णं राजतं वापि यथा भाण्डं निषिच्यते ।
तथा निषिच्यते जन्तु: पूर्वकर्मवशानुग: ॥
नाबीजाज्जायते किंचिन्नाकृत्वा सुखमेधते ।
सुकृतैर्विन्दते सौख्यं प्राप्य देहक्षयं[2] नर: ॥

१ "दृश्यमानेषु सर्व्वेषु भावेषु कार्य्यकारणभावनियमदर्शनाद् आकस्मिकवादस्तु-दुर्वच एव" । इति प्रमदादासमहाशय: । २ देहक्षयेपीत्यर्थ: । तेनात्युत्कटधर्माधर्मयोस्तादात्विकफलबोधकवचनेन न विरोध: ।

## REVIEW.

*Reprinted from the Pioneer, October 14th,* 1878.

### THE VEDANTIC CONCEPTION OF BRAHMA.*

Most people who live in India, and most people in Europe who have read the history of philosophy are familiar with the term Brahma or Brahman. It is very doubtful whether this familiarity extends be-

* *A Dialogue on the Vedantic Conception of Brahma,* by Pramadadasa Mittra, late officiating Anglo-Sanskrit Professor, Benares College. Published for the Royal Asiatic Society of Great Britain and Ireland, January 1878

yond the term to the notion. It will therefore be as well to open the remarks here to be offered on Babu Pramadadasa's interesting *Dialogue on the Vedantic Conception of Brahma* with an explication of the term so far as it can be explicated. The first step in any discussion of this kind is to efface any rude prenotions already in the mind, and to put clear and distinct conceptions in their place. Discussion must start from definitions.

Brahma, then, is the spiritual reality which, itself unmanifested, underlies all the manifested and unreal world of experience Spiritual reality is here *not* convertible with conscious spirit. On the contrary, the spiritual reality that underlies all things, according to the poets of the Upanishads, has *per se* no cognition of objects ; it transcends the relation of subject and object, lies beyond all duality. True, it is declared to be existence, intelligence, beatitude. But the reader must not deceive himself. Brahma is not intelligence in the ordinary sense of the word. The intelligence, which the ultimate spiritual reality is, is said to be eternal knowledge without objects, self-luminousness, the imparting of light to all the cognitions of personal intelligences. In the absence of such light, it is said, the whole series of sentiencies and their environments would be involved in blindness and darkness. Brahma again is beatitude But let not the reader deceive himself, Brahma is not beatitude in any explicable sense of the term. It is a bliss beyond the distinction of subject and object, a bliss compared by the Indian sages to the relief afforded by dreamless sleep to care-encumbered men. It is only by a metaphor that Brahma is said to be omniscient, says Anandagiri. Its omniscience, or rather the omniscience that it is, is self-luminousness, the imparting of light to all things else. It is said to be the witness of the cognitions of all intelligences. But again the reader must not be deceived. It is the witness only in the sense that it is the sole reality underlying these cognitions, that, without the light of which they could not appear. The idea of Brahma is purely negative, at least from the point of view of understanding. Nevertheless, says Sankaracharya, it is not nonentity but entity, not a vacuum but a plenum ; for, carry the process of abstraction as far as it will go, and you will find that what is left in the mind is not nonentity but entity. It would of course be more correct to say, carry the process of abstraction as far as it will

go, and what you will find will be entity passing into nonentity, and nonentity passing back into entity. The reader may make the experiment for himself. At least he may, if he can find time in this busy Indian life of ours, and if he is not satisfied, he may let others think for him.

Brahma is thus undifferenced thought, neither thinker nor thing, but thought pure and simple, thought that has not yet developed itself into the duality of consciousness. Brahma is the Idea. It is only at a certain height that thought rises into the thought of this or that thinker. It may be said again, and truly it has been said often enough, that thought is impossible till there be a thinker to think it. The modern Transcendentalist would reply as follows. If thought did not precede the thinker and that of which he thought, then try to conceive any other origin of things. Go back if you will, to a nebula. The nebula is a multitude of particles in space and time. Here are three forms of thought for you at once, plurality, space, time. Nay, you cannot get your Nebula without taking in another form of thought your own personality as contemplating it. And to fill in the conception of the nebula you must fill in these forms of thought with sensible qualities. The nebula is no more the origin of things than the chair I sit upon, or the table I write at. Nor is my own mind, looked at individually, or any other personality, the origin of things. A personality supposes an environment of objects, supposes time and space, and objects in time and space; in other words, supposes things already originated. That which lies beyond the thinker, and that of which he thinks, is thought itself. The totality of things is best figured as an obscure thought developing itself, presenting itself in higher and higher concretions, throughout the ages. All things exist for the evolution of an intelligence more and more perfect. The metaphysician has not only to provide an intelligible origin of things he has also to find a *locus* for the eternal verities of the reason, for the truths that are always true, be they known or be they unknown. And the *locus* for these truths is found in the idea: of it they are partial revelations.

Brahma is the idea of modern transcendentalism, or rather the earliest known foreshadowing of the idea. The progressive explication of the idea, the march towards the ideal, as certified in the history of the world interpreted in the light first of science then of the study

of humanity, is of course absent. How could it be otherwise? Still Brahma is the idea, thought as yet undeveloped into the duality of consciousness, as the origin of things. It would be useless to attempt the proof of this within the compass of these lines, and for the proof the reader must be referred to two recent essays on the Philosophy of the Upanishads in the *Calcutta Review*.

Babu Pramadadas's Dialogue opens with the question: "Is the God of the Vedantin a conscious or unconscious being? and the reply, Your question rendered into Sanskrit, *Vedāntābhimatam brahma chetanam achetanam vā*, would indeed startle a Vedantin, who would consider it an insult offered to his philosophy of pure spiritualism." Undoubtedly it would surprise him if so rendered, but then unfortunately it cannot fairly be so translated. God cannot be translated by *brahman*, as the reader has already seen. And conscious cannot be translated by *chetan*, as the *chaitanya*, intelligence which is *brahman*, is not consciousness, but the illumination of cognitions and of *cognita*. The God (or rather Demiurgus) of the Vedanta is not Brahman *per se*, but Brahman as associated with the totality of illusion, as his "causal body," *Kāranasarīra*. God and the personal intelligences, say the Vedantins, enjoy beatitude in the state of dreamless sleep. The God of the Aristotelian is the *Intellectus agens*, the ever active and unchanging intellect, contemplating itself. The God of orthodox Christian theology is the absolute and infinite Being, related to finite intellect as a personality, in His own nature unkown and unknownable. The God of the modern Transcendentalist is the Idea already conscious of itself, perfect, and proceeding towards the perfect: *Deus est simul in esse et in fieri*. The Brahma of the Vedantins is, in the language of European philosophy, unconscious. Consciousness begins where duality begins.

The "presented self" of Dr. Mansel is not, as Babu Pramadadasa imagines, the *Pratyagātman* of the Vedanta. "The one *presented substance*, the source from which our data for thinking on the subject are originally drawn, is *myself*. Whatever may be the variety of the phenomena of consciousness, sensations by this or that organ, volitions, thoughts, imaginations, of all we are immediately conscious as affections of one and the same self. It is not by any after effort of reflection that I combine together sight and hearing, thought and voli-

tion, into a factitious unity or compounded whole: in each case I am immediately conscious of myself seeing and hearing, thinking and willing. This self-personality, like all other simple and immediate presentations, is indefinable; but it is so, because it is superior to definition." The presented self of Dr. Mansel is known in every act of cognition: the *Pratyāgātman* of the Vedanta is arrived at by getting beyond every mode of cognition into a state of pure indetermination. It is the "pure spirit beyond all objects of knowledge." "With what should one know the knower?" to cite a passage of the Brihadaranyaka Upanishada quoted by Babu Pramadadasa himself, apparently unobservant of the inconsistency.

"The Vedanta," the Babu writes, "is not favourable to the worldly pursuits of wealth or power or fame." True enough, it is not. But when he proceeds to say that "few philosophical systems are directly calculated to foster sentiments tending to the material advancement of a nation," we demur. The material progress of a nation, as history shows, accompanies its intellectual growth, and each new philosophy marks a new step in that intellectual growth. Philosophies are not the manufacture of this or that individual, but the efflorescence of the general intelligence at its successive periods of advance. The minds of average individuals in the higher races are permeated with philosophical terms and philosophical ideas, though they do not know it, and it is these that give rectitude to their actions, precision to their thoughts. And for the modern Transcendentalist in particular, it is his aspiration to live, not for himself, but for the progress of the race, to let the intelligence and beneficence, at work in the world, stream freely through him, to put the actual behind him, and to keep the ideal steadily in view. We of Europe are mostly Transcendentalists of this kind, though we know it not, and do not give due thanks to the philosophers whose influence has come to us because it is part of the influence of the age, and partly because it has reached us through the current literature. But it is time to come down from these heights. Let us descend, but still remember that it is from these heights that we draw our strength; and that whether we know or do not know it, whether we think for ourselves or let others think for us, the stream carries us all along, though some of us are waves and some are only ripplets.

# काशीविद्यासुधानिधिः



# THE PANDIT.

## A MONTHLY PUBLICATION

OF THE

## BENARES COLLEGE,

DEVOTED TO

## SANSKRIT LITERATURE.



## NEW SERIES.



## Vol. III.

BENARES:

PRINTED AND PUBLISHED BY THE PROPRIETORS,
E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS.

1879.

# INDEX TO VOLUME III. NEW SERIES.


ÁNANDA-VṚINDÁVANA-CHAMPÚ, 22, 100, 153, 193.

BRAHMA-SÚTRA-TÁTPARYA-VIVARAṆA, 469, 537, 605, 657, 712.

KÁŚIKÁ, 1.

KATIPAYA-PRAŚNA-VICHÁRA, 311.

REVIEW. THE VEDANTIC CONCEPTION OF BRAHMA, 444, 502.

ŚARÍRA-MÍMÁNSA-NYÁYA-SANGRAHA, 275, 348, 410.

ŚÁŚVATA-DHARMA-DÍPIKÁ, 432, 495, 562, 618, 672, 736.

TANTRA-VÁRTIKA, 65, 129, 257, 321, 385, 449, 513, 577, 641, 705.

YOGA-CHANDRIKÁ, 216.

अस्त्यन्तरेषु हेतुत्वं तत्परं वचनं हि तत्।
शब्दादिति च हेतुत्वं पञ्चम्यात्राभिधीयते ॥ १२० ॥
भवत्यत्ते ऽपि चेच्छ्रन्ताज्ज्ञानेन व्यवधिर्भवेत्।
गौणो ऽन्यथा प्रसिद्धो वा प्रयुज्येतान्यथा यदि ॥ १२१ ॥
न चान्यादृङ्निमित्तत्वं कस्य चित्संप्रतीयते।
स्वव्यापारव्यवायो हि सर्वस्मिन्नेव कारके ॥ १२२ ॥
दृष्टो व्यापार ईदृक् तु शब्दस्येत्यव्यवेतता।
गकारादेर्यदा चान्यो न लोके शब्द उच्यते ॥ १२३ ॥
तदा तस्मात्प्रतीते ऽर्थे शब्दादिति कथं भवेत्।
शब्दज्ञानादिसंस्कारव्यक्तस्फोटकृते ऽथ वा ॥ १२४ ॥
प्रत्यये शब्दजन्यत्वमतिगौणं प्रसज्यते।
संस्कारजननार्थं च न शब्दोच्चारणं मतम् ॥ १२५ ॥
अर्थप्रतीतिमुद्दिश्य प्रयुक्तस्य क्रमादयम्।
तस्मात्तादर्थ्यतश्शब्दः फलेन व्यपदिश्यते ॥ १२६ ॥
समुच्चयावबोधे तु व्यवधानं न केन चित्।
यदि चापूर्वसंस्कार इतिकर्तव्यतेष्यते ॥ १२७ ॥
वर्णो ऽन्त्योगमकस्तस्य शब्दत्वान्मुख्यता भवेत्।
वर्णा वा ध्वनयो वापि स्फोटं न पदवाक्ययोः ॥ १२८ ॥
व्यञ्जन्निव्यञ्जकत्वेन यथा दीपप्रभादयः।
सत्वाद्घटादिवच्चेति साधनानि यथारुचि ॥ १२९ ॥
लौकिकव्यतिरेकेण कल्पिते ऽर्थे भवन्ति हि।
नार्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकतः ॥ १३० ॥
घटादिवन्न दृष्टेन विरोधो धर्मसिद्धितः।
प्रतिषेधेत्त यो वर्णान् तज्ज्ञानानन्तरोद्भवान् ॥ १३१ ॥

दृष्टबाधो भवेत्तस्य शशिचन्द्रनिषेधवत् ।
वर्णोत्पादार्थधीरेषा तज्ज्ञानानन्तरोद्भवा ॥ १३२ ॥
येदृशी सा तदुत्था हि धूमादेरिव वह्निधीः ।
दीपवद्वागकारादिर्गवादेः प्रतिपादकः ।
ध्रुवं प्रतीयमानत्वात्तत्पूर्वं प्रतिपादनात् ॥ १३३ ॥
वर्णातिरेकः प्रतिषिध्यमानः पदेषु मन्दं फलमादधाति ।
कार्याणि वाक्यावयवाश्रयाणि सत्यानि कर्तुं कृत एव यत्नः १३४

॥ स्फोटवार्त्तिकम् ॥

आकृतिव्यतिरिक्ते ऽर्थे संबन्धो नित्यतास्य च ।
न सिध्येतामिति ज्ञात्वा तद्वाच्यत्वमिहोच्यते ॥ १ ॥
तत्सद्भावप्रसिद्ध्यर्थमत्र तावत्प्रयत्यते ।
वाच्यत्वे वक्ष्यते युक्तिर्व्यक्त्या सह बलाबले ॥ २ ॥
जातिमेवाकृतिं प्राहुर्व्यक्तिराक्रियते यया ।
सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम् ॥ ३ ॥
तन्निमित्तं च यत्किंचित्सामान्यं शब्दगोचरम् ।
सर्वे एवेच्छतीत्येवमविरोधो ऽत्र वादिनाम् ॥ ४ ॥
सर्ववस्तुषु बुद्धिश्च व्यावृत्त्यनुगमात्मिका ।
जायते ह्यात्मकत्वेन विना सा च न सिद्ध्यति ॥ ५ ॥
विशेषमात्रदृष्टे च न सामान्यमतिर्भवेत् ।
सामान्यमात्रबोधे तु निर्निमित्ता विशेषधीः ॥ ६ ॥
न चाप्यन्यतराभ्रान्तिरुपचारेण चेष्यते ।
दृढत्वात्सर्वदा बुद्धेर्भ्रान्तिस्तद्भ्रान्तिवादिनाम् ॥ ७ ॥
मुख्ययोश्चाथ दृष्टत्वान्नोपचारेण कल्पना ।
बाह्यार्थविषयत्वं च बुद्धीनां प्रतिपादितम् ॥ ८ ॥

अन्योन्यापेक्षिता नित्यं स्यात्सामान्यविशेषयोः।
विशेषाणां च सामान्यं ते च तस्य भवन्ति हि ॥ ९ ॥
निर्विशेषं न सामान्यं भवेच्छशविषाणवत्।
सामान्यरहितत्वाच्च विशेषास्तद्वदेव हि ॥ १० ॥
तदनात्मकरूपेण हेतू वाच्याविमौ पुनः।
तेन नात्यन्तभेदो ऽपि स्यात्सामान्यविशेषयोः ॥ ११ ॥
सामान्यबुद्धिशक्तत्वं विशेषेष्वेव यो वदेत्।
विना वस्त्वन्तरात्तेन वाच्यशक्तिस्तु कीदृशी ॥ १२ ॥
ग्राह्या किं वाथ संबोधाभिन्नैका वा तथैव च।
गृह्यते यदि सैका च जातिरेवान्यशब्दिका ॥ १३ ॥
भवेन्निर्विषया बुद्धिर्यदि शक्तिर्न गृह्यते।
न हि सद्भावमात्रेण विषयः कश्चिदिष्यते ॥ १४ ॥
परस्परविभिन्नत्वाद्विशेषा नैकबुद्धिभिः।
गृह्यन्ते विषयासत्वाच्छक्तिश्चैषां न विद्यते ॥ १५ ॥
भिन्नत्वे वापि शक्तीनामेकबुद्धिर्न लभ्यते।
विशेषशक्त्यभेदे च तावन्मात्रमतिर्भवेत् ॥ १६ ॥
भिन्ना विशेषशक्तिभ्यः सर्वेवानुगतापि च।
प्रत्येकं समवेता च तस्माज्जातिरपोष्यताम् ॥ १७ ॥
तेनात्मधर्मो भेदानामेकधीविषयो ऽस्ति नः।
सामान्यमाकृतिर्जातिः शक्तिर्वा सो ऽभिधीयताम् ॥ १८ ॥
ननु भिन्ने ऽपि सत्तादौ सामान्यमिति जायते।
बुद्धिर्विनापि सामान्यादन्यस्मात्सा कथं भवेत् ॥ १९ ॥
वनोपन्यासतुल्यो ऽयमुपन्यासः कृतस्त्वया।
भ्रान्तित्वेन हि नैतस्या भ्रान्तिर्गोत्वादिधीरपि ॥ २० ॥

शब्दात्पूर्वं हि सर्वेषु गवादाविव नैकधीः ।
वस्तुत्वं चात्र सामान्यं धर्मं केचित्प्रचक्षते ॥ २१ ॥
एवं तु कल्प्यमाने स्यात्सामान्यानामनन्तता ।
पुनस्तेन सहान्येषु सामान्यमतिरस्ति हि ॥ २२ ॥
विशेषेष्वपि वस्तुत्वात्सामान्यमिति धीर्भवेत् ।
सत्तादिष्वपि तेनैतत्सामान्यं नोपपद्यते ॥ २३ ॥
तस्मादेकस्य भिन्नेषु या वृत्तिस्तन्निबन्धनः ।
सामान्यशब्दः सत्तादावेकधीकरणेन वा ॥ २४ ॥
पिण्डेष्वेव च सामान्यं नान्तरा गृह्यते यतः ।
न ह्याकाशवदिच्छन्ति सामान्ये नाम किं चन ॥ २५ ॥
यद्वा सर्वगतत्वे ऽपि व्यक्तिः शक्त्यनुरोधतः ।
शक्तिः कार्यानुमेया हि व्यक्तिदर्शनहेतुका ॥ २६ ॥
तेन यत्रैव दृश्येत व्यक्तिः शक्तं तदेव तु ।
तेनैव च न सर्वासु व्यक्तिष्वेतत्प्रतीयते ॥ २७ ॥
भिन्नत्वे ऽपि हि कासां चिच्छक्तिः कश्चिदशक्तिकः ।
न च पर्यनुयोगो ऽस्ति वस्तुशक्तेः कदा चन ॥ २८ ॥
वह्निर्दहति नाकाशं को ऽत्र पर्यनुयुज्यताम् ।
न चान्या मृग्यते युक्तिर्यथा संदृश्यते तथा ॥ २९ ॥
न हि युक्त्यन्तरं नास्तीत्येतज्ज्ञानमनर्थकम् ।
धर्मश्चाव्यभिचार्यस्य न मृग्य उपलक्षणे ॥ ३० ॥
नानुमानावगम्यं तत् प्रत्यक्षे लक्षणेन किम् ।
स्वाभाविकश्च संबन्धो जातिव्यक्त्योर्न हेतुमान् ॥ ३१ ॥
तेनैतस्य प्रसिद्ध्यर्थं नान्यत्सामान्यमिष्यते ।
शक्तिसिद्धिवदेतस्य स्वभावो ऽत्र न वार्यते ॥ ३२ ॥

अन्योन्यापेक्षिता नित्यं स्यात्सामान्यविशेषयोः ।
विशेषाणां च सामान्यं ते च तस्य भवन्ति हि ॥ ९ ॥
निर्विशेषं न सामान्यं भवेच्छशविषाणवत् ।
सामान्यरहितत्वाच्च विशेषास्तद्वदेव हि ॥ १० ॥
तदनात्मकरूपेण हेतू वाच्याविमौ पुनः ।
तेन नात्यन्तभेदो ऽपि स्यात्सामान्यविशेषयोः ॥ ११ ॥
सामान्यबुद्धिशक्तत्वं विशेषेष्वेव यो वदेत् ।
विना वस्त्वन्तरात्तेन वाच्यशक्तिस्तु कीदृशी ॥ १२ ॥
ग्राह्या किं वाथ संबोधाभिन्नैका वा तथैव च ।
गृह्यते यदि सैका च जातिरेवान्यशब्दिका ॥ १३ ॥
भवेन्निर्विषया बुद्धिर्यदि शक्तिर्न गृह्यते ।
न हि सद्भावमात्रेण विषयः कश्चिदिष्यते ॥ १४ ॥
परस्परविभिन्नत्वाद्विशेषा नैकबुद्धिभिः ।
गृह्यन्ते विषयासत्त्वाच्छक्तिश्चैषां न विद्यते ॥ १५ ॥
भिन्नत्वे वापि शक्तीनामेकबुद्धिर्न लभ्यते ।
विशेषशक्त्यभेदे च तावन्मात्रमतिर्भवेत् ॥ १६ ॥
भिन्ना विशेषशक्तिभ्यः सर्वत्रानुगतापि च ।
प्रत्येकं समवेता च तस्माज्जातिरपोष्यताम् ॥ १७ ॥
तेनात्मधर्मो भेदानामेकधीविषयो ऽस्ति नः ।
सामान्यमाकृतिर्जातिः शक्तिर्वा सो ऽभिधीयताम् ॥ १८ ॥
ननु भिन्ने ऽपि सत्तादौ सामान्यमिति जायते ।
बुद्धिर्विनापि सामान्यादन्यस्मात्सा कथं भवेत् ॥ १९ ॥
वनोपन्यासतुल्यो ऽयमुपन्यासः कृतस्त्वया ।
भ्रान्तित्वेन हि नैतस्या भ्रान्तिर्गोत्वादिधीरपि ॥ २० ॥

शब्दात्पूर्वं हि सर्वेषु गवादाविव नैकधीः ।
वस्तुत्वं चात्र सामान्यं धर्मं केचित्प्रचक्षते ॥ २१ ॥
एवं तु कल्प्यमाने स्यात्सामान्यानामनन्तता ।
पुनस्तेन सहान्येषु सामान्यमतिरस्ति हि ॥ २२ ॥
विशेषेष्वपि वस्तुत्वात्सामान्यमिति धीर्भवेत् ।
सत्तादिष्वपि तेनैतत्सामान्यं नोपपद्यते ॥ २३ ॥
तस्मादेकस्य भिन्नेषु या वृत्तिस्तन्निबन्धनः ।
सामान्यशब्दः सत्तादावेकधीकरणेन वा ॥ २४ ॥
पिण्डेष्वेव च सामान्यं नान्तरा गृह्यते यतः ।
न ह्याकाशवदिच्छन्ति सामान्ये नाम किं चन ॥ २५ ॥
यद्वा सर्वगतत्वे ऽपि व्यक्तिः शक्त्यनुरोधतः ।
शक्तिः कार्यानुमेया हि व्यक्तिदर्शनहेतुका ॥ २६ ॥
तेन यत्रैव दृश्येत व्यक्तिः शक्तं तदेव तु ।
तेनैव च न सर्वासु व्यक्तिष्वेतत्प्रतीयते ॥ २७ ॥
भिन्नत्वे ऽपि हि कासां चिच्छक्तिः कश्चिदशक्तिकः ।
न च पर्यनुयोगो ऽस्ति वस्तुशक्तेः कदा चन ॥ २८ ॥
वह्निर्दहति नाकाशं को ऽत्र पर्यनुयुज्यताम् ।
न चान्या मृग्यते युक्तिर्यथा संदृश्यते तथा ॥ २९ ॥
न हि युक्त्यन्तरं नास्तीत्येतज्ज्ञानमनर्थकम् ।
धर्मश्चाव्यभिचार्यस्य न मृग्य उपलक्षणे ॥ ३० ॥
नानुमानावगम्यं तत् प्रत्यक्षे लक्षणेन किम् ।
स्वाभाविकश्च संबन्धो जातिव्यक्त्योर्न हेतुमान् ॥ ३१ ॥
तेनैतस्य प्रसिद्ध्यर्थं नान्यत्सामान्यमिष्यते ।
शक्तिसिद्धिवदेतस्य स्वभावो ऽत्र न वार्यते ॥ ३२ ॥

यद्वा नैमित्तिकत्वे ऽपि तावन्मात्रप्रतीक्षणात् ।
विशेषेष्वेव लब्धेषु केषु चिन्नान्यवाञ्छनम् ॥ ३३ ॥
न व्यञ्जन्त्यपरे कस्माद्यतस्तेषु न दृश्यते ।
तेभ्यो ऽपि न निवृत्त्यर्थं मृग्यो हेतुः स्वभावतः ॥ ३४ ॥
सामान्यं नान्यदिष्टं चेत्तस्य वृत्तेर्नियामकम् ।
गोत्वेनापि विना कस्माद्गोबुद्धिर्न नियम्यते ॥ ३५ ॥
यथा तुल्ये ऽपि भिन्नत्वे केषु चिद्वृत्त्यपेक्षिता ।
गोत्वादेरनिमित्तापि तथा बुद्धिर्भविष्यति ॥ ३६ ॥
विषयेण हि बुद्धीनां विना नोत्पत्तिरिष्यते ।
विशेषादन्यदिच्छन्ति सामान्यत्वेन तद्ध्रुवम् ॥ ३७ ॥
ता हि तेन विनोत्पन्ना मिथ्याः स्युर्विषयादृते ।
न त्वन्येन विना वृत्तिस्सामान्यस्येह दुष्यति ॥ ३८ ॥
अनिष्यमाणे सामान्ये वृत्तिः शब्दानुमानयोः ।
नैव स्यान्न हि संबन्धो भेदैरानन्त्यतो भवेत् ॥ ३९ ॥
अनुभूततया चासौ पुरुषस्योपयुज्यते ।
जातिव्यक्त्योस्तु संबन्धे नानुभूत्या प्रयोजनम् ॥ ४० ॥
सिद्धे विषयरूपे च गोत्वादाविन्द्रियैः पुनः ।
अर्थापत्त्युपलब्ध्या स्याच्छक्तिरेका नियामिका ॥ ४१ ॥
न चात्महेतुमेवासौ सिद्धा बाधितुमर्हति ।
शक्तिश्च नैतया बुध्या नेन्द्रियैस्सा हि गृह्यते ॥ ४२ ॥
सामान्यान्तरयोगानामनिष्टा या च वर्ण्यते ।
तया सामान्यनाशः स्यात्स च दृष्टेन बाध्यते ॥ ४३ ॥
संबन्धस्तस्य हेतुर्वा तद्ग्रहेण च कारणम् ।
स्वरूपतो गृहीते ऽर्थे पश्चादेतद्विकल्प्यते ॥ ४४ ॥

साम्ना ह्येकार्थसंबन्धिगोत्वमित्युपलक्षणम् ।
न च स्वसमवाय्येव केवलं चिन्हमिष्यते ॥ ४५ ॥
साम्नादिभ्यस्तु पिण्डस्य भेदो नात्यन्ततो यदा ।
सामान्यस्य च पिण्डेभ्यस्तदा स्यादेतदुत्तरम् ॥ ४६ ॥
कस्मात्साम्नादिमत्स्वेव गोत्वं यस्मात्तदात्मकम् ।
तादात्म्यमस्य कस्माच्चेत्स्वभावादिति गम्यताम् ॥ ४७ ॥
उपलब्ध्यनुसारेण व्यवस्थासिद्धिरीदृशी ।
स्वतो गोत्वादिभेदस्तु न तु व्यञ्जकभेदतः ॥ ४८ ॥
मा भूद्गुतादिवन्मिथ्या व्यञ्जकस्य तु किंकृतः ।
भेदो हस्त्यादिपिण्डेभ्यः स्वतश्चेदिह तत्समम् ॥ ४९ ॥
व्यङ्ग्यजातिविशेषाच्चेत्प्राप्तमन्योन्यसंश्रयम् ।
तस्मात्स्वाभाविको भेदो जातिव्यक्त्योः प्रतीयते ॥ ५० ॥
अनेकानन्यवृत्तित्वान्न सामान्यविशेषयोः ।
एकवस्त्वात्मता युक्ता किं चित्तेनौपचारिकम् ॥ ५१ ॥
भिन्नेभ्यश्चाप्यभिन्नत्वाद्भेदस्तत्स्वात्मवद्भवेत् ।
एकस्माद्वाप्यभिन्नत्वाद् व्यक्त्येकत्वं प्रतीयते ॥ ५२ ॥
एकानेकत्वमेकस्य तथान्यानन्यता कथम् ।
तत्सामान्यं विशेषश्चेत्येवमादि च दुष्करम् ॥ ५३ ॥
विरोधस्तावदेकान्ताद्युक्तमच न युज्यते ।
सामान्यानन्यविज्ञाते विशेषे नैकवृत्तिता ॥ ५४ ॥
सामान्यानन्यवृत्तित्वं विशेषात्मैकभावतः ।
एवं च परिहर्तव्या भिन्नाभिन्नत्वकल्पना ॥ ५५ ॥
केन चिद्व्यात्मनैकत्वं नानात्वं चास्य केन चित् ।
सामान्यस्य तु यो भेदं ब्रूते तस्य विशेषतः ॥ ५६ ॥

दर्शयित्वाभ्युपेतत्वविशेषैक्यं च जातितः ।
यथा कल्माषवर्णस्य यथेष्टं वर्णनिग्रहः ॥ ५७ ॥
चित्रत्वाद्वस्तुनो ऽप्येवं भेदाभेदावधारणम् ।
सामान्यांशं तु निष्कृष्य भेदो येन प्रसाध्यते ॥ ५८ ॥
तस्य हेतोरसिद्धत्वं सिद्धश्चेत्सिद्धसाधनम् ।
भेदेभ्यो ऽनन्यरूपेण सामान्यं गृह्यते यदा ॥ ५९ ॥
तदा विशेषमात्रेण वस्तु प्रत्यवभासते ।
तदुद्भूत्या च सामान्यं तद्भावानुगुणं स्थितम् ॥ ६० ॥
सदप्यग्राह्यरूपत्वादसद्वत्प्रतिभाति नः ।
विशेषानपि सामान्याद्यदा भेदेन बुध्यते ॥ ६१ ॥
तदा सामान्यमात्रत्वमेवमेव प्रतीयते ।
यदा तु शबलं वस्तु युगपत्प्रतिपद्यते ॥ ६२ ॥
तदान्यानन्यभेदादि सर्वमेव प्रलीयते ।
न च तत्तादृशं कश्चिच्छब्दः शक्नोति भाषितुम् ॥ ६३ ॥
सामान्यांशानपोद्धृत्य पदं सर्वं प्रवर्तते ।
समस्तवस्त्वपेक्षां च पदार्थानामपोद्धृतिम् ॥ ६४ ॥
केचिदाहुरसद्रूपामंशत्वं तु न वार्यते ।
सारूप्यमेव सामान्यं पिण्डानां येन कल्प्यते ॥ ६५ ॥
तेन सारूप्यशब्देन किं पुनः प्रतिपद्यते ।
समानरूपभावश्चेज्जातिस्सास्माभिरिष्यते ॥ ६६ ॥
सादृश्यमथ सारूप्यं कस्य केनेति कथ्यताम् ।
न तावच्छाबलेयेन बाहुलेयादयः समाः ॥ ६७ ॥
विशेषरूपतो ये ऽपि तत्संस्थानादिभिस्समाः ।
शाबलेय इवेति स्यात्तत्र बुद्धिर्न गौरिव ॥ ६८ ॥

शावलेयो ऽयमिति वा भ्रान्त्या गौरिति नास्ति तु ।
शावलेयस्वरूपं च न गौरित्यवतिष्ठते ॥ ६९ ॥
तदन्येषु हि गोबुद्धिर्न स्यात्तत्सदृशेष्वपि ।
दृश्यते सा न चान्यच्च गोरूपं तत्र विद्यते ॥ ७० ॥
न चान्यो गौः प्रसिद्धो ऽस्ति यत्सादृश्येन धीर्भवेत् ।
न चापि स इति ज्ञानं सदृशेष्वस्ति सर्वदा ॥ ७१ ॥
सर्वपुंसामतो भ्रान्तिर्नैषा बाधकवर्जनात् ।
सर्वज्ञानानि मिथ्या च प्रसज्यन्ते ऽत्र कल्पने ॥ ७२ ॥
विशेषग्रहणाभावादेको गौः कश्च कथ्यताम् ।
बभूव यद्यसौ पूर्वमस्मदादेस्तदग्रहात् ॥ ७३ ॥
सादृश्यावधृतिर्नास्तीत्यतो गोधीर्नलभ्यते ।
न चावयवसामान्यैर्विना सादृश्यकल्पना ॥ ७४ ॥
सामान्यप्रत्ययोत्पादो न विशेषेषु जायते ।
व्यक्तितश्चातिरेको ऽस्य स्यान्न वेति विचारिते ॥ ७५ ॥
सामान्यमेव सादृश्यं भवेद्वा व्यक्तिमात्रकम् ।
तेन नात्यन्तभिन्नो ऽर्थस्सारूप्यमिति वर्णितम् ॥ ७६ ॥
अन्ये विन्ध्यनिवासेन भ्रान्तेस्सादृश्यमुच्यते ।

॥ इत्याकृतिवार्त्तिकम् ॥

अगोनिवृत्तिस्सामान्यं वाच्यं यैः परिकल्पितम् ।
गोत्वं वस्त्वेव तैरुक्तमगोपोहगिरा स्फुटम् ॥ १ ॥
भावान्तरमभावो हि पुरस्तात्प्रतिपादितः ।
तत्राश्वादिनिवृत्त्यात्माभावः क इतिकथ्यताम् ॥ २ ॥
नेष्टो ऽसाधारणस्तावद्विषयो निर्विकल्पनात् ।
तथा च शावलेयादिरसामान्यप्रसङ्गतः ॥ ३ ॥

शाबलेयादिरूपं हि न सामान्यं परस्परम् ।
नचैकमितरेषां वस्त्वानन्त्यार्थता भवेत् ॥ ४ ॥
न च साक्षाद्विशेषस्य ते ऽपोह्या इति युक्तिमत् ।
न शाबलेयविज्ञानमगोव्यावृत्तिबन्धनम् ॥ ५ ॥
निवृत्त्या बाहुलेयादेस्तद्विज्ञानं प्रवर्त्तते ।
कुर्यादगोनिवृत्तिं चेन्नापोहेतात्मवद्धितान् ॥ ६ ॥
तेनांशेनानपोहश्च स्वरूपेणाप्यपोहनम् ।
कल्प्यते चेद्विरोधः स्यात्सममाक्षेपवारणे ॥ ७ ॥
तस्मात्प्रत्यात्मकैरूपैरगोपोहो न कल्पते ।
समुदायो ऽपि नैतेषामगोव्यावृत्तिबन्धनम् ॥ ८ ॥
सर्वोपलब्धौ तद्बुद्धिर्व्यासज्यैवं प्रवर्त्तते ।
न प्रत्येकं भवेदेषा न समस्तेष्वशक्तितः ॥ ९ ॥
तस्मात्सर्वेषु यद्रूपं प्रत्येकं परिनिष्ठितम् ।
गोबुद्धिस्तन्निमित्ता स्याद्गोत्वादन्यच्च नास्ति तत् ॥ १० ॥
ननु च प्रागभावादौ सामान्यं वस्तु नेष्यते ।
सत्तैव ह्यत्र सामान्यमनुत्पत्त्यादिरूपिता ॥ ११ ॥
तामुत्पत्त्याद्यनुस्यूतां सत्तेति प्रतिजानते ।
अन्यापोहानुविद्धा तु सैवाभावः प्रतीयते ॥ १२ ॥
अनित्यत्वं विनाशाख्यक्रियासामान्यमुच्यते ।
अब्राह्मणत्वं किं तु स्याद्भिन्नेषु क्षत्रियादिषु ॥ १३ ॥
पुरुषत्वं च तुष्टं (१) हि विशेषेषु च नास्ति धीः ।
सामान्यप्रत्ययश्चैषु प्रत्येकमुपजायते ॥ १४ ॥

(१) I suppose the reading चतुष्के for. चतुष्टं ।

तेनात्र ब्राह्मणाभावः सामान्य स्यादवस्तुतत् ।
गोत्वादावपि तेनैव सामान्यप्रत्ययो भवेत् ॥ १५ ॥
केश्चित्त्वेकशब्दत्वमत्रादाविव कल्पितम् ।
जातित्रयस्य नैतत्तु संभवत्यघटादिषु ॥ १६ ॥
नात्र ह्यनन्तके भेदे साधारण्यं निरूप्यते ।
तस्मात्क्रियागुणाः के चिद् हेतवो ऽनन्यवर्त्तिनः ॥ १७ ॥
पुरुषत्वं नञा चैतद् ब्राह्मणेभ्यो निवर्त्तितम् ।
चातुर्वर्ण्यप्रसक्तं सद्गम्यते ऽर्थादिभिर्यथा ॥ १८ ॥
यद्यप्यवान्तरा नास्ति त्रिषु जातिर्व्यवस्थिता ।
नञ्सामर्थ्यान्तरत्वं तु त्र्याधारं संप्रतीयते ॥ १९ ॥
शब्दसामर्थ्यभेदेन वर्णेषु मतिभिन्नता ।
पुंस्त्वे त्रिचतुराधारे पर्युदासस्वरूपतः ॥ २० ॥
दूरान्तिके त्तणे शक्तिर्गृध्रवायसचक्षुषोः ।
यथा रूपे तथा पुंस्त्वे पुमब्राह्मणशब्दयोः । २१ ॥
ब्राह्मणव्यतिरिक्तार्थवृत्तिपुंस्त्वमितीदृशम् ।
वाक्यं यत्र प्रवर्त्तेत तत्र ब्राह्मणधीः पदे ॥ २२ ॥
पार्थिवत्वादिसामान्यमेवमेवाघटादिषु ।
घटत्वादिविनिर्मुक्तं विषयस्संप्रतीयते ॥ २३ ॥
असाधारणभावाच्च न भा शब्दो विशेषितः ।
तावन्मात्रेण रहिते सामान्ये व्यवतिष्ठते ॥ २४ ॥
विशेषे प्रतिषिद्धे हि सामान्यं यदनन्तरम् ।
सामान्याकाङ्क्षिणं शब्दं निरुणद्धि तदात्मनि ॥ २५ ॥
प्रथमातिक्रमे तस्य कारणं नैव विद्यते ।
ब्राह्मणत्वादतोपेतं नरत्वमवशिष्यते ॥ २६ ॥

व्युदस्य ब्राह्मणत्वं च नञि जाते विशेषणे ।
नरत्वोदसनं यत्तु कल्पेताश्रुतमेव तत् ॥ २७ ॥
तस्माद्यस्यैव ते भेदा निषिध्यरंस्तदर्थत: ।
भेदान्तरस्थं सामान्यं लोके ऽप्येवं प्रतीयते ॥ २८ ॥
प्रसंगिन्यां च तद्बुद्धौ निषेधो ऽर्थादपीष्यते ।
तन्मात्ररहिते चार्थे सादृश्यात्तन्मतिर्भवेत् ॥ २९ ॥
सादृश्यमेव वा वाच्यमिष्टमब्राह्मणादिषु ।
तच्चावयवसामान्याद्विनाप्येतेन लक्ष्यते ॥ ३० ॥
क्व चिद्विनापि सादृश्यात्साहचर्यादिहेतुका ।
नञ्युक्तशब्दवृत्ति: स्याद्यथा वत्स्यत्यनीक्षणे ॥ ३१ ॥
ईक्षणव्यतिरिक्ता हि क्रिया तत्राप्यपेक्षिता ।
प्रत्यासत्तेर्न संकल्पमतिक्रम्य प्रतीयते ॥ ३२ ॥
नामधात्वर्थयोगी च नैव नञ् प्रतिषेधक: ।
वदतो ऽब्राह्मणाधर्मावन्यमात्रविरोधिनौ ॥ ३३ ॥
यत्राप्याख्यातसंबन्धात्प्रतिषेध: प्रतीयते ।
तत्रौदासीन्यवस्त्वेव प्रतिपत्ता ऽवलम्बते ॥ ३४ ॥
तस्माद्वस्तुन्यपोहा: स्युरपि वा वस्तुकल्पने ।
प्रागन्त्येभ्यो विशेषेभ्यो न किं चिद्वस्तु लभ्यते ॥ ३५ ॥
न चान्यैर्व्यवहारो ऽस्ति शक्यं नैषां निरूपणम् ।
अपोहशब्दवाच्या या शून्यतान्यप्रकाशिका ॥ ३६ ॥
तस्या वाश्वादिबुद्धीनामात्मांशग्रहणं भवेत् ।
तत्रान्यापोहवाच्यत्वं मुधैवाभ्युपगम्यते ॥ ३७ ॥
सामान्यं वस्तु रूपं हि बुद्ध्याकारो भविष्यति ।
शब्दार्थो ऽर्थानपेक्षो हि वृथापोह: प्रकल्पित: ॥ ३८ ॥

वस्तुरूपा च सा बुद्धिश्शब्दाद्यैरुपजायते ।
तेन वस्त्वेव कल्पेत वाच्यं बुद्ध्यनपोहकम् ॥ ३९ ॥
असत्यपि च बाह्ये ऽर्थे वाक्यार्थप्रतिभा यथा ।
पदादपि तथैव स्यात्किमपोहः प्रकल्प्यते ॥ ४० ॥
बुद्ध्यन्तराद्व्यवच्छेदो न च बुद्धेः प्रतीयते ।
स्वरूपोत्पादमात्राच्च नान्यमंशं बिभर्त्ति सा ॥ ४१ ॥
भिन्नसामान्यवचना विशेषवचनाश्च ये ।
सर्वे भवेयुः पर्याया यद्यपोहस्य वाच्यता ॥ ४२ ॥
न तु भेदादपोहानां प्रसङ्गो ऽयं न युज्यते ।
सामान्यापोहक्लृप्त्या चेद्वस्तुमात्रे समं तव ॥ ४३ ॥
भिद्यते मम वस्तुत्वात्सामान्यानि परस्परम् ।
असंकीर्णस्वभावानि न चैकत्वं वितन्यते ॥ ४४ ॥
संसृष्टैकत्वनानात्वविकल्परहितात्मनाम् ।
अवस्तुत्वादपोहानां तव स्याद्भिन्नता कथम् ॥ ४५ ॥
यदि वा भिद्यमानत्वाद्वस्त्वसाधारणांशवत् ।
अवस्तुत्वे त्वनानात्वात्पर्यायत्वान्न मुच्यसे ॥ ४६ ॥
ननु चापोह्यभेदेन भेदो ऽपोहस्य सेत्स्यपि ।
न विशेषः स्वतः स्तस्य परतश्चोपचारिकः ॥ ४७ ॥
तेनैवाधारभेदेनाप्यस्य भेदो न युज्यते ।
न हि संबन्धिभेदेन भेदो वस्तुन्यपीष्यते ॥ ४८ ॥
किमुतावस्त्वसंसृष्टमन्यतश्चानिवर्त्तितम् ।
अनवाप्तविशेषांशं यत्किमप्यनिरूपितम् ॥ ४९ ॥
तस्माद्यथैव भेदे ऽपि पिण्डानां नैव भिद्यते ।
तथैवापोहभेदे ऽपि नानेको ऽयं भविष्यति ॥ ५० ॥

भेदे वा प्रतिपिण्डं स्यादगोपोहस्तथा सति ।
सामान्यं शाबलेयादेरिति नेष्टं प्रसिद्ध्यति ॥ ५१ ॥
संसर्गिणो ऽपि चाधारा यं न भिदन्ति रूपतः
अपोह्यैः स बहिर्भूतैर्भिद्येतेत्यपि कल्पना ॥ ५२ ॥
अगव्यश्चातिरेकः स्यादनश्वश्च गवाधिकः ।
शेषं हस्त्याद्यपोह्यं तु द्वयोरपि न भिद्यते ॥ ५३ ॥
तत्रैकभेदाद्भेदो ऽस्तु बहुभेदादभिन्नता ।
भूयसां स्यात्सधर्मत्वमित्यभेदः प्रसज्यते ॥ ५४ ॥
गौश्च हस्त्याद्यपोहेन नाश्वरूपाद्विशेष्यते ।
करोति तदपोहं चेदैकरूप्यं विरुध्यते ॥ ५५ ॥
सर्वशब्देषु चैकैकमपोह्यमतिरिच्यते ।
तत्र साधारणत्वेन तन्मात्रापोह्यता भवेत् ॥ ५६ ॥
ततो ऽश्वापोहरूपत्वात्सिंहादिस्सर्व एव ते ।
तन्निमित्तमगोपो ऽहं बिभ्रदुच्येत गौरिति ॥ ५७ ॥
सर्वापोहो यदीष्येत स वक्तव्यः कथं पुनः ।
यदि प्रत्येकरूपेण नापोह्यानन्तता भवेत् ॥ ५८ ॥
भिन्नत्वाच्चाप्यपोह्यानां भिन्नो ऽपोहः प्रसज्यते ।
तत्रैकस्मिन्भवेत्पिण्डे ऽनन्तजातिसमन्वयः ॥ ५९ ॥
ततो गौरिति सामान्यं वाच्यमेकं न सिध्यति ।
जात्यन्तरमतिश्चैषु भवेज्जात्यन्तरेष्विव ॥ ६० ॥
समुदायात्मना नापि भवेदेषामपोह्यता ।
समुदायो हि नैकेन विना धर्मेण जायते ॥ ६१ ॥
नाप्येकदेशता तेषामस्ति नाप्येककालता
व्यतिरिक्तश्च संघातस्तेषां कश्चिन्न विद्यते ॥ ६२ ॥

यदि त्वव्यतिरिक्तः स्यादानन्त्यं तदवस्थितम् ।
यदि सामान्यरूपेण ते ऽपोह्यं तेन वस्तुना ॥ ६३ ॥
कथं वा वस्त्वपोह्येत नाभावो भावमृच्छति ।
अपोह्यमाने चाभावे भाव एवावशिष्यते ॥ ६४ ॥
अपोह्यभेदक्लृप्तिश्च नाभावाभेदतो भवेत् ।
तद्भेदो ऽपोहभेदाच्चेत्प्राप्तमन्योन्यसंश्रयम् ॥ ६५ ॥
गोसामान्यस्य भिन्नत्वादगौरित्येष भिद्यते ।
अगौरित्यस्य भेदेन गोसामान्यं च भिद्यते ॥ ६६ ॥
अगावो ऽश्वादयश्च स्युस्ते ऽप्यभावात्मकाः शुभाः ।
कर्काद्यपेक्षया ते ऽपि तथेत्येवावगम्यते ॥ ६७ ॥
किमपोह्यं क्व चापोहो गोपिण्डेष्वेवमेव च ।
तस्य स्याद् द्वयमप्येतदन्त्येषु परमाणुषु ॥ ६८ ॥
न चान्त्येषु द्वयोरस्ति व्यवहारो ऽभिधां प्रति ।
गवाश्वपरमाणूनां विशेषश्च न विद्यते ॥ ६९ ॥
स्वरूपजातिसंस्थानपरिमाणादिलक्षणः ।
किमपोह्यं क्व चापोहस्तत्रापि न विशिष्यते ॥ ७० ॥
न चाप्रसिद्धसारूप्यानपोहविषयात्मना ।
शक्तः कश्चिदपि ज्ञातुं गवादीनविशेषतः ॥ ७१ ॥
अपोह्यानपि चाश्वादीनेकधर्मान्वयादृते ।
न निरूपयितुं शक्तिस्तत्रापोहो न सिध्यति ॥ ७२ ॥
न चान्वयविनिर्मुक्ते प्रवृत्तिर्लिङ्गशब्दयोः ।
ताभ्यां च न विनापोहो न वा साधारणे ऽन्वयः ॥ ७३ ॥
अपोहश्चाप्यनिष्पन्नसाहचर्यं क्व दृश्यताम् ।
तस्मिन्नदृश्यमाने च न तयोः स्यात्प्रमाणता ॥ ७४ ॥

न चादर्शनमात्रेण ताभ्यां प्रत्यायनं भवेत् ।
सर्वत्रैव ह्यदृष्टत्वात्प्रत्याप्यं नावशिष्यते ॥ ७५ ॥
अथासत्यपि सारूप्ये स्यादपोहस्य कल्पना ।
गवाश्वयोरयं कस्मादगोपोहो न कल्प्यते ॥ ७६ ॥
शाबलेयाच्च भिन्नत्वं बाहुलेयाश्वयोस्समम् ।
सामान्यं नान्यदिष्टं चेत्क्वागोपोहः प्रवर्त्तताम् ॥ ७७ ॥
इन्द्रियैर्नाप्यगोपोहः प्रथमं व्यवसीयते ।
नान्यत्र शब्दवृत्तिश्च किं दृष्ट्वा स प्रयुज्यताम् ॥ ७८ ॥
पूर्वोक्तेन प्रबन्धेन नानुमाप्यत्र विद्यते ।
संबन्धानुभवो ऽप्यस्य तेन नैवोपपद्यते ॥ ७९ ॥
निवृत्तिवाचिनश्शब्दा न प्रसिद्धाश्च यान्प्रति ।
तेषामगोरसिद्धत्वान्न सामान्यनिराक्रिया ॥ ८० ॥
अगोशब्दाभिधेयत्वं गम्यतां च कथं पुनः ।
न दृष्टो यत्र गोशब्दसंबन्धानुभवक्षणे ॥ ८१ ॥
एकस्मात्तर्हि ते पिण्डाद्यदन्यत्सर्वमेव तत् ।
भवेदपोह्यमित्येवं न सामान्यस्य बाध्यता ॥ ८२ ॥
सिद्धश्चागोरपोह्येत गोनिषेधात्मकश्च सः ।
तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते ॥ ८३ ॥
नाधाराधेयवृत्त्यादिसंबन्धश्चाप्यभावयोः ।
न चासाधारणं वस्तु गम्यते ऽपोहवत्तया ॥ ८४ ॥
कथं वा परिकल्प्येत संबन्धो वस्त्ववस्तुनोः ।
स्वरूपसत्त्वमात्रेण न च किंचिद्विशेषणम् ॥ ८५ ॥
स्वबुद्ध्यारज्यते येन विशेष्यं तद्विशेषणम् ।
न चाप्यश्वादिशब्देभ्यो जायते ऽपोहबोधनम् ॥ ८६ ॥

विशेषबुद्धिरिष्टेह न वा ज्ञातविशेषणा ।
न चान्यद्रूपमन्यादृक्कुर्याज्ज्ञानं विशेषणम् ॥ ८७ ॥
कथं चान्यादृशे ज्ञाते तदुच्येत विशेषणम् ।
अथान्यथा विशेष्ये ऽपि स्याद्विशेषणकल्पना ॥ ८८ ॥
तथा सति हि यत्किंचित्प्रसज्येत विशेषणम् ।
अभावरूपगम्ये च न विशेष्ये ऽस्ति वस्तुता ॥ ८९ ॥
विशेषितमपोहेन वस्तु वाच्यं न ते ऽस्त्यतः ।
यद्यप्यपोहनिर्मुक्ता न वृत्तिः शब्दलिङ्गयोः ॥ ९० ॥
युक्ता तथापि बुद्धिस्तु ज्ञातुर्वस्त्ववलम्बते ।
न चासाधारणं वस्तु बुद्धौ विपरिवर्त्तते ॥ ९१ ॥
न चापि निर्विकल्पत्वात्तस्य युक्ता विशेष्यता ।
शब्देनागम्यमानं च विशेष्यमिति साहसम् ॥ ९२ ॥
तेन सामान्यमेष्टव्यं विषयो बुद्धिशब्दयोः ।
यदा वा शब्दवाच्यत्वान्न व्यक्तीनामपोह्यता ॥ ९३ ॥
तदापोह्येत सामान्यं तस्यापोहाच्च वस्तुता ।
नापोह्यत्वमभावानामभावाभाववर्जनात् ॥ ९४ ॥
व्यक्तौ ऽपोहान्तरे ऽपोहस्तस्मात्सामान्यवस्तुनः ।
अभावस्य च यो भावस्स चेत्तस्माद्विलक्षणः ॥ ९५ ॥
भाव एव भवेन्नो चेद्गौरगोस्ते प्रसज्यते ।
यद्यप्यन्येषु शब्देषु वस्तुनः स्यादपोह्यता ॥ ९६ ॥
सच्छब्दस्य त्वभावाख्यान्नापोह्यं भिन्नमिष्यते ।
तथासतो ऽपि भावत्वमिति क्लेशो महान्भवेत् ॥ ९७ ॥
तदसिद्धौ न सत्तास्ति न चासत्ता प्रसिध्यति ।
न चापि वासनाभेदाद्भेदस्तद्रूपतापि वा ॥ ९८ ॥

अपोहानां प्रकल्प्येत न ह्यवस्तुनि वासना ।
स्मृतिं मुक्त्वा न चास्त्यस्याश्शक्तियोगः क्रियान्तरे ॥ ९९ ॥
तस्मान्नान्यादृशे सार्थे करोत्यन्यादृशीं मतिम् ।
भवद्भिश्शब्दभेदो ऽपि तन्निमित्तो न लभ्यते ॥ १०० ॥
न ह्यसाधारणश्शब्दो वाचकः प्रागदृष्टितः ।
भिन्नत्वाच्चापि नैवैका वासना तैः प्रकल्प्यते ॥ १०१ ॥
न वास्ति शब्दवस्त्वेकं वासनां यत्करिष्यति ।
तच्च शब्दान्तरापोहे सामान्ये परिकल्पिते ॥ १०२ ॥
तथैवावस्तुरूपत्वाच्छब्दभेदो न कल्प्यते ।
वाचकानां यथा चैवं वाच्यवाचकयोर्मिथः ॥ १०३ ॥
न चाप्यपोह्यभेदेन भेदो ऽस्तीत्युपपादितम् ।
नागृहीतश्च गमकश्शब्दापोहः कथं चन ॥ १०४ ॥
प्रत्यक्षं न च तच्छक्तं न च स्तो लिङ्गवाचकौ ।
यतः स्याद् ग्रहणं तस्य लिङ्गादीनां च कल्पने ॥ १०५ ॥
न व्यवस्थेति वाच्यैवं विना प्रत्यक्षमूलतः ।
न गम्यगमकत्वं स्यादवस्तुत्वादपोहयोः ॥ १०६ ॥
भवत्पक्षे यथा लोके खपुष्पशशशृङ्गयोः ।
वृष्टिमेघासतोर्दृष्ट्वा यद् घनैकान्तिकं वदेत् ॥ १०७ ॥
वस्त्वेवाचापि मत्पक्षे भवत्पक्षेप्यदः कुतः ।
विधिरूपश्च शब्दार्थो येन नाभ्युपगम्यते ॥ १०८ ॥
न भवेद्व्यतिरेको ऽपि तस्य तत्पूर्वको ह्यसौ ।
निषेधद्वययोगत्वादसतो ग्राह्यभावता ॥ १०९ ॥
सवस्तुके भवेत्सापि न तुच्छे तद्ध्यसंभवात् ।
न तु युक्त्यानयैवायं वस्तुनो ऽपि न भिद्यते ॥ ११० ॥

अपोहस्तेन दोषो ऽत्र पूर्वोक्तो न भविष्यति ।
सिद्धमेवं मदिष्टं स्यान्नैवान्या गतिरस्ति हि ॥ १११ ॥
अभाववस्तुबुद्धिर्वा यद्वा वस्तुन्यभावधीः ।
तत्राभावात्मकत्वे स्यान्निर्निमित्तैव वस्तुधीः ॥ ११२ ॥
वस्तुन्यभावबोधस्तु सिध्यत्यन्यमपेक्ष्य तु ।
अपोहमात्रवाच्यत्वं यदि वाभ्युपगम्यते ॥ ११३ ॥
नीलोत्पलादिशब्देषु शबलार्थाभिधायिषु ।
विशेषणविशेष्यत्वसामानाधिकरण्ययोः ॥ ११४ ॥
न सिद्धिर्न ह्यनीलत्वं व्युदासे ऽनुत्पलच्युतिः ।
नापि तत्रेतरस्तस्मान्न विशेष्यविशेषणे ॥ ११५ ॥
शब्दयोर्नापि ते स्यातामभिधेयानपेक्षयोः ।
सामानाधिकरण्यं च न भिन्नत्वादपोहयोः ॥ ११६ ॥

---

## ॥ अथ ब्रह्मसूत्रतात्पर्यविवरणस्य ॥

### ॥ प्रस्तावना ॥

उद्यद्दैत्यसहस्रसैरिभमुखान् क्ष्माधिप्यलंविक्रमा-
निन्द्रादिप्रबलप्रतापविबुधध्वस्तातिगर्वव्रजान् ।
तूर्णं चूर्णपराक्रमानकृत या देवैः स्तुता भक्तितः
सा मां पातु समस्तलोकजननी भक्तानुकम्पावनी ॥ १ ॥

अथाहमस्मिन्नवसरे काशीविद्यासुधानिधौ मुद्रणार्हं प्राचीनं पुस्तकमनुसरन्निमं ब्रह्मसूत्रतात्पर्यविवरणाभिधानं ग्रन्थं श्रीमन्नारायणदासनामकस्य यतिवरस्य वेदान्तविद्यारसिकशिरोमणेः सरस्वतीसद्मन्युपलब्धवानस्मि,स एष वेदान्तसूत्राणां संक्षिप्य तात्पर्यं सुस्पष्टं निरूपयतीत्यलसधियां विनापि गुरुसमीपोपसर्पणं वेदान्ततात्पर्यावगमायालमित्यु-

प्रयोजकतामस्य ग्रन्थस्यैतन्मुद्रणाय परविचारकश्रीमत्प्रभुवरग्रिफिथ्‌साहेबदत्तानुमतिकः साम्प्रतं बद्धपरिकरोऽस्मि ।

इमं च वेदान्तसूत्रानेकविवृतिपर्यालोचनया श्रीमच्छङ्करभाष्यभावनया चोदितसत्प्रतिभः प्रायेण नानादर्शनसारसंग्रहे चिकीर्षां धारयन् केनचिद्दतिप्रतापवता लोकोपकाराभिसंधिमता प्रभुणातिसुलभवेदान्तविवृतिरचनाय प्रेरितस्तिलकोपनामा भैरवशर्मा कश्चिद्दाक्षिणात्यो वेदाब्धिवसुचन्द्रसंमितशरदि निरमासीत् ।

एतदेतत् सर्वमस्य ग्रन्थस्याद्यन्तस्यपद्यदर्शनतः स्फुटीभविष्यतीति कृतं तत्तत्पद्यविलेखनेन ।

अत्र प्रथमाध्यायप्रथमपादसूत्रान्तेषु प्रथमा संख्या सूत्रक्रमसूचिका द्वितीयोपलभ्यमाना संख्या स्वाधिकरणसूचिका, तत्रापि पूर्वाधिकरणसंख्यातो विप्रकृष्टा पराधिकरणसूचिका संख्या मध्यगतसूत्राण्यपि स्वाधिकरणेऽन्तर्भावयति, पादान्तरसूत्रान्तेषु तु प्रथमा संख्या सूत्रक्रमसूचिका द्वितीया तत्तदध्यायादारभ्य संकलितसूत्रसंख्याक्रमसूचिका तृतीया तूपलभ्यमाना तत्तदधिकरणसूचिका, सममन्यदिति ध्येयम् ।

अस्य ग्रन्थस्य श्लोकसंख्या तु शतद्वयाधिकत्रिसहस्रीप्रमिताऽवकलनीया ।

यद्यप्ययं ग्रन्थ एतत्संवत्सरापेक्षयैकादशाधिकशततमसमानिर्मितत्वान्नातिप्राचीनस्तथापि वेदान्तसूत्रतात्पर्यावबोधसौलभ्यसाधकतया शास्त्रान्तरपरिपक्वधियां महान्तमुपकारं करिष्यतीति ममापि मुद्रयितुं प्रवृत्तिः फलवती स्यादित्येतदङ्गीकारायाहं प्रार्थयामीति सुधीभिराकलनीयमिति शिवम् ।

काशीस्थराजकीय-
प्रधानपाठालयीयसंख्यावान् ।
सांख्याध्यापनकारी

# ॥ अथ ब्रह्मसूत्रतात्पर्यविवरणम् ॥

## ॥ तत्र प्रथमाध्यायस्य प्रथमपादारम्भः ॥

यन्मायया जगत् सर्वं जायते येन जीवति ।
यद्विज्ञानात् प्रलीयेत तस्मै साम्बाय मे नमः ॥ १ ॥
तेजसा कर्मणा बुद्ध्या राजर्षिरिव यः प्रभुः ।
तत्प्रेरितो ब्रह्मसूत्रतात्पर्यं विवृणोम्यहम् ॥ २ ॥

तत्र परमकारुणिको मुनिरधिकार्यभिधेयसंबन्धप्रयोजनपरिज्ञानाय ब्रह्ममीमांसाशास्त्रस्यादिमं सूत्रं भगवान् वेदव्यास आह॰ अथेति ।

### अथातो ब्रह्मजिज्ञासा ॥ १ ॥ १ ॥

अथ नित्यानित्यवस्तुविवेकः॰ इहामुत्रफलविरागः शमदमादिसाधनसंपत्॰ मुमुक्षुत्वं चेति साधनचतुष्टयसंपत्त्यनन्तरम्, अतः॰अग्निहोत्रादिकर्मणामनित्यफलत्वाद् "ब्रह्मविदाप्नोति पर"मिति "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतेर्ब्रह्मज्ञानस्यैव परमपुरुषार्थसाधनत्वात्, ब्रह्म॰जिज्ञासा ब्रह्मणो विचारः, कर्तव्य इत्यध्याहारः, ब्रह्म च वक्ष्यमाणलक्षणम्, तेनात्र ब्रह्मविचारे मुमुक्षुर्विरक्तश्चाधिकारी, ब्रह्म॰अभिधेयम्, प्रतिपाद्यप्रतिपादकभावः संबन्धः, मोक्षः फलम्,इति सिद्धम् ॥ १ ॥

विचारस्य लक्षणादिसाध्यत्वाद्ब्रह्मणस्तटस्थलक्षणमाह जन्मादीति ।

### जन्माद्यस्य यतः ॥ २ ॥ २ ॥

अस्य प्रत्यक्षादिप्रमाणसिद्धस्य नामरूपाभ्यां व्याकृतस्य प्रपञ्चस्य, यतः॰ यस्मात्, जन्मादि जन्मस्थितिभङ्गं (तद्गुणसंविज्ञानो बहुव्रीहिः) भवति, तद् ब्रह्म, तथा च जगज्जन्मादिकारणत्वं लक्षणम्; "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतेः ॥ २ ॥

जगत्कारणत्वप्रदर्शनेन ब्रह्मणोऽचिन्त्यशक्तित्वं सर्वज्ञत्वं च सिद्धम्, तद्देव द्रढयति शास्त्रेति।

## शास्त्रयोनित्वात् ॥ ३ ॥ ३ ॥

शास्त्रस्य॰ अनेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्वावभासकस्य महत ऋग्वेदादेः शास्त्रस्य, निश्वासवदनायासेनैव योनित्वात्॰ निष्पादकत्वात्, ब्रह्मणः सर्वज्ञत्वं सर्वशक्तित्वं च सिद्धं वाक्यप्रयोगे वाक्यर्थज्ञानस्य हेतुत्वात् तथा च श्रुतिः॰ "अस्य महतो भूतस्य निश्वसितमेतदृग्वेद" इत्यादि।

नन्वस्यार्थस्य जन्मादिसूत्रेण गतार्थत्वात् कथं सूत्रमतोऽर्थान्तरम्, शास्त्रं योनिर्ज्ञापकं यस्य तत्, सा च पूर्वोक्तजगत्कारणत्वसिद्धि'र्यतो वे'त्यादिशास्त्रादेव, एवं च पूर्वसूत्रार्थसिद्धये॰ इदं सूत्रमिति भावः ॥ ३ ॥

ननु सर्वस्य वेदस्य सप्रयोजनकानुष्ठेयक्रियापरत्वाद् ब्रह्मपरत्वेऽक्रियार्थत्वादप्रामाण्यापत्तिः, अतः कथंचित् कर्तृदेवतादिगुणपरत्वम्॰ उपास्तिक्रियान्तरपरत्वमेव वा वक्तव्यं परिनिष्ठितवस्तुनः प्रत्यक्षादिप्रमाणान्तरग्राह्यत्वाद् गृहीतग्राहकत्वेन वेदान्तानामप्रामाण्यापत्तेः॰ हेयोपादेयरहिते पुरुषार्थत्वाभावाच्च, अत एव मन्त्रार्थवादादीनां क्रियासाधनपरत्वं प्राशस्त्यपरत्वं कर्मसमवायार्थमुक्तम्, तस्मात् कर्मापेक्षितकर्त्रादिपरत्वेन क्रियाविधिशेषत्वम्॰ उपास्तिशेषत्वं वा न सिद्धब्रह्मपरत्वम्, इति प्राप्ते॰ उच्यते तत् तु समन्वयेति।

## तत् तु समन्वयात् ॥ ४ ॥ ४ ॥

तद् ब्रह्म (शास्त्रप्रमाणकमिति शेषः) समन्वयात् सर्वेषु वेदान्तेषु वाक्यानि तात्पर्येण ब्रह्मप्रतिपादकत्वेन समनुगतानि "सदेव सोम्येदमग्र आसीत्"॰ "एकमेवाद्वितीयं ब्रह्म"॰"आत्मा वा इदमेक एवाग्र आसीत्"इत्यादीनि खलु, तेषु॰उपक्रमोपसंहारादिलिङ्गैर्ब्रह्मपरत्वे निर्णीते॰अर्थान्तरकल्पना न युक्ता श्रुतहान्यादिदोषप्रसङ्गात्, "तत् केन किं पश्ये"दित्यादिना क्रियाकारकफलपरत्वनिराकरणाच्च, नच प्रत्यक्षादि-

विषयत्वं 'तत् त्वमसी'त्यादिब्रह्मात्मभावस्य शास्त्रैकगम्यत्वात्, नचापुरुषार्थत्वमपि हेयोपादेयशून्यब्रह्मात्मतावगमस्य सर्वक्लेशनाशकत्वेन परमपुरुषार्थत्वसिद्धेः, नाप्युपासनाशेषत्वम्-एकत्वविज्ञानोन्मथितस्य द्वैतज्ञानस्य पुनरसंभवात्, आत्मविज्ञानस्य फलपर्यन्तत्वाद् विधिस्पर्शं विनापि तद्विषयस्य शास्त्रस्य प्रामाण्यं न प्रत्याख्यातुं शक्यम्, न चानुमानगम्यं शास्त्रप्रामाण्यं येनान्यचिदर्शनमपेक्षेत, तस्मात् सिद्धं ब्रह्मणः शास्त्रयोनित्वम्, तुशब्दो व्यावृत्त्यर्थः ॥ ४ ॥

ननु प्राग् जगदुत्पत्तेः सर्वकारणरहितं ब्रह्मेष्यते त्वया, तदा कथं सहकारिकारणरहितात् केवलाज् ज्ञानोत्पत्तिः, सांख्यसिद्धस्यानेकात्मकप्रधानस्य परिणामसंभवान्मृदादिवत् कारणत्वोपपत्तेर्न जगत्कारणत्वं ब्रह्मणः, एवं प्राप्ते समाधत्ते- ईक्षतेर्नाशब्दमिति ।

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

न प्रधानं जगत्कारणमिति शेषः, यतस्तद् अशब्दम्, चेतनस्यैवात्मनः सृष्टिवाक्येषु ग्रहणात्, सृष्टिप्रतिपादकश्रुतिशब्दागृहीतमित्यर्थः, कुतस्तेषु न गृहीतमिति चेत्, ईक्षतेः, "सदेव सौम्येदमग्र आसी"दित्यादि न, "तदैक्षत बहु स्यां प्रजायेये"ति "स ऐक्षत लोकान्नु सृजा इति" "स ईक्षांचक्रे" "स तपोऽतप्यत""यस्य ज्ञानमयं तपः" इत्यादौ ज्ञानपूर्वकसृष्टेः प्रतिपादनात्, नहि गुणसाम्यावस्थायां सत्त्वोद्रेकधर्मा ज्ञानं संभवति, किंच नासाक्षिका सत्त्ववृत्तिर्जानातिनाभिधीयते, न चाचेतनं प्रधानं साक्षि भवति, तस्माच्च प्रधानस्य सर्वज्ञत्वम्, योगिनां तु सत्त्वोत्कर्षनिमित्तमाधुनिकं सर्वज्ञत्वमित्यनुदाहरणत्वम् ॥ ५ ॥

नन्वचेतनेऽपि कूलं पिपतिषतीतिवत् "तत् तेज ऐक्षत" "ता आप ऐक्षन्ते" त्यादिवच्चाचेतनेऽपि प्रधाने चेतनवदुपचारात् प्रधानेऽप्यौपचारिकमीक्षितृत्वं कल्प्यते, औपचारिकप्राये पाठाचात्मसिद्धिरत आह गौणश्चेदिति ।

## गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

अप्तेजसोरिव प्रधाने॰ औपचारिकमीक्षितृत्वं न, कुतः, तासु श्रुति॰ ष्वात्मनः प्रतिपादकानां जीवशब्दात्मशब्दादीनां सत्त्वात्, "सदेव सौम्ये"॰ त्यत्र सत्॰ उपक्रम्य "तत् तेजोऽसृजत" इत्यादिना तेजोऽबन्नानां सृष्टि॰ मुक्त्वा पुनस्तेजोऽबन्नानि देवताशब्देनोद्दिश्य तानि प्रति जीवशब्दितस्य चेतनस्यात्मनोऽनुप्रवेशस्योक्तत्वाच्चाचेतनं ग्रहीतुं शक्यम्, तथाहि "सेयं देवतैक्षत" "हन्ताहमिमास्तिस्रो देवताः॰" "अनेन जीवेनात्मनानुप्र॰ विश्य नामरूपे व्याकरवाणि" "स य एषोऽणिमैतदात्म्यमिदं सर्वं" "स आत्मा" "तत् त्वमसि श्वेतकेतो"॰ इत्यादौ चेतनस्यैवात्मनो ग्रहणात्, न ह्यचेतनस्य प्रधानस्य चेतनो जीव आत्मा भवति, तथा श्वेतकेतुं चेतनं प्रति 'तत् त्वमसी'त्यात्माऽभेदप्रतिपादनमपि न संभवति॰ अचेतनप्रधानतादात्म्यस्य चेतनेऽसंभवात्, तस्माच्च गौणमीक्षितृत्वमाद्या॰ योपपत्तिः ॥ ६ ॥

ननु यथा राज्ञः सर्वार्थकारिभृत्ये भवत्येवात्मशब्दो ममात्मायं भद्रसेन इत्यादौ, तथा प्रधानमपि पुरुषस्यात्मनो भोगापवर्गौ कुर्वदुप॰ करोति, राज्ञो भृत्य इव संधिविग्रहादिषु वर्तमानः, तथा ज्योतिष्टो॰ मादावग्न्यादौ च ज्योतिःशब्दः प्रयुज्यते, तथात्मशब्दोऽपि चेतनाचेत॰ नयोः, भूतात्मा॰ इन्द्रियात्मेति प्रयोगाद् भवत्येवाचेतनेऽप्यात्मशब्द इति कथमात्मशब्दादीक्षतेरगौणत्वमिति प्राप्ते॰ आह तन्निष्ठस्येति।

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

न॰ आत्मशब्देन प्रधानम्, चेतनस्य श्वेतकेतोर्मोक्षयितव्यस्य ब्रह्म॰ निष्ठतामुक्त्वा "आचार्यवान् पुरुषो वेद" "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" "अथ संपत्स्ये" इति ब्रह्मनिष्ठस्य मोक्षोपदेशात्, यदि प्रधानं सच्छब्दवाच्यं स्यात् तदा मुमुक्षुं चेतनं सन्तमचेतनोऽसीति विपरीत॰ वादि 'तत् त्वमसी'ति वाक्य पुरुषस्यानर्थायैव स्यात्, अन्धगोलाङ्गूलन्या॰ येन॰ आत्मानं च न जानीयात्, तस्मादग्निहोत्रादीनां यथा स्वर्गाद्यर्थ॰ मुपदेशो भूत एव श्रुत्या क्रियते तथा॰ आत्मनि मुग्धस्य श्वेतके॰

त्वादेवास्तवचेतनात्मत्वोपदेशेन सत्यकथनादनर्थनिवृत्तिर्गान्धारन्यायेन भविष्यतीति, एवं च तप्तपरशुग्रहणे मोक्ष इति सत्याभिसंधस्य मोक्षः, तस्मान्नाचेतनं प्रधानं सच्छब्दवाच्यम् ॥ ७ ॥

उक्त्यन्तरेणापि सांख्यं दूषयति हेयत्वेति ।

## हेयत्वावचनाच्च ॥ ८ ॥

यदि प्रधानमनुमतं स्यात् तदा स्थूलारुन्धतीन्यायेन पञ्चकोशावसरणन्यायेन पूर्वपूर्वप्रत्याख्यानाय नेयमरुन्धतीतिवन्नायमात्मेति पुनरप्यन्यदुपदिशेत् ।

किंच कारणविज्ञानात् सर्वं विज्ञातमिति प्रतिज्ञाविरोधः स्यात्, "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात"-मिति" "कथं नु भगवः स आदेशो भवती"ति "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्"· "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य" मित्यादिश्रवणात्, तथा च प्रधानग्रहणे तज्ज्ञाने तत्कार्यभोग्यवर्गो ज्ञायेत न भोक्तृवर्गो ज्ञायेत प्रधानविकारत्वाभावात् तस्य, तस्मान्न प्रधानं सच्छब्दवाच्यम्, सूत्रं स्पष्टम् ॥ ८ ॥

न प्रधानं सदित्यत्र युक्त्यन्तरमाह स्वेति ।

## स्वाप्ययात् ॥ ९ ॥

कारणं प्रकृत्य श्रूयते "यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवती"ति· अयं जीवः सुषुप्तौ स्वं परमात्मानमपिगतो भवति लीनो भवति· उपाधीनां वासनानां जाग्रत्स्वप्ननिमित्तानां लये विशेषाभावात्, स्वाप्ययात्. नहि प्रधानं स्वात्मा भवति, अतो यस्मिन् सर्वेषां सुषुप्तौ प्राज्ञे लयः स स्वशब्दवाच्यः ॥ ९ ॥

युक्त्यन्तरमाह गतीति ।

## गतिसामान्यात् ॥ १० ॥

यदि तार्किकादिवत् क्वचिच्चेतनं कारणं क्वचिदचेतनं प्रधानं ति-

तिस्वभावादिकं तदा भवदुक्तं भवेत्, न चैवं संभवति सर्वेषु वेदान्ते चेतनस्यैव कारणत्वोक्तेः, "यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्॰ एवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते "प्राणेभ्यो देवा देवेभ्यो लोका" इति॰ "आत्मन आकाशः संभूतः"॰"आत्मन एवेदं सर्वम्॰" इत्यादिषु चेतनात्मन एव ग्रहणात्, अवगतिसामान्याच्च प्रधानम् ॥ १० ॥

कुतश्च सर्वज्ञं ब्रह्म कारणमत आह श्रुतत्वादिति।

## श्रुतत्वाच्च ॥ ११ ॥ ५ ॥

श्वेताश्वतरोपनिषदि सर्वज्ञं प्रकृत्य श्रूयते, "स कारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता न चाधिप" इत्यादौ स्पष्टं सर्वज्ञत्वं श्रुतम्, तस्मात् सर्वज्ञं ब्रह्म जगत्कारणमिति सिद्धम् ॥ ११ ॥

वेदान्तेषु द्विरूपं ब्रह्मावगम्यते नामरूपादिभेदोपाधिविशिष्टं सर्वोपाधिवर्जितं च, यथा "यत्र हि द्वैतमिव भवति यत्र त्वस्य सर्वमात्मैवाभू"दित्युपक्रम्य "यो वै भूमा तदमृतम्" "अथ यदल्पं तन्मर्त्यं" "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वे"ति "निष्कलं निष्क्रियं शान्तं" "नेति नेति"॰"अस्थूलमनण्वह्रस्वम्"॰ इत्यादिना तत्राविद्यावस्थायामुपास्योपासकभावव्यवहारः, काचिदुपासना॰अभ्युदयार्था काचित् क्रममुक्त्यर्था काचित् कर्मसमृद्ध्यर्था, तासां गुणोपाधिभेदेन भेदः, यद्यप्येक एवात्मा तथापि "तं यथा यथोपासते तदेव भवती"ति श्रुतेः॰ "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवर"मित्यादिस्मृतेश्च यथोपासनं फलान्यपि भिद्यन्ते, एवं च वाक्यगतिपर्यालोचनयाऽद्वितीयनिरुपाधिब्रह्मनिर्णयाय वेदान्तेषूपास्यत्वेन ब्रह्म निर्दिश्यत इति प्रदर्शयितुं परः सूत्रगण आरभ्यते॰आनन्देति।

## आनन्दमयोऽभ्यासात् ॥ १२ ॥

अन्नमयप्राणमयमनोमयविज्ञानमयानुक्त्वा तैत्तिरीयके श्रूयते, "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय" इति विषयवाक्ये

संशयः, आनन्दमयशब्देन ब्रह्मभिन्न उत परं ब्रह्मेति, तत्र पूर्वपक्षः, अन्नमयादिप्रवाहपठितत्वात् "तस्य प्रियमेव शिर" इत्यादिनावयवयोगात् "तस्यैष एव शारीर आत्मा"॰ इति शारीरत्वश्रवणाच्च संसारी जीव एव ग्राह्यः, इति प्राप्ते॰ आनन्दमयः पर एवात्मा, कुतः, अभ्यासाद् बहुवाक्येषु परस्यैव ग्रहणात्, "रसो वै सः" "रसं ह्येवायं लब्ध्वानन्दीभवति" "सैषानन्दस्य मीमांसा भवति"॰ "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने"ति "विज्ञानमानन्दं ब्रह्म"॰इत्यादौ ब्रह्मैवोपास्यं गम्यते,

यद्यप्यमुख्यप्रवाहे पाठस्तथापि स्थूलारुन्धतीन्यायेन मूषानिषिक्तद्रुतताम्रादिप्रतिमावत् ततोऽन्तरान्तरतया पूर्वपूर्वेण समानमात्मेति ग्राहयन् प्रतिपत्तिसौकर्यायात्मानमुपदिदेश, यत् तु प्रियशिरस्त्वादि यच्च शारीरत्वं तदन्नमयादिशरीरपरंपरया प्रदर्श्यमानत्वान्न मुख्यं शारीरत्वं संसारिवत्, तस्मादानन्दमयः पर एवात्मेति सिद्धम्,अर्थान्तरं भाष्ये द्रष्टव्यम् ॥ १२ ॥

पुनर्विकारार्थकमयट्प्रत्ययेन विकारी जीव एवेत्याशङ्क्य समाधत्ते विकारेति ।

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

नात्र जीवः, अन्नमयो यज्ञः॰ ब्राह्मणमयो ग्राम इत्यादिषु प्राचुर्येऽपि मयटो दर्शनादत्रापि॰ आनन्दप्रचुरं ब्रह्मेति, मनुष्यानन्दादारभ्य॰ उत्तरोत्तरस्मिन् शतगुण आनन्द इत्युक्त्वा ब्रह्मानन्दस्य निरतिशयस्य प्रदर्शनान्न विकारार्थे मयट् ॥ १३ ॥

प्राचुर्यार्थे युक्त्यन्तरमाह तद्धेत्विति ।

## तद्धेतुव्यपदेशाच्च ॥ १४ ॥

यस्मादानन्दहेतुत्वं ब्रह्मणो वेदान्तेषूच्यते॰ "एष ह्येवानन्दयाति," लोकेऽपि यः स्वयं धनिकः स एवान्यं धनिकं करोति, एवं स्वयमानन्दप्रचुरश्चेदन्यानप्यानन्दयति, तस्मादानन्दप्रचुरं ब्रह्म ॥ १४ ॥

## मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

"ब्रह्मविदाप्नोति पर"मित्युपक्रम्य "सत्यं ज्ञानमनन्तं ब्रह्मे"ति मन्त्रे यत् सत्यादिविशेषणैर्निर्धारितं तदेव "अन्योऽन्तर आत्मे"त्यत्र सर्वान्तरत्वेन ब्रह्म विज्ञानाय ग्राह्यम्, यतो मन्त्रब्राह्मणयोरेकार्थत्वं युक्तम् तन्निष्ठैव भार्गवी वारुणी विद्या, तस्मान्मान्त्रवर्णिकमेवात्रापि गीयते॥१५॥

युक्त्यन्तरमाह नेतर इति।

## नेतरोऽनुपपत्तेः ॥ १६ ॥

इतरो जीवो न ग्राह्यः, आनन्दमयं प्रकृत्य "सोऽकामयत" "बहु स्यां प्रजायेये"ति "स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किंचे"ति तत्र जीवस्य ग्रहणे प्राक् शरीराद्युत्पत्तेः सृज्यमानाभिध्यानं सृज्यमानस्य स्रष्टृव्यतिरेकः सर्वविकारसृष्टिश्च नोपपद्यते, अतो नेतरो ग्राह्यः ॥ १६ ॥

नहि लब्धैव लब्धव्यो भवतीत्याह भेदेति।

## भेदव्यपदेशाच्च ॥ १७ ॥

यत आनन्दमयाधिकारे "रसो वै सः· रसं ह्येवायं लब्ध्वानन्दी भवती"ति लब्धृलब्धव्ययोर्भेदेन व्यपदेशः, अतोऽपि न संसारी ॥ १७ ॥

प्रधानमेवानन्दमयशब्दग्राह्यं भवत्वित्याक्षेपे· ईक्षत्यधिकरणे कर्तृत्वनिराकरणेन निराकृतमपि प्रसङ्गाद् युक्त्यन्तरेण निराक्रियते कामाच्चेति।

## कामाच्च नानुमानापेक्षा ॥ १८ ॥

"सोऽकामयते"ति कामयितृत्वनिर्देशाच्च· अनुमानस्य प्रधानस्य नापेक्षा ॥ १८ ॥

युक्त्यन्तरमाह·अस्मिन्निति।

## अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥ ६ ॥

अस्मिन् प्रकृते·आनन्दमये ब्रह्मणि·अस्य जीवस्य तद्योगं तद्भा-

वार्यात्तं मुक्तिं शास्ति प्रतिपादयति च "यदा ह्येवैष एतस्मिन्नदृश्येऽना-त्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते॰ अथ सोऽभयं गतो भवति यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवती"ति, यदा ब्रह्मणि॰ अत्यल्पमप्यतादात्म्यं पश्यति ततः संसारभयान्न निवर्तते यदा-नन्दमये प्रतिष्ठां निरन्तरतादात्म्यं विन्दते प्राप्नोति तदा संसारभयान्नि-वर्तते, एतच्च प्रधानपरत्वे जीवपरत्वे वा न घटत इत्यर्थः।

ननु "स वा एष पुरुषोऽन्नरसमय" इत्यादि॰ "अन्योऽन्तर आत्मा विज्ञानमय" इत्यन्तं विकारार्थमयटः प्रक्रमा'दानन्दमय' इत्यत्र कथं प्राचुर्ये मयट्॰ ब्रह्मविषयत्वं चाश्रीयते॰ अर्धजरतीयपरिग्रहापत्तेः, किंच "सत्यं ज्ञानमनन्तं ब्रह्मे"ति ब्रह्मशब्देनोपक्रान्तमेव "ब्रह्म पुच्छं प्रतिष्ठे" त्य-त्रोपसंहृतं नानन्दमयशब्देनोपसंहर्तुं शक्यं प्रियशिरस्त्वादिना श्रुतत्वात्, आनन्दमयो जीव एव 'ब्रह्म पुच्छं प्रतिष्ठे'त्येव ब्रह्मपरम्, तदेवात्र विषयः, तद्विज्ञानायैव पञ्चकोशोक्तिः, पुच्छत्वोक्तिस्तु पुच्छवत् पुच्छं सर्वाधारत्वद्योतनाय, सर्वानन्दानां ब्रह्मानन्दाश्रितत्वादिति चेत्,

एवमपि व्याख्यानं दृष्टमेव भाष्यकृदादीनाम्, अस्मिंश्च पक्षेऽ-न्त्यपर्यायेऽपि विकारार्थ एव मयट्, आनन्दमयावयवत्वेन ब्रह्म विव-क्षितमुत स्वप्रधानत्वेनेति संशये॰ 'आनन्दमय आत्मे'त्यत्र 'ब्रह्म पुच्छं प्रतिष्ठे'ति स्वप्रधानमेव ब्रह्मोपदिश्यते न पुच्छशब्दादवयवत्वेन, 'अस-न्नेव स भवती'त्यस्मिन् निगमनश्लोके ब्रह्मण एवाभ्यासात्, इति सूत्रं व्याख्येयम्, एतत्तात्पर्यकाण्युत्तराणि सप्त सूत्राणि 'योगं शास्ती'त्यन्तानि पुच्छवाक्यनिर्दिष्टब्रह्मोपपादकत्वेन व्याख्येयानि ॥ १९ ॥

अथ "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रु-र्हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीक-मेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदे"त्यधिदैवतम्, अथाध्यात्मम्॰ "अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते"॰ इत्यादौ॰ आदित्यमण्डलान्तश्चक्षुरन्तश्च

पुरुषः श्रूयते, स किं कर्मविद्यातिशयात् प्राप्तोत्कर्षः कश्चित् संसारी मण्डले चक्षुषि चोपास्यत्वेन श्रूयते॰उत नित्यसिद्ध ईश्वर इति विशये हिरण्यश्मश्रुत्वादिरूपविशेषस्योदाहृतत्वात् तदेवाक्षिपुरुषेऽतिदिश्यते तस्य तदेव रूपं यदमुष्य रूपमिति संसार्येव नेश्वरः, "अशब्दमस्पर्शम रूपमव्यय"मिति तस्य निर्गुणत्वश्रुतेः, 'आदित्येऽक्षिणी'त्याधारश्रवणाच्च, तस्मान्नेश्वर इति प्राप्ते॰आह॰अन्तस्तद्धर्मेति।

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

आदित्ये चक्षुषि॰ अन्तः॰ उपास्यत्वेन श्रुत ईश्वर एव, कुतः, तस्येश्वरस्य धर्मा उपदिष्टा अतः, यथा॰ 'एष सर्वेभ्यः पाप्मभ्य उदित' इति सर्वपापापगमश्च परमात्मन एवोक्तः, "य आत्मापहतपाप्मे"ति, तथा चाक्षुषे श्रुतं "तदेवर्क् तत् साम तदुक्थं तद्यजुस्तद्ब्रह्मे"ति॰ ऋगाद्यात्मकत्वं तत् परमेश्वरे॰ उपपद्यते सर्वकारणत्वात् सर्वात्मत्वोपपत्तेः, उदित इति लोककामेशितृत्वमपि निरङ्कुशं श्रूयमाणमीश्वरं गमयति, यत् तु हिरण्यश्मश्रुत्वादि गुणश्रवणं तत् साधकानुग्रहार्थैच्छिकं मायिकं "माया ह्येषा मया सृष्टा यन्मां पश्यसि नारदे"ति स्मृतेः, एवंगुणविशिष्टत्वेनोपासनार्थम्, वास्तवं 'त्वशब्दमस्पर्श' मित्यादि, तस्मात् परमेश्वर एवोपदिश्यतेऽन्तः ॥ २० ॥

युक्त्यन्तरमाह भेदेति।

## भेदव्यपदेशाच्चान्यः ॥ २१ ॥ ७ ॥

शरीराभिमानिभ्यो जीवादिभ्यो भिन्न ईश्वरोऽन्तर्यामी व्यपदिश्यते, "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरम्" इत्यादिष्वादित्याद्विज्ञानात्मनोऽन्योऽन्तर्यामीश्वरः स्पष्टं निर्दिष्टः स एवेहाप्यन्तरादित्ये भवितुमर्हति, तस्मादीश्वर एव ॥ २१ ॥

'अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते॰आकाशं प्रत्यस्तं यन्ती"त्यादि श्रुतम्, तत्र किम्? आकाशशब्देन भूताकाशो ब्रह्म वेति संशये भूता-

काशः,तस्य लोकवेदयोः प्रसिद्धत्वाच्छीघ्रं बुद्धिमारोहति, क्वचिद् ब्रह्मणि स गौण एव-अनेकार्थत्वस्यान्याय्यत्वात्, नच मुख्ये संभवति गौणग्रहणम्,इति प्राप्ते ब्रूते॰ आकाश इति।

## आकाशस्तल्लिङ्गात् ॥ २२ ॥ ८ ॥

ईश्वर एवात्राकाशः, तल्लिङ्गात्, "सर्वाणि ह वा इमानि भूतान्याकाशादेवे"ति सर्वकारणत्वेन ग्रहणात्, तच्चेश्वर एव, एव"माकाशं प्रत्यस्तं यन्ती"ति॰ "आकाशो ह्येवैभ्यो॰ ज्यायान्" "आकाशः परायणम्"॰ इत्यादिब्रह्मलिङ्गादाकाशोऽत्र गौण्या ब्रह्मैव, अत एव "ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः॰ सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिते"ति श्रुतयोऽपि, तस्मादाकाशमत्र ब्रह्म ॥ २२ ॥

एतदधिकरणन्यायमन्यत्राप्याह॰ अत एवेति।

## अत एव प्राणः ॥ २३ ॥ ९ ॥

सर्वकारणत्वलिङ्गादेव प्राणोऽपि ब्रह्मैव ग्राह्यम्, उद्गीथविद्यायां "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ते"त्युपक्रम्य "कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंयन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ते"ति, तत्रापि 'सर्वाणि ह वे'त्यादिना सर्वभूतोत्पादकत्वादिश्रवणाच्च प्राणशब्देनात्र वायुविकारः पञ्चवृत्तिः प्राणः, किंत्वीश्वरः, "प्राणस्य प्राणमुत चक्षुषश्चक्षु"रित्यादावीश्वरेऽपि प्राणशब्दप्रयोगात् ॥ २३ ॥

एवं श्रूयते, "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वि"त्युपक्रम्य "यदिदमस्मिन्नन्तः पुरुषे ज्योति"रिति, तत्र किं ज्योतिःशब्दार्थः, प्रसिद्धः सूर्यादिज्योतिरिति प्राप्ते॰ आह ज्योतिरिति।

## ज्योतिश्चरणाभिधानात् ॥ २४ ॥

नात्र सूर्यादि ज्योतिः किंत्वीश्वरः, चरणाभिधानात्, पूर्ववाक्ये चतुष्पाद् ब्रह्म निर्दिष्टम्, "एतावानस्य महिमा ततो ज्यायांश्च पुरुषः

पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि"॰इति चतुष्पदो ब्रह्मण-स्त्रिपादमृतं द्युसंबन्धि रूपमुक्तं तदेवेह द्युसंबन्धान्निर्दिष्टमिति प्रत्यभि-ज्ञायते, तत् परित्यज्य प्राकृतज्योतिर्ग्रहणे प्रकृतहानादिदोषप्रसङ्गात्, एवमग्रे शाण्डिल्यविद्यायामपि ब्रह्मानुवृत्तिर्बाध्या, तस्मात् प्रकरणाद् ब्रह्मावगमे मुख्यं सूर्यज्योतिरत्र न विवक्षितम् ॥ २४ ॥

ननु पूर्वमत्र न ब्रह्माभिहितं किंतु "गायत्री वाव इदं सर्वं भूतं यदिदं किंचे"ति छन्दस उक्तत्वात् कथमेतदित्याशङ्क्य समाधत्ते छन्दोऽ-भिधानादिति।

## छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनि-गदात् तथा हि दर्शयति ॥ २५ ॥

नैष दोषः, तथा गायत्र्याख्यच्छन्दोद्वारेण ब्रह्मणि चेतसोऽर्पणात् समाधानस्य ब्रह्मणि वाक्येनोक्तत्वात्, नहि॰ अक्षरसंनिवेशरूपच्छन्दस "इदं सर्व"मित्युक्तं सर्वात्मकत्वं संभवति, तस्माद् गायत्र्यादिविकारानुगतं ब्रह्मैव सर्वमित्युच्यते 'सर्वं खल्विदं ब्रह्मे'तिवत् कार्याभिन्नत्वात् कारणस्य, अन्यत्रापि दर्शयति श्रुतिस्तथा विकारद्वारेण ब्रह्मोपासनम्, यथा "एतमेव बह्वृचा महदुक्थे मीमांसन्ते॰एतमग्नावध्वर्यव" इत्यादौ, तस्माच्छन्दोऽ-भिधानेऽपि पूर्वं ब्रह्म निर्दिष्टं तदेव ज्योतिर्वाक्येऽपि परामृश्यते ॥ २५ ॥

युक्त्यन्तरमाह भूतादीति।

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

"एतावानस्ये"त्यादिश्रुतौ "सैषा चतुष्पदा षड्विधा गायत्री"त्यादौ च भूतपृथिवीशरीरहृदयानां पादत्वव्यपदेशोपपादनाच्च॰ एवम्, पूर्वप्रकृतं ब्रह्मैवात्र ग्राह्यम्, छन्दसः पृथिव्यादिपादत्वानुपपत्तेः, "विष्टभ्याहमिमं कृत्स्नमेकांशेन स्थितो जग"दिति स्मृतेश्च ॥ २६ ॥

ननु "त्रिपादस्यामृतं दिवी"त्यत्र सप्तम्या दिव आधारत्वमुक्तम्, "अतः परो दिवो ज्योति"रित्यत्र पञ्चम्या दिवो मर्यादात्वमुक्तम्,

तस्मादुपदेशस्य शास्त्रस्य भेदाच्च ब्रह्मणः प्रत्यभिज्ञानं विरोधात्, इत्याशङ्क्याह॰ उपदेशेति।

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥ १० ॥

एवमप्यविरोधः, यथा वृक्षाग्रे विद्यमाने तदूर्ध्वे वा वर्तमाने श्येनादौ वृक्षाग्रे श्येनः॰वृक्षाग्रात् परतः श्येन इति द्विधापि प्रयोगः, एवं 'दिवि'॰इति 'दिवः' परमपि सद् ब्रह्म निर्दिश्यते, तस्मादुभयस्मिन्नपि प्रयोगेऽविरोधाद् ब्रह्मैव ज्योतिः ॥ २७ ॥

कौषीतक्युपनिषदि॰इन्द्रप्रतर्दनाख्यायिका श्रूयते, "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण चे"त्युपक्रम्य"स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्वे"ति तथा "प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति"॰अन्ते च "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत" इति, तत्र संशयः, किमत्र प्राणशब्देन वायुमात्रं देवतात्मा जीवो ब्रह्म वा ग्राह्यम्।

ननु॰ 'अत एव प्राण' इत्यनेन गतार्थत्वात् किमर्थं पुनर्विचार इति तु न, ब्रह्मलिङ्गस्योभयत्र सत्त्वेऽपि देवतावायुजीवादिलिङ्गानामपि सत्त्वादधिकाशङ्कायां समाधानार्थं पुनर्विचारः।

तत्र॰इन्द्रजीववायुलिङ्गानां स्पष्टं प्रतीतेर्न ब्रह्म प्राण इति प्राप्ते॰ आह प्राणस्तथेति।

प्राणस्तथानुगमात् ॥ २८ ॥

प्राणस्तथा ब्रह्मैव, कुतः, अनुगमात्, पौर्वापर्येण सर्ववेदान्तानां समन्वयो ब्रह्मप्रतिपादनपर एवोपलभ्यते, वरं वृणीष्वेतीन्द्रेणोक्तः प्रतर्दनः परमपुरुषार्थसाधनं पृष्टवान्॰ तस्मै हिततमत्वेनोपदिश्यमानः प्राण आत्मैव, नह्यन्यज्ज्ञानमनर्थं निवारयिष्यति, "तमेव विदित्वे"ति श्रुतेः, "स यो ह मां वेद न ह वै तस्य केन च कर्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यये"ति ब्रह्मज्ञानेनैव सर्वकर्मक्षयः, तस्मात् प्राणो ब्रह्मैव ॥ २८ ॥

यदुक्तं प्राणो ब्रह्मेति तदाक्षिप्य समाधत्ते स वक्तुरिति।

## स वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ २९ ॥

स इन्द्रो देवताविशेषः प्राणशब्दार्थः, कुतः, वक्तुरिन्द्रस्य आत्मतत्त्वेनोपदिश्यमानत्वात्, प्रतर्दनं प्रति "मामेव विजानीही"त्युपक्रम्य "प्राणोऽस्मि प्रज्ञात्मा" इत्युपदिश्यमानत्वात्, इति प्राप्ते 'अध्यात्मसंबन्धभूमा ह्यस्मिन्' इति समाधानम्, "प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयती"ति "न वाचं विजिज्ञासीत वक्तारं विद्या"दित्युपक्रम्य "तद्यथा रथस्याराः नाभावराः अरेषु नेमिरर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः" "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत" इत्यादिषु विषयेन्द्रियव्यवहारानभिभूतं प्रत्यगात्मानमेवोपसंहरति, तथा"ऽयमात्मा ब्रह्म सर्वानुभू"रिति श्रुत्यन्तरं च, तस्मादध्यात्मसंबन्धबाहुल्याद् ब्रह्मैव प्राणः, न देवतात्मा ॥ २९ ॥

कथं तर्हि वक्तुरात्मोपदेश इत्यत आह शास्त्रेति ।

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥

इन्द्रो देवता स्वात्मानं परमात्मत्वेन शास्त्रदृष्ट्या निश्चित्य "मामेव विजानीही"त्युपदिशति तथा "तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चे"ति वामदेववत्, तस्माद् यतस्त्वाष्ट्रवधादीनि क्रूरकर्माणि कृतवतो मम ब्रह्मभूतस्य लोमापि न हीयते एवं योऽन्योऽपि मां वेद न तस्य केनचिदपि कर्मणा लोको हिंस्यते, इति विज्ञेयं ब्रह्म प्राणशब्दार्थः ॥ ३० ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥ ११ ॥

इति ब्रह्मसूत्रे प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥ :: :: ॥

अत्र प्रथमपादेऽधिकरणानि ॥ ११ ॥ * * ॥

ननु प्राणशब्देन नेन्द्रग्रहणं जीवस्तु ग्रहीतुं शक्यते, एवं प्राणोऽपि, तयोर्लिङ्गात् "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यत्र कार्य-

कारणाध्यक्षस्य जीवस्य विज्ञेयत्वात्, एवं "प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयती"ति शरीरधारणं मुख्यप्राणस्य धर्मस्तल्लिङ्गाच्च ब्रह्मेति चेन्न, तथा सति जीवस्य मुख्यप्राणस्य ब्रह्मणश्चेति॰ उपासनात्रैविध्यस्यात्रापत्तेः, नहीदं युक्तम्, उपक्रमोपसंहारादिना॰ एकवाक्यत्वावगमात्, न हि विशेष्यभेदे॰ एकवाक्यत्वं संभवति ।

अथवा नात्र त्रिविधलिङ्गविरोधः, प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेण चेति त्रिप्रकारकब्रह्मोपासनाङ्गीकारात्, अन्यत्रापि ब्रह्मलिङ्गवशात् प्राणशब्दस्य ब्रह्मणि वृत्तेराश्रितत्वाच्च, इह हिततमोपन्यासादिब्रह्मलिङ्गयोगाच्च, तस्माद् ब्रह्मैव वाक्यार्थः ॥ ३१ ॥

इति ब्रह्मसूत्रतात्पर्यविवरणे प्रथमस्य समन्वयाध्यायस्य प्रथमः पादः ॥ १ ॥ :: :: ॥

प्रथमपादे स्पष्टब्रह्मलिङ्गानां वाक्यानां समन्वय उक्तः,अस्पष्टब्रह्मलिङ्गानां वाक्यानां ब्रह्मणि समन्वयो द्वितीयतृतीयपादयोरुच्यते । "सर्वं खल्विदं ब्रह्म" "तज्जलानिति" "शान्त उपासीत"॰"अथ खलु क्रतुमयः पुरुषो मनोमयः प्राणशरीर" इत्यादि, तत्र संशयः किमत्र शारीर उपास्यः परं ब्रह्म वा, "मनोमयः प्राणशरीर" इत्यादिनोक्तो मनआदिभिः संबन्धो जीवस्यैव संभवति न ब्रह्मणः, "अप्राणो ह्यमनाः शुभ्र" इति श्रुतिविरोधात्, तस्माज्जीव एवेति प्राप्ते ब्रूते सर्वत्रेति ।

## सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥ ३२ ॥

मनोमयत्वादिभिर्ब्रह्मैवोपास्यम्, कुतः सर्वत्र वेदान्तेषु ब्रह्म जगत्कारणं ब्रह्मशब्दात् प्रसिद्धं तस्यैवात्रोपदेशात्, न च 'शान्त उपासीते'ति शमविधिविवक्षया ब्रह्मोक्तं न स्वविवक्षयेति वाच्यम्,मनोमयत्वाद्युपदेशेषु स्वशब्देन ब्रह्मसंनिहितं जीवस्तु न स्वशब्देन संनिहित इति वैषम्यात्, तस्माद् ब्रह्मैवैतादृशवाक्येषूपास्यम् ॥ १ ॥

युक्त्यन्तरमाह विवक्षितेति ।

विवक्षितगुणोपपत्तेश्च ॥ २ ॥ ३३ ॥

च पुनः॰ विवक्षितानामुपादेयत्वेनोपदिष्टानां सत्यकामत्वसत्यसंकल्पत्वापहतपाप्मत्वादीनां गुणानां ब्रह्मण्येवोपपत्तेः, अप्रतिबद्धशक्तित्वात्, यदुक्तं मनोमयत्वादि जीवलिङ्गं तदपि सर्वात्मकत्वाद् ब्रह्मण्युपपद्यत एव, तस्माद्ब्रह्मैव विवक्षितम् ॥ २ ॥

ब्रह्मण्युपपत्तिमुक्त्वा जीवपरत्वेऽनुपपत्तिमाह॰ अनुपपत्तेरिति।

अनुपपत्तेस्तु न शारीरः ॥ ३ ॥ ३४ ॥

तुशब्दोऽवधारणार्थः, ब्रह्मैव न शारीरः, सत्यकामत्वादीनामाञ्जस्येन जीवेऽनुपपत्तेः, न च ब्रह्मापि शारीरं भवत्येवेति वाच्यम्, तस्य सर्वाधिष्ठानत्वेन शरीराशरीरसाधारण्यात्, जीवस्य तु भोगाधिष्ठानशरीरादन्यत्र वृत्त्यभावाच्छारीरत्वम् ॥ ३ ॥

जीवाग्रहणे युक्त्यन्तरमाह कर्मेति।

कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥ ३५ ॥

यस्मात्॰'इतः प्रेत्य एतमभिसंभवितास्मी'ति कर्मकर्तृव्यपदेशस्तस्मात्, न चैकस्य प्राप्तिकर्मत्वं कर्तृत्वं च संभवति, एतमित्युपास्यं गम्यं शारीरो गन्तेत्युपास्योपासकभावस्य भेदाधिष्ठानत्वाच्च न शारीरः ॥ ४ ॥

'अन्तरात्मनी'ति सप्तम्यन्तात्॰'हिरण्मयः पुरुष' इति प्रथमान्तशब्दस्य विशेषादपि शारीरादन्य उपास्य इत्याह शब्देति।

शब्दविशेषात् ॥ ५ ॥ ३६ ॥

॥ ५[१] ॥

उपष्टम्भकमप्याह स्मृतेश्चेति।

स्मृतेश्च ॥ ६ ॥ ३७ ॥

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" अत्र भूतशब्देन॰ ईश्वरशब्देन च जीवेश्वरयोर्भेदेनोक्तत्वादित्यर्थः ॥ ६ ॥

---

१ केवलमङ्कस्थापनं स्पष्टत्वादिना प्रकृतसूत्रव्याख्याया अभावं सूचयति, एवमग्रेऽपि बोध्यम्।

अल्पनीडत्वादल्पत्वव्यपदेशाच्च जीव एवेत्याशङ्क्य समाधत्ते॰ अर्भकेति।

अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवत् ॥ ७ ॥ ३८ ॥

"एष त आत्मान्तर्हृदय" इति॰ अल्पस्थानम्, "अणीयान् व्रीहेर्यवाद्वे"त्यल्पत्वव्यपदेशात्, इति चेन्न, यतः परिच्छिन्नदेशस्य सर्वगतत्वव्यपदेशो न संभवति, सर्वगतस्य तु परिच्छिन्नदेशव्यपदेशः कथंचित् संभवत्येव, यथा सर्वदेशाधिपस्य॰ अयोध्याधिपतित्वं व्यपदिश्यते तद्वत्, किमर्थं तथा व्यपदेश इति चेत्, यथा सर्वगतमपि व्योम सूचीपाशाद्यवच्छेदेनार्भकौकोऽप्यणीयोऽपि व्यपदिश्यते तद्वद् ब्रह्मापीत्यर्थः, अणीयस्त्वादिना निचाय्यत्वात्, हृदयपुण्डरीके॰ उपास्यत्वात्, एवम्, व्योमवत्, यथा वा शालग्रामे हरिः, एवं चोपासनार्थमभिव्यक्त्यर्थं वा तथोक्तम् ॥ ७ ॥

ननु सर्वगतस्यापि ब्रह्मणः सर्वहृदयादिसंबन्धाच्चिद्रूपत्वाज्जीववत् सुखदुःखादिभोगोऽपि स्यादित्याशङ्क्य समाधत्ते संभोगेति।

संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥ ३९ ॥ १ ॥

एकस्य तु कर्तृत्वं भोक्तृत्वम्,अन्यस्य तु न, अपहतपाप्मत्वात्, इति विशेषोऽस्ति, नहि सांनिध्यमात्रेणातत्कार्यसंबन्धोऽभ्युपेतः, गगनादीनामपि दाहक्लेदादिप्रसङ्गात्, मिथ्याज्ञानप्रयुक्तत्वाद् भोगस्य, न चेश्वरस्य मिथ्याज्ञानम्, तस्मान्नेश्वरस्य भोगापत्तिः ॥ ८ ॥

अत्तेति।

अत्ता चराचरग्रहणात् ॥ ९ ॥ ४० ॥

"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः, मृत्युर्यस्योपसेचनम्,क इत्था वेद यत्र स" इत्यत्र॰ ओदनोपसेचनशब्दभ्यां सूचितोऽत्ता प्रतीयते, स किमत्ता॰ अग्निरुत जीव ईश्वरो वा, "अग्निरन्नाद" इति श्रुतेरग्निः॰ "तयोरन्यः पिप्पलं स्वाद्वत्ती"ति लिङ्गाज्जीवो वेति प्राप्ते॰ ईश्वरोऽत्र॰

अत्ता भवति, मृत्यूपसेचनस्य चराचरस्य स्थावरजङ्गमस्याद्यत्वेन प्रतीतेः, ईश्वर एव हि सर्वविकारजातमुपसंहरन्नत्तेत्युपपत्तेः, 'अनश्नन्' इति कर्मफलभोगस्यैव निषेधात्, सर्वलयस्य च नासंभवः, तस्मादत्ता· ईश्वरः ॥ ९ ॥

प्रकरणात् 'क इत्था वेद यत्र स' इति ब्र[1]ह्मलिङ्गाच्चेश्वर एवात्तेत्याह प्रकरणेति।

## प्रकरणाच्च ॥ १० ॥ ४१ ॥ २ ॥

"न जायते म्रियते वा कदाचिन्नायं भूत्वे"त्यादिना ब्रह्मप्रकरणाच्चेति भावः ॥ १० ॥

[2]"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः" इत्यत्र किं बुद्धिजीवौ निर्दिष्टावुत जीवपरमात्मानाविति संशये बुद्धिजीवौ, गुहायां शरीरे हृदये वा तयोः प्रवेशात्, नहीश्वरस्य सर्वगतस्य विशिष्टदेशत्वं युक्तम्, 'सुकृतस्य लोक' इति कर्मगोचरानतिक्रमाच्च, इति प्राप्ते ब्रूते गुहामिति।

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ ४२ ॥

आत्मानौ जीवेश्वरौ, हीति निश्चयेन, चेतनावेवोक्तौ ग्राह्यौ, पिबन्ताविति द्विवचनेन ऋतपानेन लिङ्गेन जीव इति निश्चिते द्वितीयान्वेषणायां सजातीयस्य चेतनस्यैव ग्रहणात्, यथास्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते द्वितीयो गौरेवान्विष्यते नाश्वादिः, न च गुहाहितत्वानुपपत्तेर्नेश्वरः, "गुहाहितं गह्वरेष्ठं पुराणम्" "यो वेद निहितं गुहाया" मित्यादौ सर्वगतस्याप्युपलब्ध्यर्थो देशविशेष इवापि संभवात्, छायातपाविति संसारित्वासंसारित्वयोस्तत्रैव संभवाच्च, तस्माज्जीवेश्वरौ ॥ ११ ॥

१ दुर्विज्ञेयत्वं ब्रह्मणा साधारणं लिङ्गं द्रष्टव्यम्।

२ ऋतमावश्यकं कर्मफलं पिबन्तौ भुञ्जानौ जीवपरमात्मानौ, छत्त्रिणो गच्छन्तीतिवदेकस्य जीवस्य भोक्तृत्वेन ब्रह्मणोऽपि भोक्तृत्वव्यपदेशः, सुकृतस्य धर्मस्य कार्ये देहरूपलोके वर्तमानौ, परार्ध्यं परस्य ब्रह्मणोऽर्धं स्थानमर्हतीति परार्ध्यं हृदयं तस्मिन् परमे श्रेष्ठे या गुहा नभोलक्षणा तां प्रविश्य स्थितौ, छायातपवन्मिथो विरुद्धौ कर्तृत्वादितद्विलक्षणाभ्याम्, तौ ब्रह्मविदः कर्मिणश्च वदन्ति, त्रिर्नाचिकेतोऽग्निश्चितो यैस्ते त्रिनाचिकेताः, तेऽपि वदन्तीत्यर्थः।

"आत्मानं रथिनं विद्धि शरीरं रथमेव चे"त्युत्तरग्रन्थेन रथित्वस्य विज्ञानात्मनि कल्पनेन संसारमोक्षमार्गगन्तारं कल्पयति, शरीररथारूढस्य ब्रह्मैव गन्तव्यं भवति, "तं दुर्दर्शं गूढमनुप्रविष्ट"मित्यादौ दर्शनात्,[1] तस्माद् गन्तृगन्तव्यभावविशेषणादपि तावेवेत्याह विशेषणेति।

## विशेषणाच्च ॥ १२ ॥ ४३ ॥ ३ ॥

एवं "द्वा सुपर्णा"वित्यत्रापि ज्ञेयम् ॥ १२ ॥

"य एषोऽक्षिणि पुरुषो दृश्यते॰ एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मे"ति, "तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मन्येव गच्छती"ति श्रुतम्, तत्राक्ष्यधिकरणे॰उक्तः स किं प्रतिबिम्बो वा सूर्यादिदेवता वा भोक्ता वा॰ईश्वरो वेति संदेहे 'दृश्यते' इति लिङ्गात् प्रतिबिम्बः, "रश्मिभिरेषोऽस्मिन् प्रतिष्ठित" इति श्रुतेः सूर्यः, 'पुरुष' इति लिङ्गाज्जीवो वा, इति प्राप्ते समाधत्ते॰ अन्तर इति।

## अन्तर उपपत्तेः ॥ १३ ॥ ४४ ॥

ईश्वर एवात्रान्तरः,अमृतत्वाभयत्वब्रह्मत्वादीनामुपपत्तेः, 'सर्पिर्वोदकं वे'त्याद्युपपत्तेश्च, एवम्॰"एष उ एव वामनी[2] "एष उ एव भामनी[3]"रित्यत्रापि ॥ १३ ॥

किंच सर्वस्थानस्थस्य ब्रह्मणो "यः पृथिव्यां तिष्ठन् यमयती"त्यादिना "यश्चक्षुषि तिष्ठ"न्नित्यत्र निर्देशादिकं श्रुतम्,तच्च कुत्र ध्येयमित्याक्षेपे "यश्चक्षुषि तिष्ठ"न्निति नियतस्थानव्यपदेशाच्च ब्रह्मैव "य एषोऽक्षी"त्यादेर्विवक्षितः, शालग्रामे॰इव विष्णोरित्याह स्थानादीति।

## स्थानादिव्यपदेशाच्च ॥ १४ ॥ ४५ ॥

॥ १४ ॥

---

१ मन्तृमन्तव्यत्वेन।

२ एष हि सर्वाणि वामानि नयति,

३ एष हि सर्वेषु लोकेषु भातीत्यर्थः।

अपिच सुखविशिष्टाभिधानादेव ब्रह्मत्वम्, "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे"ति प्रकृतब्रह्मणो ग्रहणस्य न्याय्यत्वात्, "आचार्यस्ते गतिं वक्ते"ति गतिमात्राभिधानप्रतिज्ञानात्, कथमिति तु न, उपक्रमोपसंहारयो"र्यद्वाव कं तदेव खं" यदेव खं तदेव कम्, खंशब्दो ब्रह्मसुखवाचि कंशब्दसमभिव्याहारात्, परस्परविशेषितौ कंखंशब्दौ सुखरूपं ब्रह्म गमयतः, तस्मात् सुखविशिष्टाभिधानादेव ब्रह्मपरत्वमित्याह सुखविशिष्टेति।

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥ ४६ ॥

॥ १५ ॥

युक्त्यन्तरमाह श्रुतेति।

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥ ४७ ॥

श्रुता उपनिषदो येन तस्य ब्रह्मज्ञस्य या गतिर्गमनं मार्गो देवयानाख्यः स एव मार्गोऽक्षिपुरुषोपासकस्य श्रूयते, "आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं स तत्पुरुषोऽमानव एत्य स एतान् ब्रह्म गमयति एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त" इति, तस्मादक्षिस्थं ब्रह्मैवार्थः ॥ १६ ॥

छायादिपुरुषो न ग्राह्य इत्यत्र युक्तिमाह० अनवस्थितेरिति।

## अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥ ४८ ॥ ४ ॥

छायापुरुषस्यैकान्तस्योपासकचक्षुष्यसंभवाद् बिम्बपुरुषान्तरसत्त्वे एव छायासंभवाद् 'दृश्यते' इति वर्तमाननिर्देशाच्च तस्मिन्नमृतत्वादिगुणासंभवाच्च न ग्रहणम्, दृश्यत इत्युपपादनं तु शास्त्रापेक्षमुपासनार्थमविद्वद्विषयम्, तस्माद् ब्रह्म ॥ १७ ॥

"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत" इत्यादि श्रुतम्, अत्राधिदैवतमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदन्तरवस्थितो यमयितान्तर्यामी श्रूयते, स किम्? अधिदैवताद्यभिमानी देवतात्मा किंवा प्राप्ताणिमाद्यैश्वर्यः कश्चिद् योगी किंवा परमात्मा किंवा-

पूर्वमर्थान्तरम्, इति संशये संज्ञाया अप्रसिद्धत्वात् संज्ञिनोऽप्यप्रसिद्धिरतो नापूर्वमर्थान्तरम्, किंतु॰ अन्तर्यमनात् पृथिव्याद्यभिमानी॰ अग्न्यादिदेवता वा योगी वा, न परमात्मा, अकार्यकारणत्वात्, एवं प्राप्ते॰ आह॰ अन्तर्यामीति।

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥ ४९ ॥

योऽत्रान्तर्यामी स पर एवात्मा, कुतः, तद्धर्मव्यपदेशात्, पृथिव्यादिसर्वविकारजातमन्तस्तिष्ठन्नीश्वर एव यमयतीति ब्रह्मधर्मस्योक्तत्वाद् ब्रह्म, सर्वकारणत्वेन सर्वशक्त्युपपत्तेः, आत्मत्वामृतत्वयोस्तत्रैव वेदान्तप्रसिद्धेर्ब्रह्मैवान्तर्यामि ॥ १८ ॥

ननु॰ "अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वत" इति स्मृतिसिद्धसांख्यकल्पितं प्रधानमेवान्तर्यामि स्यात्, रूपादिरहिततयाऽदृष्टत्वादिधर्माणां तत्र संभवात्, इत्याशङ्क्य समाधत्ते न च स्मार्तेति।

## न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥ ५० ॥

अतत् प्रधानभिन्नमात्मा तस्य धर्माणां द्रष्टृत्वादीनामभिलापाच्च प्रधानं स्मार्तमन्तर्यामि, "अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाते"तिहीह वाक्यशेषाज्ज्ञातृत्वादिधर्माभिलापादात्मैव ॥ १९ ॥

ननु शारीरो जीवोऽन्तर्यामी भवतु तस्य चेतनत्वात्, "न दृष्टेर्द्रष्टारं पश्ये" दिति जीवस्याप्यदृष्टत्वादिधर्मसंभवादित्याशङ्क्य सिद्धान्तयति शारीरश्चेति।

## शारीरश्चोभयेऽपि हि भेदेनै-
## नमधीयते ॥ २० ॥ ५१ ॥ ५ ॥

नेति पूर्वसूत्रादनुवर्तनीयम्, शारीरश्च न, कुतः, हि यतः, उभयेऽपि काण्वा माध्यंदिनीयाश्च बृहदारण्यके॰ अन्तर्यामिणः सकाशाद् भेदेन भिन्नत्वेन॰ एनं जीवं पठन्ति, तत्र जीवस्योपाधिपरिच्छिन्नस्य घटाकाशवत् कार्त्स्न्येन पृथिव्यादिष्वन्तरवस्थानं नियमनं च न संभवतीति

भावः, "विज्ञाने तिष्ठ"न्निति काण्वपाठः, "आत्मनि तिष्ठ"न्निति माध्यंदिनाः, अधिकरणत्वेन जीवोपादानात् तद्भिन्नस्तदन्तर्यामी भवति, तस्मादन्तर्यामी पर एवात्मा ॥ २० ॥

"द्वे विद्ये वेदितव्ये" इत्युपक्रम्य "अथ परा यया तदक्षरमधिगम्यते यत् तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा"इति, तत्र भूतयोनिशब्देन प्रधानं जीवः परमात्मा वेति संशये प्रधानमेव, अचेतनानामूर्णनाभिशरीरपृथिव्यादीनां सूत्रे-ओषध्यादिषु कारणत्वस्य दृष्टत्वात्, अचेतनं प्रधानमेव विश्वकारणम्, "अक्षरात् संभवतीह विश्वं पुरुषात् केशलोमानी"ति दृष्टान्तदर्शनात्, इति प्राप्ते ब्रूते· अदृश्यत्वेति।

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥ ५२ ॥

न ह्यचेतनस्य केवलस्योर्णनाभ्यादेः सूत्रयोनित्वम्, तद्वदचेतनं न केवलं शरीरं केशादिजनकम्, किंच अदृष्टत्वाभिलापसंभवे दृष्टत्वाभिलापासंभवाच्च प्रधानं केवलं ग्रहीतुं शक्यते, तस्माद् भूतयोनिः परमात्मा, "अथ यः सर्वज्ञः स सर्वविद्यस्य ज्ञानमयं तपस्तस्मादेतच्चामरूपमन्नं च जायते" इति निर्देशसाम्यात्· यदि प्रधानं तर्हि परा विद्या· इत्यनुपपत्तिः, अतो भूतयोनिरीश्वर एव ॥ २१ ॥

युक्त्यन्तरमाह विशेषणेति।

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥ ५३ ॥

प्रकृतं भूतयोनिमुद्दिश्योक्तं "दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः· अप्राणो ह्यमनाः शुभ्र"इति विशेषणभेदाद् "विकारात् परोऽविकार"इति भेदेन व्यपदेशाच्च न प्रधानजीवौ ग्राह्यौ ॥ २२ ॥

हेत्वन्तरमाह रूपेति।

## रूपोपन्यासाच्च ॥ २३ ॥ ५४ ॥ ६ ॥

"अक्षरात्, परतः पर" इत्यनन्तरम्·"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः

श्रोत्रे वाग्विवृताश्च वेदाः, वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मे"ति रूपोपन्यासात् पर एव ॥ २३ ॥

"को न आत्मा किं ब्रह्मे"त्युपक्रम्य श्रुतम्, "यस्त्वेतमेव प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादा"वित्यादि, तत्र वैश्वानरशब्देन जाठरोऽग्निः॰ उत तदभिमानी देव उत जीव उतेश्वर इति संदेहे "अयमग्निर्वैश्वानरो येनेदमन्नं पच्यत" इति श्रुतेरग्निः, "वैश्वानरस्य सुमतौ स्यामे"ति श्रुतेर्देवता, 'किं न आत्मे'त्युपक्रमाच्छारीरो वा, इति प्राप्ते॰ आह वैश्वानर इति ।

## वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥ ॥ ५५ ॥

यद्यपि वैश्वानरशब्दात्मशब्दावनेकसाधारणौ तथापि विशेषात्॰ "मूर्धैव सुतेजा" इत्यादि "सर्वेष्वात्मस्वन्नमत्ती"ति "को न आत्मा किं ब्रह्मे"त्यसाधारणब्रह्मबोधकशब्दविशेषाद् ब्रह्मैव वैश्वानरः ॥ २४ ॥

## स्मर्यमाणमनुमानं स्यात् ॥ २५ ॥ ५६ ॥

इतश्च ब्रह्मैव वैश्वानरः, कुतः, ईश्वरस्यैव "अग्निरास्यं द्यौर्मूर्धे"ति त्रैलोक्यात्मकं रूपं स्मर्यमाणमस्ति, "सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नम" इति स्मृतेः, मूलश्रुतिरप्येवमेवानुमेया, तस्मादनुमानमनुमेयश्रुतिगमकं स्यात्, तस्माद्ब्रह्म ॥ २५ ॥

ननु नात्र वैश्वानरः परात्मा, कुतः, प्रसिद्धाग्निशब्दवैश्वानरादिशब्दादिभ्यः, "पुरुषेऽन्तः प्रतिष्ठितं वेदे"त्यनेनान्तः प्रतिष्ठानादिति प्राप्ते ब्रूते शब्दादिभ्य इति ।

## शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते ॥ २६ ॥ ५७ ॥

नाग्न्यादि, कुतः, अग्न्यादौ ब्रह्मदृष्ट्युपदेशार्थे तथोक्तेः, "मूर्धैव

सुतेजा" इत्यादीनामसंभवात्, "स एषोऽग्निर्वैश्वानरो यत् पुरुष" इति वाजसनेयिभिरभिधीयते, अतः पर एवात्मा ॥ २६ ॥

अत एव पूर्वोक्तहेतुभ्यो न वैश्वानरशब्दार्थो देवतात्मा भूतात्मा वा॰ अग्निरित्याह॰ अत एवेति ।

अत एव न देवता भूतं च ॥ २७ ॥ ५८ ॥

॥ २७ ॥

जाठराग्निप्रतीकस्तादृशाग्न्युपाधिको वा परमेश्वर उपास्य इत्युक्तम्, इदानीमेताभ्यामुपाधिभ्यां परिच्छिन्नः साक्षात् परात्मा॰ उपास्य इति जैमिनिमतमाह साक्षादिति ।

साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥ ५९ ॥

तथाच विश्वे नरा यस्येति विश्वश्चायं नरश्चेति व्युत्पत्तिराश्रयणीया ॥ २८ ॥

ननु कथं तर्हि प्रादेशमात्रत्वमित्याह॰ अभिव्यक्तेरिति ।

अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥ ६० ॥

अतिमात्रस्यापीश्वरस्य प्रादेशमात्रत्वमभिव्यक्तिनिमित्तम्, प्रादेशमात्ररूपोऽभिव्यज्यत इत्याश्मरथ्य आचार्यो मन्यते ॥ २९ ॥

अनुस्मृतेर्बादरिः ॥ ३० ॥ ॥ ६१ ॥

बादरिस्तु॰ अप्रादेशमात्रोऽपि प्रादेशमात्रोऽनुस्मर्तव्य[१]इत्यनुमन्यते ॥ ३० ॥

द्युप्रभृतीन् पृथिवीपर्यन्तानवयवान् मूर्धप्रभृतिचिबुकान्तेष्ववयवेषु कल्पयित्वा प्रादेशमात्रत्वसंपत्तेः संभवात्, "एष वा अतिष्ठा वैश्वानर इति चक्षुषि॰ उपदिशन् "एष वै सुतेजा वैश्वानर" इति नासिके उपदिशति, "एष वै पृथग्वर्त्मा वैश्वानर" इति मुखाकाशमुपदिशन् संपत्तिनिमित्ता प्रादेशमात्रश्रुतिरिति जैमिनिराचार्योऽनुमन्यते यतः, हीति निश्चयेन काण्वश्रुतिर्दर्शयतीत्याह संपत्तेरिति ।

---

१ ध्यातव्य इत्यर्थः ।

संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥ ६२ ॥

॥ ३१ ॥

जाबाला एनं परमेश्वरमस्मिन् द्युप्रभृतिचिबुकान्ते शिरसि आमनन्ति यथा "य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित" इति सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति "वरणायां नाश्यां चे"त्युक्त्वा "कतमच्चास्य स्थानं भवती"ति भ्रुवोर्घ्राणस्य च यः संधिः स एष द्युलोकस्य परस्य च संधिर्भवती"ति, तस्मात् परमेश्वर एव वैश्वानर इत्याह आमनन्तीति ।

आमनन्ति चैवमस्मिन् ॥ ३२ ॥ ६३ ॥ ७ ॥

॥ ३२ ॥

इति ब्रह्मसूत्रे प्रथमस्याध्यायस्य द्वितीयः पादः ॥ २ ॥ :: :: ॥

अत्र पादेऽधिकरणानि ॥ ७ ॥ * * ॥

इति ब्रह्मसूत्रतात्पर्यविवरणे समन्वयाध्यायस्य द्वितीयः पादः ॥ २ ॥ :: :: ॥

---

## ॥ शाश्वतधर्मदीपिका ॥

दैवं तात न पश्या[1]मि नास्ति दैवस्य साधनम् ।
स्वभावतो हि संसिद्धा देवगन्धर्वदानवाः ॥
प्रेत्य[2] यान्त्यकृतं कर्म न स्मरन्ति सदा जनाः ।
ते वै तस्य फलप्राप्तौ कर्म चापि चतुर्विधम् ॥

---

१ दैवमात्रस्य कर्मशून्यस्य भाग्यमात्रस्य सत्त्वे न प्रत्यक्षं नाप्यनुमानमित्यर्थः। स्वस्य भावात् कर्मणा सर्वे सुखिनः संपन्नाः कर्मदेवबोधकश्रुतिप्रामाण्यादपीत्यर्थः । उपपादनीयं चेदमग्रे। २ प्रेत्य मरणोत्तरमकृतं कर्मफलं न प्राप्नुवन्ति । ते प्रसिद्धा महाजनाः फलप्राप्तौ चाक्षुषादि चतुर्विधं कर्म तत्कारणत्वेन निश्चयेन स्मरन्तीत्यर्थः ।

चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
करोति यादृशं कर्म तादृशं प्रतिपद्यते ॥
निरन्तरं च मिश्रं च लभते कर्म पार्थिव ।
कल्याणं यदि वा पापं नतु नाशोऽस्य विद्यते ॥
कदा[1]चित्सुकृतं कर्म कूटस्थमिव तिष्ठति ।
मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते ॥
ततो दुःखक्षयं कृत्वा सुकृतं कर्म सेवते ।
सुकृतक्षयाच्च दुष्कृतं तद्विद्धि मनुजाधिप ॥
नायं परस्य सुकृतं दुष्कृतं चापि सेवते ।
करोति यादृशं कर्म तादृशं प्रतिपद्यतइति ॥

अत एव स्वकर्मणैव शुभेतरेणाल्पायुष्कता धर्मराजाय गौतमीदृष्टान्तमुखेन भीष्मेणोक्ता । आनु[1]का चन गौतमी नाम ब्राह्मणी सर्पेण दष्टं पुत्रमपश्यत् । विलपन्ती च तत्क्षते सा लुब्धकेन केन चिद्बद्धा ऽऽनीतं दंशकं सर्पं जहीति मुहुरभिधीयमानापि तद्वधं नारोचयत् । लुब्धकस्य च स्ववधे नितान्तमाग्रहमालोक्य स सर्पो नाहं वधकर्ता खड्गइवास्वतन्त्रोऽहं मृत्युरेवात्र कारणमित्याह स्म । अथ मृत्युः प्रादुर्भूय नाहमपि स्वतन्त्रो ऽप्राप्ते काले हन्तुमसामर्थ्यादपि त्वावामुभावपि कालवशगावित्याह । अथ कालोऽप्यागत्य नाहमपि स्वातन्त्र्येण त्वत्पुत्रमरणे हेतुरपि त्वस्य कर्मैवेत्याह स्म ।

यदनेन कृतं कर्म तेनायं निधनं गतः ।
विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम् ॥
यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति ।
एवमात्मकृतं कर्म मानवः प्रतिपद्यते ।

१ तर्हि पूर्वदेहकृतधर्मादेर्यौगपद्येनैव सुखादिजनकत्वं कस्माच्चेत्यत आह ।

यथा छायातपौ नित्यं सुसंबद्धौ निरन्तरम् ॥

तथा कर्म च कर्त्ता च संबद्धावात्मकर्मभिः ।

एवं नाहं न वै मृत्युर्न सर्पो न तथा भवान् ॥

न चेयं ब्राह्मणी वृद्धा शिशुरेवात्र कारणमिति ।

श्रुत्वा चेदं तत्तथेति प्रतिपद्य व्याधस्सर्पं मुमोच विशोका च गौतमी समपद्यतेति[१] ।

एवं स्थिते ऽपि पूर्वकर्मणामल्पायुष्ट्वादिप्रयोजकत्वे धर्मस्य पूर्णायुःकारकताऽपि वर्त्ततएव । अत एव यदि मम पूर्वकर्माणि शुभानि तर्हि मे

१ "ननु पूर्व्वकर्म्मभिरेव मनुष्यः शुभाशुभं प्राप्नोत्ययालमिह पुरुषकारेणेति चेन्मैवम् । प्रारब्धस्यापि तत्तद्बुद्धिचेष्टादिभिः कारणसंघातैरेवान्तरालिकैः फलनिष्पादकत्वात् । न हीश्वरः सर्व्वकारणमिति सूर्य्येणानुदितेनाह्निकीं प्रभां वितरति नयनं विनैव वा रूपाणि दर्शयति इत्यादि मूर्खोऽपि प्रलपति ।

यस्य च सुकुमारमतेर्ह्रृष्युदाहृतापीयं सुयुक्तिर्हृदयं न स्पृशति मन्ये तस्य दैवोपहतबुद्धिकर्म्मणो ऽशुभमेव प्राक्तनकर्म्मसञ्चयं येनानया विमूढबुद्ध्या संयोजितः कल्याणकर्म्मनिवृत्तोऽशुभोदर्काय निश्चेष्ट आस्ते पशुसामान्येन केवलेष्वाहारादिषु वा रमते । सर्वज्ञेनेश्वरेण यत्पूर्व्वमेव प्रकल्पितं तदेव चेष्टमानेष्वचेष्टमानेष्वपि वा नृषु भविष्यतीति पुरुषकारं निराकर्त्तुमिच्छन्ति ये संकोचयितुं सार्वज्ञ्यमेव वैश्वरं तेपि निराकृता एव । न हीदृशाः स्मरन्त्यहो परमेशेन नियतमपि तत्तदशेषकार्य्यजातं नाहं वेद्मीत्यवशमेव लौकिकानुभवानुसारेण स्वप्रकृतिनियोगाद् विचेष्टे । अथाकिञ्चिज्जानतो ऽपि प्रयत्नपरिहाणएव बुद्धिर्मे पर्य्यवतिष्ठेत प्रयत्नपरिहाणस्यैवानिष्टं फलं तत्तल्लोकानुभवसिद्धं ममाशुभधिय ईश्वरेण प्रायेण नियतं स्यात् इति । तथा हि प्रज्ञा हिताहितोत्प्रेक्षिणी देवदत्ता यदि दैवेन हता स्यात् किं नाम न हन्येत । प्रकृतिस्त्वां नियोक्ष्यतीति ।

ईश्वरः सर्व्वभूतानां हृद्देशे ऽर्ज्जुन तिष्ठति ।
भ्रामयन् सर्व्वभूतानि यन्त्रारूढानि मायया ॥

इत्यादीनि तु भगवद्वचनानि तेषुतेषु प्रकृतविचारावसरेष्वनुसन्धेयानि । यदि च कश्चित् सत्यमेव जानीयात् संवत्सरेण लक्षमुद्रा लप्स्यइति स तावन्निश्चेष्ट आस्तां लाभे विषये परन्तु तस्यापि मतिगतिचेष्टास्तादृशलाभानुकूला एवावश्यं भवेयुः प्रसह्य निश्चेष्टतामालिलम्बिषोरपि । इति पुरुषकारत्यागपक्षोपि प्रकृतिस्त्वां नियोक्ष्यतीत्यादिवचनाविरोधेन भाविनिश्चयस्थले तावत् स्वीक्रियतां न च विस्मर्य्यतां प्रकृतेर्बुद्धिनियन्तृत्वं येयं वचसि स्वीक्रियामपि ते क्रियायामपाकुर्य्यात् ।" इति प्रमदादासमहाशयः ।

शुभं स्याद्देवान्यथा तु न किमपीति तत्रोदासितव्यमिति शङ्काया नावकाशः। अत एव हैहयेन मृगयां गतेन मृगबुध्या ब्राह्मणं हत्वा पश्चात्तप्यमानेन प्रसादनार्थं तत्पितुः समीपं प्राप्य स्वेन हतं विप्रं पुनरुज्जीवितं दृष्ट्वा विस्मितेन पृष्टस्तार्क्ष्यनामा मुनिराह। वनपर्वणि। अ॰ १८। श्लो॰ ४

कारणं वः प्रवक्ष्यामि हेतुयोग[1]समासतः।
सत्यमेवाभिजानीमो नानृते कुर्महे मनः॥

स्वधर्ममनुतिष्ठामस्तस्मान्मृत्युभयं न नः।
यद् ब्राह्मणानां कुशलं तदेषां कथयामहे॥

नैषां दुश्चरितं ब्रूमस्तस्मान्मृत्युभयं न नः।
अतिथीनन्नपानेन भृत्यानत्यशनेन च॥

संभोज्य शेषमश्नीमस्तस्मान्मृत्युभयं न नः।
क्षान्ता दान्ताः क्षमाशीलास्तीर्थदानपरायणाः॥

पुण्यदेशनिवासाच्च तस्मान्मृत्युभयं न नः।
तेजस्विदेशवासाच्च तस्मान्मृत्युभयं न नः॥

तथा चोक्तं भीष्मेण। आनु १०४

आचाराल्लभते ह्यायुराचाराल्लभते श्रियम्।
आचारात्कीर्त्तिमाप्नोति पुरुषः प्रेत्य चेह च॥

दुराचारो हि पुरुषो नेहायुर्विन्दते महत्।
त्रस्यन्ति यस्माद्भूतानि तथा परिभवन्ति च॥

तस्मात्कुर्यात्सदाचारं य इच्छेद्भूतिमात्मनः।
अपि पाप[2] शरीरस्य आचारो हन्त्यलक्षणम्॥

१ हेतुयोगः युक्तिसंबन्धः समासः संक्षेपस्ताभ्यमिति पञ्चम्यर्थे तसिः।
२ पापभोगार्थं धृतशरीरस्यापीत्यर्थः।

आचारलक्षणो धर्मः सन्तस्त्वाचारलक्षणाः ।
साधूनां च यथा वृत्तमेतदाचारलक्षणम् ॥
ये नास्तिका निष्क्रियाश्च गुरुशास्त्राभिलङ्घिनः ।
अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः ॥
सर्वलक्षणहीनोऽपि समुदाचारवान्नरः ।
श्रद्दधानोऽनसूयुश्च शतं वर्षाणि जीवति ॥
अक्रोधनः सत्यवादी भूतानामविहिंसकः ।
अनसूयुरनीहश्च शतं वर्षाणि जीवति ॥

इत्यादिना विस्तरेण ।

न हीदृशमनायुष्यं लोके किं चन विद्यते ।
यादृशं पुरुषस्येह परदारोपसेवनम् ॥

इत्यादिना च कार्याकार्यं निरूप्य ।

आगमानां हि सर्वेषामाचारः श्रेष्ठ उच्यते ॥
आचारप्रभवो धर्मो धर्मादायुर्विवर्द्धते ।
एतद्यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ॥
अनुकम्प्य सर्ववर्णान् ब्रह्मणा समुदाहृतम् ।

इत्यन्तेन संदर्भेण ।

अत एव द्यूतनिर्जिते युधिष्ठिरे वनं गतवति तदनुरागादनुगच्छतः परःसहस्रान्ब्राह्मणादीन्भोजयितुमकिंचनतयाऽशक्नुवति तपसा त्वत्मनोरथसिद्धिर्भविष्यतीत्यर्थकं शौनकवचनम् । वनपर्वणि अध्याये २ श्लो. ७४

इज्याध्ययनदानानि तपः सत्यं क्षमा दमः ।
अलोभ इति मार्गोयं धर्मस्याष्टविधः स्मृतः ॥
अत्र पूर्वश्चतुर्वर्गः पितृयाण[१]पथे स्थितः ।

१ धूमादिमार्गे ।

कर्त्तव्यमिति यत्कार्यं नाभिमानात्समाचरेत् ॥
उत्तरो देवयानस्तु सद्भिराचरितः सदा ।
अष्टाङ्गेनैव मार्गेण विशुद्धात्मा समाचरेत् ॥
सम्यक् संकल्पसम्बन्धात्सम्यक् चेन्द्रियनिग्रहात् ।
सम्यग्व्रतविशेषाच्च सम्यक् च गुरुसेवनात् ॥
सम्यगाहारयोगाच्च सम्यक् चाध्ययनागमात् ।
सम्यक्कर्मोपसंन्यासात्सम्यक् चित्तनिरोधनात् ॥
एवं कर्माणि कुर्वन्ति संसारविजिगीषवः ।
रागद्वेषविनिर्मुक्ता ऐश्वर्यं देवता गताः ॥
रुद्राः साध्यास्तथाऽऽदित्या वसवो ऽथ तथा ऽश्विनौ ।
योगैश्वर्येण संयुक्ता धारयन्ति प्रजा इमाः ॥
तथा त्वमपि कौन्तेय शममास्थाय पुष्कलम् ।
तपसा सिद्धिमन्विच्छ योगसिद्धिं च भारत ॥
पितृमातृमयी सिद्धिः प्राप्ता कर्ममयी च ते ।
तपसा सिद्धिमन्विच्छ द्विजानां भरणाय वै ॥
सिद्धा हि यद्यदिच्छन्ति कुर्वते तदनुग्रहात् ।
तस्मात्तपः समास्थाय कुरुष्वात्ममनोरथम् ॥ इति ।

ततश्च सूर्याराधनेन लब्धपात्रीकः सर्वानेव यथेच्छमभोजयदिति कथा च ।

ननु अवश्यकल्पनीयेश्वरेच्छामात्रनिबन्धना एते भावा वन्हिजलादेरुष्णत्वशीतत्वादयइव । उक्तञ्च । वनप । अ ३० श्लो २२

धातैव खलु भूतानां सुखदुःखे प्रियाप्रिये ।
दधाति सर्वमीशानः पुरस्ताच्छु[1]क्रमुच्च[2]रन् । इति ।

१ प्राक्कर्मबीजम् । २ अनुसरन् ।

इति चेन्न । तस्य वैषम्यनैर्घृण्यापातात् । अत एवोक्तं वैषम्यनैर्घृण्ये न सापेक्षत्वादिति । अत एवेमामाशङ्कां वनपर्वणि । अ ३० श्लो ४१

कर्मचेत्कृतमन्वेति कर्त्तारं नान्यमृच्छति ।
कर्मणा तेन पापेन लिप्य[1]ते नूनमीश्वरः ॥
अथ कर्मकृतं पापं न चेत्कर्त्तारमृच्छति ।
कारणं बलमेवेह जनान् शोचा[2]मि दुर्बलान् ॥ इति ।

द्रौपद्या कृतां समादधे धर्मराजः । वनपर्वणि । ३१ श्लो २

नाहं कर्मफलान्वेषी राजपुत्रि चराम्युत ।
ददानि देयमित्येव यजे यष्टव्यमित्युत ॥
अस्तु वात्र फलं मा वा कर्त्तव्यं पुरुषेण यत् ।
गृहे वा वसता कृष्णे यथाशक्ति करोमि तत् ॥
धर्मं चरामि सुश्रोणि न धर्मफलकारणात् ।
आगमाननतिक्रम्य सतां वृत्तमवेक्ष्य च[3] ॥
धर्मएव मनः कृष्णे स्वभावाच्चैव मे धृतम् ।
धर्मवाणिज्यको हीनो जघन्यो धर्मवादिनाम् ॥
न धर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति ।
यश्चैनं शङ्कते कृत्वा नास्तिक्यात्पापचेतनः ॥
अतिवा[4]दाद्वदाम्येष मा धर्ममभिशङ्किथाः ।
धर्माभिशङ्की पुरुषस्तिर्यग्गतिपरायणः ॥
धर्मो यस्याभिशङ्क्यः स्यादार्षं वा दुर्बलात्मनः ।
वेदाच्छूद्रइवापेयात्स लोकादजरामरात् ॥

१ प्रयोजकत्वात् २ लोकसिद्धप्रभुवदन्ततः प्रमादकल्पनावश्यकतयेश्वरत्वस्यैव भङ्गप्रसङ्ग इत्याशयः । ३ अबाधितनिश्चयजनकत्वेन शिष्टाचारेण चानुमाय । ४ वैदैक-प्रामाण्यादिति टी॰

वेदाध्यायी धर्मपरः कुले जातो मनस्विनि ।
स्थविरेषु स योक्तव्यो राजर्षिर्धर्मचारिभिः ॥
पापीयान्स हि शूद्रेभ्यस्तस्करेभ्यो विशिष्यते ।
शास्त्रातिगो मन्दबुद्धिर्यो धर्ममभिशङ्कते ॥
प्रत्यक्षं हि त्वया दृष्ट ऋषिर्गच्छन्महातपाः ।
मार्कण्डेयोऽप्रमेयात्मा धर्मेण चिरजीवि[1]ता ॥
व्यासो वसिष्ठो मैत्रेयो नारदो लोमशः शुकः ।
अन्ये च ऋषयः सर्वे धर्मेणैव सुचेतसः ॥
प्रत्यक्षं पश्यसि ह्येतान् दिव्ययोगसमन्वितान् ।
शापानुग्रहणे शक्तान्देवेभ्यो ऽपि गरीयसः ॥
एते हि धर्ममेवादौ वर्णयन्ति सदा ऽनघे ।
कर्त्तव्यममरप्रख्याः प्रत्यक्षागमबुद्धयः ॥
अतो नार्हसि कल्याणि धातारं धर्ममेव च ।
राज्ञि मूढेन मनसा क्षेप्तुं शङ्कितुमेव च ॥
उन्मत्तान्मन्यते बालः सर्वानागतनिश्चयान् ।
धर्माभिशङ्की नान्यस्मात्प्रमाणमधिग[2]च्छति ॥

१ चिरजीवी । २ प्रामाण्यवैशिष्ट्येन निश्चिनोति ।

## BRAHMA.

Some time ago there appeared in the *Pioneer* of Allahabad an interesting review which opens with an explication of the term *Brahma*. It is defined to be "the spiritual reality, which itself unmanifested, underlies all the manifested and unreal world of experience." The explanation is concluded by the remarks: "The Brahma of the Vedantin is, in the language of European philosophy, unconscious. Consciousness begins where duality be-

gins." It is not our object to quarrel for a name or epithet. But it seems to be an oddity in language to define Brahma an unconscious spirit.

Attempting thus to explicate the term Brahma, the learned reviewer involves in a real complication the term *spirit*, and the explication becomes a failure.

What *is* a spirit, if it is not intelligent or conscious? The only sense that can be intelligibly attached to the word spirit, is that it is a conscious being as contradistinguished from matter which is unconscious, unthinking, dead. Further on, the reviewer remarks—"the intelligence, which the ultimate spiritual reality is, is said to be eternal knowledge without objects—self-luminousness, (the?) imparting (of?) light to all the cognitions of personal intelligences." The question naturally suggests itself, what forsooth is meant by "eternal knowledge" and the metaphorical 'self-luminousness,' if intelligence is to be denied to Brahma?

The reviewer, in justice to the Vedanta and to his own study of the philosophy, ought to have supplied the answer. But stop! He has not altogether failed to do so. Brahma, he defines, is thought, 'pure and simple, thought that has not yet developed itself into the duality of consciousness'—it is the 'Idea' of the modern transcendentalists. It is further remarked that 'it is only at a certain height that thought rises into the thought of this or that thinker.' Whatever may be said in support of such a philosophy, the Vedantin would certainly refuse to be associated, as a comrade, with a thinker of this mood; would be astonished at such a glaring misconception of the supreme Brahma (infinitely blessed * as it is, though transcending our consciousness) as is involved in the supposition that Brahma is thought in its lowest and crudest form, an embryo-intelligence, as it were, which rises higher and higher, as it is gradually developed into the intelligence or sentiency of a

* एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ।
*Brihadáranyaka upanishad P.* 816. *Bib. Ind. Edition.*

vegetable, an insect, a reptile, a beast and lastly a man. So far as our experience goes, the human consciousness is the highest possible development of this crude and "obscure thought presenting itself in higher and higher concretions throughout the ages." With all the lofty aspirations that the learned reviewer ascribes to such a transcendentalism,* the *Brahma-vádin* would absolutely repudiate it as a theory more grovelling than that even of the Materialist. For, whilst the latter elevates matter into the possession of intelligence, the former degrades intelligence itself to the level of matter, of chaos—the primeval form of the worlds. But what seems still stranger is the definition of the God of the transcendentalist :—"The God of the modern transcendentalist is the Idea already conscious of itself, perfect and proceeding towards the perfect." How, by the bye, has this idea, this imperfect intelligence, suddenly helped itself into perfection in the case of God? Has not the reviewer spoken of the existence of all things as "the evolution of an intelligence *more and more perfect,*" of "the higher and higher concretions" into which this "obscure thought" develops itself, of the "*progressive* explication of the Idea?"

The perfection of intelligence which such a God is supposed to be, can only be consummated at the latter end of eternity; but as there is no such end, the Idea, though advancing nearer and nearer to the formation of a God, can never reach the goal, and God has not yet been, nor will ever be, created! The Idea, again, in God, with obvious inconsistency, is said to be 'perfect and proceeding towards the perfect.' Process or progress pre-supposes imperfection. How then can the perfect proceed towards the perfect? Metaphors often serve as a mischievous instrument in the mystification of language and in giving an air of grandeur and profundity to what is a mere confusion of ideas. The above definition would seem to be an instance of such mystic confusion and contradiction of thoughts.

* We speak of the system as represented by the reviewer.

Brahma is *not* thought, crude and imperfect, that *develops* itself into conscious personalities, but the *Absolute* and *Perfect* Intelligence, of which all conscious personalities are but *partial manifestations.* Brahma is not the crude material, out of which the world of spirit and matter is gradually developed, but the all-pervading reality, the all-sustaining spirit, the all-illuminating intelligence, which, every moment, without mutation, progress or process, being absolute and ever perfect in its nature, lends to the many and changing the manifestation which belongs to itself.

As light is the essence of all reflections and colours—manifest in itself, requiring no illumination and independent of the objects which it illuminates—so Brahma is the essence of all conscious personalities and unconscious appearances, absolutely intelligent, and abides independent of the relation of subject and object, and 'the illumination of cognitions and *cognita.*'

Neither of the epithets 'conscious' and 'unconscious'—can properly be applied to Brahma.* The latter epithet however is liable to a gross misinterpretation, more especially than the former. It might lead one to suppose that Brahma is something like unthinking matter or unconscious nature, such as is believed in by some men of physical science and was held by the ancient Sánkhyas, the Pradhana-vádins, against whose theory the following *sútra* of Bádarayana is especially intended :—ईक्षतेर्नाशब्दम् । ५ । which may be thus explained: Such a theory of intelligence is not unsupported by the Veda ; for the verb ईक्ष् to see, to know, to be intelligent, is used in respect of Brahma.

To say that Brahma is unconscious in itself, and that conscious souls are developed from it, is almost as absurd as to say that the sun is not visible in itself, but the rays which are developed from it and reflected upon the retina ; though techni-

* "Those who espouse this alternative position make the erroneous assumption that the choice is between personality and something lower than personality ; whereas the choice is rather between personality and something higher. Is it not just possible that there is a mode of being as much transcending intelligence and will, as these transcend mechanical motion ?" *Spencer's First Principles, p.* 109.

cally speaking such a language would not be incorrect. As the manifestation—the visibility—of the starry heavens, the sun and moon and the fair face of creation that smiles around us, is light and nothing but the appearance of light; so the entire manifestation of the universe—visibility, tangibility and all the other sensations and their impressions, is nothing but the manifestation of the unknown and unknowable Brahma.

"The God (or rather Demiurgus) of the Vedanta," says the learned reviewer, "is not Brahma *per se.* but Brahma as associated with the totality of illusion, as his 'causal body' (कारण शरीर). God and the personal intelligences, say the Vedatins, enjoy beatitude in the state of dreamless sleep." *

In the first place, it is to be observed that the reviewer forgets that it is only by a *metaphor* that the dissolution of the world is spoken of as the 'dreamless sleep' of Íśwara, just as the sun and the moon are represented as his eyes, the Veda as his breath, all space as his navel, the heaven as his head and so forth. The above definition of Íśwara (which is taken from the Vedánta-sára) can hardly be intelligible to the English reader, acquainted though he be with European philosophy. The word 'illusion' is not co-extensive with the technical term *Máyá,* which implies the abstraction of all laws, physical and metaphysical. *Máyá* is the inscrutable principle regulating the universe of phenomena, or rather, the world itself regarded as ultimately inconceivable. It is Nature, considered as the mysterious will of God. *Máyá, Śakti,* (power) and *prakriti* (nature) are, in the Vedánta, interchangeable terms. The Relative is said to be illusive in the sense that it is not the Absolute, but only a manifestation of the Absolute. The illusion, which the universe is held to be, is often compared to the silver seen in the mother-o'-pearl. Yet it is not to be understood that the Vedantin holds

* It is never to be forgotten that beatitude is compared to dreamless sleep, *only* with reference to this point of resemblance that both states are devoid of objective knowledge. The latter state is often spoken of as being characterised by the quality of darkness, *tamas.*

the former to be exactly of the same kind as the latter, which is designated *Prátibhasika-satta* in contradistinction from *vyávahárika-sattá* and *páramárthika-sattá,* ascribed, respectively, to the World and God. These two latter phrases cannot be better rendered and, with lesser chance of misunderstanding, than by 'relative existence' and 'absolute existence.' The illusive existence *(prátibhásika sattá)* of silver in the mother-o'-pearl is distinct from the relative existence *(vyávahárika-sattá)* of the world, inasmuch as the former is destroyed by the senses themselves, whilst the latter can only cease on our conscious existence merging into the Absolute.

The misconception must be profound which leads to the application of the name Demiurgus to the *Íśwara* of the Vedantin. By Brahma's being associated with máyá, the Vedantin simply means the Absolute manifesting itself in a personality conscious of the totality of the relative, or, in other words, in an Omniscient Being ruling the universe which is *máyámaya* or ultimately inconceivable. By Brahma's being assosiated with *máyá,* is meant his inscrutable union with that inscrutable principle by which the universe makes its appearance in Him ; by controlling which, He manifests himself, or, to use the Vedantic phrase, reflects himself in a personality knowing and governing all.* The Vedantist says—' He reflects himself'—to intimate that the Absolute—Brahma is not *changed* in his nature as Iśwara (—for change is opposed to the very conception of the Absolute—), any more than the sun is affected by being reflected. Thus, Iśwara is Brahma in mysterious relation to the world. कारण शरीर causal body is a disignation of *máyá,* regarded as the origin of all bodies. The learned reviewer's definition of the God of Christian Theology is indeed a paraphrase of the above definition of Iśwara.† It runs

* मायाबिम्बो वशीकृत्य तां स्यात् सर्व्वज्ञ ईश्वरः । *Panchadasi.*

† The only difference seems to be that. of the conceptions of the Absolute and the Personal God, the Upanishad regards the former as the higher, whilst the Bible considers the latter as the higher idea.

## अपिच स्मर्यते ॥ २३ ॥ ८६ ॥ ७ ॥

॥ २३ ॥

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" तथा "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमक" इत्यादौ च० अङ्गुष्ठमात्रः पुरुषो जीवो वेश्वरो वा, जीव एव, परिमाणोपदेशात्,

"अथ सत्यवतः कायात् पाशबद्धं वशं गतम्।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्" ॥

इत्यादिपुराणाच्च जीव एवेति प्राप्ते० आह शब्दादिति।

## शब्दादेव प्रमितः ॥ २४ ॥ ८७ ॥

"ईशानो भूतभव्यस्ये"ति श्रुतिशब्दाद् ब्रह्मैव, नहि जीवस्य निरङ्कुशमीशितृत्वम् ॥ २४ ॥

कथं तर्हि सर्वगस्याङ्गुष्ठपरिमितत्वश्रवणमत आह हृद्यपेक्षयेति।

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥ ८८ ॥ ८ ॥

सर्वगस्यापि हृदयाद्यवच्छेदेनाङ्गुष्ठमात्रत्वम्, यथा वंशपर्वाद्यवच्छेदेनारत्निमात्रत्वं सापेक्षं तथा, न च गजादिहृदयानां महत्त्वात् कथमङ्गुष्ठमात्रत्वमिति, मनुष्याधिकारत्वाच्छास्त्रस्य, तस्मात् पर एव ॥ २५ ॥

मनुष्याधिकारत्वप्रसङ्गाद्देवादीनामप्यधिकारो ज्ञानेऽस्तीत्याह तदुपरीति।

## तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥ ८९ ॥

यद्यपि कर्मणि० इन्द्रादीनां देवानामृषीणां च नाधिकारस्तेषामिन्द्रान्तराभावात्० आर्षेयान्तराभावात्, तथापि विद्यास्वधिकारो भवति, नहि तत्र देवतापेक्षास्ति, स्वयं प्रभातवेदानां तेषामुपनयनाद्यनपेक्षणात्, अत एव श्रुतौ० "एकशतं ह वै वर्षाणि प्रजापतौ० इन्द्रो ब्रह्मचर्यमुवास" इति "भृगुर्वै वारुणिर्वरुणं पितरमुपससारे"ति च श्रूयते, तस्माद्देवादीनामपि विद्यास्वधिकार इत्याशयमादायाह तदुपरीति, तेषां मनुष्याणामुपरि स्वर्गे विद्यमानानां देवादीनामप्यधिकारमाह बादरायणः ॥ २६ ॥

अपिच स्मर्यते ॥ २३ ॥ ८६ ॥ ७ ॥

॥ २३ ॥

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" तथा "अङ्गुष्ठमात्रः [प]ुरुषो ज्योतिरिवाधूमक" इत्यादौ च॰ अङ्गुष्ठमात्रः पुरुषो जीवो वेश्वरो [व]ा, जीव एव, परिमाणोपदेशात्,

"अथ सत्यवतः कायात् पाशबद्धं वशं गतम् ।

अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्" ॥

इत्यादिपुराणाच्च जीव एवेति प्राप्ते॰ आह शब्दादिति ।

शब्दादेव प्रमितः ॥ २४ ॥ ८७ ॥

"ईशानो भूतभव्यस्ये"ति श्रुतिशब्दाद् ब्रह्मैव, नहि जीवस्य निर[ङ्]कुशमीशितृत्वम् ॥ २४ ॥

कथं तर्हि सर्वगस्याङ्गुष्ठपरिमितत्वश्रवणमत आह हृद्यपेक्षयेति ।

हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥ ८८ ॥ ८ ॥

सर्वगस्यापि हृदयाद्यवच्छेदेनाङ्गुष्ठमात्रत्वम्, यथा वंशपर्वाद्यवच्छेदेनारत्निमात्रत्वं सापेक्षं तथा, न च गजादिहृदयानां महत्त्वात् कथ[म]ङ्गुष्ठमात्रत्वमिति, मनुष्याधिकारत्वाच्छास्त्रस्य, तस्मात् पर एव ॥ २५ ॥

मनुष्याधिकारत्वप्रसङ्गाद्देवादीनामप्यधिकारो ज्ञानेऽस्तीत्याह त[द]ुपरीति ।

तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥ ८९ ॥

यद्यपि कर्मणि॰ इन्द्रादीनां देवानामृषीणां च नाधिकारस्तेषा[म]न्द्रान्तराभावात्॰ आर्षेयान्तराभावात्, तथापि विद्यास्वधिकारो भवति, [न]हि तत्र देवतापेक्षास्ति, स्वयं प्रभातवेदानां तेषामुपनयनाद्यनपेक्षणात्, [अ]त एव श्रुतौ॰ "एकशतं ह वै वर्षाणि प्रजापतौ॰ इन्द्रो ब्रह्मचर्यमुवास" [इ]ति 'भृगुर्वै वारुणिर्वरुणं पितरमुपससारे"ति च श्रूयते, तस्माद्देवादी[न]ामपि विद्यास्वधिकार इत्याशयमादायाह तदुपरीति, तेषां मनुष्याणा[म]ुपरि स्वर्गे विद्यमानानां देवादीनामप्यधिकारमाह बादरायणः ॥ २६ ॥

ननु कुतो दहरवाक्ये "य एष संप्रसाद" इत्यादिना जीवपरामर्श इत्यत आह-अन्यार्थेति।

अन्यार्थश्च परामर्शः॥ २०॥ ८३॥

अन्यार्थमहात्म्यार्थं परामर्शो न जीवस्वरूपपरः, किंतु ब्रह्मपरः॥ २०॥

ननु कथमन्तराकाश इत्यल्पत्वश्रुतिरिति चेदाह॰ अल्पेति।

अल्पश्रुतेरिति चेत् तदुक्तम्॥ २१॥ ८४॥ ६॥

अर्भकौकस्त्वाधिकरणे निचाय्यत्वादित्यनेनोपलब्धिस्थानत्वात्, तदुक्तम्॥ २१॥

"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"॥

इति श्रूयते, तत्र 'यस्य भासे'त्यत्र यच्छब्दार्थः॰ 'तमेवे'त्यत्र तच्छब्दार्थः किं तेजोविशेष उतेश्वर इति प्रश्ने तेजोविशेषातिशय एव, यथा सूर्ये तेजसि सति॰ अहनि॰ अन्यदल्पं चन्द्रतारकादि तेजो न भासते तथा सूर्यादधिकतेजस्कः पदार्थस्तेज एव, तस्मिन् सति सूर्यादिकमपि॰ इति प्राप्ते॰ आह॰ अनुकृतेरिति।

अनुकृतेस्तस्य च॥ २२॥ ८५॥

प्राज्ञ एव भवति, अनुकरणात् तस्य, 'तमनुभाति सर्व'मित्यत्र तच्छब्दार्थस्य प्राक् प्रसिद्धौ हि तमनु सर्वं भासते, नहि सूर्यादधिकस्तेजोविशेषः क्वचित् प्रसिद्धः, ब्रह्मणि च "भारूपः सत्यसंकल्प" इत्यादौ भासकत्वं प्रसिद्धम्, 'तस्य भासा' इति तद्धेतुकं सूर्यादीनां भानमुच्यमानं प्राज्ञमीश्वरं गमयति, "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृत"मिति श्रुतेश्च, न च सजातीययोरेवानुकार इति नियमः, भौमं रजो वायुं वहन्तमनुवहतीति दृष्टत्वात्, तस्मात् पर एव॥ २२॥

गीतास्वप्येवं स्मर्यते "न तद्भासयते सूर्यो न शशाङ्क" इत्यादिनेत्याह॰ अपिचेति।

## अपिच स्मर्यते ॥ २३ ॥ ८६ ॥ ७ ॥

॥ २३ ॥

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" तथा "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः" इत्यादौ च॰ अङ्गुष्ठमात्रः पुरुषो जीवो वेश्वरो वा, जीव एव, परिमाणोपदेशात्,

"अथ सत्यवतः कायात् पाशबद्धं वशं गतम्।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्" ॥

इत्यादिपुराणाच्च जीव एवेति प्राप्ते॰ आह शब्दादिति।

## शब्दादेव प्रमितः ॥ २४ ॥ ८७ ॥

"ईशानो भूतभव्यस्ये"ति श्रुतिशब्दाद् ब्रह्मैव, नहि जीवस्य निरङ्कुशमीशितृत्वम् ॥ २४ ॥

कथं तर्हि सर्वगस्याङ्गुष्ठपरिमितत्वश्रवणमत आह हृद्यपेक्षयेति।

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥ ८८ ॥ ८ ॥

सर्वगस्यापि हृदयाद्यवच्छेदेनाङ्गुष्ठमात्रत्वम्, यथा वंशपर्वाद्यवच्छेदेनारत्निमात्रत्वं सापेक्षं तथा, न च गजादिहृदयानां महत्त्वात् कथमङ्गुष्ठमात्रत्वमिति, मनुष्याधिकारत्वाच्छास्त्रस्य, तस्मात् पर एव ॥ २५ ॥

मनुष्याधिकारत्वप्रसङ्गाद्देवादीनामप्यधिकारो ज्ञानेऽस्तीत्याह तदुपरीति।

## तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥ ८९ ॥

यद्यपि कर्मणि॰ इन्द्रादीनां देवानामृषीणां च नाधिकारस्तेषामिन्द्रान्तराभावात्॰ आर्षेयान्तराभावात्, तथापि विद्यास्वधिकारो भवति, नहि तत्र देवतापेक्षास्ति, स्वयं प्रभातवेदानां तेषामुपनयनाद्यनपेक्षणात्, अत एव श्रुतौ॰ "एकशतं ह वै वर्षाणि प्रजापतौ॰ इन्द्रो ब्रह्मचर्यमुवास" इति "भृगुर्वै वारुणिर्वरुणं पितरमुपससारे"ति च श्रूयते, तस्माद्देवादीनामपि विद्यास्वधिकार इत्याशयमादायाह तदुपरीति, तेषां मनुष्याणामुपरि स्वर्गे विद्यमानानां देवादीनामप्यधिकारमाह बादरायणः ॥ २६ ॥

ननु॰ इन्द्रादीनां स्वरूपसंनिधानाद् यदि कर्माङ्गभावस्तदा देवता विग्रहवती स्यात्, सशरीरत्वे युगपदनेकयागादौ संनिधानासंभवाच्च, तस्माच्चाशरीराणां तेषां विद्याधिकार इत्याशङ्क्य समाधत्ते विरोध इति।

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्ते-
## दर्शनात् ॥ २७ ॥ ९० ॥

न विरोधः, कस्मात्, अनेकस्वरूपप्रतिपत्तेः, युगपन्नानाशरीराणामतीन्द्रियाणामङ्गीकारात्, अत एव 'कति देवा' इत्युपक्रम्य "त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति महिमान एवैषाम्॰ एते त्रयस्त्रिंशत् त्वेव देवा" इति श्रुतिरेकैकस्य देवतात्मनोऽनेकरूपतां दर्शयति,

"आत्मानां च सहस्राणि बहूनि भरतर्षभ।
योगी कुर्याद् बलं प्राप्य तैश्च सर्वैर्महीं चरेत्" ॥

इति योगिनामप्यनेकशरीरं संभवि, किमु वक्तव्यमाजन्मसिद्धानां देवानाम्, अनेकरूपत्वे "वज्रहस्तः पुरंदर"इति च, तस्माद्विग्रहवत्त्वेऽपि न कोऽपि विरोधः, तस्माद्देवादीनामपि विद्यास्वधिकारः ॥ २७ ॥

नन्वनित्यशरीराङ्गीकारे॰ इन्द्रादिपदानां वैदिकानामप्याधुनिकसंकेतापत्तिः, तथा च॰"औत्पत्तिकस्तु शब्दस्यार्थेन संबन्ध" इति जैमिनिसूत्रविरोधे सति संकेतयितृपुरुषसापेक्षत्वाद् वैदिकशब्दानामप्रामाण्यापत्तिरित्याशङ्क्य समाधत्ते शब्द इति।

## शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥ ९१ ॥

अतः॰ नित्याद् वेदाद् देवादीनामुत्पत्तेः, किं प्रमाणमिति चेत्, प्रत्यक्षानुमानाभ्याम्, प्रत्यक्षं श्रुतिः, अनुमानं स्मृतिः, ताभ्याम्, "स भूरिति व्याहरन् स भूमिमसृजत" इति श्रुतेः।

"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे" ॥

इति स्मृतेः प्रमाणत्वात्, यदुक्तम्॰ अनित्यव्यक्तिसंबन्धाद्वेदाप्रा-

माण्यं तदपि न, गवादिशब्दानां नित्यायामाकृतौ शक्तिर्न व्यक्तिषु, आनन्त्यव्यभिचाराभ्याम्, एवं चेन्द्राद्याकृतीनां नित्यत्वेन शक्तेरप्यनादित्वान्न पुरुषसापेक्षत्वम्, तेनाप्रामाण्यापत्तिर्न, तस्मान्नाप्रामाण्यम् ॥ २८ ॥

आचार्यसंप्रदायोक्तिपूर्वकं सिद्धान्तयति "वर्णा एव तु शब्द इति तु भगवानुपवर्ष" इति, स्पष्टोऽर्थः, वेदस्य नित्यत्वं साधयति अत एवेति।

## अत एव नित्यत्वम् ॥ २९ ॥ ९२ ॥

नियताकृतेर्देवादेर्जगतो वेदप्रभवत्वादेव वेदानुपूर्व्या नित्यत्वम्, वर्णास्त्वनित्या एव, श्रुतिरपि "यज्ञेन वाचः पदवीयमायंस्तामन्वविन्दन् ऋषिषु प्रविष्टा"मिति स्थितामेव वाचमनुविन्नां दर्शयति, व्यासश्च,

"युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञातान् स्वयंभुवा" ॥

इति ॥ २९ ॥

नन्विदं तदा भवति यद्यनाद्यविच्छेदेनैव व्यक्तय उत्पद्येरन्, नहीदं संभवति, यदा सकलं नामरूपात्मकं जगत् प्रलीयते पुनः कालान्तरे प्रभवति तदा संकेतयितुरपेक्षेति कथमेतदित्याशङ्क्याह समानेति।

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥ ९३ ॥

सत्यप्यवान्तरप्रलये सर्वव्यवहारोच्छेदे पुनः परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां वेदं स्मृत्वा कल्पान्तरव्यवहारानुसंधानोपपत्तेः सुप्तप्रबुद्धवत् पूर्वतनैः समाननामरूपत्वात् पुनरावृत्तावपि पुनरुत्पादेऽपि॰ अविरोधः, दर्शनात्॰ श्रुतेः, "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" ॥ "धाता यथापूर्वमकल्पयत्"॰ "ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः। शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः" ॥ इति स्मृतेश्चेत्यर्थः ॥ ३० ॥

देवादीनां विद्यास्वधिकार इत्युक्तम्, तद्दूषयति जैमिनिरित्याह मध्वादीति।

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥ ९४ ॥

मधुविद्यायां श्रूयते॰ "असौ वा आदित्यो देवमध्वि"ति॰आदित्योपासनमुक्तम्, तत् कथं देवानां संभवति, आदित्यान्तराभावात्, "अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादो वायुर्वाव संवर्ग आदित्यो ब्रह्मेत्यादेश"इत्यादावपि न देवादीनामधिकारः संभवतीति, तत्सामान्यादितरेषु तथात्वमिति न्यायेन सर्वास्वप्युपासनासु देवादीनामनधिकारं जैमिनिराचार्यो मन्यते, इन्द्रादीनां ब्रह्मचर्यादिप्रतिपादनं प्राशस्त्यपरम् ॥ ३१ ॥

अनधिकारे युक्त्यन्तरमाह ज्योतिषीति।

## ज्योतिषि भावाच्च ॥ ३२ ॥ ९५ ॥

यदिदं परिभ्रमज्ज्योतिर्मण्डलमवभासयते प्रत्यक्षसिद्धं तेन हृदयादिविग्रहेण चेतनधर्मार्थित्वादिना योगो न संभवति,मृदादिवदचेतनत्वान्मण्डलादेः, न चात्र चेतनो देहाभिमानी प्रत्यक्षः, अर्थवादादयः प्राशस्त्यार्थाः, तस्मादपि नाधिकारः ॥ ३२ ॥

एतदपवादेन बादरिमतमाह भावं त्विति।

## भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥ ९६ ॥ ९ ॥

तुशब्दः पूर्वमतव्यावृत्त्यर्थः, बादरायणस्त्वाचार्यो मध्वादिविद्यायामसंभवादनधिकारेऽपि शुद्धब्रह्मविद्यायामधिकारं मन्यते,यथा कर्मणि मनुष्याणामधिकारेऽपि न सर्वेषां सर्वत्र, शूद्रादीनामनधिकारात्, राजसूयादौ ब्राह्मणानाम्, तद्वदत्रापि। अत एव 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभव"दित्यादिदर्शनमपि, तस्मात्॰ हीति निश्चयेन॰ अधिकारोऽस्ति ॥ ३३ ॥

ननु देवादिवत्॰ शूद्रस्याधिकारो भवति, तेषामाहवनीयाद्यन्यभावेऽपि तदनपेक्षविद्याधिकारे किमपि न बाधकम्, श्रुतिरपि, जान॰

श्रुतिः पौत्रायणं शूद्रशब्देन परामृश्याह॰"अहहारे त्वा शूद्र तवैव स॰
गोभिरस्त्वि"ति प्राप्ते॰ आह शुगस्येति।

शुगस्य तदनादरश्रवणात् तदाद्रवणात
सूच्यते हि ॥ ३४ ॥ ९७ ॥

न शूद्रस्याधिकारो वेदाध्ययनाभावात्, उपासनस्य शास्त्रीयत्वात् तस्मा'च्छूद्रो यज्ञेऽनवक्लृप्त' इति न्यायस्यात्रापि संभवात्, यत् संवर्गविद्यायां शूद्रशब्दः, रैक्वस्यानादनार्थम्,शुक् शोकः॰ अस्य शुचमभिदुद्राव शुचा वाभिदुद्रावेति शूद्रशब्दो यौगिकस्त्रैवर्णिकस्य न रूढः, तस्माच्च शूद्रस्याधिकारः ॥ ३४ ॥

युक्त्यन्तरमाह क्षत्रियेति।

क्षत्रियत्वगतेश्चोत्तरत्र रथेन लिङ्गात् ॥ ३५ ॥ ९८ ॥

उत्तरत्र चैत्ररथिनाभिप्रतारिणा क्षत्रियेण समभिव्याहाराल्लिङ्गादस्य शूद्रत्वमपि न, तस्मात्क्षत्रियत्वगतेः समभिव्याहारादुत्तरत्र रथेन लिङ्गाच्चाधिकारः शूद्रस्य ॥ ३५ ॥

युक्त्यन्तरमाह संस्कारेति।

संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३६ ॥ ९९ ॥

तत्तद्विद्यास्थले॰ उपनयनादिसंस्काराः परामृश्यन्ते॰"अधीहि भगव इति होपससाद" "समित्पाणयो भगवन्तं पिप्पलादमुपसन्ना" इत्यादिषु "न शूद्रे पातकं किंचिन्न च संस्कारमर्हती"ति शूद्रस्य संस्कारनिषेधात्, तस्मादपि नाधिकारः ॥ ३६ ॥

अन्यामपि युक्तिमाह तदभावेति।

तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥ १०० ॥

यत् सत्यवचनेन शूद्रत्वाभावे निर्धारिते गौतमो जाबालमुपनेतुं प्रवृत्तो "नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगा" इति श्रुतेः शूद्रत्वाभावनिर्धारणे॰ उपदेशप्रवृत्तेः ॥ ३७ ॥

हेत्वन्तरमाह श्रवणेति।

देवादीनां विद्यास्वधिकार इत्युक्तम्, तद्दूषयति जैमिनिरित्याह मध्वादीति।

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥ ९४ ॥

मधुविद्यायां श्रूयते॰ "असौ वा आदित्यो देवमध्वि"ति॰आदित्योपासनमुक्तम्, तत् कथं देवानां संभवति, आदित्यान्तराभावात्, "अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादो वायुर्वाव संवर्ग आदित्यो ब्रह्मेत्यादेश"इत्यादावपि न देवादीनामधिकारः संभवतीति, तत्सामान्यादितरेषु तथात्वमिति न्यायेन सर्वास्वप्युपासनासु देवादीनामनधिकारं जैमिनिराचार्यो मन्यते, इन्द्रादीनां ब्रह्मचर्यादिप्रतिपादनं प्राशस्त्यपरम् ॥ ३१ ॥

अनधिकारे युक्त्यन्तरमाह ज्योतिषीति।

## ज्योतिषि भावाच्च ॥ ३२ ॥ ९५ ॥

यदिदं परिभ्रमज्ज्योतिर्मण्डलमवभासयते प्रत्यक्षसिद्धं तेन हृयादिविग्रहेण चेतनधर्मार्थित्वादिना योगो न संभवति,मृदादिवदचेतनत्वान्मण्डलादेः, न चात्र चेतनो देहाभिमानी प्रत्यक्षः, अर्थवादादयः प्राशस्त्यार्थाः, तस्मादपि नाधिकारः ॥ ३२ ॥

एतदपवादेन बादरिमतमाह भावं त्विति।

## भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥ ९६ ॥ ९ ॥

तुशब्दः पूर्वमतव्यावृत्त्यर्थः, बादरायणस्त्वाचार्यो मध्वादिविद्यायामसंभवादनधिकारेऽपि शुद्धब्रह्मविद्यायामधिकारं मन्यते,यथा कर्मणि मनुष्याणामधिकारेऽपि न सर्वेषां सर्वत्र, शूद्रादीनामनधिकारात्, राजसूयादौ ब्राह्मणानाम्, तद्वदत्रापि। अत एव "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभव"दित्यादिदर्शनमपि, तस्मात्॰ हीति निश्चयेन॰ अधिकारोऽस्ति ॥ ३३ ॥

ननु देवादिवत्॰ शूद्रस्याधिकारो भवति, तेषामाहवनीयाद्यग्न्यभावेऽपि तदनपेक्षविद्याधिकारे किमपि न बाधकम्, श्रुतिरपि, जान-

श्रुतिः पौत्रायणं शूद्रशब्देन परामृश्याह॰"अहहारे त्वा शूद्र तवैव सह गोभिरस्त्वि"ति प्राप्ते॰ आह शुगस्येति ।

शुगस्य तदनादरश्रवणात् तदाद्रवणात सूच्यते हि ॥ ३४ ॥ ९७ ॥

न शूद्रस्याधिकारो वेदाध्ययनाभावात्, उपासनस्य शास्त्रीयत्वात् तस्मा'च्छूद्रो यज्ञेऽनवक्लृप्त' इति न्यायस्यात्रापि संभवात्, यत् संवर्गविद्यायां शूद्रशब्दः, रैक्वस्यानादनार्थम्,शुक् शोकः॰ अस्य शुचमभिदुद्राव शुचा वाभिदुद्रावेति शूद्रशब्दो यौगिकस्त्रैवर्णिकस्य न रूढः, तस्माच्च शूद्रस्याधिकारः ॥ ३४ ॥

युक्त्यन्तरमाह क्षत्रियेति ।

क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥ ९८ ॥

उत्तरत्र चैत्ररथिनाभिप्रतारिणा क्षत्रियेण समभिव्याहाराल्लिङ्गादस्य शूद्रत्वमपि न, तस्मात्क्षत्रियत्वगतेः समभिव्याहारादुत्तरत्र रथेन लिङ्गाच्चाधिकारः शूद्रस्य ॥ ३५ ॥

युक्त्यन्तरमाह संस्कारेति ।

संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३६ ॥ ९९ ॥

तत्तद्विद्यास्थले॰ उपनयनादिसंस्काराः परामृश्यन्ते॰"अधीहि भगव इति होपससाद" "समित्पाणयो भगवन्तं पिप्पलादमुपसन्ना" इत्यादिषु "न शूद्रे पातकं किंचिन्न च संस्कारमर्हती"ति शूद्रस्य संस्कारनिषेधात्, तस्मादपि नाधिकारः ॥ ३६ ॥

अन्यामपि युक्तिमाह तदभावेति ।

तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥ १०० ॥

यत् सत्यवचनेन शूद्रत्वाभावे निर्धारिते गौतमो जाबालमुपनेतुं प्रवृत्तो "नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगा" इति श्रुतेः शूद्रत्वाभावनिर्धारणे॰ उपदेशप्रवृत्तेः ॥ ३७ ॥

हेत्वन्तरमाह श्रवणेति ।

## श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥ १०१ ॥ १० ॥

शूद्रस्य वेदश्रवणाध्ययनादीनां प्रतिषेधात्, यथा"अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां कर्णपूरणम्, उदाहारे जिह्वाच्छेदः, धारणे हृदयभेदः," तस्मा"च्छूद्रसमीपे नाध्येय"मित्यादिस्मृतेश्च नाधिकारः, विदुरधर्मव्याधप्रभृतिशूद्राणां पूर्वजन्मसंस्कारवशाज्ज्ञानोत्पत्तेः फलप्राप्तिः ॥३८॥

समाप्तोऽयं प्रासङ्गिकविचारः, इदानीं प्रकृतानामेव वाक्यानां विचारः क्रियते, "यदिदं किंच जगत् सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ती"ति, "एजृ कम्पन" इति जगत् प्राणाश्रयं स्पन्दते महद् भयकारणं वज्रशब्दितमुद्यतं तद्विज्ञानाच्चामृतत्वप्राप्ति"रिति श्रूयते, तत्र कोऽसौ प्राणः किं भयानकम्, वज्रं प्राणो वा ब्रह्म वेति संशये पञ्चवृत्तिः प्राणः, प्राणशब्दप्रसिद्धेः, "वायुर्भयं वायौ पर्जन्यभावेन विवर्तमाने विद्युत्स्तनयित्नुवृष्ट्यशनयो विवर्तन्ते वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति", तस्माद्वायुरिति प्राप्ते॰ आह कम्पनादिति।

## कम्पनात् ॥ ३९ ॥ १०२ ॥ ११ ॥

प्राणः परात्मा॰ पूर्वोत्तरपर्यालोचने ब्रह्मैव, "तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते" इत्युपक्रम्यै"तज्जगत् सर्वं प्राण एजती"ति लोकाश्रयत्वप्रत्यभिज्ञानात्, "प्राणस्य प्राण"मिति दर्शनात् प्राणशब्दोऽयं ब्रह्मणि, कम्पनमपि न प्राणे, "न प्राणेन नापानेन मर्त्यो जीवति कश्चन॰ इतरेण तु जीवति यस्मिन्नेतावुपाश्रितौ", वज्रशब्दोऽपि भयहेतुत्वसामान्यात्, सूर्यादयो हि ब्रह्मणो भयादेव स्वस्वव्यापारे प्रवर्तन्ते, "भीषास्माद्वातः पवते" इति दर्शनात्, तस्माद् ब्रह्म ॥ ३९ ॥

"एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यत्र ज्योतिःशब्देन चक्षुर्विषयं तमोविघातकं तेज एव प्रसिद्धेरिति प्राप्ते॰ आह ज्योतिरिति।

ज्योतिर्दर्शनात् ॥ ४० ॥ १०३ ॥ १२ ॥

ब्रह्मैवात्र ज्योतिः, दर्शनात्, इह वक्तव्यत्वेनानुवृत्तेः, "य आत्मापहतपाप्मे"त्यादिप्रत्यभिज्ञानात्, "अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशत" इत्यशरीरतायै ज्योतिःसंपत्तेरभिधानात्, "परं ज्योतिः" "स उत्तमः पुरुष" इति च गमकम्, अतो ज्योतिर्ब्रह्म ॥ ४० ॥

"आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्मे"-त्यत्राकाशं प्रसिद्धं गगनं ब्रह्म वेति संशये॰ अवकाशदानद्वारा निर्वाहकत्वादाकाशपदप्रसिद्धेश्च भूताकाश इति प्राप्ते ब्रूते॰ आकाशेति ।

आकाशोऽर्थान्तरत्वव्यपदेशात् ॥ ४१ ॥ १०४ ॥ १३ ॥

"ते यदन्तरा" इति नामरूपाभ्यामर्थान्तरमाकाशं व्यपदिष्टम्, "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"ति ब्रह्मकर्तृत्वव्यपदेशादाकाशशब्दाद् ब्रह्म ॥ ४१ ॥

"कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इत्यादिना विज्ञानात्मज्योतिःशब्दैः संसारी॰ उत परात्मा, संसारी, उपक्रमे "योऽयं विज्ञानमयः प्राणे"ष्विति शारीरलिङ्गात्, उपसंहारे च "स वा एष महानज आत्मा योऽयं विज्ञानमयः", इति मध्येऽपि जीव एवेति प्राप्ते॰ आह सुषुप्तीति ।

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥ १०५ ॥

"अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तर"मिति सुषुप्तौ शारीराद् भेदेन व्यपदेशात्, एवम्॰ "अयं शारीर आत्मा प्राज्ञेनात्मना न्वारूढ उत्सर्जन् याती"त्युत्क्रान्तौ भिन्नत्वेन निर्देशात्, तस्मादवस्थाद्वयेऽपि भेदेन दृष्टत्वात् पर एवात्र ग्राह्यः ॥ ४२ ॥

पत्यादीति ।

पत्यादिशब्देभ्यः ॥ ४३ ॥ १०६ ॥ १४ ॥

इति ब्रह्मसूत्रे प्रथमाध्यायस्य तृतीयः पादः ॥ ३ :: :: ॥

॥ अत्र पादेऽधिकरणानि ॥ १४ ॥ * * ॥

यतोऽस्मिन् वाक्ये पत्यादिशब्दा असंसारिस्वभावप्रतिपादकाः, आदिना 'वशी' इत्यादिशब्दः, "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपति"रिति, अतोऽपि संसारी पर एव ग्राह्य इत्यर्थः ॥ ४३ ॥

इति ब्रह्मसूत्रतात्पर्यविवरणे प्रथमाध्यायस्य तृतीयः पादः ॥ ३॥ :: :: ॥

पूर्वं ब्रह्मजिज्ञासां प्रतिज्ञाय ब्रह्मलक्षणमुक्तम्, अशब्दत्वात् प्रधानं कारणत्वेन निराकृतम्, तदत्राक्षिप्य समाधानार्थं परो ग्रन्थः प्रवर्तते, प्रधानस्याशब्दत्वं न संभवति, आनुमानिकं प्रधानमपि काठके शब्दितम्, "महतः परमव्यक्तमव्यक्तात् पुरुषः परः", यथा सांख्याः प्रधानं येन शब्देन येन क्रमेण पठन्ति स्मृतौ तथैव कठवल्ल्यां श्रुतम्, तस्याशब्दत्वाभावात् तदेव जगत्कारणमित्याशङ्क्य दूषयति-आनुमानिकेति।

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥ १०७ ॥

न कठवल्लीवाक्यं स्मृतिप्रसिद्धमहदव्यक्तयोरतिरिक्तयोरस्तित्वपरम्, न हि श्रुतिस्मृत्योः सर्वत्र प्रधानप्रसिद्धिरस्ति, एकतमप्रसिद्धेः, अतोऽव्यक्तशब्देन शरीररूपकविन्यस्तं भूतसूक्ष्मं कारणमुच्यते प्रकरणात् परिशेषाच्च, यथा- आत्मशरीरादीनां रथिरथादिरूपकं दर्शितम्,

"आत्मानं रथिनं विद्धि शरीरं रथमेव च।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" ॥

इन्द्रियादिभिरसंयतैः संसारमधिगच्छति, संयतैस्त्वध्वनः पारं विष्णोः परमं पदं दर्शयति,

"महतः परमव्यक्तमव्यक्तात् पुरुषः परः।
पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः" ॥

इत्यादौ य इन्द्रियादयो रथकल्पनायामश्वादिभानेन प्रकृतास्त एवेह गृह्यन्ते प्रकृतहानादिदोषभयात्, तथा चात्मादीन्द्रियपर्यन्तं सर्वत्र समानं परत्वम्, विषया अपीन्द्रियभयगोचरत्वात् पराः, इन्द्रियाणां ग्रहत्वं विषयाणामतिग्रहत्वं श्रुतेः, मनोमूलकत्वाद्विषयव्यवहाराणां मनसः परत्वम्, बुद्ध्यारोहणेन मनसः कार्यकरत्वाद्बुद्धेः परत्वम्, सर्वव्यवहारभोक्तृत्वादात्मनः परत्वम्, स एवात्मा पूर्वं रथित्वेन क्लृप्तः, भोक्तृभोगोपकरणात् परत्वात्, तस्यैव स्वामित्वान्महत्त्वं नार्थान्तरं किंचित्, तस्माद् भोग्यभोक्तृवर्गापेक्षयाव्यक्तमवशिष्यते तदेवाव्यक्तशब्देन दर्शयति श्रुतिरित्यवगम्यते, एवं च ब्रह्मावगमार्थम्,

"यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि।
ज्ञानमात्मनि नियच्छेत् तद्यच्छेच्छान्त आत्मनि" ॥

इति 'वागादिव्यापारमुत्सृज्य मनोमात्रेणावतिष्ठेत'· इत्यारभ्य 'शान्त आत्मनी'ति परपुरुषे प्रतिष्ठापनकथनात्, तस्मात् पूर्वापरपर्यालोचनायात्र परकल्पितप्रधानस्यावकाशोऽस्ति, तस्मादशब्दं परकल्पितं प्रधानं न ॥ १ ॥

ननु शरीरस्य प्रत्यक्षत्वेन व्यक्तत्वात् कथमव्यक्तशब्दितमत आह सूक्ष्मं त्विति।

## सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥ १०८ ॥

स्थूलस्य व्यक्तत्वेन सूक्ष्मं शरीरं ग्राह्यम्, अव्यक्तत्वार्हत्वात् ॥ २ ॥

ननु जगदव्यक्तरूपं नामरूपबीजभूतं प्रागवस्थितमतिरिक्तमङ्गीक्रियते तदेवास्माकं प्रधानमत आह तदधीनत्वेति।

## तदधीनत्वादर्थवत् ॥ ३ ॥ १०९ ॥

नह्यस्माभिर्जगतः स्वतन्त्रावस्था जगत्कारणत्वेनाङ्गीक्रियते किंतु ब्रह्मणोऽज्ञानं मायैव,सा चानादिः, सैवाव्यक्तम्, माया चावश्यमङ्गीकार्या, न हि तया विना ब्रह्मणो जगत्स्रष्टृत्वं सिध्यतीति, अर्थवत्त्वात्, तदधीनत्वात् सृष्टेः,तदेवाज्ञानमक्षराव्यक्तमायाशब्दैः सूच्यते न गुणसाम्या-

वस्थारूपं पदार्थान्तरम्, "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर"-मिति, तस्माच्च प्रधानमतिरिक्तम् ॥ ३ ॥

युक्त्यन्तरमाह ज्ञेयत्वेति।

ज्ञेयत्वावचनाच्च ॥ ४ ॥ ११० ॥

सांख्यैः प्रकृतिपुरुषविवेकज्ञानात् कैवल्यमिति क्वचिद्विभूतिविशेषप्राप्तये प्रधानं ज्ञेयमिति ह्युक्तम्, तथा च कथं मोक्षायाव्यक्तं ज्ञेयत्वेनोच्यते भवता, अतोऽपि ज्ञेयत्वावचनाच्चाव्यक्तशब्देन प्रधानमुच्यते ॥ ४ ॥

ननु

"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते" ॥

इति ज्ञेयत्ववचनादस्ति प्रधानमव्यक्तशब्दनिर्दिष्टमित्याशङ्क्याह वदन्तीति।

वदन्तीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥ १११ ॥

नात्र प्रधानं निचाय्यत्वेनोक्तं ब्रह्मप्रकरणात्, "पुरुषान्न परं किंचि"दिति,

"एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" ॥

इति, तत्र चेतनात्मविज्ञानान्मृत्युमुखान्मुच्यत इत्युक्तम्, तस्माच्च प्रधानं ज्ञेयमव्यक्तशब्दनिर्दिष्टं वा ॥ ५ ॥

युक्त्यन्तरमाह त्रयाणामेवेति।

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥ ११२ ॥

यस्मात् त्रयाणामेवाग्निजीवपरमात्मनां कठवल्ल्यां प्रश्नोपन्यासवरप्रदानानां वक्तव्यत्वेनोपन्यासो दृश्यते, "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्य"मित्यग्निप्रश्नः, "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इति जीवप्रश्नः, "अन्यत्र धर्मा-

इत्यत्राधर्मादन्यत्रास्मात् कृताकृता"दिति परमात्मप्रश्नः, "लोकादिमग्निं तमुवाचे"त्यग्न्युपन्यासः, "हन्त त इदं प्रवक्ष्यामि गुह्य"मिति जीवोपन्यासः, "न जायते म्रियते वा विपश्चि"दिति परमात्मोपन्यासश्च, बहुतरं दृश्यते, न प्रधानस्य वरदानं प्रश्नादि च । तस्मान्न प्रधानम् ॥ ६ ॥

## महद्वच्च ॥ ७ ॥ ११३ ॥ १ ॥

यथा सांख्यैर्महच्छब्दः सत्तामात्रे प्रथमजे प्रयुक्तः, न तद्वैदिके प्रयोगेऽभिधीयते,"बुद्धेरात्मा महान् परः" "महान्तं विभुमात्मानं""पुरुषं महान्त"मित्यादौ, तथाऽव्यक्तशब्दोऽपि न प्रधानमभिदधाति, अतो न प्रधानस्य शब्दत्वम् ॥ १ ॥

ननु० "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा" इत्यादिमन्त्रप्रतिपादितत्वात् कथमशब्दत्वं प्रधानस्येति प्राप्ते० आह चमसवदिति ।

## चमसवदविशेषात् ॥ ८ ॥ ११४ ॥

नानेन श्रुतिमत्त्वं सांख्यवादस्य, अजादिपदानां साधारणत्वेन तन्मात्रपरत्वाभावात्, यथाकथंचिच्छ्रुतिप्रसिद्धतेजोऽबन्नात्मिकायाः प्रकृतेरेवात्र गृहीतत्वेन श्रौतप्रत्यभिज्ञायाः प्रबलत्वेन न सांख्यीया प्रकृतिर्ग्रहीतुं शक्यते, अतोऽशब्दत्वमेव, 'यथा ह्यर्वाग्विलश्चमस ऊर्ध्वबुध्न' इत्यादौ यथाकथंचिदर्वाग्विलत्वादिकल्पनोपपत्तेर्नात्र चमसनामाऽसाधारणः, तथात्रापीत्यर्थः ॥ ८ ॥

इह पुनः केयमजा प्रतिपत्तव्या तत्राह ज्योतिरुपक्रमेति ।

## ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥ ११५ ॥

ईश्वरादुत्पन्ना ज्योतिःप्रमुखा तेजोऽबन्नलक्षणा चतुर्विधभूतग्रामस्य प्रकृतिभूतेयमजा ग्राह्या न तु गुणत्रयसाम्यावस्थारूपा, यतः एके शाखिनः परमेश्वरात् तेजोऽबन्नानामुत्पत्तिमधीयते,"यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्ये"ति तान्येवेह प्रत्यभिज्ञायन्ते, किं कारणम्, ब्रह्मेत्युपक्रमात् ॥ ९ ॥

ननु कथं तेजोऽबन्नात्मिका त्रिरूपाऽजा प्रतिपत्तव्या, यतस्तेष्वजाकृतेरभानाज्जन्यत्वेन न जायत इत्यस्याप्यभावात् कथमेतदत आह कल्पनेति।

## कल्पनोपदेशाच्च मध्वादिवदविरोधः॥ १०॥ ११६॥ २॥

नायमाकृतिविशेषनिमित्तोऽजाशब्दः, नापि यौगिकः, किंतु कल्पनोपदेशादजारूपकॢप्तिसाम्यात्, यथा लोके काचिदजा नानारूपा-बहुबर्करा सरूपबर्करा तां कश्चिच्छागो जुषमाणः कश्चिज्जहाति तद्वदियं तेजोऽबन्नात्मिका प्रकृतिस्त्रिवर्णा बहु सरूपं चराचरं जनयति कश्चिदनुशेते॰ अन्यो जहातीति गुणसाम्यात् प्रयोगः, यथादित्यस्यामधुनो मधुत्व वाचोऽधेनोर्धेनुत्वं तद्वत्॥ १०॥

ननु "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितस्तमेव मन्य आत्मानं विद्वान् ब्रह्माऽमृतोऽमृत"मित्यादौ पञ्चसंख्यागुणविषयाऽपरा पञ्चसंख्या श्रूयते पञ्चद्वयदर्शनात्,ते पञ्चविंशतिः संपद्यन्ते, तत्संख्यया संख्येया अपि पञ्चविंशतिर्व्यक्तय आकाङ्क्ष्यन्ते, ते च सांख्यप्रसिद्धास्तत्त्वाख्याः, मूलप्रकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त षोडश विकाराः पुरुषश्चेति पञ्चविंशतितत्त्वानि ग्राह्याणि॰उत प्राणादिपञ्चकमिति संशये सांख्यप्रसिद्धपञ्चविंशतितत्त्वानीति प्राप्ते॰उच्यते न संख्येति।

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च॥ ११॥ ११७॥

न सांख्यसंख्योपसंग्रहो घटते, आकाशात्मनोर्भेदेन ग्रहीतत्वेन सप्तविंशतित्वापातात्, तस्माच्च पञ्चजनाः सांख्यतत्त्वानि, किं तर्हि, पञ्चजनशब्दः संज्ञावाची, "दिक्संख्ये संज्ञाया"मिति समासविधानात्, पञ्चजनसंज्ञकाः पञ्चेत्यर्थात् संज्ञिनः प्राणादय एवोक्ता इत्यर्थः॥ ११॥

के ते पञ्चजना इत्यत आह प्राणेति।

## प्राणादयो वाक्यशेषात्॥ १२॥ ११८॥

"यस्मिन् पञ्च" इत्यत्रान्ते "प्राणस्य प्राणमुत चक्षुषश्चक्षु"रिति वाक्यशेषगताः प्राणादय एव ग्राह्याः, जनशब्दपर्यायः पुरुषशब्दः प्राणेषु

प्रयुक्तः, "एते पञ्च ब्रह्मपुरुषाः" प्राणः पिता" इत्यादिदर्शनात्, एवं निषादपञ्चमा वर्णा देवपितृगन्धर्वासुररक्षांसि वा पञ्चजना ग्राह्याः ॥ १२ ॥

ननु भवन्तु पञ्चजनाः प्राणादयः पञ्च माध्यंदिनीयादीनाम्, येषां तु काण्वादीनां प्राणादिष्वन्नस्यानुक्तिस्तेषां कथं प्राणादयः पञ्चेत्यत आह ज्योतिषेति ।

## ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥ ११९ ॥ ३ ॥

तेषामन्नानुक्तेर्ज्योतिषा पञ्चत्वसंपादनं कार्यं काण्वानाम्, अन्येषां सत्यपि ज्योतिष्यन्नमादायैव संख्यापूरणादपेक्षाभावान्न ग्रहणम् ॥ १३ ॥

पूर्वं ब्रह्मलक्षणमुक्तम्, वेदान्तानां ब्रह्मविषयत्वमुक्तम्, प्रधानस्याशब्दत्वमपि, इदानीं जगतोऽव्यवस्थितक्रमत्वात् तत्कारणत्वं पुनरसंभवि, तथाहि, क्वचिदा"त्मन आकाशः संभूत"इत्यादि क्वचित् "तत् तेजोऽसृजत" "स इमाल्लोकानसृजत" "एतस्माज्जायते प्राण" इत्यादिक्रमविरोधान्न युक्तः समन्वय इति प्राप्ते आह कारणेति ।

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥ १२० ॥ ४ ॥

भवतु सर्जनीयेषु क्रमे विवादः, वियदादीनामतात्पर्यविषयत्वात् कारणाद्वितीयब्रह्मबोधाय तेषामुपन्यासात्,स्रष्टरि तु ब्रह्मणि न विगानम्,तस्मादेकवाक्यतायाः सुसंपादत्वाद्युक्तो जगत्कारणसमन्वयः ॥ १४ ॥

कौषीतकिनो "यो ह वै बालाके एतेषां पुरुषाणां कर्ता यस्य चैतत् कर्म स वै वेदितव्य" इति, तत्र वेदितव्यो जीवो वा मुख्यप्राण उत परमात्मेति संशये प्राण एव, "यस्य चैतत् कर्मे"ति स्पन्दरूपकर्मणो वायौ संभवात्, "प्राण एव एकधा भवती"ति दर्शनाच्चेति, अथवा जीवः, तस्यापि धर्माधर्मलक्षणकर्मवाक्यशेषे जीवलिङ्गदर्शनात् प्राणभृत्त्वाच्चेति प्राप्ते आह जगदिति ।

जगद्वाचित्वात् ॥ १५ ॥ १२१ ॥

'एतत् कर्मे'ति जगद्वाचित्वात्, जगत्कर्तृत्वं च पूर्ववदीश्वरस्यैव, तस्मात् पर एव ॥ १५ ॥

यत् पुनः कारणे विप्रतिपत्तिः "असद्वा इदमग्र आसीत्" "सदेव सौम्येदमग्र आसी"दिति तत् परिहरति समेति।

समाकर्षणात् ॥ १६ ॥ १२२ ॥

"यतोऽसन्नेव स भवती"त्युपक्रम्यासद्वादापवादेनास्तित्वलक्षणं ब्रह्मात्मानं निर्धार्य नामरूपव्याकृतवस्तुनि प्रायेण सच्छब्दः प्रयुक्तः, अतः परिशेषाज्जगदेव सर्वनाम्ना परामृश्यते, तदेव कर्म, तस्मात् कर्तात्र पर एव ॥ १६ ॥

जीवस्य मुख्यप्राणस्य च लिङ्गात् तयोरेव ग्रहणमित्याशङ्क्याह जीवेति।

जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्या-
तम् ॥ १७ ॥ १२३ ॥

उपक्रमोपसंहाराभ्यां ब्रह्मविषयत्वमस्य, अतो ब्रह्मैव, प्राणशब्दोऽपि ब्रह्मपर एव ॥ १७ ॥

अपिच जीवपरं ब्रह्मपरं वेति नास्त्यत्र संदेहः, अन्यार्थं ब्रह्मप्रतिपत्त्यर्थं जीवपरामर्शः प्रश्नव्याख्यानाभ्याम्, अपिच वाजसनेयिनः स्पष्टं विज्ञानमयशब्देन जीवं परामृश्य तद्व्यतिरेकेण परमात्मानमामनन्ति, "य एष विज्ञानमयः पुरुषः क्व वैतदभूत् कुत एतदागा"दिति। तस्माद्ब्रह्मेति जैमिनिराह-अन्यार्थमिति।

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि
चैवमेके ॥ १८ ॥ १२४ ॥ ५ ॥

॥ १८ ॥

"न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय

सर्वं प्रियं भवति" "आत्मा द्रष्टव्य" इत्यादावात्मा किं विज्ञानात्मा वा परो वेति संशये जीव एव,"विज्ञातारमरे केन विजानीया"दिति ज्ञातृशब्देनोपसंहाराद्विज्ञानात्मपरमेवोपदिष्टम्, तस्मात् सर्वविज्ञानवचनं भोक्त्रर्थत्वाद् भोग्यजातस्यौपचारिकं द्रष्टव्यमिति प्राप्ते॰ आह वाक्येति ।

वाक्यान्वयात् ॥ १९ ॥ १२५ ॥

इदं वाक्यं पूर्वापरविचारेण परात्मानं प्रत्यन्विताववयवं लक्ष्यते, "अमृतस्य तु नाशास्ति वित्तेने"ति श्रुत्वा "येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूही"ति मोक्षमिच्छन्त्या मैत्रेय्या आत्मविज्ञानं याज्ञवल्क्य उपदिदेश ॥ १९ ॥

यदुक्तं प्रियसंसूचितोपक्रमाद्विज्ञानात्मन एवायं दर्शनोपदेशस्तत्राह प्रतिज्ञेति ।

प्रतिज्ञासिद्धे[१]र्लिङ्गमाश्मरथ्यः ॥ २० ॥ १२६ ॥

"आत्मनि विज्ञाते सर्वमिदं विज्ञात"मिति॰"इदं सर्वं यदयमात्मा"इत्यादिप्रतिज्ञायाः सिद्धिं सूचयति, एतल्लिङ्गं यत् प्रियसंसूचितस्यात्मनो द्रष्टव्यत्वकीर्तनम्,तस्मात् प्रतिज्ञासिद्धये विज्ञानात्मपरात्मनोरभेदेनोपक्रमणमित्याश्मरथ्य आचार्यो मन्यते ॥ २० ॥

विज्ञानात्मन एव देहेन्द्रियबुद्ध्यादिसंघातोपाधेः कलुषीभूतस्य ध्यानज्ञानादिसाधनानुष्ठानात् संप्रसन्नस्य देहादिसंघादुत्क्रमिष्यतः परमात्मनैक्योपपत्तेरिदमभेदेनोपक्रमणमित्यौडुलोमिराहेत्याह॰उदिति ।

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥ १२७ ॥

॥ २१ ॥

अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमभेदेनोपक्रमणम्, "अनेन जीवेनात्मनानुप्रविश्ये"ति "सर्वाणि रूपाणि विचिन्त्य धीर"इति च श्रुतिजातं परस्य जीवभावावस्थां दर्शयति काशकृत्स्न इत्याह॰ अवस्थितेरिति ।

---

१ भाष्ये सिद्धेरिति पाठः ।

अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥ १२८ ॥ ६ ॥

इदमेव श्रुतिसंमतम् ॥ २२ ॥

पूर्वं 'जन्माद्यस्य यत' इति लक्षणमुक्तं तद् ब्रह्मणो मृत्सुवर्णादिवदुपादानत्वरूपप्रकृतित्वे कुलालादिवन्निमित्तत्वेऽपि समानम्, तत्र किं निमित्तत्वेन जगत्कारणत्वमुतोपादानप्रकृतित्वेनेति संदेहे॰ ईक्षापूर्वकसृष्टिकथनात् कुलालादिवन्निमित्तकारणमेव ब्रह्मेति प्राप्ते॰ उच्यते प्रकृतिरिति।

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥ १२९ ॥

न केवलं निमित्तमेव किंतु प्रकृतिर्निमित्तं चेत्युभयरूपम्, प्रतिज्ञादृष्टान्तानुपरोधात्, "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमत"मित्याद्युपक्रम्य॰ एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः॰ 'एकेन मृत्पिण्डेन सर्व'मिति दृष्टान्तस्य चानुरोधात्॰ अभिन्ननिमित्तोपादानत्वम्, उभयरूपत्वं ब्रह्मणः, अधिष्ठात्रन्तराभावात् कर्तृत्वम्॰ उपादानान्तराभावात् प्रकृतित्वं चेत्यर्थः ॥ २३ ॥

उभयरूपत्वे युक्त्यन्तरमाह॰अभिध्येति।

अभिध्योपदेशाच्च ॥ २४ ॥ १३० ॥

"सोऽकामयत बहु स्यां प्रजायेये"त्यादौ ध्यानपूर्वकं स्वातन्त्र्येण प्रवृत्तेः कर्तृत्वं "बहु स्या"मिति प्रत्यगात्मविषयत्वाद्बहुभवनस्य॰ उपादानं चेत्यर्थः ॥ २४ ॥

साक्षाद् ब्रह्मैवोपादाय प्रभवप्रलययोराम्नानादपि प्रकृतित्वम्, "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ती"ति,यद् यस्मात् प्रभवति यत्र लीयते तत् तस्योपादानमिति प्रसिद्धमेव, व्रीह्यादीनां पृथिवीवत्,इत्याह साक्षादिति।

साक्षाच्चोभयाम्नानात् ॥ २५ ॥ १३१ ॥

॥ २५ ॥

युक्त्यन्तरमाह॰ आत्मेति।

आत्मकृतेः परिणामात् ॥ २६ ॥ १३२ ॥

इतश्च ब्रह्म प्रकृतिः, यतः "तदात्मानं स्वयमकुरुते"त्यात्मन कर्तृत्वं च प्रतिपादयति, ननु पूर्वसिद्धस्य सतः कथं क्रियमाणत्वमत आ परिणामादिति, पूर्वसिद्धोऽपि विशेषविकारात्मनात्मानं परिणमयामास 'स्वय'मित्यनेन निमित्तान्तरानपेक्षत्वबोधनात्, तस्मात् प्रकृतिः, अथवा 'परिणामा'दिति पृथक् सूत्रं युक्त्यन्तरसंपादकम्, इतोऽपि ब्रह्म प्रकृतिः यद् ब्रह्मण एव विकारात्मना परिणामः सामानाधिकरण्येनाम्नायते "सच्च त्यच्चाभवन्निरुक्तं चानिरुक्तं चे"त्यादिनेति ॥ २६ ॥

यतः प्रकृतिवाचकयोनिशब्दो वेदान्तेषु श्रूयते, अतोऽपि प्रकृतिः यथा "कर्तारमीशं पुरुषं ब्रह्मयोनिं" "यद् भूतयोनिं परिपश्यन्ति धीरा" इति च, पृथिवी योनिरोषधिवनस्पतीनामिति दृष्टत्वात्, क्वचित् स्थानवचनोऽपि योनिशब्दो दृष्टः· "योनिस्ते इन्द्र निषदे अकारी" त्यादौ, अत्र तु "यथोर्णनाभिः सृजते गृह्णते चे"त्यादिवाक्यशेषात् प्रकृतिवचन एव, विस्तरेणाये प्रतिपादयिष्यत इत्याह योनिश्चेति ।

योनिश्च हि गीयते ॥ २७ ॥ १३३ ॥ ७ ॥

॥ २७ ॥

"ईक्षतेर्नाशब्द"मित्यादिना प्रधानकारणवादः सूत्रैरेव निराकृतः, तत्पक्षस्योपोद्बलकानि लिङ्गाभासादीन्यापाततो मन्दमतीन् प्रतिभान्तीति देवलप्रभृतिभिर्धर्मसूत्रकारैः स्वयन्थेऽप्याश्रितः स पक्षः,अतोऽत्यन्तं तत्पक्षप्रतिषेधे यत्नः सूत्रकृता कृतः, नाण्वादिकारणवादप्रतिषेधे, तेऽपि सिद्धान्ते दूषणीया इत्यतः प्रधानमल्लनिबर्हणन्यायेन सांख्यदूषणानि तेष्वप्यतिदिशति·एतेनेति ।

एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥ १३४ ॥

इति ब्रह्मसूत्रे प्रथमाध्यायस्य तुरीयः पादः ॥ ४ ॥ समाप्तश्च प्रथमाध्यायः ॥ १ ॥ :: :: ॥

॥ अत्र पादेऽधिकरणानि ॥ ८ ॥ * * ॥

प्रधानकारणवादप्रतिषेधन्यायेन सर्वे परमाणवादिकारणवादाः प्रतिषिद्धतया व्याख्याता वेदितव्याः, तेषामपि प्रधानवदशब्दत्वात्, शब्दविरोधित्वाच्च, व्याख्याता इति पदाभ्यासोऽध्यायसमाप्त्यर्थः, तस्माद् ब्रह्मैव जगदुपादानमिति सिद्धम् ॥ २८ ॥

इति ब्रह्मसूत्रतात्पर्यविवरणे समन्वयाध्यायस्य प्रथमस्य चतुर्थः पादः ॥ ४ ॥ समाप्तश्च प्रथमाध्यायः ॥ १ ॥ :: :: ॥

## ॥ शाश्वतधर्मदीपिका ॥

आत्मप्रमाण उन्नद्धः श्रेयसो ह्यवमन्यकः ।
इन्द्रियप्रीतिसंबद्धं यदिदं लोकसाक्षिकम् ॥
एतावन्मन्यते बालो मोहमन्यच गच्छति ।
प्रायश्चित्तं न तस्यास्ति यो धर्ममभिशङ्कते ॥
ध्यायन्त्स कृपणः पापो न लोकान्प्रतिपद्यते ।
प्रमाणाद्विनिवृत्तो हि वेदशास्त्रार्थनिन्दकः ॥
कामलोभातिगो मूढो नरकं प्रतिपद्यते ।
यस्तु नित्यं कृतमतिर्धर्ममेवाभिपद्यते ॥
अशङ्कमानः कल्याणि सोऽमुत्रानन्त्यमश्नुते ।
आर्षं प्रमाणमुत्क्रम्य धर्मं न प्रतिपालयन् ॥
सर्वशास्त्रातिगो मूढः शं जन्मसु न विन्दति ।
यस्य नार्षं प्रमाणं स्याच्छिष्टाचारश्च भामिनि ॥
नैव तस्य परो लोको नायमस्तीति निश्चयः ।
शिष्टाचरितं धर्मं कृष्णे मा स्माभिशङ्किथाः ॥
पुराणमृषिभिः प्रोक्तं सर्वज्ञैः सर्वदर्शिभिः ।
धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् ॥

सैव नोः सागरस्येव वणिजः पारमिच्छतः ।
अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः ॥
अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते ।
निर्वाणं नाधिगच्छेयुर्जीवेयुः पशुजीविकाम् ॥
वि[१]द्यां ते नैव युज्येयुर्न सुखं के चिदाप्नुयुः ।
तपश्च ब्रह्मचर्यं च यज्ञः स्वाध्याय एव च ॥
दानमार्जवमेतानि यदि स्युरफलानि वै ।
नाचरिष्यन्परे धर्मं परे परतरे च ये ॥
विप्रलम्भो ऽयमत्यन्तं यदि स्युरफलाः क्रियाः ।
ऋषयश्चैव देवाश्च गन्धर्वासुरराक्षसाः ॥
ईश्वराः कस्य हेतोस्ते चरेयुर्धर्ममादृताः ।
फलदं त्विह विज्ञाय धातारं श्रेयसि ध्रुवम् ।
धर्मं ते व्यचरन्कृष्णे तद्धि श्रेयः सनातनम् ॥
स नायमफलो धर्मो नाधर्मो ऽफलवानपि ।
दृश्यन्ते ऽपि हि विद्यानां फलानि तपसां तथा ॥
त्वमात्मनो विजानीहि जन्म कृष्णे यथा श्रुतम् ।
वेत्थ चाऽपि यथा जातो धृष्टद्युम्नः प्रतापवान् ॥
एतावदेव पर्याप्तमुपमानं शुचिस्मिते ।
कर्मणां फलमाप्नोति धीरो ऽल्पेनापि तुष्यति ॥
बहुना ह्यप्यविद्वांसो नैव तुष्यन्त्यबुद्धयः ।
तेषां न धर्मजं किञ्चित्प्रेत्य शर्मास्ति वा पुनः ॥
कर्मणां श्रुतपु[२]ण्यानां पापानां च फलोदयः ।

---

१ विद्यया ।     २ वेदोदितपुण्यकानामिति टी०।

प्रधानकारणवादप्रतिषेधन्यायेन सर्वे परमाणवादिकारणवादाः प्रतिषिद्धतया व्याख्याता वेदितव्याः, तेषामपि प्रधानवदशब्दत्वात्, शब्दविरोधित्वाच्च, व्याख्याता इति पदाभ्यासोऽध्यायसमाप्त्यर्थः, तस्माद् ब्रह्मैव जगदुपादानमिति सिद्धम् ॥ २८ ॥

इति ब्रह्मसूत्रतात्पर्यविवरणे समन्वयाध्यायस्य प्रथमस्य चतुर्थः पादः ॥ ४ ॥ समाप्तश्च प्रथमाध्यायः ॥ १ ॥ :: :: ॥

## ॥ शाश्वतधर्मदीपिका ॥

आत्मप्रमाण उन्नद्धः श्रेयसो ह्यवमन्यकः ।
इन्द्रियप्रीतिसंबद्धं यदिदं लोकसाक्षिकम् ॥
एतावन्मन्यते बालो मोहमन्यत्र गच्छति ।
प्रायश्चित्तं न तस्यास्ति यो धर्ममभिशङ्कते ॥
ध्यायन्स कृपणः पापो न लोकान्प्रतिपद्यते ।
प्रमाणाद्विनिवृत्तो हि वेदशास्त्रार्थनिन्दकः ॥
कामलोभातिगो मूढो नरकं प्रतिपद्यते ।
यस्तु नित्यं कृतमतिर्धर्ममेवाभिपद्यते ॥
अशङ्कमानः कल्याणि सोऽमुत्रानन्त्यमश्नुते ।
आर्षं प्रमाणमुत्क्रम्य धर्मं न प्रतिपालयन् ॥
सर्वशास्त्रातिगो मूढः शं जन्मसु न विन्दति ।
यस्य नार्षं प्रमाणं स्याच्छिष्टाचारश्च भामिनि ॥
नैव तस्य परो लोको नायमस्तीति निश्चयः ।
शिष्टराचरितं धर्मं कृष्णे मा स्माभिशङ्किथाः ॥
पुराणमृषिभिः प्रोक्तं सर्वज्ञैः सर्वदर्शिभिः ।
धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् ॥

सैव नौः सागरस्येव वणिजः पारमिच्छतः।
अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः॥
अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते।
निर्वाणं नाधिगच्छेयुर्जीवेयुः पशुजीविकाम्॥
वि[१]द्यां ते नैव युज्येयुर्न सुखं केचिदाप्नुयुः।
तपश्च ब्रह्मचर्यं च यज्ञः स्वाध्याय एव च॥
दानमार्जवमेतानि यदि स्युरफलानि वै।
नाचरिष्यन्परे धर्मं परे परतरे च ये॥
विप्रलम्भोऽयमत्यन्तं यदि स्युरफलाः क्रियाः।
ऋषयश्चैव देवाश्च गन्धर्वासुरराक्षसाः॥
ईश्वराः कस्य हेतोस्ते चरेयुर्धर्ममादृताः।
फलदं त्विह विज्ञाय धातारं श्रेयसि ध्रुवम्।
धर्मं ते व्यचरन्कृष्णे तद्धि श्रेयः सनातनम्॥
स नायमफलो धर्मो नाधर्मोऽफलवानपि।
दृश्यन्तेऽपि हि विद्यानां फलानि तपसां तथा॥
त्वमात्मनो विजानीहि जन्म कृष्णे यथा श्रुतम्।
वेत्थ चाऽपि यथा जातो धृष्टद्युम्नः प्रतापवान्॥
एतावदेव पर्याप्तमुपमानं शुचिस्मिते।
कर्मणां फलमाप्नोति धीरोऽल्पेनापि तुष्यति॥
बहुना ह्यप्यविद्वांसो नैव तुष्यन्त्यबुद्धयः।
तेषां न धर्मजं किञ्चित्प्रेत्य शर्मास्ति वा पुनः॥
कर्मणां श्रुतपु[२]ण्यानां पापानां च फलोदयः।

---

१ विद्यया।        २ वेदोदितपुण्यकानामिति टी०।

प्रधानकारणवादप्रतिषेधन्यायेन सर्वे परमाणवादिकारणवादाः प्रतिषिद्धतया व्याख्याता वेदितव्याः, तेषामपि प्रधानवदशब्दत्वात्, शब्दविरोधित्वाच्च, व्याख्याता इति पदाभ्यासोऽध्यायसमाप्त्यर्थः, तस्माद् ब्रह्मैव जगदुपादानमिति सिद्धम् ॥ २८ ॥

इति ब्रह्मसूत्रतात्पर्यविवरणे समन्वयाध्यायस्य प्रथमस्य चतुर्थः पादः ॥ ४ ॥ समाप्तश्च प्रथमाध्यायः ॥ १ ॥ :: :: ॥

## ॥ शाश्वतधर्मदीपिका ॥

आत्मप्रमाण उन्नद्धः श्रेयसो ह्यवमन्यकः ।
इन्द्रियप्रीतिसंबद्धं यदिदं लोकसाक्षिकम् ॥
एतावन्मन्यते बालो मोहमन्यत्र गच्छति ।
प्रायश्चित्तं न तस्यास्ति यो धर्ममभिशङ्कते ॥
ध्यायन्स कृपणः पापो न लोकान्प्रतिपद्यते ।
प्रमाणाद्विनिवृत्तो हि वेदशास्त्रार्थनिन्दकः ॥
कामलोभातिगो मूढो नरकं प्रतिपद्यते ।
यस्तु नित्यं कृतमतिर्धर्ममेवाभिपद्यते ॥
अशङ्कमानः कल्याणि सोऽमुत्रानन्त्यमश्नुते ।
आर्षं प्रमाणमुत्क्रम्य धर्मं न प्रतिपालयन् ॥
सर्वशास्त्रातिगो मूढः शं जन्मसु न विन्दति ।
यस्य नार्षं प्रमाणं स्याच्छिष्टाचारश्च भामिनि ॥
नैव तस्य परो लोको नायमस्तीति निश्चयः ।
शिष्टैराचरितं धर्मं कृष्णे मा स्माभिशङ्किथाः ॥
पुराणमृषिभिः प्रोक्तं सर्वज्ञैः सर्वदर्शिभिः ।
धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् ॥

सैव नोः सागरस्येव वणिजः पारमिच्छतः।
अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः॥
अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते।
निर्वाणं नाधिगच्छेयुर्जीवेयुः पशुजीविकाम्॥
वि[1]द्यां ते नैव युज्येयुर्न सुखं के चिदाप्नुयुः।
तपश्च ब्रह्मचर्यं च यज्ञः स्वाध्याय एव च॥
दानमार्जवमेतानि यदि स्युरफलानि वै।
नाचरिष्यन्परे धर्मं परे परतरे च ये॥
विप्रलम्भो ऽयमत्यन्तं यदि स्युरफलाः क्रियाः।
ऋषयश्चैव देवाश्च गन्धर्वासुरराक्षसाः॥
ईश्वराः कस्य हेतोस्ते चरेयुर्धर्ममादृताः।
फलदं त्विह विज्ञाय धातारं श्रेयसि ध्रुवम्।
धर्मं ते व्यचरन्कृष्णे तद्धि श्रेयः सनातनम्॥
स नायमफलो धर्मो नाधर्मो ऽफलवानपि।
दृश्यन्ते ऽपि हि विद्यानां फलानि तपसां तथा॥
त्वमात्मनो विजानीहि जन्म कृष्णे यथा श्रुतम्।
वेत्थ चाऽपि यथा जातो धृष्टद्युम्नः प्रतापवान्॥
एतावदेव पर्याप्तमुपमानं शुचिस्मिते।
कर्मणां फलमाप्नोति धीरो ऽल्पेनापि तुष्यति॥
बहुना ह्यप्यविद्वांसो नैव तुष्यन्त्यबुद्धयः।
तेषां न धर्मजं किञ्चित्प्रेत्य शर्मास्ति वा पुनः॥
कर्मणां श्रुतपु[2]ण्यानां पापानां च फलोदयः।

१ विद्यया। २ वेदोदितपुण्यकानामिति टी०।

प्रभवश्चात्ययश्चैव देवगुह्यानि भाविनि ॥
एतानि वेद यः कश्चिन्मुह्यन्त्येऽच प्रजा इमाः ।
अपि कल्पसहस्रेण न स श्रेयो ऽधिगच्छति ॥
रक्ष्याण्येतानि देवानां गूढमाया हि देवताः ।
कृता[१]शाश्च व्रता[२]शाश्च तपसा दग्धकिल्बिषाः ॥
प्रसादैर्मानसैर्युक्ताः पश्यन्त्येतानि वै द्विजाः ।
न फलादर्शनाद्धर्मः शङ्कितव्यो न देवताः ॥
यष्टव्यं च प्रयत्नेन दातव्यं चानसूयता ।
कर्मणां फलमस्तीह तथैतद्धर्मशाश्वतम् ॥
ब्रह्मा प्रोवाच पुत्राणां यदृषिर्वेद कश्यपः ।
तस्मात्ते संशयः कृष्णे नीहारइव नश्यतु ॥
व्यवस्य सर्वमस्तीति नास्तिक्यं भावमुत्सृज ।
ईश्वरं चापि भूतानां धातारं मा च वै क्षिप ॥
शिक्षस्वैनं नमस्वैनं मा ते भूद्बुद्धिरीदृशी ।
यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यताम् ॥
उत्तमां देवतां कृष्णे मावमंस्थाः कथं चन । इति ।

यद्यपि कर्मणैव वैचित्र्योपपत्तावलमीश्वरेणेति स्यादविदुषामाक्षेपस्तथाप्यसौ कर्मणो जडत्वात्सुखदुःखादिदातृत्वासम्भवात्पराहतो वेदितव्यो लोके ऽपि चोरादेर्दण्डदानार्थं सुकृतकारिणश्च शोभनफलप्राप्तये प्रभोरपेक्षणाद् इत्यलमाकरेषु विचारिते विषये विशेषेण । अत एव देवधर्माद्यावश्यकत्वं द्रौपद्या दर्शितम् । वनपर्वणि अ॰३२ । श्लो ३

१ लिप्साविहीनाः । २ अलक्ष्पभोजनाश्च ।

कर्म खल्विह कर्त्तव्यं जानता ऽमित्रकर्शन ।
अकर्मणो न जीवन्ति स्थावरा नेतरे जनाः ॥
सर्वे हि स्वं समुत्थानमुपजीवन्ति जन्तवः ।
अपि धाता विधाता च यथायमुदके बकः ॥
उत्सीदेरन्प्रजाः सर्वा न कुर्युः कर्म चेद्भुवि ।
तथा ह्येता न वर्द्धेरन् कर्म चेदफलं भवेत् ॥
यश्च दिष्टपरो लोके यश्चापि हठवा[1]दिकः ।
उभावपि शठावेतौ कर्मबुद्धिः प्रशस्यते ॥
यो हि दिष्टमुपासीनो निर्विचेष्टः सुखं शयेत् ।
अवसीदेत्स दुर्बुद्धिरामो घटइवोदके ॥
तथैव हठदुर्बुद्धिः शक्तः कर्मण्यकर्मकृत् ।
आसीत न चिरं जीवेदनाथइव दुर्बलः ॥
अन्येषां कर्म सफलमस्माकमपि वा पुनः ।
विप्रकर्षेण बुध्येत कृतकर्मा यथाफलम् ॥
वृष्टिश्चेन्नानुगृह्णीयादनेनास्तत्र कर्षकः ।
यदन्यः पुरुषः कुर्यात्कृतं तत्सकलं मया[2] ॥
ब्राह्मणं मे पिता पूर्वं वासयामास पण्डितम् ।
सोपि सर्वामिमां प्राह पित्रे मे भरतर्षभ ॥
नीतिं बृहस्पतिप्रोक्तां भ्रातृन्मे ऽग्राहयत्पुरा ।
तेषां सकाशादश्रोषमहमेतां तदा गृहे इति ॥

तस्मिदं प्राणिमात्रस्य सुखदुःखयोः साधने धर्माधर्माविति । तत्प्रमापकता च श्रुतेः स्मृतेश्चेति प्रसिद्धतमः सिद्धान्तः ।

---

१ स्वभाववादी ।

२ इति वदन्निति शेषः ।

प्रभवश्चात्ययश्चैव देवगुह्यानि भाविनि ॥
एतानि वेद यः कश्चिन्मुह्यन्त्येऽत्र प्रजा इमाः ।
अपि कल्पसहस्रेण न स श्रेयो ऽधिगच्छति ॥
रक्ष्याण्येतानि देवानां गूढमाया हि देवताः ।
कृता[१]शाश्च व्रता[२]शाश्च तपसा दग्धकिल्बिषाः ॥
प्रसादैर्मानसैर्युक्ताः पश्यन्त्येतानि वै द्विजाः ।
न फलादर्शनाद्धर्मः शङ्कितव्यो न देवताः ॥
यष्टव्यं च प्रयत्नेन दातव्यं चानसूयता ।
कर्मणां फलमस्तीह तथैतद्धर्मशाश्वतम् ॥
ब्रह्मा प्रोवाच पुत्राणां यदृषिर्वेद कश्यपः ।
तस्मात्ते संशयः कृष्णे नीहारइव नश्यतु ॥
व्यवस्य सर्वमस्तीति नास्तिक्यं भावमुत्सृज ।
ईश्वरं चापि भूतानां धातारं मा च वै क्षिप ॥
शिक्षस्वैनं नमस्वैनं मा ते भूद्बुद्धिरीदृशी ।
यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यताम् ॥
उत्तमां देवतां कृष्णे मावमंस्थाः कथं चन । इति ।

यद्यपि कर्मणैव वैचित्र्योपपत्तावलमीश्वरेणेति स्यादविदुषामाक्षेपस्तथाप्यसौ कर्मणो जडत्वात्सुखदुःखादिदातृत्वासम्भवात्पराहतो वेदितव्यो लोके ऽपि चोरादेर्दण्डदानार्थं सुकृतकारिणश्च शोभनफलप्राप्तये प्रभोरपेक्षणाद् इत्यलमाकरेषु विचारिते विषये विशेषेण । अत एव दैवधर्माद्यावश्यकत्वं द्रौपद्या दर्शितम् । वनपर्वणि अ॰ ३२ । श्लो ३

१ लिप्साविहीनाः ।
२ व्रतरूपभोजनाश्च ।

कर्म खल्विह कर्त्तव्यं जानता ऽमित्रकर्शन।
अकर्माणो न जीवन्ति स्थावरा नेतरे जनाः॥
सर्वे हि स्वं समुत्थानमुपजीवन्ति जन्तवः।
अपि धाता विधाता च यथायमुदके बकः॥
उत्सीदेरन्प्रजाः सर्वा न कुर्युः कर्म चेद्भुवि।
तथा ह्येता न वर्द्धेरन् कर्म चेदफलं भवेत्॥
यश्च दिष्टपरो लोके यश्चापि हठवा[१]दिकः।
उभावपि शठावेतौ कर्मबुद्धिः प्रशस्यते॥
यो हि दिष्टमुपासीनो निर्विचेष्टः सुखं शयेत्।
अवसीदेत्स दुर्बुद्धिरामो घटइवोदके॥
तथैव हठदुर्बुद्धिः शक्तः कर्मण्यकर्मकृत्।
आसीत न चिरं जीवेदनाथइव दुर्बलः॥
अन्येषां कर्म सफलमस्माकमपि वा पुनः।
विप्रकर्षेण बुध्येत कृतकर्मा यथाफलम्॥
वृष्टिश्चेन्नानुगृह्णीयादनेनास्तत्र कर्षकः।
यदन्यः पुरुषः कुर्यात्कृतं तत्सकलं मया[२]॥
ब्राह्मणं मे पिता पूर्वं वासयामास पण्डितम्।
सोपि सर्वामिमां प्राह पित्रे मे भरतर्षभ॥
नीतिं बृहस्पतिप्रोक्तां भ्रातॄन्मे ऽग्राहयत्पुरा।
तेषां सकाशादश्रौषमहमेतां तदा गृहे इति॥

तत्सिद्धं प्राणिमात्रस्य सुखदुःखयोः साधने धर्माधर्माविति। तत्प्रमापकता च श्रुतेः स्मृतेश्चेति प्रसिद्धतमः सिद्धान्तः।

१ स्वभाववादी। २ इति अदर्शिति शेषः।

यथाह मनुः ।

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ इति ।

इमे चामानयन्बहिष्कार्य इत्याह स एव ।

योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥ इति

ताश्च स्मृतयो याज्ञवल्क्येन प्रदर्शिताः ।

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥ इति ।

इदं च दिक्प्रदर्शनमात्रं न तु परिगणनं नारदबौधायनादिप्रोक्तानामपि धर्मशास्त्रत्वस्येष्टत्वात् तेषामपि परस्मृत्यविरुद्धबहुलवचनोपलम्भेन स्थालीपुलाकन्यायेन प्रमाणत्वानुमानात् । व्यास इत्यनेन तत्स्मृतिः पुराणानां महाभारतस्य च प्रामाण्यं दर्शितम् । परस्परविरोधे तु श्रुतिवचसां स्मृतीनां च श्रुतिस्मृत्योश्च विकल्पो देशकालयोर्भेदेन व्यवस्थापनं तदंशे बाधो वा यथायथमिति त्रयाः पन्थाः । अत एव मनुः ।

श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिरिति ॥

जाबालोऽपि ।

श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी ।
अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सतेति ॥

भविष्यपुराणे ऽप्युक्तम् ।

श्रुत्या सह विरोधे तु बाध्यते विषयं विनेति ।
विषयान्तरलाभासंभवेपीत्यर्थः ॥

सदाचारप्रामाण्ये विशेषग्राहकश्चैष भीष्मोक्तो यथाधर्मसमाविष्ट इत्यादिः संदर्भः। स चास्तेयसत्यासाहसदानब्रह्मचर्याहिंसादिसहित एव सदाचारः प्रमाणमित्येवंतात्पर्यकः। वचनैकबोधितेषु यागादिषु संशायकाभावादास्तिकानां केवलमाचारविषये ये सामान्यधर्माविरोधिन आचारास्ते परिग्राह्या न तु तद्विरोधिन इति। तदेतत्सामान्यतो लक्षितम्। मो॰ अ ८६

यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः।

नतत्परेषु कुर्वीत जानन्नप्रियमात्मन इति॥

तथा विदुरेणापि धृतराष्ट्रं प्रतीदमेवाभिहितम्।

न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः॥

एष सामासिको धर्मः कामादन्य[१]: प्रवर्तते। इति

अन्यो यागादिः कामात्प्रवर्तते काम्य इत्यर्थः। अतश्चासौ नित्य इति सूचितम्। अत एव श्येनयागादेर्वेदबोधितस्याप्यधर्मत्वमेव सिद्धान्तितमभियुक्तैः। तस्य परहिंसैकप्रयोजनकत्वात्।

अधर्मस्य प्रतिबन्धकवशात्सद्यः फलाभावेऽपि कदाचित्फलमस्त्येवेत्याह। आदिपर्वणि ८० अध्याये।

नाधर्मश्चरितो राजन्सद्यः फलति गौरिव।

शनैरावर्त्यमानो हि कर्तुर्मूलानि कृन्तति॥ २॥

पुत्रेषु वानप्तृषु वा न चेदात्मनि पश्यतीति।

किं बहुना पश्वालम्भनादेरपि यागघटकस्य तदंशे ऽधर्मत्वमिष्यते सांख्यवृद्धैः। यदाहुः। स्वल्पः संकरः सपरिहारः सप्रत्यवमर्ष इति।

---

१ अन्यो ऽधर्मः कामात् इच्छया। इति टी.। अन्यत् आत्मौपमित्या ऽनुसन्धीयमानेन लोकहितत्वलक्षणेन विरहितमनुष्ठितजातम्। कामात्, रागात् धर्मविरुद्धाद्रजोगुणादिति यावत्। प्रवर्त्तते सम्भवति। तत्सर्वमधर्म्यमिति भावः। इति प्रमदादासमहाशयः।

यथाह मनुः।

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ इति।

इमे चामानयन्बहिष्कार्य इत्याह स एव।

यो ऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥ इति

ताश्च स्मृतयो याज्ञवल्क्येन प्रदर्शिताः।

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥ इति।

इदं च दिक्प्रदर्शनमात्रं न तु परिगणनं नारदबोधायनादिप्रोक्तानामपि धर्मशास्त्रत्वस्येष्टत्वात् तेषामपि परस्मृत्यविरुद्धबहुलवचनोपलम्भेन स्थालीपुलाकन्यायेन प्रमाणत्वानुमानात्। व्यास इत्यनेन तत्स्मृतेः पुराणानां महाभारतस्य च प्रामाण्यं दर्शितम्। परस्परविरोधे तु श्रुतिवचसां स्मृतीनां च श्रुतिस्मृत्योश्च विकल्पो देशकालयोर्भेदेन व्यवस्थापनं तदंशे बाधो वा यथायथमिति त्रयः पन्थाः। अत एव मनुः।

श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ।
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिरिति ॥

जाबालोऽपि।

श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी।
अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सतेति ॥

भविष्यपुराणे ऽप्युक्तम्।

श्रुत्या सह विरोधे तु बाध्यते विषयं विनेति।
विषयान्तरलाभासंभवेपीत्यर्थः ॥

सदाचारप्रामाण्ये विशेषग्राहकश्चैव भीष्मोक्तो यथाधर्मसमाविष्ट इत्यादिः संदर्भः । स चास्तेयसत्यासाहसदानब्रह्मचर्याहिंसादिसहित एव सदाचारः प्रमाणमित्येवंतात्पर्यकः । वचनैकबोधितेषु यागादिषु संशायकाभावादास्तिकानां केवलमाचारविषये ये सामान्यधर्माविरोधिन आचारास्ते परिग्राह्या न तु तद्विरोधिन इति । तदेतत्सामान्यतो लक्षितम् । मो॰ अ ८६

यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
नतत्परेषु कुर्वीत जानन्नप्रियमात्मन इति ॥
तथा विदुरेणापि धृतराष्ट्रं प्रतीदमेवाभिहितम् ।
न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः ॥
एष सामासिको धर्मः कामादन्य[१]: प्रवर्तते । इति

अन्यो यागादिः कामात्प्रवर्तते काम्य इत्यर्थः । अतश्चासौ नित्य इति सूचितम् । अत एव श्येनयागादेर्वेदबोधितस्याप्यधर्मत्वमेव सिद्धान्तितमभियुक्तैः । तस्य परहिंसैकप्रयोजनकत्वात् ।

अधर्मस्य प्रतिबन्धकवशात्सद्यः फलाभावेऽपि कदाचित्फलमस्त्येवेत्याह । आदिपर्वणि ८० अध्याये ।

नाधर्मश्चरितो राजन्सद्यः फलति गौरिव ।
शनैरावर्त्यमानो हि कर्तुर्मूलानि कृन्तति ॥ २ ॥
पुत्रेषु वानप्तृषु वा न चेदात्मनि पश्यतीति ।

किं बहुना पश्वालम्भनादेरपि यागघटकस्य तदंशे ऽधर्मत्वमिष्यते सांख्यवृद्धैः । यदाहुः । स्वल्पः संकरः सपरिहारः सप्रत्यवमर्ष इति ।

---

१ अन्यो ऽधर्मः कामात् इच्छया । इति टी. । अन्यत् आत्मोपमित्या ऽनुसन्धीयमानेन लोकहितत्वलक्षणेन विरहितमनुष्ठितजातम् । कामात्, रागात् धर्मविरुद्धाद्रजोगुणादिति यावत् । प्रवर्त्तते सम्भवति । तत्सर्वमधर्म्यमिति भावः । इति प्रमठादासमहाशयः ।

रक्ष्यमाणश्च धर्मः कर्तारं रक्षतीति युधिष्ठिरं प्रति द्रौपदीवचनम् । वनपर्वणि ३० अध्याये ।

न हि ते ऽध्यगमन् जातु तदानीं नाद्य भारत ।
धर्मात्प्रियतरं किं चिदपि चेज्जीवितादिह ॥
धर्मार्थमेव ते राज्यं धर्मार्थं जीवितं च ते ।
ब्राह्मणा गुरवश्चैव जानन्त्यपि च देवता: ॥
भीमसेनार्जुनौ चेमौ माद्रेयौ च मया सह ।
त्यजेस्त्वमिति मे बुद्धिर्न तु धर्मं परित्यजे: ॥
राजानं धर्मगोप्तारं धर्मो रक्षति रक्षित: ।
इति मे श्रुतमार्याणां त्वां तु मन्ये न रक्षती[१]ति ॥

अत एव

धर्मार्थकामानां समं सेव्यताविषये भीमस्याक्षेपे वनपर्वणि ३३ अध्याये ।

कर्षणार्थो हि यो धर्मो मित्राणामात्मनस्तथा ।
व्यसनं नाम तद्राजन् न स धर्म: कु[२]धर्म तत् ॥
यस्य धर्मो हि धर्मार्थं क्लेशभाङ्न स पण्डित: ।
न स धर्मस्य वेदार्थं सूर्यस्यान्ध: प्रभामिव ॥
यस्य चार्थार्थमेवार्थ: स च नार्थस्य कोविद: ।
रक्षेत भृतको ऽरण्ये यथा गास्तादृगेव स: ॥
अतिवेलं हि यो ऽर्थार्थी नेतरावनुतिष्ठति ।
स वध्य: सर्वभूतानां ब्रह्महेव जुगुप्सित: ॥

---

१ युधिष्ठिरस्य वनवासदुःखेन दूयमानया भर्तृवत्सलया द्रौपद्या खेदातिशयात्सतुर्षयाद उक्तं ।

२ कुत्सितकर्मबीजमित्यर्थः ।

सततं यश्च कामार्थी नेतरावनुतिष्ठति ।
मित्राणि तस्य नश्यन्ति धर्मार्थाभ्यां च हीयते ॥
तस्य धर्मार्थहीनस्य कामान्ते निधनं ध्रुवम् ।
कामतो रममाणस्य मीनस्येवाम्भसः क्षये ॥
तस्माद्धर्मार्थयोर्नित्यं न प्रमाद्यन्ति पण्डिताः ।
प्रकृतिः सा हि कामस्य पावकस्यारणिर्यथा ॥
सर्वथा धर्म[१]मूलोऽर्थो धर्मश्चार्थपरिग्रहः ।
इतरेतरयोनी तौ विद्धि मेघोदधी यथा ॥
धर्मं पूर्वे धनं मध्ये जघन्ये काममाचरेत् ।
अहन्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥
कामं पूर्वे धनं मध्ये जघन्ये धर्ममाचरेत् ।
वयस्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥
धर्मं चार्थं च कामं च यथावद्वदतां वर ।
विभज्य काले कालज्ञः सर्वान्सेवेत पण्डितः ॥
मोक्षो वा परमं श्रेय एषां राजन्सुखार्थिनाम् ।
प्राप्तिं वा बुद्धिमास्थाय सोपायां कुरुनन्दन ॥
तथाऽऽशु क्रियतां[२] राजन् प्राप्तिं वाप्यधिगम्यताम् ।
जीवितं ह्यातुरस्येव दुःखमन्तरवर्तिनः ॥

इत्येवंरूपे धर्मस्यैव प्राबल्यात्तदनुरोधेनैवार्थादीनां संपादनं न्याय्यं न तु तद्विरोधेनेत्येवंतात्पर्यकं युधिष्ठिरस्योत्तरम् ।

तं सन्धिमास्थाय सतां सकाशे को नाम जह्यादिह राज्यहेतोः ।
आर्यस्य मन्ये मरणाद्गरीयो यद्धर्ममुत्क्रम्य महीं प्रशासेत् ॥

१ धर्मेणैवोत्पाद्यः ।

२ मोक्षाय यत्नो विधीयताम् । प्राप्तिं वेति । स्वप्राप्यं राज्यं वा शीघ्रमेवोपायैः शत्रुभ्यः प्रत्यर्ज्यताम् ।

रक्ष्यमाणश्च धर्मः कर्तारं रक्षतीति युधिष्ठिरं प्रति द्रौपदीवचनम्। वनपर्वणि ३० अध्याये।

न हि ते ऽध्यगमन् जातु तदानीं नाद्य भारत।
धर्मात्प्रियतरं किं चिदपि चेज्जीविताद्दिह॥
धर्मार्थमेव ते राज्यं धर्मार्थं जीवितं च ते।
ब्राह्मणा गुरवश्चैव जानन्त्यपि च देवताः॥
भीमसेनार्जुनौ चेमौ माद्रेयौ च मया सह।
त्यजेस्त्वमिति मे बुद्धिर्न तु धर्मं परित्यजेः॥
राजानं धर्मगोप्तारं धर्मो रक्षति रक्षितः।
इति मे श्रुतमार्याणां त्वां तु मन्ये न रक्षतीति[१]॥

अत एव

धर्मार्थकामानां समं सेव्यताविषये भीमस्याक्षेपे वनपर्वणि ३३ अध्याये।

कर्षणार्थो हि यो धर्मो मित्राणामात्मनस्तथा।
व्यसनं नाम तद्राजन् न स धर्मः कु[२]धर्मं तत्॥
यस्य धर्मो हि धर्मार्थं क्लेशभाङ् स पण्डितः।
न स धर्मस्य वेदार्थं सूर्यस्यान्धः प्रभामिव॥
यस्य चार्थार्थमेवार्थः स च नार्थस्य कोविदः।
रक्षेत भृतको ऽरण्ये यथा गास्तादृगेव सः॥
अतिवेलं हि यो ऽर्थार्थी नेतरावनुतिष्ठति।
स वध्यः सर्वभूतानां ब्रह्महेव जुगुप्सितः॥

---

१ युधिष्ठिरस्य वनवासदुःखेन दूयमानया भर्तृवत्सलया द्रौपद्या खेदातिशयादनुपपाद उक्तिः।

२ कुत्सितकर्मबीजमित्यर्थः।

सततं यश्च कामार्थी नेतरावनुतिष्ठति ।
मित्राणि तस्य नश्यन्ति धर्मार्थाभ्यां च हीयते ॥
तस्य धर्मार्थहीनस्य कामान्ते निधनं ध्रुवम् ।
कामतो रममाणस्य मीनस्येवाम्भसः क्षये ॥
तस्माद्धर्मार्थयोर्नित्यं न प्रमाद्यन्ति पण्डिताः ।
प्रकृतिः सा हि कामस्य पावकस्यारणिर्यथा ॥
सर्वथा धर्म[१]मूलोऽर्थो धर्मश्चार्थपरिग्रहः ।
इतरेतरयोर्नीतौ विद्धि मेघोदधी यथा ॥
धर्मं पूर्वे धनं मध्ये जघन्ये काममाचरेत् ।
अहन्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥
कामं पूर्वे धनं मध्ये जघन्ये धर्ममाचरेत् ।
वयस्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥
धर्मं चार्थं च कामं च यथावद्वदतां वर ।
विभज्य काले कालज्ञः सर्वान्सेवेत पण्डितः ॥
मोक्षो वा परमं श्रेय एषां राजन्सुखार्थिनाम् ।
प्राप्तिं वा बुद्धिमास्थाय सोपायां कुरुनन्दन ॥
तथाऽऽशु क्रियतां[२] राजन् प्राप्तिं वाप्यधिगम्यताम् ।
जीवितं ह्यातुरस्येव दुःखमन्तरवर्तिनः ॥

इत्येवंरूपे धर्मस्यैव प्राबल्यात्तदनुरोधेनैवार्थादीनां संपादनं न्याय्यं न तु तद्विरोधेनेत्येवंतात्पर्यकं युधिष्ठिरस्योत्तरम् ।

तं सन्धिमास्थाय सतां सकाशे को नाम जह्यादिह राज्यहेतोः ।
आर्यस्य मन्ये मरणाद्गरीयो यद्धर्ममुत्क्रम्य महीं प्रशासेत् ॥

---

१ धर्मेणैवोत्पाद्यः ।

२ मोक्षाय यत्नो विधीयताम् । प्राप्तिं वेति । स्वप्राप्यं राज्यं वा शीघ्रमेवोपायैः शत्रुभ्यः प्रत्यर्प्यताम् ।

मम प्रतिज्ञां च निबोध सत्यां वृणे धर्ममममृताज्जीविताच्च।
राज्यं च पुत्राश्च यशो धनं च सर्वं न सत्यस्य कलामुपैति। इति

यत्तु तदर्थे कालप्रतीक्षणे प्राणिनां विनाशसंभवादयुक्तत्वबोधके

संधिं कृत्वैव कालेन ह्यन्तकेन पतत्रिणा।
अनन्तेनाप्रमेयेण स्रोतसा सर्वहारिणा॥
प्रत्यक्षं मन्यसे कालं मर्त्यः सन्कालबन्धनः।
फेनधर्मा महाराज फलधर्मा तथैव च॥
निमेषादपि कौन्तेय यस्यायुरपचीयते।
सूच्येवाञ्जनचूर्णस्य किमिति प्रतिपालयेत्॥
यो नूनममितायुः स्यादथ वापि प्रमा[१]णवित्।
स वै कालं प्रतीक्षेत सर्वप्रत्यक्षदर्शिवान्॥

इत्याक्षेपे युधिष्ठिरस्योत्तरमदत्तवतस्तद्भीषणमात्रं तदभ्युपगमरूपं[२] बोध्यम्। इत्यलं प्रसक्तानुप्रसक्त्या।

यद्यपि युधिष्ठिरेण को धर्म इत्यादि प्रश्ने कृते शान्तनवेन प्रागुक्ते धर्मलक्षणे ऽभिहिते तदुत्तरमेव युधिष्ठिरेण न धर्मः परिपाठेन शक्यो भारत वेदितुमित्यादिः प्रश्नः कृतस्ततश्चास्मिन्धर्मलक्षणे तस्यापरितोष इव प्रतीयते तथापि स प्रश्नो धर्मसत्ताविषयएव संशयबोधको न तु तत्प्रमापकविषयइति बोध्यम्। तेनैवोपसंहारे चिराभिपन्नः कविभिः पूर्वं धर्म उदाहृत इत्यनेन स्वभाववादस्योपक्षिप्तत्वात्। तत-

१ आयुष्प्रमाणवित्।

२ यत्तु प्राणिनां क्षणभङ्गुरत्वात् कालप्रतीक्षणमयुक्तम् इति भीमस्य पुनराक्षेपः स राज्यपुत्रादीन् नन्वसृतमपि दूरमतीत्य सत्यधर्मो मे प्रेयानित्यनेनैव प्रत्युक्तः। तथापि राज्यभोगायात्यर्थमुत्कपठमानस्य भीमस्य चेतसि मुहुस्तदुपेक्षणवचनैः खेदो माभूद् इति दयालुर्युधिष्ठिरो ऽपरया युक्त्या तमसत्याभिसन्धेर्निवर्त्तयितुमुपक्रमते। उत्तरग्रन्थे। अथवा रजोनिमीलितानां मनसि धर्मस्य परमो गरिमा मुहुरुपदिश्यमानो ऽपि न दधाति पदमित्युपेक्षिता ऽसौ रागकृता शङ्का इति। प्रमदादासमहाशयः।

श्चाविद्यमानो धर्मः कथं परिपाठमात्रेण प्रमीयेत । प्रमाणानां प्रमेयं प्रत्यनुत्पादकत्वात् । न हि प्रामाणिकेनापि वन्ध्यापुत्रो ऽस्तीत्युक्ते कश्चन विवेचकस्तद्वचसि श्रद्दधीतेति न धर्मं इत्यादेरभिप्रायः । अत एव भीष्मेणापि धर्मप्रमापकविषये ऽनुक्तवतैवोत्तरम् । मो· अ ८८

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
तुलाधारस्य वाक्यानि धर्मे जाजलिना सहेति ॥

धर्मसत्तायामेव प्रमाणमुक्तम् । कश्चिज्जाजलिनामा मुनिर्वने चिरं तपस्यन् स्थाणुभूतो निजाङ्गं नीडीकृतवतः शकुन्तान्विलोक्य दयया तथैव तिष्ठंस्तेषामण्डादिक्रमेण संतत्यां वृद्धायामपि तदर्थमेव तथैव तिष्ठंस्ते· षूड्डीय स्वाभिमतं देशं गतेषु मया चिरं भूतानुकम्पया धर्मः प्राप्त इति गर्वितो ऽन्तरिक्षवाण्या

धर्मेण न समस्त्वं वै तुलाधारस्य जाजले ।

इति अधिक्षिप्तो वाराणसीस्थं तुलाधारमुपसर्पंस्तेन बोधित इतीतिहासेन । अनेन हि धर्मस्य स्वरूपतो ऽभावे तदर्थं महाप्रयासे प्रवृत्तिर्मुनीनामनुपपन्ना स्यादिति धर्मोस्तीति सूच्यते । तदुत्तरं च तुला· धारेण । मो· अ ८७

सर्वेषां यः सुहृन्नित्यं सर्वेषां च हिते रतः ।
कर्मणा मनसा वाचा स धर्मं वेद जाजले ॥
यस्मादुद्विजते लोकः सर्वो मृत्युमुखादिव ।
वाक्क्रूराद्दण्डपरुषात्स प्राप्नोति महद्भयम् ॥
यथावद्वर्तमानानां वृद्धानां पुत्रपौत्रिणाम् ।
अनुवर्तामहे वृत्तिमहिंस्राणां महात्मनाम् ॥
प्रनष्टः शाश्वतो धर्मः सदाचारेण मोहितः ।
तेन वैद्यस्तपस्वी वा बलवान्वा विमुह्यते ॥

लोके यः सर्वभूतेभ्यो ददात्यभयदक्षिणाम् ।
स सर्वभूतैरीजानः प्राप्नोत्यभयदक्षिणाम् ॥
न भूतानामहिंसाया ज्यायान्धर्मोऽस्ति कश्चन ।

इत्यादिना सर्वभूतहितकारित्वमेव धर्म इत्युपसंहृतम् । इदमेव राजधर्मेष्वपि युधिष्ठिरं प्रति भीष्मेणोक्तम् । राज॰ ध॰ अ॰ १०९ ॥

प्रभ[१]वार्थाय भूतानां धर्मप्रवचनं कृतम् ।
यः स्यात्प्रभवसंयुक्तः स धर्म इति निश्चयः ॥
धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः ।
यः स्याद्धारणसंयुक्तः स धर्म इति निश्चयः ॥
अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम् ।
यः स्यादहिंसया युक्तः स धर्म इति निश्चय इति ॥

तत्रैव । रा॰ ध॰ अ॰ १०९॰

श्रुतिधर्म इति ह्येके नेत्याहुरपरे जनाः ।
न च तत्प्रत्यसूयामो न हि सर्वं विधीयते ॥

इत्यनेन श्रुत्युक्तः सर्वोऽपि धर्म एवेति न श्येनयागादेश्चोदितस्यापि धर्मत्वाभावात् । श्रुत्युक्त एव धर्म इत्यपि न । अन्येषामपि सामान्यधर्माविरोधिनां धर्मत्वादित्यपि दर्शितम् । अत एवापद्धर्मेषु प्रदर्शिता अनुपपत्तीरनुसंधायैव वचनमात्रेण धर्मो दुर्ज्ञान इति स्वयमूहितव्यः स इति प्रतिपादितम् । आप॰अ॰ १२

न धर्मवचनं वाचा नैव बुध्येति नः श्रुतम् ।
इति बार्हस्पतं ज्ञानं प्रोवाच मघवा स्वयम् ॥
न[२]त्वेव वचनं किं चिदनिमित्तादिहोच्यते ।
सुविनीतेन शास्त्रेण न व्यवस्यन्त्यथापरे ॥

१ प्रभवः कल्याणम् । धारणं रक्षणम् । अहिंसा ऽपीडनम् ।

२ अहेतुकं न किमप्युच्यते ऽश्रुतफलेषु विध्यन्यथानुपपत्त्या फलकल्पनादिति भावः। विध्याभासमात्रानाततायिगुर्वादिहननमात्रे दृष्ट्वा न प्रवर्तन्ते शिष्टा इत्यर्थः ।

लो[१]कयात्रामिहैके तु धर्मं प्राहुर्मनीषिणः ।
समुद्दिष्टं सतां धर्मं स्वयमूहेत पण्डितः ॥ इति ।
नैतच्छ्रुत्वागमादेव तव धर्मानुशासनम् ।
प्रज्ञासमवहारोयं कविभिः संभृतं मधु ॥

इति स्वस्यापि केवलागमेन धर्मज्ञानाभावं बुद्ध्या कल्पनं च वदता लोकानां तु तत्सुतरां दुर्ज्ञानमिति दर्शितम् । आगमादेव श्रुत्वा तव धर्मानुशासनं न कृतमिति शेषः । अपि तु प्रज्ञासमवहारः बुद्धेर्निष्ठेत्यर्थः । एतत् यागादिवद्विधेयं न । अपि तु कविभिरकरणे महान्तं दोषं पश्यद्भिर्मध्विव सुखदं संभृतं कल्पितमित्यर्थः । अत एव । आ·अ १२

नैकशाखेन धर्मेण यात्रैषा संप्रवर्त्तते ।
बुद्धिसंजननो धर्म आचारश्च सतां सदा ॥
ज्ञेयो भवति कौरव्य सदा तद्विद्धि मे वचः ।

इत्यनेन केवलेनागमेन केवलया बुध्या वा धर्मनिर्णयः कर्त्तुं न शक्यतइत्यर्थकेनोक्तम् । अत एवैकदेशदर्शिभिरर्थशास्त्रं नादर्त्तव्यमिति वदद्भिः केवलार्थशास्त्रदर्शनेन धर्मशास्त्रं च दूषयद्भिरुक्तं न ग्राह्यमिति तन्निन्दामुखेनाह । आ·अ· १२

परिमुष्णन्ति शास्त्राणि धर्मस्य परिपन्थिनः ।
वैषम्यमर्थविद्यानां निरर्थाः ख्यापयन्ति ते ॥
आजिजीविषवो विद्यां यशःकामो समन्ततः ।
ते सर्वे नृप पापिष्ठा धर्मस्य परिपन्थिनः ॥

---

१ लोकाविरोधं धर्मं बुधा आहुः । स चेयद्भिः प्रकारैरिति निरूपयितुमशक्यत्वा-त्सदात्वे लोकाविरुद्धत्वेनाभासमानस्याप्यायत्यां लोकविरुद्धत्वे त्यागावश्यकत्वेन विचार आवश्यक इति भावः ।

अपक्वमतयो मन्दा न जानन्ति यथातथम्।
यथा ह्यशास्त्रकुशलाः सर्वत्रायुक्तिनिश्चिताः॥
परिमुष्णन्ति शास्त्राणि शास्त्रदोषानुदर्शिनः।
वि[1]ज्ञातमर्थं विद्यानां न सम्यगिति वर्त्तते॥
निन्दया परविद्यानां स्वविद्यां ख्यापयन्ति च।
वागस्त्रा वाक्छुरीभूता दु[2]ग्धविद्याफला इव॥
तान्विद्यावणिजो विद्धि राक्षसानिव भारतेति।

वैषम्यम्। अप्रामाण्यमधर्मत्वं वा। यशो वचनैकबद्धादर इत्येवंरूपम्। अत एव। मो॰ अ ८६।

चतुर्थमर्थमित्याहुः कवयो धर्मलक्षणमिति।

धर्मज्ञापकत्वमर्थस्यापि दर्शितम्। एतदेव दृढीकर्त्तुं युधिष्ठिरभीष्मयोः प्रश्नोत्तरमुखेन क्रोधलोभाद्यनभिभूतात्मैरेव धर्मे प्रमाणत्वं असतां दुर्गतिः सतां साधुगतिः तयोः सङ्क्षेपतः स्वरूपं च कृतस्यापि ज्ञानादज्ञानाद्वा पापस्य प्रायश्चित्तनाश्यता ऽप्रच्छाद्यता च दर्शिता। आनु॰ अ॰ १६३।

नि[3]र्णये वा महाबुद्धे सर्वधर्मविदां वर।
प्रत्यक्षमागमो वेति किं तयोः कार[4]णं भवेत्॥

भीष्म उवाच।

नास्त्यत्र संशयः कश्चिदिति मे वर्त्तते मतिः।
शृणु वक्ष्यामि ते प्राज्ञ सम्यक् त्वं मेनुपृच्छसि॥
संशयः सुगमस्तत्र दुर्गमस्तस्य निर्णयः।
दृष्टं श्रुतमनन्तं हि यत्र[5] संशयदर्शनम्॥

---

१ शास्त्रप्रतिपाद्यं न साधुफलदमिति कश्चिन्नास्तिको वदन्वर्ततइत्यर्थ इति भाति। २ दुग्धं प्राप्तं विद्याफलं यैस्तथैवेत्यर्थः। ३ धर्मनिर्णये कर्तव्ये। ४ प्रबलं ज्ञापकम्। ५ धर्मविषये संशयो बहुत्र लोकवेदयोर्दृष्ट इत्यर्थः।

प्रत्यक्षं कारणं दृष्ट्वा हैतुकाः प्राज्ञमानिनः ।
नास्तीत्येवं व्यव[1]स्यन्ति सत्यं संशयमेव च ॥
तदयुक्तं व्यवस्यन्ति बालाः पण्डितमानिनः ।
अथ चेन्मन्यसे चैकं कारणं किं भवेदिति ॥
शक्यं दीर्घेण कालेन युक्तेनातन्द्रितेन च ।
प्राणयाचामनेकां च कल्पमानेन भारत ॥
तत्परेणैव नान्येन श[2]क्यं ह्येतस्य दर्शनम् ।
हे[3]तूनामन्तमासाद्य विपुलं ज्ञानमुत्तमम् ॥
ज्योतिः सर्वस्य लोकस्य विपुलं प्रतिपद्यते ।
न[4] त्वेव गमनं राजन् हेतुतो गमनं तथा ॥
अग्राह्यमनिबद्धं च वाचा संपरिवर्जयेत् ।

युधिष्ठिर उवाच ।

प्रत्यक्षं लोकतः सिद्धिर्लोकश्चागमपूर्वकः ।
शिष्टाचारो बहुविधस्तन्मे ब्रूहि पितामह ॥

भीष्म उवाच ।

धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
संस्था यत्नैरपि कृता कालेन प्रतिभिद्यते ॥
अधर्मो धर्मरूपेण तृणैः कूपइवावृतः ।
ततस्तैर्भिद्यते वृत्तं शृणु चैव युधिष्ठिर ॥

---

१ शुष्कतार्किकाः प्रत्यक्षमेव ज्ञापकं मन्यमानाः सत्यमपौरुषेयं वेदं नास्तीत्येव जानन्ति । अपरे त्वस्ति न वेति संशेरते ।

२ दीर्घकालादरनैरन्तर्यसत्कारसेवितेनाभ्यासेनैकस्य परमकारणस्य दर्शनं शक्यमित्यर्थः ।

३ अन्त्यप्रमाणेन सम्यग्ज्ञाने सर्वप्रकाशकं ब्रह्मतत्वं स्फुरतीत्यर्थः ।

४ केवलतर्केण ज्ञानं न सम्यक् इति तन्नादरणीयं यद्वाचा वेदेनानुक्तं तत्त्याज्यमित्यर्थः ।

अवृ[1]त्ता ये तु भिन्दन्ति श्रुतित्यागपरायणाः।
धर्मविद्वेषिणो मन्दा इत्युक्तस्तेषु संशयः॥

अतृप्यन्तस्तु साधूनां यएवागमबुद्धयः।
प[2]रमित्येव संतुष्टास्तानुपास्व च पृच्छ च॥

कामार्थौ पृष्ठतः कृत्वा लोभमोहानुसारिणो।
धर्म इत्येव संबुद्धस्तानुपास्व च पृच्छ च॥

न तेषां भिद्यते वृत्तं यज्ञाः स्वाध्यायकर्म च।
आचारः कारणं चैव धर्मश्चैक[3]स्त्रयं पुनः॥

युधिष्ठिर उवाच।

पुनरेव हि मे बुद्धिः संशये परिमुह्यति।
अपारे मार्गमाणस्य पारं तीरमपश्यतः॥

वेद[4]: प्रत्यक्षमाचारः प्रमाणं तत्त्रयं यदि।
पृथक्त्वं लभ्यते चैषां धर्मश्चैकस्त्रयं कथम्॥

भीष्म उवाच।

धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः।
यद्येवं मन्यसे राजंस्त्रिधा धर्मविचारणा॥

एक एवेति जानीहि त्रिधा धर्मस्य दर्शनम्।
पृथक्त्वेन च मे बुद्धिस्त्रयाणामपि वै तथा॥

---

१ दुःशीला ये परमार्थतः श्रुतितात्पर्यमनवबुध्य मर्यादामुल्लङ्घयन्ति तदाच संशायक एवेत्यर्थः।

२ वेदजन्या एव धियः श्रेष्ठं प्रमाणमिति ये निश्चित्य तुष्टास्तदाचार ग्राह्य इत्यर्थः।

३ ज्ञापकत्वं समुदितानां वेदवृत्ताचाराणां प्रत्येकमपि धर्मादावित्यर्थः।

४ प्रमाणभेदे प्रमेयभेदावश्यकत्वेन कथमेतदिति भावः।



## ॥ श्लोकवार्त्तिकम् ॥

चित्रादिनिष्फलत्वेन यदुक्तं साधनद्वयम् ।
तत्र हेतोरसिद्धत्वमानन्तर्यं ह्यचोदितम् ॥ १ ॥
आनन्तर्यश्रुतिश्चात्र सामर्थ्यादपि नेष्यते ।
नाविशेषात्फलोत्पत्तिः कर्मणां नोपपद्यते ॥ २ ॥
कर्मणां चापि वैचित्र्याद्देशकालाद्यपेक्षया ।
कस्य चित्त्वार्द्धभुक्तत्वात्कर्मान्यत्प्रतिबध्यते ॥ ३ ॥
आनन्तर्यविसंवादो नाविशेषप्रवर्त्तिनीम् ।
चोदनां बाधितुं शक्तः स्फुटाद्विषमभेदतः ॥ ४ ॥
तेनानन्तर्यनिष्पत्तिः फलस्येहाप्रमाणिका ।
प्रत्यक्षादिविसंवादो न शब्दे दोषमावहेत् ॥ ५ ॥
या तु मर्दनसाधर्म्यादानन्तर्यानुमा कृता ।
बाध्यतेऽनुपलब्ध्या सा समानविषया यतः ॥ ६ ॥
दृष्टार्थस्यापि सेवादेरायातमपि सत्फलम् ।
उत्पद्यते चिरेणैव प्रतिबन्धेन केन चित् ॥ ७ ॥
उप्तमात्रे न हि व्रीहौ फलमुत्पद्यते क्व चित् ।
अथाङ्कुरोऽपि तत्र स्यात्स्वर्गोऽप्यस्तीति गम्यताम् ॥ ८ ॥
स्थूलीभूतश्चिरेणैव भोग्यत्वं प्रतिपद्यते ।
सर्वस्योत्पद्यमानस्य क्रमः स्वाभाविकः स्थितः ॥ ९ ॥
अनन्तरफलत्वं तु चित्रादेर्यदि साध्यते ।
ततः स्यात्सिद्धसाध्यत्वमन्यदा न फलं भवेत् ॥ १० ॥

व्यभिचाराच्च सेवादेः पश्वादेः साधनान्तरम्।
किमप्यदृष्टमस्त्येव तच्चान्यन्निःप्रमाणकम्॥ ११॥
ईश्वरेच्छाधिकारादिशब्दलिङ्गादिवर्जनात्।
कृतं कदाचिच्चित्रादिशब्देन त्ववगम्यते॥ १२॥
निर्निमित्ता न चोत्पत्तिर्न हि सर्वा प्रमाणता।
बोधयन्न च शब्दोऽत्र प्रामाण्यादनिवर्त्तते॥ १३॥
येषां त्विह फलान्येव चित्रादीनीति कल्पना।
निर्निमित्तं फलं तेषां स्यादिहाकृतकर्मणाम्॥ १४॥
चित्रादीनां फलं तावत्क्षीणं तत्रैव जन्मनि।
न च स्वर्गफलस्येह कश्चिदंशोऽनुवर्त्तते॥ १५॥
नैव ह्यन्यफलं कर्म साधयेन्नः फलान्तरम्।
गौतमेऽपि च तच्छेषस्तस्माच्चित्राद्यपेक्षया॥ १६॥
स्वाभाविकत्वे सिद्धे च कर्मानन्तरभाव्यपि।
फलं क्रिया निमित्तत्वं न कथं चित्प्रपद्यते॥ १७॥
तत्र म्लेच्छादिवत्सर्वे कर्माकृत्वापि वैदिकम्।
फलं लभन्तइत्येवं नष्टा वेदप्रमाणता॥ १८॥
अनन्तरं नियोगेन पश्वादिव भवेद्यदि।
प्रत्यक्षफलतैवस्यात्तिवृत्त्या न विरेकवत्॥ १९॥
जन्मान्तरानुभूतं च न स्मर्यतइतीदृशम्।
न भाष्यं न च सूत्रं च स्यादप्राप्तेऽत्र शास्त्रवत्॥ २०॥
तस्मात्कालाविशेषेण चोदनार्थो यथा स्थितः।
स तथैवानुगन्तव्यो नाधिको न प्रमाणकः॥ २१॥
सर्वेषां कर्मवैगुण्यात्फलाभावं वदन्ति ये।
आनन्तर्यमुपेत्यैव ते स्वाभाविकवादिनः॥ २२॥

स्वर्गस्यामुष्मिकत्वं तु षष्ठाद्ये साधयिष्यति ।
पश्वादेर्नियमाभावो योगसिद्धिरितीह तु ॥ २३ ॥
यदा कदा चिद्भवदेतदिष्यते
फलं हि पश्वादि न सांपरायिकम् ।
यथास्थितस्यैव हि तस्यसाधनं
विधीयते यो ऽपि भृशं त्वरान्वितः ॥ २४ ॥
साधारणं यत्तु फलं बहूनां
स्वभावतस्तादृशमेवचेष्टम् ।
सर्वस्य वा सन्ततयैव कान्तं
वृष्ट्यादि तच्चैहिकमेव युक्तम् ॥ २५ ॥
किमपदमविशिष्टं यद्यपि श्रूयते ऽर्था-
द्भवति फलविशेषो नान्यथा काम्यते हि ।
फलति यदि न सर्वं तत्कदा चित्तदेव-
ध्रुवमपरमभुक्तं कर्म शास्त्रीयमास्ते ॥ २६ ॥

॥ इति भट्टकुमारिलविरचिते मीमांसावार्त्तिके चित्रापरिहारः ॥

साक्षाद्यद्यपि संबन्धो नात्मनो यज्ञसाधनैः ।
तथापि लक्षणावृत्त्या शरीरद्वारको भवेत् ॥ १ ॥
प्रत्यक्षत्वं च देहस्थं भक्तामात्मनि कल्पितम् ।
आत्मनः स्वर्गयानं वा शरीरस्योपचर्यते ॥ २ ॥
नैरात्म्येनाच वाक्षिप्रास्सर्वा एव हि चोदनाः ।
साध्यसाधनसंबन्धस्तदुक्तो न हि सिध्यति ॥ ३ ॥
ता हि कर्तुः फलेनाहुस्संबन्धं क्वापि जन्मनि ।
न च विज्ञानमात्रते कर्तृभोक्तृत्वसंभवः ॥ ४ ॥

शरीरविनिपाताच्च परं नान्यद्यदिष्यते ।
अदृष्टफलदृष्ट्यादौ तदा तद्वचनं मृषा ॥ ५ ॥
तस्माद्वेदप्रमाणार्थमात्माच प्रतिपाद्यते ।
यद्यपि प्रकृतं वाक्यं व्याख्यायेतार्थवादतः ॥ ६ ॥
शरीरेन्द्रियबुद्धिभ्यो व्यतिरिक्तत्वमात्मनः ।
नित्यत्वं वेष्यते शेषं शरीरादि विनश्यति ॥ ७ ॥
नित्यः कर्तृत्वभोक्तृत्वे प्रतिपन्नो ऽपि सन्यदा ।
न कर्मफलसंबन्धं भोगकाले च बध्यते ॥ ८ ॥
मया यत्तु कृतं कर्म तस्येदं भुज्यते फलम् ।
शुभाशुभमयेवेति तदा को ऽस्वरसो भवेत् ॥ ९ ॥
अपरामृश्यमाने हि स्वकर्मप्रत्यये फले ।
न विशेषो भवेत्कश्चित्स्वपरात्मोपभोगयोः ॥ १० ॥
कुर्वन्नप्यशुभं कर्म तेनैवं चिन्तयेन्नरः ।
न स्मरिष्यामि भोगे ऽहमिति नैतद्विवर्जयेत् ॥ ११ ॥
तत्र नित्यत्वपक्षे ऽपि कृतनाशाकृतागमौ ।
फलतस्तुल्यरूपौ चेद्वृथा तत्प्रतिपादनम् ॥ १२ ॥
नैष दोषो न भोगे हि स्मृतिर्न उपयुज्यते ।
न प्रवृत्तिर्निवृत्तिर्वा भोगकाले स्मृतेर्भवेत् ॥ १३ ॥
तवसं यः परामर्शस्तदस्तित्वं च मृग्यते ।
प्राग् वृत्तेस्तु सो ऽस्त्येव विदुषां शास्त्रतः स्फुटः ॥ १४ ॥
पश्चादपि च शास्त्रज्ञा विमृशन्त्येव के चन ।
तेषामेवाधिकारश्च माभूदविदुषां तु सः ॥ १५ ॥
परामर्शश्च सर्वत्र नास्ति सर्वप्रमाणकः ।
न वान्येनापरामृष्टे स्यादन्यस्याप्रमाणता ॥ १६ ॥

नावबुध्येत यस्त्वेवं ममास्मात्कर्मणः फलम् ।
भविष्यतीत्यविद्वत्वादेवादेवास्य न क्रिया ॥ १७ ॥
अपरामृश्यमाने ऽपि स्वापकालसुखाश्रये ।
संभङ्गे मृदुशय्यादौ प्राक्प्रवृत्तिश्च दृश्यते ॥ १८ ॥
भोगकाले ऽनुसंदध्यात्फलं यदि तु कश्चन ।
रथादिकर्मवद्योगे शास्त्रं स्यादप्रमाणकम् ॥ १९ ॥
तत्र नित्यविभुत्वाभ्यामात्मानो निःक्रिया यदि ।
सुखदुःखाविकार्याश्च कीदृशी कर्तृभोक्तृता ॥ २० ॥
अथ कर्तृत्ववेलायां दुःखादेश्चापि जन्मनि ।
प्रागुपादन्यथात्वं स्यान्नित्यतास्य विरुध्यते ॥ २१ ॥
नानित्यशब्दवाच्यत्वं आत्मनो विनिवार्यते ।
विक्रियामात्रवाचित्वे न ह्युच्छेदो ऽस्य तावता ॥ २२ ॥
स्यातामत्यन्तनाशे ऽस्य कृतनाशाकृतागमौ ।
न त्ववस्थान्तरप्राप्तौ लोके बालयुवादिवत् ॥ २३ ॥
अवस्थान्तरभाव्ये तत्फलं समशुभाशुभम् ।
इति ज्ञात्वा ऽनुतिष्ठंश्च विजहश्चेष्टते जनः ॥ २४ ॥
अनवस्थान्तरप्राप्तिर्दृश्यते न च कस्य चित् ।
अनुच्छेदात्तु नान्यत्वं भोक्तुर्लोके ऽधिगच्छति ॥ २५ ॥
सुखदुःखाद्यवस्थाश्च गच्छन्नपि नरोत्तम ।
चैतन्यद्रव्यसत्तादिरूपं नैव विमुञ्चति ॥ २६ ॥
दुःखिनं सुख्यवस्थायां नश्येयुः सर्वएव ते ।
दुःखित्वं वानुवर्त्तेत विनाशे विक्रियात्मके ॥ २७ ॥
तस्मादुभयहानेन व्यावृत्त्यानुगमात्मकः ।
पुरुषो ऽभ्युपगन्तव्यः कुण्डलादिषु सर्पवत् ॥ २८ ॥

न च कर्तृत्वभोक्तृत्वे पुंसो ऽवस्थासमाश्रिते ।
तेनावस्थावतस्तत्त्वात्कर्तैवाप्नोति तत्फलम् ॥ २९ ॥
न चावस्थान्तरोत्पादे पूर्वात्यन्तं विनश्यति ।
उत्तरानुगुणार्थां तु सामान्यात्मनि लीयते ॥ ३० ॥
स्वरूपेण ह्यवस्थानामन्योन्यस्य विरोधिता ।
अविरुद्धस्तु सर्वासु सामान्यात्मा प्रवर्त्तते ॥ ३१ ॥
नैवात्मवादपक्षे तु पूर्वमेवावबुध्यते ।
मद्विना मत्फलं न स्यान्मत्तो ऽन्यस्याथ वा भवेत् ॥ ३२ ॥
इति नैव प्रवृत्तिः स्यान्न च वेदप्रमाणता ।
जन्मान्तरे ऽभ्युपेते ऽपि ज्ञानमात्रात्मवादिनाम् ॥ ३३ ॥
ज्ञानानां क्षणिकत्वाद्धि कर्तृभोक्त्रन्यता भवेत् ।
नियतत्वविभुत्वाभ्यां न च देहान्तराश्रितिः ॥ ३४ ॥
कर्ता य एव संतानो ननु भोक्ता स एव नः ।
विज्ञानक्षणभेदस्तु त्वदवस्थान्तरैस्समः ॥ ३५ ॥
कर्तृत्वमेव दुःसाधं दीर्घकालेषु कर्मसु ।
यान्सुज्ञानसहस्रेषु कुलकल्पोपमं हि तत् ॥ ३६ ॥
व्यतिरिक्तो हि संतानो यदि नाभ्युपगम्यते ।
संतानिनामनित्यत्वात्कर्ता कश्चिन्न लभ्यते ॥ ३७ ॥
भोक्तुरत्यन्तभेदाच्च प्रसज्येताकृतागमः ।
कृतनाशं तु न ब्रूमः कृतं नैव हि केन चित् ॥ ३८ ॥
संतानानन्यतायां तु वाच्योयुक्त्यन्तरेण ते ।
तच्च वोक्तं न वावस्तु संतानः कर्तृतां व्रजेत् ॥ ३९ ॥
संतानक्षणिकत्वे च तदेवाक्षणिकस्त्वथ ।
सिद्धान्तहानिरेवं च सो ऽपि द्रव्यान्तरं भवेत् ॥ ४० ॥

एका वा व्यतिरिक्ता च सन्तानिभ्यो ऽथसन्ततिः ।
भेदाभेदौ प्रसज्येते ग्राह्यग्राहकयोर्यथा ॥ ४१ ।
तस्मादत्यन्तभेदो वा कथं चिद्वाप्यभिन्नता ।
सन्तानस्येत्ययं वात्मा स्याद्वैशेषिकसांख्ययोः ॥ ४२ ॥
सन्तानो ऽयं स एवेति न त्वभेदाद्विना भवेत् ।
वायुदीपादिसन्ताने वायुत्वादि न भिद्यते ॥ ४३ ॥
ज्ञानत्वेनाप्यभिन्नत्वं शून्यवादे निराकृतम् ।
तथैव कर्मभिर्वेष्टा फलार्थं चित्तवासना ॥ ४४ ॥
न चात्र वासनाकाले किं चिच्चित्तमवस्थितम् ।
अवस्तुत्वाच्च सन्तानः कर्मभिर्नैव वास्यते ॥ ४५ ॥
तत्पारंपर्यजाते ऽपि भुञ्जाने कर्मणः फलम् ।
तदात्म्येन विना स्पष्टौ कृतनाशाकृतागमौ ॥ ४६ ॥
सन्तानान्तरजेभ्यश्च यो हेतुफलभावतः ।
विशेषस्सो ऽपि दुःसाध्यः परिहारो न चानयोः ॥ ४७ ॥
तस्मिन्नसत्यपि ब्रूयाः परिहारं त्वमन्यथा ।
समानपृथिवीवासज्ञानत्वाद्यविशेषतः ॥ ४८ ॥
समान इति नाप्येतदेकत्वानुगमाद्विना ।
तेन यच्चिषजं तस्य सन्तान इति वो वृथा ॥ ४९ ॥
न यच्छब्दतच्छब्दौ वर्त्तेते भिन्नवस्तुनि ।
तेनेकात्मकतेष्टव्या तत्सन्तानात्मवादिभिः ॥ ५० ॥
न त्वन्यत्वं विदन्तो ऽपि पुत्रादिफलसिद्धये ।
प्रवर्त्तन्ते यथा तद्वद्ज्ञानसन्तानिनो ऽपि नः ॥ ५१ ॥
अन्यत्वे च समाने ऽपि यथा वंशान्तरोद्भवाः ।
न लभन्ते फलं तद्वत्संतानान्तरजाः क्षणाः ॥ ५२ ॥

न तावद्बुद्धिरप्येवमपि चात्मफलेच्छया ।
पुत्रादिभरणे वृत्तिः स्यात्तदप्यत्र नास्ति ते ॥ ५३ ॥
फलान्तरमनुद्दिश्य न च पुत्रादि बिभ्रति ।
विनष्टस्य तु नात्मीयसन्तानभरणात्फलम् ॥ ५४ ॥
यस्त्वनेनैव मार्गेण फलान्तरमपीच्छति ।
स्वसन्तान्यन्तरैर्भोग्यं तत्सन्तान्युपकारजम् ॥ ५५ ॥
अनवस्थेदृशी तस्य स्वोपभोगादृते भवेत् ।
नैव ह्यन्यो ऽपि सन्तानी कश्चित्तस्यात्मवन्मतः ॥ ५६ ॥
यावद्यावच्च दूरस्थे सन्तानिनि फलं भवेत् ।
तावत्तावच्च तन्नश्येत्सुतरां विप्रकर्षतः ॥ ५७ ॥
भरणं यदपत्यानां तिर्यगादिषु दृश्यते ।
अज्ञानं शरणं तत्र प्राज्ञानां तु न युज्यते ॥ ५८ ॥
देहान्तरे च बुद्धीनां संचारो नोपपद्यते ।
पूर्वदेहाद्बहिर्भावो न च तासां प्रतीयते ॥ ५९ ॥
वायुना प्रेर्यमाणं हि ज्वालाद्यन्यत्र संचरेत् ।
बुद्धिकारणदेशात्तु प्रेरणान्नास्ति केन चित् ॥ ६० ॥
अमूर्तत्वात्स्वयं नासावुत्प्लुत्यान्यत्र गच्छति ।
जीवद्देहे ऽपि तेनास्या गमनं नोपपद्यते ॥ ६१ ॥
अन्तरा भवदेहस्तु निषिद्धो विन्ध्यवासिना ।
तदस्तित्वे प्रमाणं हि न किं चिदवगम्यते ॥ ६२ ॥
सहसा जायते तच्च सहसैव विनश्यति ।
सूक्ष्मरूपादियुक्तं चेत्युत्प्रेक्षामात्रमेव तत् ॥ ६३ ॥
सत्यपि ज्ञानसंचारस्तत्र स्यान्निःप्रमाणकः ।
तेन चान्यशरीरेषु पुनर्निक्षेपकल्पना ॥ ६४ ॥

कललादिषु विज्ञानमस्तीत्येतच्च साहसम् ।
असंयतेन्द्रियत्वाद्धि न तथार्थो ऽवगम्यते ॥ ६५ ॥
न चाथ विगतेरन्यद्रूपं ज्ञानस्य युज्यते ।
मूर्च्छादावपि तेनास्य सद्भावो नोपपद्यते ॥ ६६ ॥
न चापि शक्तिरूपेण तदा धीरवतिष्ठते ।
निराश्रयत्वाच्छक्तीनां स्थितिर्न ह्यवकल्पते ॥ ६७ ॥
यदि भूतेन्द्रियाधारा ज्ञानशक्तिर्भवेत्ततः ।
तच्चैतन्यं प्रसज्येत न च जन्मान्तरं भवेत् ॥ ६८ ॥
परिणामविवेकाद्यैःशक्त्यभिव्यक्त्यनुग्रहात् ।
तेभ्य एव भवेद्बुद्धिर्न बुद्ध्यन्तरपूर्विका ॥ ६९ ॥
तथैवोत्तरकाले ऽपि पूर्वबुद्धेर्यदुच्यते ।
बुद्ध्यन्तरप्रसूतत्वं दृष्टान्तो ऽत्र न विद्यते ॥ ७० ॥
अथाधारविनिर्मुक्ता शक्तिः स्यात्कलनादिषु ।
पश्चाद्धि ज्ञानसिद्ध्यर्थमात्मा शक्त्यभिधो भवेत् ॥ ७१ ॥
शक्त्याधारप्रक्लृप्तौ वा नात्मनोऽन्यः प्रकल्प्यते ।
ज्वालाबुद्बुदवद्वृत्तिर्न चाधाराद्विना धियाम् ॥ ७२ ॥
ज्ञानशक्तिस्वभावो ऽतो नित्यस्सर्वगतः पुमान् ।
देहान्तरक्षमः कल्प्यः सो ऽगच्छन्नेव योक्ष्यते ॥ ७३ ॥
यजमानत्वमप्यात्मा सक्रियत्वात्प्रपद्यते ।
न परस्पन्द एवैकः क्रिया नः कणभोजिवत् ॥ ७४ ॥
न च स्वसमवेतैव कर्तृभिः क्रियते क्रिया ।
क्रिया धात्वर्थमात्रं स्यादन्याधारे ऽपि कर्तृता ॥ ७५ ॥
सत्ताज्ञानादिरूपाणां कर्त्ता तावत्स्वयं पुमान् ।
यो ऽपि भूतपरिस्पन्दस्तत्राधिष्ठानतो भवेत् ॥ ७६ ॥

तदुद्देशप्रवृत्तेश्च या या देहेन्द्रियैः क्रिया ।
क्रियते पुरुषेणैव सा सा सर्पाकृतोच्यते ॥ ७७ ॥
नैवह्येषां प्रवृत्तिः स्यात्पुरुषेणापरिग्रहे ।
अस्वातन्त्र्यादतो नैषां परिस्पन्दे ऽपि कर्तृता ॥ ७८ ॥
तत्कर्मोपार्जितैश्चैतैः क्रियमाणेषु कर्मसु ।
कर्तृता यजमानानामृत्विक्परशुकर्मवत् ॥ ७९ ॥
यथा परिक्रयाम्नानादृत्विग्द्वारा क्रियेष्यते ।
गमनादिविधेस्तद्वत्तद्द्वारत्वमाश्रिताम् ॥ ८० ॥
क्रयो यथात्मनो नास्ति गमनादि तथैव हि ।
विधीयते च तेनात्र परद्वारास्य कर्तृता ॥ ८१ ॥
यथा वा देवदत्तस्य च्छेदने काष्ठसंश्रिते ।
कर्तृत्वमेवं पुंसः स्याच्छरीरगमनादिषु ॥ ८२ ॥
व्यापारान्तरतस्तत्र कर्तृत्वं चेदिहापि नः ।
संकल्पसत्त्ववत्त्वाभ्यां पुमानिष्टः प्रयोजकः ॥ ८३ ॥
साधारण्येन कर्तृत्वं सत्त्ववत्त्वेन कर्मसु ।
संकल्पनैः पुनर्भेदात्प्रतिकर्मास्य कर्तृता ॥ ८४ ॥
न च सर्वत्र तुल्यत्वं स्यात्प्रयोजककर्मणाम् ।
चलनेन ह्यसिं योद्धा प्रयुङ्क्ते छेदनं प्रति ॥ ८५ ॥
सेनापतिस्तु वाचैव भृत्यानां विनियोजकः ।
राजा संनिधिमात्रेण विनियुङ्क्ते कदा च न ॥ ८६ ॥
तस्मादचलतो ऽपि स्याच्चलनेकर्तृतात्मनः ।
यथैवाभिद्यमानस्य देवदत्तस्य भेत्तृता ॥ ८७ ॥
कर्मान्तरैर्यदादानं स्वव्यापारः स एव वा ।
भूतक्रियासु पुंसः स्यात्तानि भूतान्तरैः पुनः ॥ ८८ ॥

तानि भूतान्तरेभ्यश्चेत्यादिरेवं न विद्यते ।
कर्मत्तयात्त्वनात्मीयैः कृतं कर्म न लिम्पति ॥ ८६ ॥
अन्वारम्भणमानादावौदुम्बर्यादिवर्त्तिनि ।
स्वरूपासंभवाद्यष्टुः शरीरेणैव कर्तृता ॥ ९० ॥
तस्माद्यथा कृतौ शास्त्रं प्रवृत्तं व्यक्तिमाश्रयेत् ।
तथा पुंसि प्रवृत्तस्या भूतेन्द्रियसमाश्रयः ॥ ९१ ॥
यैरेभिगतान्पूर्वमात्महेतून्निरस्यति ।
नेत्येतावदवच्छेद्यं विधर्मार्ण इमे यतः ॥ ९२ ॥
अयाचद्देहभावित्वं कार्श्यादेरपि दृश्यते ।
अथावस्थान्तरं तच्च तथा मृत्युरपीष्यताम् ॥ ९३ ॥
एतावानिह भेदः स्याच्छरीरे दृढ एव या ।
प्राणाद्यपगतिस्तत्र निमित्तं न प्रतीयते ॥ ९४ ॥
गुणो द्रव्यविनाशाद्वा विनाशमुपगच्छति ।
गुणान्तरोपपाताद्वा तस्मादुत्कृत्यनाश्यते ॥ ९५ ॥
न तावत्तद्द्वयं मृत्यौ सर्वस्यैवोपलभ्यते ।
अविनष्टशरीरस्य प्राणादिश्चापगच्छति ॥ ९६ ॥
तस्मान्न देहधर्मत्वं प्राणादेरिति गम्यते ।
तस्मिन्दृष्टेऽप्यसद्भावात्स्रग्विलेपनगन्धवत् ॥ ९७ ॥
बहिर्वृत्तित्वमप्यस्ति प्राणादेरितिगम्यते ।
परेन्द्रियैः सुखादिस्तु नान्तरत्वात्प्रतीयते ॥ ९८ ॥
प्रहृष्टवदनत्वादि लिङ्गगम्यं सदैव हि ।
अन्तः स्थितेर्न दृष्टिश्चेत्पाटितेऽप्यनुपग्रहात् ॥ ९९ ॥
अन्तः शरीररूपादि पाटितस्योपलभ्यते ।
न सुखादिरतोऽस्यासौ न मनोबुद्धिवद्गुणः ॥ १०० ॥

गुणत्वादाश्रितत्वं हि सुखादेः स्याद्रसादिवत् ।
यदाश्रितस्स आत्मेति ब्रुवाणस्यैतदुत्तरम् ॥ १०१ ॥
गुणानां परतन्त्रत्वाद्गुणवाननुमीयते ।
सिद्धे गुणत्वे न त्वस्मात्प्रत्यसिद्धं सुखादिषु ॥ १०२ ॥
भेदेन किमुपन्यस्ता तुल्यन्यायेच्छया स्मृतिः ।
उभयं न ह्यदृष्टे ऽर्थे वासनातश्च सिध्यति ॥ १०३ ॥
उपलब्धिमनाश्रित्य स्मृत्यैवेच्छोपजायते ।
उपलब्धिसमानो ऽस्याः कर्तानैकान्ततो भवेत् ॥ १०४ ॥
उपलब्ध्यानुसारेण स्मृत्यात्मा पुनरिष्यते ।
समानस्तेन कर्तास्ति तदर्थं पुनरुच्यते ॥ १०५ ॥
तथापि तु समानायां संततौ वासना यतः ।
तस्मात्सत्यपि भिन्नत्वे स्मरणं व्यवतिष्ठते ॥ १०६ ॥
हेतुष्वेवं परोक्तेषु प्रतिषिद्धेषु संप्रति ।
अहं प्रत्ययविज्ञेयः स्वयमात्मोपपाद्यते ॥ १०७ ॥
अहं यामीत्यहं शब्दः शरीरार्थः प्रयुज्यते ।
गन्तृत्वात्तस्य न ह्यात्मा गमनं प्रतिपद्यते ॥ १०८ ॥
स्मरणप्रत्यभिज्ञाने भवेतां वासनावशात् ।
अन्यार्थविषये ज्ञातुः प्रत्यभिज्ञा तु दुर्बला ॥ १०९ ॥
अहं वेद्मीत्यहंबुद्धिर्ज्ञातारमधिगच्छन्ति ।
तच स्याद् ज्ञातृविज्ञानं तदाधारो ऽथवा पुमान् ॥ ११० ॥
कृतं भूतेन्द्रियाणां च चैतन्यप्रतिषेधनम् ।
समस्तव्यस्तसंघातविवेकपरिणामिनाम् ॥ १११ ॥
संख्यादिभिरयुक्तत्वात्संघातात्संनिवेशतः ।
मृतवच्च शरीरवत्वाद्भूतत्वाद्बाह्यभूतवत् ॥ ११२ ॥

चेतनत्वे हि सर्वेषां न संबन्धः परस्परम् ।
समत्वादेकचैतन्ये ऽन्यस्याङ्गत्वं विरुध्यते ॥ ११३ ॥
संघातसंनिवेशौ च न स्तः पारार्थ्यवर्जितौ ।
भोक्ता च चेतनः कश्चिदस्तीत्यत्राविरुद्धता ॥ ११४ ॥
यदि स्याद् ज्ञानमात्रं च क्षणिकं ज्ञातृ तत्र वः ।
न भवेत्प्रत्यभिज्ञानं पूर्वज्ञातरि संप्रति ॥ ११५ ॥
ज्ञातवानहमेवेदं पुरेदानीं च वेद्म्यहम् ।
तस्य ज्ञानक्षणः को नु विषयः परिकल्प्यताम् ॥ ११६ ॥
पूर्ववृत्ते हि विषये ज्ञातवानिति संभवेत् ।
जानामीति न सत्यं स्यान्नेदानीं वेत्त्यसौ यतः ॥ ११७ ॥
यदीदानींतनो ग्राह्यः जानामीत्युपपद्यते ।
ज्ञातवानित्यदो सत्यं नैवाज्ञासीदयं यतः ॥ ११८ ॥
उभयग्राह्यतायां तु द्वयमप्यनृतं भवेत् ।
न ह्येतौ ज्ञातवन्तौ वा जानीतो वाधुना पुनः ॥ ११९ ॥
संतानो न च तद्ग्राह्यो द्वेहृप्यस्याप्यसंभवात् ।
ज्ञातवान्ह्यसौ पूर्वमस्तुत्वान्न वाधुना ॥ १२० ॥
सामान्यं न च किं चित्ते ज्ञातृपूर्वापरक्षणे ।
सादृश्यात्प्रत्यभिज्ञा चेन्न स्यादसदृशेषु सा ॥ १२१ ॥
गामहं ज्ञातवान्पूर्वमश्वं जानाम्यहं पुनः ।
अथ ज्ञातृत्वसामान्यं तत्स्याद्देहान्तरेष्वपि ॥ १२२ ॥
तत्र सर्वेण विज्ञाते भवेदहमिति स्मृतिः ।
एकसंतानजे चापि स इति स्यात्क्षणे मतिः ॥ १२३ ॥
यथा देहान्तरज्ञाने घटादौ वा बहिः स्थिते ।
ज्ञातरि प्रत्यभिज्ञां च वासना कर्तुमर्हति ॥ १२४ ॥

गुणत्वादाश्रितत्वं हि सुखादेः स्याद्रसादिवत्।
यदाश्रितस्स आत्मेति प्रवाणस्यैतदुत्तरम्॥ १०१॥
गुणानां परतन्त्रत्वाद्गुणवाननुमीयते।
सिद्धे गुणत्वे न त्वस्मात्प्रत्यसिद्धं सुखादिषु॥ १०२॥
भेदेन किमुपन्यस्ता तुल्यन्यायेच्छया स्मृतिः।
उभयं न ह्यदृष्टे ऽर्थे वासनातश्च सिध्यति॥ १०३॥
उपलब्धिमनाश्रित्य स्मृत्यैवेच्छोपजायते।
उपलब्धिसमानो ऽस्याः कर्तानैकान्ततो भवेत्॥ १०४॥
उपलब्ध्यानुसारेण स्मृत्यात्मा पुनरिष्यते।
समानस्तेन कर्तास्ति तदर्थं पुनरुच्यते॥ १०५॥
तथापि तु सामानायां संततौ वासना यतः।
तस्मात्सत्यपि भिन्नत्वे स्मरणं व्यवतिष्ठते॥ १०६॥
हेतुष्वेवं परोक्तेषु प्रतिषिद्धेषु संप्रति।
अहं प्रत्ययविज्ञेयः स्वयमात्मोपपाद्यते॥ १०७॥
अहं यामीत्यहं शब्दः शरीरार्थः प्रयुज्यते।
गन्तृत्वात्तस्य न ह्यात्मा गमनं प्रतिपद्यते॥ १०८॥
स्मरणप्रत्यभिज्ञाने भवेतां वासनावशात्।
अन्यार्थविषये ज्ञातुः प्रत्यभिज्ञा तु दुर्बला॥ १०९॥
अहं वेद्मीत्यहंबुद्धिर्ज्ञातारमधिगच्छन्ति।
तत्र स्याद् ज्ञातृविज्ञानं तदाधारो ऽथवा पुमान्॥ ११०॥
कृतं भूतेन्द्रियाणां च चैतन्यप्रतिषेधनम्।
समस्तव्यस्तसंघातविवेकपरिणामिनाम्॥ १११॥
संख्यादिभिरशुद्धत्वात्संघातात्संनिवेशतः।
मृतवच्च शरीरत्वाद्भूतत्वाद्बाह्यभूतवत्॥ ११२॥

चेतनत्वे हि सर्वेषां न संबन्धः परस्परम् ।
समत्वादेकचैतन्ये ऽन्यस्याङ्गत्वं विरुध्यते ॥ ११३ ॥
संघातसंनिवेशौ च न स्तः पारार्थ्यवर्जितौ ।
भोक्ता च चेतनः कश्चिदस्तीत्यत्राविरुद्धता ॥ ११४ ॥
यदि स्याद् ज्ञानमात्रं च क्षणिकं ज्ञातृ तत्र वः ।
न भवेत्प्रत्यभिज्ञानं पूर्वज्ञातरि संप्रति ॥ ११५ ॥
ज्ञातवानहमेवेदं पुरेदानीं च वेद्म्यहम् ।
तस्य ज्ञानक्षणः को नु विषयः परिकल्प्यताम् ॥ ११६ ॥
पूर्ववृत्ते हि विषये ज्ञातवानिति संभवेत् ।
जानामीति न सत्यं स्यान्नेदानीं वेत्त्यसौ यतः ॥ ११७ ॥
यदीदानींतनो ग्राह्यः जानामीत्युपपद्यते ।
ज्ञातवानित्यदो सत्यं नैवाज्ञासीदयं यतः ॥ ११८ ॥
उभयग्राह्यतायां तु द्वयमप्यनृतं भवेत् ।
न ह्येतौ ज्ञातवन्तौ वा जानीतो वाधुना पुनः ॥ ११९ ॥
संतानो न च तद्ग्राह्यो द्वैरूप्यस्याप्यसंभवात् ।
ज्ञातवान्नह्यसौ पूर्वमस्तुत्वान्न वाधुना ॥ १२० ॥
सामान्यं न च किं चित्ते ज्ञातृपूर्वापरक्षणे ।
सादृश्यात्प्रत्यभिज्ञा चेन्न स्यादसदृशेषु सा ॥ १२१ ॥
गामहं ज्ञातवान्पूर्वमश्वं जानाम्यहं पुनः ।
अथ ज्ञातृत्वसामान्यं तत्स्याद्देहान्तरेष्वपि ॥ १२२ ॥
तत्र सर्वेण विज्ञाते भवेदहमिति स्मृतिः ।
एकसंतानजे चापि स इति स्यात्क्षणे मतिः ॥ १२३ ॥
यथा देहान्तरज्ञाने घटादौ वा बहिः स्थिते ।
ज्ञातरि प्रत्यभिज्ञां च वासना कर्तुमर्हति ॥ १२४ ॥

नातस्मिंस्स इति ज्ञानं न ह्यसौ भ्रान्तिकारणम्।
न चाहंप्रत्ययो भ्रान्तिरिष्टो बाधकवर्जनात् ॥ १२५ ॥
ज्ञातुरन्यश्च विषयस्तस्य न स्यात्स्वभावतः।
अहं प्रत्ययविज्ञेयो ज्ञाता नः सर्वदैव हि ॥ १२६ ॥
गुरुः स्थूलः कृशो वाहमिति देहे ऽपि या मतिः।
भ्रान्तिः सा भेदरूपं हि गुरुमेतदितीष्यते ॥ १२७ ॥
इदं ममेदृशं चक्षुर्मनो मे भ्रान्तमित्यपि।
इन्द्रियेष्वपि भेदेन व्यवहारश्च दृश्यते ॥ १२८ ॥
अज्ञातृत्वस्य सिद्धत्वा विरोधाद्भेदवत्यपि।
प्रत्यासत्तिनिमित्तस्तु स्यादभेदमतिः भ्रमः ॥ १२९ ॥
ममात्मेति मतिर्भेदव्यपदेशेन यात्मनः।
तथावस्थात्मना भेदं ज्ञानस्याश्रित्यकल्पना ॥ १३० ॥
ममेत्येतस्यमुख्यार्थो नात्मनोन्यः प्रतीयते।
तेनासौ भेदहेतुः स्याद्भेदश्च ज्ञानहेतुकः ॥ १३१ ॥
ये वेहाज्ञातनानात्वास्तेषां देहेष्वहंमतिः।
तथाप्यात्माभिमानेनेत्यहंबुद्धिर्ध्रुवात्मनि ॥ १३२ ॥
ये तु विज्ञातनानात्वास्ते देहेष्वनहंकृताः।
जानाम्यहमितीदं सुज्ञानं नैव निवर्त्तते ॥ १३३ ॥
तन्निवृत्तौ न तेषां स्याज्ज्ञानं शिष्योपदेशने।
प्रवृत्तिर्दृश्यते सा च तेनात्मा तैः प्रतीयते ॥ १३४ ॥
शास्त्रादावर्थविज्ञाते यद्यहं श्रुतवानिति।
नावगच्छेत्ततः स्सर्वः प्रवर्त्तेतादितः पुनः ॥ १३५ ॥
तेनास्मात्प्रत्यभिज्ञानात्सर्वलोकावधारितात्।
नैरात्म्यवादबाधः स्यादेते च प्रतिहेतवः ॥ १३६ ॥

ह्यस्तनाहमतिग्राह्यो ज्ञाताद्याप्यनुवर्त्तते ।
अहंप्रत्ययगम्यत्वादिदानींतनबोद्धृवत् ॥ १३७ ॥
एव बाह्यो भवेज्ज्ञाता ज्ञातृत्वानत एव वा ।
ह्यस्तनज्ञातृवत्तेषां प्रत्ययानां च साध्यताम् ॥ १३८ ॥
एकसंतानसंबन्धिज्ञानेष्वहंप्रत्ययत्वतः ।
ह्यस्तनाद्यतनास्सर्वे तुल्यार्थाश्चैकबुद्धिवत् ॥ १३९ ॥
वेदादेवात्मनोऽस्तित्वं यो नाम प्रतिपद्यते ।
विरोधं वात्मनो ब्रूयात्तं प्रति ब्राह्मणाभिधा ॥ १४० ॥
अन्यथानुपपत्तेश्च विधिनात्मन्यपेक्षिते ।
शक्तायां वाप्यशक्तायामात्मा केन प्रकाश्यते ॥ १४१ ॥
आत्मनैव प्रकाश्योयमात्मा ज्योतिरितीरितम् ।
अग्राह्य इति सामान्यात्सर्वेषेति प्रतीयते ॥ १४२ ॥
आत्मज्योतिष्ट्ववचनात्परैरित्यवतिष्ठते ।
अर्थादेवार्थबुद्धिर्या सा शुद्धैवोपमोच्यते ॥ १४३ ॥
सादृश्यबोधनं शब्दैरुपमानागमोपुनः ।
आत्मज्ञानाविनाभूतदृष्टचेष्टानिरूपणात् ॥ १४४ ॥
परेषामात्मविज्ञानमनुमानादुदाहृतम् ।
सदसज्ज्ञाश्यनाशात्मपरिकीर्त्तनमूढया ॥ १४५ ॥
चोदितः पूर्वपक्षोयमिति सिद्धान्तमब्रवीत् ।
अविनाशी स्वरूपेण पुरुषो या तु नाशिना ॥ १४६ ॥
मात्राणां साधिकाराणां भूतादीनामसंक्षिता: ॥ १४७ ॥
इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयश्च बोधः प्रयातिवेदान्तनिषेवणेन नः ॥ १४८ ॥
इति श्रीभट्टकुमारिलविरचिते मीमांसावार्त्तिके आत्मवादः ॥

कर्मैके तत्र दर्शनात् ॥ ६ ॥

यद्यनित्यत्वपक्षे ऽपि शब्दादर्थो ऽवगम्यते ।
अनादिर्व्यवहारश्च नित्यत्वं किं नु साध्यते ॥ १ ॥
सत्यमिच्छन्ति ते ऽप्येवं न्यायस्तत्र परीक्ष्यताम् ।
न पराभ्युपगत्यैव प्रामाण्यमवतिष्ठते ॥ २ ॥
यदा हि क्षणिकश्शब्दो न शक्तो ऽर्थावधारणे ।
युक्त्यावधार्यते तत्र निर्मूला वेदधीर्भवेत् ॥ ३ ॥
निर्मूलैरपि विज्ञानैर्दृष्टार्थेषु भवेद्गतिः ।
श्रुतिमात्राश्रयत्वात्तु धर्मादौ स्थित्यमाश्रितः ॥ ४ ॥
अनादिव्यवहारत्वमादिमद्वस्तुसंश्रयम् ।
प्रत्याख्येयं घटत्वादिजातौ व्यक्तिभ्रमो हि सः ॥ ५ ॥
स्थिते कूटस्थनित्यत्वे व्यवहारस्य नित्यता ।
कूटस्थेन विनैकेन न तस्या जवनं भवेत् ॥ ६ ॥
प्रसिद्धत्वादृते सर्वो व्यवहारो हि नेष्यते ।
तस्माद्वेदप्रमाणार्थं नित्यत्वमिह साध्यते ॥ ७ ॥
परस्पराविनाभावादनित्यकृतकत्वयोः ।
कारणाद्वयसिद्ध्यर्थं किं चित्कस्य चिदुच्यते ॥ ८ ॥
नानादेशावगम्यत्वाद्युगपत्तुल्यबुद्धिभिः ।
अस्माभिः कृतकश्शब्दो भवेदश्वरलेख्यवत् ॥ ९ ॥
यौगपद्योपलम्भाद्वा भेदो ऽभेदश्च कार्यता ।
अविभुत्वे हि युगपन्नैको नानावगम्यते ॥ १० ॥
कार्त्स्न्येन वावगम्यत्वादेकदेशे घटादिवत् ।
शब्दस्याविभुता तस्मादन्यतास्य मुखान्तरे ॥ ११ ॥

एकस्सन्नेकदेशस्थो यदैकेन प्रयुज्यते ।
तदावक्त्रान्तरे न स्यादेकवक्तृमुखादिवत् ॥ १२ ॥
कार्यत्वे स्यात्क्रियाभेदात्फलभेदः प्रतिक्रियम् ।
तेनैकबुद्धिः सादृश्यात् स्फुटे ऽन्यत्वे ऽवकल्पते ॥ १३ ॥
नित्यत्वे त्वेकबुद्धिस्यान्न किं चिद् भ्रान्तिकारणम् ।
कामं देशा इति न्यायात्तत्त्वैकत्वं विरुध्यते ॥ १४ ॥
न च व्यञ्जकभेदेन देशभेदोपलम्भनम् ।
प्रदीपैर्भिन्नदेशस्थैर्न भिन्नो व्यज्यते घटः ॥ १५ ॥
व्योमानवयवं चैषां ध्वनीनामाश्रयो मतम् ।
सव्यङ्ग्यानामतः सर्वैर्व्यक्तिरेकत्र ते भवेत् ॥ १६ ॥
वस्त्वन्तरविकार्यत्वात्स्मृतिसादृश्यसाधितात् ।
इकारादेरनित्यत्वं दधिक्षीरगुडादिवत् ॥ १७ ॥
हेतुवृद्ध्यनुसारित्वात्कार्यतास्य घटादिवत् ।
न हि दीपसहस्रे ऽपि व्यञ्जके वर्द्धते घटः ॥ १८ ॥
अनैकान्तिकता तावद्धेतूनामिह कथ्यते ।
प्रयत्नानन्तरं दृष्टिर्नित्ये ऽपि न विरुध्यते ॥ १९ ॥
तस्मात्तत्रैव दृष्टत्वादन्यत्रादृष्टकल्पना ।
प्रागूर्ध्वानुपलब्ध्या चेद्धेतुत्वेन विवक्षिते ॥ २० ॥
जात्यौलूक्यस्य सांख्यस्य चैतन्येनात्मवर्तिना ।
शाक्यस्यापि त्वनैकान्तः क्षणिकव्यतिरेकिभिः ॥ २१ ॥
प्रतिसंख्याप्रतिसंख्यानिरोधव्योमभिस्त्रिभिः ।
बुद्धिपूर्वं विनाशे हि प्रतिसंख्यानिरोधधीः ॥ २२ ॥
अबुद्धिपूर्वकस्तेषां निषेध्ये प्रतिसंख्यया ।
तौ च द्वावप्यनाशित्वादिष्टावकृतकावपि ॥ २३ ॥

आहुः स्वभावसिद्धं हि ते विनाशमहेतुकम् ।
हेतुर्यस्य विनाशो ऽपि तस्यदृष्टो ऽङ्कुरादिवत् ॥ २४ ॥
विनाशस्य विनाशस्तु नास्ति तस्मादकृत्रिमः ।
भवतिह्यग्निसंबन्धात्काष्ठादङ्गा रसन्ततिः ॥ २५ ॥
मुद्गरादिहताच्चापि कपालं जायते घटात् ।
स्वाभाविको विनाशस्तु जातमात्रप्रतिष्ठितः ॥ २६ ॥
सूक्ष्मसदृशसंतानवृत्तेरनुपलक्षितः ।
यदा विलक्षणो हेतुः पतेत्सदृशसन्ततौ ॥ २७ ॥
विलक्षणेन कार्येण स्थूलो ऽभिव्यज्यते तदा ।
तेनासदृशसन्तानो हेतोस्संजायते यतः ॥ २८ ॥
तेनैवाक्रियमाणो ऽपि नाशो ऽभिव्यज्यते स्फुटः ।
समुद्गरप्रहारादिप्रयत्नानन्तरीयकः ॥ २९ ॥
यस्मादकृतको दृष्टो हेतुः स्याद्व्यभिचार्ययम् ।
प्रकाशमपि नित्यं सद्यदा भूमिजलावृतम् ॥ ३० ॥
व्यज्यते तदपोहेन खननोत्सेचनादिभिः ।
प्रयत्नानन्तरं ज्ञानं तदा तत्रापि दृश्यते ॥ ३१ ॥
तेनानैकान्तिको हेतुर्यदुक्तं तत्र दर्शनात् ।
अथ स्थगितमप्येतदस्त्येवेत्यनुमीयते ॥ ३२ ॥
शब्दो ऽपि प्रत्यभिज्ञानात्प्रागस्तीत्यवगम्यते ।
कूपपूरणयत्नेन खं तिरोधीयते यदा ॥ ३३ ॥
अस्थानादित्ययं हेतुस्तदा नैकान्तिको भवेत् ।
आकाशधीप्रबन्धो हि तदा तस्मिन्नतिष्ठति ॥ ३४ ॥
तिरोहितानभिव्यक्तेश्शब्दबुद्धिप्रबन्धवत् ।
शब्दस्यैवानवस्थानादिति हेतुं वदेद्यदि ॥ ३५ ॥

असिद्ध एव वक्तव्यस्ततो ऽभिव्यक्तिवादिना ।
तद्व्यापारपरत्वे ऽपि व्यञ्जकैर्मूलोदकादिभिः ॥ ३६ ॥
कृतकत्वे ऽपि तेषां हि नोत्पत्तिः खननादिना ।
न चोच्चारणतो ऽन्यास्ति शब्दस्योत्पादिका क्रिया ॥ ३७ ॥
निबन्धर्यसतीत्येवं विशिष्टे ऽपि तथैव तैः ।
अबन्धाः स्युर्यदैतेषामबोधो हेत्वभावतः ॥ ३८ ॥
व्यञ्जकाभावतः शब्दे ऽप्यबोधो बधिरादिवत् ।
तस्यैव वा निबन्धित्वाद्भवेद्धेतोरसिद्धता ॥ ३९ ॥
सन्नेव साधनाभावाच्छब्दो नैवोपलभ्यते ।
क्षणिकं साधनं वास्य बुद्धिरप्यनुवर्तते ॥ ४० ॥
मेघान्धकारशर्वर्यां विद्युज्जनितदृष्टिवत् ।
यथा घटादेर्दीपादिरभिव्यञ्जक इष्यते ॥ ४१ ॥
चक्षुषो ऽनुग्रहादेवं ध्वनिः स्याच्छ्रोत्रसंस्कृतेः ।
न च पर्यनुयोगो ऽत्र केनाकारेण संस्कृतः ॥ ४२ ॥
उत्पत्तावपि तुल्यत्वाच्छक्तिस्तत्राप्यतीन्द्रिया ।
नित्यं कार्यानुमेया च शक्तिः किमनुयुज्यते ॥ ४३ ॥
तद्भावभाविमात्रं हि प्रमाणं तत्र गम्यते ।
अतो ऽतीन्द्रिययैवेते शक्त्या शक्तिमतीन्द्रियाम् ॥ ४४ ॥
इंद्रियेष्वादधानाः स्युश्शब्दाभिव्यक्तिहेतवः ।
व्यञ्जको नान्यजातिश्चेच्छ्रोत्रं शब्दस्य ते कथम् ॥ ४५ ॥
पार्थिवानां घटादीनां प्रदीपादिश्च तैजसः ।
आत्मादिसंप्रयोगे च कार्यैस्यात्तुल्यजातिता ॥ ४६ ॥
जातियां कांचिदिष्टा चेत्सा नो ऽत्रापि भविष्यति ।
उपलब्धिनिमित्तात्त्व नान्यद्व्यञ्जकमुच्यते ॥ ४७ ॥

तस्माद्यथोपलब्धत्वात्स्वजातिव्यञ्जको भवेत् ।
तथा तदविनाभावाद्विजातीयो भविष्यति ॥ ४८ ॥
वायवीयानभिज्ञत्वात्ताल्वादिस्थाभिमानतः ।
अनभिव्यञ्जकत्वार्थमाहोपरतयोरिति ॥ ४९ ॥
वायविषयधियैवोक्तं न नूनमितिचोत्तरम् ।
अभिघातवचस्तः प्रागेवं गूढधियावुभौ ॥ ५० ॥
यदि शब्दमितीहापि चेधाभिव्यक्तिसंभवः ।
सा हि स्याच्छब्दसंस्कारादिन्द्रियस्योभयस्य वा ॥ ५१ ॥
तत्र सर्वैः प्रतीयेत शब्दस्संस्क्रिते यदि ।
निर्भागस्य विभोर्न स्यादेकदेशे हि संस्क्रिया ॥ ५२ ॥
न चाप्याधारभेदेन संस्कारनियमो भवेत् ।
यतश्शब्दो निराधारो व्योमात्मादिवदेव च ॥ ५३ ॥
अथाप्याकाशमाधारस्तत्रानवयवे ऽसति ।
न स्यात्प्रदेशसंस्कारः कृत्स्नशब्दमतेरपि ॥ ५४ ॥
न हि सामस्त्यरूपेण यावद्व्योम व्यवस्थितः ।
शक्यते सकलो बोद्धुमेकदेशेन संस्कृतः ॥ ५५ ॥
आकाशश्रोत्रपक्षे च विभुत्वात्प्राप्तितुल्यता ।
दूरभावे ऽपि शब्दानामिति ज्ञानं प्रसज्यते ॥ ५६ ॥
श्रोत्रस्य चैवमेकत्वं सर्वप्राणभृतां भवेत् ।
तेनैकश्रुतिवेलायां शृणुयुः सर्वएव ते ॥ ५७ ॥
नभ्यानवयवत्वाच्च न धर्माधर्मसंस्कृतः ।
नभोदेशो भवेच्छ्रोत्रं व्यवस्थाद्वयसिद्धते ॥ ५८ ॥
वैशेषिकादिसिद्धान्तेष्वेवं तावत्प्रसज्यते ।
कापिले ऽपि विभुत्वेन श्रोत्रादेरियमेव दिक् ॥ ५९ ॥

सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान्प्रबोधयेत् ।
घटायोन्मीलितं चक्षुः पटं न हि न बुध्यते ॥ ६० ॥
एतदेव प्रसङ्क्तव्यं विषयस्यापि संस्कृतौ ।
समानदेशवर्त्तित्वात्संस्कारो ऽप्यविशेषतः ॥ ६१ ॥
स्थिरवाद्यपनीत्या च संस्कारो ऽस्य भवन्भवेत् ।
दृष्टं वा वरणापाये तद्देशान्योपलम्भनम् ॥ ६२ ॥
संस्कृतासंस्कृतत्वे च शब्दैकत्वेन सिद्धतः ।
एकावस्थाभ्युपेतौ वा सर्वैर्ज्ञायेत वा न वा ॥ ६३ ॥
प्रत्येकाभिहता दोषाः स्युर्द्वयोरपि संस्कृतौ ।
तेन प्रादेशिकं ज्ञानं न कृतत्वाद्विना भवेत् ॥ ६४ ॥
उत्तरं श्रोत्रसंस्काराद्भाष्यकारेण वर्णितम् ।
तद्भेदाच्छ्रुतिभेदश्च प्रतिश्रोतृव्यवस्थितः ॥ ६५ ॥
नावश्यं श्रोत्रमाकाशमस्माभिश्चाभ्युपेयते ।
न वानवयवं व्योम जैनसांख्यनिषेधतः ॥ ६६ ॥
तेनाकाशैकदेशो वा यद्वा वस्त्वन्तरं भवेत् ।
कार्यार्थापत्तिगम्यं नः श्रोत्रं प्रतिनरं स्थिरम् ॥ ६७ ॥
यद्यपि व्यापि चैकं च तथापि ध्वनिसंस्कृतिः ।
अधिष्ठानेषु सा यस्य तच्छब्दं प्रतिपत्स्यते ॥ ६८ ॥
अथापीन्द्रियसंस्कारस्सोऽप्यधिष्ठानदेशतः ।
शब्दं न श्रोष्यति श्रोत्रं तेनासंस्कृतशष्कुलि ॥ ६९ ॥
अप्राप्तकर्णदेशत्वाद्ध्वनेर्न श्रोत्रसंस्क्रिया ।
अतो ऽधिष्ठानभेदेन संस्कारनियमस्थितिः ॥ ७० ॥
नन्वेकस्मिन्नधिष्ठाने लब्धसंस्कारमिन्द्रियम् ।
बोधकं सर्वदेशेषु स्यादेकेन्द्रियवादिनः ॥ ७१ ॥

पुंसां देहप्रदेशेषु विज्ञानोत्पत्तिरिष्यते ।
तेन प्रधानवैदेश्याद्विगुणा स्यात्तु संस्कृतिः ॥ ७२ ॥
निष्प्रदेशो ऽपि चात्मा नः कात्स्न्येन न च विदन्नपि ।
शरीरएव गृह्णातीत्येवमुक्ते न दुष्यति ॥ ७३ ॥
एकत्वे ऽपि यथा ऽऽकाशं द्रव्यैः सावयवैः पृथक् ।
संसर्गभेदं लभते संस्कारासंस्कृती तथा ॥ ७४ ॥
व्योम्नो ऽनवयवव्याप्तिसद्भावे ऽपि भुवि स्थितान् ।
ह्याश्रयत्वेन संसर्गो घटादीननुरुध्यते ॥ ७५ ॥
बाधिर्यादिव्यवस्थानमनेनैव च हेतुना ।
तदेवाभोग्यमन्यस्य धर्माधर्मवशीकृतम् ॥ ७६ ॥
यथा च वसन्नेव स्वामित्वादवरोपितः ।
न भोगं लभते तद्वद्बधिरो ऽन्यच शृणोति ॥ ७७ ॥
श्रोत्रशब्दाश्रयाणां च न नामावयवान् स्वयम् ।
न चैकदेशवृत्तित्वं तथाप्येतन्न दुष्यति ॥ ७८ ॥
व्यञ्जकानां हि वायूनां भिन्नावयवदेशता ।
जातिभेदश्च तेनैव संस्कारो व्यवतिष्ठते ॥ ७९ ॥
अन्यार्थं प्रेरितोवायुर्यथान्यं न करोति वः ।
तथान्यवर्णसंस्कारशक्तो नान्यं करिष्यति ॥ ८० ॥
अन्यैस्ताल्वादिसंयोगैर्वर्णो नान्यो यथैव ते ।
तथा ध्वन्यन्तराक्षेपो न ध्वन्यन्तरसारिभिः ॥ ८१ ॥
तस्मादुत्पत्त्यभिव्यक्त्यो कार्यार्थापत्तितः समः ।
सामर्थ्यभेदस्सर्वत्र स्यात्प्रयत्नविवक्षयोः ॥ ८२ ॥
विषयस्यापि संस्कारे तेनैकस्यैव संस्कृतिः ।
नरैस्सामर्थ्यभेदाच्च न सर्वैरवगम्यते ॥ ८३ ॥

यथैवोत्पद्यमानो ऽयं न सर्वैरवगम्यते ।
दिग्देशादिविभागेन सर्वान्प्रति भवन्नपि ॥ ८४ ॥
तथैव यत्समीपस्थैर्नादैस्याद्यस्य संस्कृतिः ।
तैरेव श्रूयते शब्दो न दूरस्थैः कथं च न ॥ ८५ ॥
द्वय संस्कारपक्षे तु मृषा दोषद्वये वचः ।
येनान्यतरवैकल्यात्सर्वैः सर्वो न गृह्यते ॥ ८६ ॥
सर्वलोकप्रसिद्धां च विवक्षानुसृतां श्रुतिम् ।
अनुगच्छद्भिरेकान्तात्कार्यो मार्गः परीक्षकैः ॥ ८७ ॥
तत्र ये तावदिच्छन्ति प्राक्संयोगविभागतः ।
शब्द उत्पद्यते तस्मादन्यस्तत्सदृशः पुनः ॥ ८८ ॥
तदनन्तरदेशे ऽन्यः स्तादृगन्यस्ततः परः ।
वीचीतरङ्गवृत्त्यैवमन्यः श्रोत्रेण गृह्यते ॥ ८९ ॥
अदृष्टकल्पना तस्मिन्पक्षे बह्वी प्रसज्यते ।
शब्दभेदेन तावन्नः प्रज्ञाभेदः प्रवर्तते ॥ ९० ॥
आरम्भकत्वं शब्दस्य निष्क्रियस्याप्रमाणकम् ।
देशान्तरगतं कार्यं नामूर्तस्यानभिघ्नतः ॥ ९१ ॥
देशेयत्तानिमित्तं च नारम्भनियमं प्रति ।
न च दिग्नियमे हेतुरनुयातगतेस्तथा ॥ ९२ ॥
सदृशं वा सजातिं वा करोतीति च दुष्करम् ।
आरम्भसर्वदिक्त्वे न च हेतुः प्रतीयते ॥ ९३ ॥
निरन्वये विनश्यद्भिर्न यात्यन्ता सतां क्रिया ।
ज्ञानसन्तानवच्चैषां सन्तानो नावकल्पते ॥ ९४ ॥
वेगवत्सक्रियत्वाभ्यां तरङ्गाणां तु युज्यते ।
कार्यादेशान्तरारम्भो यावद्वेगं च तत्क्रिया ॥ ९५ ॥

आरम्भप्रतिबन्धो ऽस्य न च कुड्यादिभिर्भवेत् ।
न ह्यमूर्तस्य सद्भावो मूर्तमध्ये विहन्यते ॥ ९६ ॥
न च कुड्यादिभिर्व्योम नाश्यते मार्यते ऽपि वा ।
न च तिरोधीयते तस्मात्कुड्यमध्ये ऽपि तद् ध्रुवम् ॥ ९७
आकाशं तत्र न स्याच्चेत्कुड्यस्थानं विरुध्यते ।
तन्मध्यावयवानां च न हि तिष्ठन्ति ते घने ॥ ९८ ॥
अथावृत्त्यात्मकद्रव्यसंयोगरहितं नभः ।
शब्दोत्पादं बिभर्तीति तत्र न्यायो न कश्चन ॥ ९९ ॥
अन्यथाप्युपपन्नत्वान्नार्थापत्त्यैतदिष्यते ।
न प्रमाणान्तरं चेयं प्रमाणद्वयवादिनाम् ॥ १०० ॥
संबन्धानुपलब्धेश्च नानुमानेन कल्पना ।
ब्रूयात्सामान्यदृष्टं चेद्ब्रवेद्धेतोर्विरुद्धता ॥ १०१ ॥
सजातीयकरः शब्दो गुणत्वाच्चेन्द्रियादिवत् ।
अशब्दारम्भकस्तद्वत्स्याददेशान्तरे तथा ॥ १०२ ॥
यत्र ह्यवयवादेशे परादीनां व्यवस्थिताः ।
तत्रैव तद्गुणास्सर्वे तदारब्धो ऽवयव्यपि ॥ १०३ ॥
तद्गुणाश्चापि तद्देशास्तेनैषामेकदेशता ।
तद्वदाद्यापृथग्देशाः शब्दाः सर्वे भवन्ति हि ॥ १०४ ॥
शब्दं नारभते शब्दश्शब्दत्वादन्त्यशब्दवत् ।
एवं विभागसंयोगौ तद्भावादन्ययोगवत् ॥ १०५ ॥
जैनकापिलनिर्दिष्टं शब्दश्रोत्रादिसर्पणम् ।
साधीयोऽस्मात्तदप्यत्र युक्त्यानैवावतिष्ठते ॥ १०६ ॥
शब्दस्यागमनं तावददृष्टं परिकल्पितम् ।

त्वगग्राह्यत्वमन्ये च भागास्सूक्ष्माः प्रकल्पिताः ।
तेषामदृश्यमानानां कथं च रचनाक्रमः ॥ १०८ ॥
कीदृशाद्रचनाभेदाद्वर्णभेदश्च जायते ।
द्रव्यत्वेन विना चैषां संश्लेषः कथ्यते कथम् ॥ १०९ ॥
अगच्छतां च विश्लेषो न भवेद्वायुना कथम् ।
लघवो ऽवयवा ह्येते निबद्धा न च केन चित् ॥ ११० ।
वृक्षाद्यभिहतानां च विश्लेषो लोष्ठवद्भवेत् ।
एकश्रोत्रप्रवेशे च नान्येषां स्यात्पुनः श्रुतिः ॥ १११
नचावान्तरवर्णाना नानात्वस्यास्ति कारणम् ।
न चैकस्यैव सर्वासु गमनं दिक्षु युज्यते ॥ ११२ ॥
श्रोत्रागमनपक्षे च तत्र वृत्तिश्च गच्छति ।
तददृष्टद्वयं तस्य दूरस्थेन च विक्रिया ॥ ११३ ॥
प्राप्तिस्सर्वगतत्वाच्चेत्तुल्या दूरगतेष्वपि ।
विक्रियाविक्रिये तत्र सर्वैस्स्यातां न भेदतः ॥ ११४ ॥
असंबद्धविकारित्वमपीष्टं तत्र पूर्ववत् ।
असंबद्धसमानत्वे नासन्नो हि विशिष्यते ॥ ११५ ॥
अमूर्तश्रोत्रवृत्तिश्च न मूर्तेन विहन्यते ।
तत्र व्यवहितश्शब्दः किमर्थं नोपलभ्यते ॥ ११६ ॥
श्रोत्रस्य विक्रियायां च नेयत्ताया नियामकम् ।
नानुवातादिभिस्तस्य वृत्तेश्च प्रेरणं भवेत् ॥ ११७ ॥
अनुवातं विहन्येत प्रतिवातं च सा व्रजेत् ।
तद्गतं ह्यनुवातत्वं स्यान्न शब्दगतं तदा ॥ ११८
येषां त्वप्राप्त एवायं शब्दः श्रोत्रेण गृह्यते ।
तेषामप्राप्तितुल्यत्वं दूरव्यवहितादिषु ॥ ११९ ॥

तत्र दूरसमीपस्थग्रहणाग्रहणे समे।
स्यातां न च क्रमो नापि तीव्रमन्दादिसंभवः ॥ १२० ॥
तस्माच्छ्रोत्रियदृष्टापि कल्पनेयं परीक्ष्यताम्।
प्रयत्नाभिहतो वायुः कोष्ठ्यो यातीत्यसंशयम् ॥ १२१ ॥
स संयोगविभागौ च ताल्वादेरनुरुध्यते।
वेगवत्त्वाच्च सो ऽवश्यं यावद्वेगं प्रतिष्ठते ॥ १२२ ॥
तस्यात्मावयवानां च स्तिमितेन च वायुना।
संयोगाविप्रयोगाश्च जायन्ते गमनाद्ध्रुवम् ॥ १२३ ॥
कर्णव्योमनि स प्राप्तः शक्तिं श्रोत्रे नियच्छति।
तद्भावे शब्दबोधाद्यसंस्कारो दृष्ट इष्यते ॥ १२४ ॥
उत्पत्तिशक्तिवत्सो ऽपीत्यधिकं नो न किं चन।
तथैव तद्विशेषो ऽपि विशिष्टग्रहणाद्भवेत् ॥ १२५ ॥
शब्दोत्पत्तेर्निषिद्धत्वादन्यथा नुपपत्तितः।
विशिष्टसंस्कृतेर्जन्म ध्वनिभ्यो ऽध्यवसीयते ॥ १२६ ॥
तद्भावभाविता वाच शक्त्यस्तित्वावबोधिनी।
श्रोत्रशक्तिवदेवेष्टाबुद्धिस्तत्र हि संभृता ॥ १२७ ॥
कुड्यादिप्रतिबन्धो ऽपि युज्यते मातरिश्वनः।
श्रोत्रदेशाभिघाते ऽपि तेन तीव्रप्रवर्तिना ॥ १२८ ॥
तस्य च क्रमवर्तित्वात्तायिवेगात्मसंपदः।
संस्कारक्रमतीव्रत्वमन्दतादिनिमित्तता ॥ १२९ ॥
इममेव च संस्कारं शब्दग्रहणकारणम्।
के चित्तु पण्डितं मन्याः श्रोत्रमित्यभिमन्वते ॥ १३० ॥
संज्ञासंचारणात्तेषां बहुमानः स्वचेतसि।
मुधैषां बहुमानो ऽयं वस्त्वनुत्पाद्य किं चन ॥ १३१ ॥

ध्वनिजन्याद्धि संस्काराच्छ्रोत्रं नान्यत्प्रदर्शितम् ।
तं मुक्त्वा श्रोत्रशब्देन किं दृष्टमधिकं च तैः ॥ १३२ ॥
एवं जातीयकानर्थान्फलेन प्रतिपादितान् ।
लोकः संस्कारशब्देन सामान्येनैव जल्पति ॥ १३३ ॥
श्रोत्रशब्दो विशेषेण तत्राविज्ञातसंगतिः ।
सिद्धं स्वार्थं परित्यज्य नाभिधानेन वर्तते ॥ १३४ ॥
आदावपरिभाषत्वं भाष्यकारो यदब्रवीत् ।
पदार्थेषु भवेत्तेषां तदतिक्रमणं फलम् ॥ १३५ ॥
संस्कारव्यतिरिक्ते च सर्वलोकस्य वस्तुनि ।
श्रोत्रशब्दः प्रसन्नः सन्स्वाच्छंद्येनापनीयते ॥ १३६ ॥
इन्द्रियाणामभिव्यक्तिर्गर्भस्थस्यैव देहिनः ।
प्राक्कार्यादागमैस्सिद्धा तत्प्रद्वेषेण लङ्घ्यते ॥ १३७ ॥
न च शब्दार्थसंबन्धः कर्तुं योग्यः कथं चन ।
क्षणिकश्रोत्रपक्षे च सो ऽवश्यं कृतको भवेत् ॥ १३८ ॥
संस्कारे तुल्यमेतच्चेन्न संस्कारान्तरस्थितेः ।
संस्कारशब्दवाच्या हि के चिद्वर्षशतान्यपि ॥ १३९ ॥
ध्रियन्ते तेन तच्छब्दसंबन्धो न विनश्यति ।
श्रोत्रशब्दः पुनः पूर्वं संस्कारादुत्तरत्र तु ॥ १४० ॥
एकदेशनिबद्धे हि सर्वदार्थे प्रतिष्ठितः ।
शक्यं च ध्रियमाणत्वमिन्द्रियत्वात्त्वगादिवत् ॥ १४१ ॥
वक्तुं श्रोत्रस्य तेनात्र क्षणिकोत्पत्त्यसंभवः ।
यदि च ध्वनिसंपर्काच्छ्रोत्रमेवोपजायते ॥ १४२ ॥
बधिरस्यापि तज्जन्म किमर्थं नोपलभ्यते ।
यद्यस्य नास्ति तत्तस्य सुतरां जनने ऽक्षमम् ॥ १४३ ॥

तस्मादपेक्षितं श्रोत्रं बधिरस्यापि जायताम्।
संस्कारे ऽप्यविशिष्टं चेन्नासावुपहतेन्द्रिये ॥ १४४ ॥
श्रोत्रमाच्छादितं दोषैस्संस्कर्तुं ध्वनयो ऽक्षमाः।
उत्पद्यमानपक्षे तु न किं चित्प्रतिबन्धनम् ॥ १४५ ॥
श्रोत्रमाकाशदेशं च भौतिकेन्द्रियवादिनः।
यमाहुस्तस्य सद्भावः प्राग्ध्वनेः केन वार्यते ॥ १४६ ॥
सिद्धस्य च पदार्थस्य यान्यतः कार्ययोग्यता।
संस्कारशब्दवाच्यत्वात्सायुक्त्या वार्यते कया ॥ १४७ ॥
लोकागमप्रसिद्धेषु पदार्थेष्वन्यथा वचः।
न मुधा खेदकारि स्याद्गोविषाणाशनोपमम् ॥ १४८ ॥
यदि त्ववश्यं कर्त्तव्यस्तार्किकोक्तिविपर्ययः।
ते ऽतो वेदानुसारेण कार्या दिक्छ्रोत्रतामतिः ॥ १४९ ॥
दिशः श्रोत्रमिति ह्येतत्प्रलये ऽप्यभिधीयते।
तच्च प्रकृतिगामित्ववचनं चक्षुरादिवत् ॥ १५० ॥
सूर्यमस्य यथा चक्षुरुक्तं गमयतादिति।
तेजः प्रकृतिविज्ञानं तथा श्रोत्रं दिगात्मकम् ॥ १५१ ॥
दिक्च सर्वगतैका च यावद्व्योम व्यवस्थिता।
कर्णच्छिद्रपरिच्छिन्ना श्रोत्रमाकाशदेशवत् ॥ १५२ ॥
यावांश्च कणभुग्न्यायो नभोभागप्रकल्पने।
दिग्भागे तु समस्तोसावागमात्तु विशिष्यते ॥ १५३ ॥
तस्माद्दिग्द्रव्यभागो यः पुण्यापुण्यवशीकृतः।
कर्णच्छिद्रपरिच्छिन्नः श्रोत्रं संक्रियते च सः ॥ १५४ ॥
तस्मात्स्वतो ऽनवस्थानं परस्मादित्यसिद्धता।
प्रत्ययस्यानवस्थानं व्योम्न्यपि स्थगिते ऽस्ति नः ॥ १५५ ॥

न च तस्मिन्विनाशित्वं द्रव्ये ऽद्रव्यात्मके सति ।
तथानुमानबुद्धिश्चेच्छब्देप्यस्तीति गम्यताम् ॥ १५६ ॥
करोतेर्यच्च कर्मत्वात्कृतकत्वमुदाहृतम् ।
अर्थस्तावदसिद्धो ऽयमभिधानमथोच्यते ॥ १५७ ॥
तथापि व्यभिचारित्वं तत्क्रियाजन्यवादिनः ।
गोमयादावतज्जन्येप्येष शब्दो हि दृश्यते ॥ १५८ ॥
यथा कथं चिदिष्टं चेत्कार्यत्वं गोमयादिषु ।
तथाप्याकाशमात्रत्वं कुरुष्वेत्यत्र दृश्यते ॥ १५९ ॥
चरणाभावमात्रत्वात्कार्यमेवेति चेन्न तत् ।
बौद्धानामपिनाभावः स्वयं सिद्धो हि जन्यते ॥ १६० ॥
मृदां देशान्तरप्राप्तिर्व्यापारफलमत्र हि ।
अनावृत्त्यात्मकं व्योम नित्यमेवव्यवस्थितम् ॥ १६१ ॥

## ॥ अथ ब्रह्मसूत्रतात्पर्यविवरणस्य ॥

### ॥ द्वितीयाध्यायारम्भः ॥

प्रथमाध्याये सर्वज्ञ ईश्वरो जगत्कारणं मृदादिरिव घटादीनाम्, उत्पन्नस्य जगतो नियन्तृत्वेन स्थितिकारणम्, मायावीव, जगतः स्वात्मन्युपसंहारकारणमवनिरिव भूतग्रामस्य, स एव च पूर्वेषां न आत्मा॰ इत्यादि प्रतिपादितम्, प्रधानादिवादाश्चाशब्दत्वेन निराकृताः, इदानीं स्मृतिन्यायविरोधः प्रधानादिवादानां चाभासमूलकत्वमित्याद्यर्थप्रतिपादनाय द्वितीयो विरोधाध्याय आरभ्यते, तत्र स्मृतिविरोधमाशङ्क्य परिहरति स्मृत्येति ।

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥**

यदुक्तं ब्रह्मकारणमिति तन्न, कुतः, कपिलशास्त्रस्य पञ्चशिखादिशास्त्रस्य चानवकाशप्रसङ्गात्, तत्राचेतनं प्रधानं कारणमित्युक्तम्, ईश्वरस्य कारणत्वे प्रधानस्मृत्यनवकाशप्रसङ्गात्, इति चेत्, इत्याशङ्क्य दूषयति नान्यस्मृत्यनवकाशेति, तथा च कापिलादिस्मृतिषु वेदविरुद्धास्वचेतनं प्रधानमुपनिबद्धम्, मन्वादिस्मृतिषु वेदमूलकासु तु 'ईदृशेनानेन विधिना' 'इत्थं च कर्तव्यमिति वर्णाश्रमधर्माः प्रतिपाद्यन्त इत्यनुष्ठेयधर्मप्रतिपादकत्वेन प्राबल्यान्मन्वाद्युक्तमीश्वरकारणत्वमेवाङ्गीकार्यम्, सांख्यस्मृतेर्यथाकथंचिदुपपत्तिरस्तु, श्रुत्युक्तजगत्कारणं ब्रह्मेति स्मृतेरेव विश्वासः पुरुषार्थसमर्पकत्वात्, अन्यथा मन्वादिस्मृतयो निरवकाशाः स्युः, तस्माद्ब्रह्मैव जगत्कारणम्, वेदविरुद्धत्वात् सैवाप्रमाणम् ॥ १ ॥

कपिलस्मृत्यनवकाशे' दृष्टापत्तिमुक्त्वा युक्त्यन्तरमप्याह' इतरेषामिति ।

इतरेषां चानुपलब्धेरिति ॥ २ ॥ १ ॥

इतरेषां प्रधानव्यतिरिक्तमहदादितत्त्वानां लोके वेदे चानुपलम्भादप्रमाणमेव सा स्मृतिः, भूतेन्द्रियादीनि तु लोकवेदप्रसिद्धत्वाच्छक्यन्ते स्मर्तुम्, तस्माच्च प्रधानं कारणम् ॥ २ ॥

सांख्यस्मृतिप्रत्याख्यानन्यायेन योगस्मृतिरपि प्रत्युक्ता, तत्र सांख्यापेक्षया वेदप्रतिपादितार्थकत्वेन योगोऽभ्यर्हितः, यथा "श्रोतव्यो मन्तव्यः, "समं कायशिरोग्रीवं" "तां योगमिति मन्यन्ते" "योगविधिं च कृत्स्न"मिति "तत्त्वदृष्ट्युपायो योग" इत्यादीनि, अतो योगस्य श्रुतिसंमतत्वेन तन्मतसिद्धं प्रधानस्य कारणत्वं भवेदित्यधिकशङ्कानिरासाय सूत्रमेतेनेति।

एतेन योगः प्रत्युक्तः ॥ ३ ॥ २ ॥

एतेन तर्कादिस्मरणादीनि प्रत्युक्तानि ॥ ३ ॥

स्मृतिनिमित्तमाक्षेपं परिहृत्य तर्कनिमित्तकं तं परिहरति न विलक्षणेति ।

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

यदुक्तं चेतनं ब्रह्म कारणम्, एतन्नोपपद्यते, यतो जगद्विलक्षणाचेतनशुद्धब्रह्मणो जगद्विलक्षणमचेतनमशुद्धभातं दृश्यते, न च विलक्षणयोः प्रकृतिविकृतिभावो दृष्टः, तस्मादचेतनं जगत्कारणमिति प्राप्ते आह नेति, ये ये कार्यकारणे ते ते सजातीये इति न नियमः, गोमयादपि वृश्चिकशरीरदर्शनात्, चेतनपुरुषादचेतननखकेशादीनां दृष्टत्वाच्च, वेदनिरपेक्षः शुष्कतर्को न कारणनिर्वर्तकः, तस्माद्ब्रह्मैव कारणम् ॥ ४ ॥

ननु चेतनप्रकृतित्वाज्जगतोऽपि चेतनत्व स्यात्, अत एव "मृदब्रवीदापोऽब्रुव"न्नित्यादि श्रूयते, "ते ह वाचमूचुस्त्व न उद्गाये"ति, तस्माज्जगच्चेतनमेवेति प्राप्ते॰ आह॰ अभिमानीति ।

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

तुशब्द आशङ्कापनोदार्थः, न खलु 'मृदब्रवी'दित्यादिना जगतश्चेतनत्वमसंभावितं भविष्यति, यतोऽभिमानिव्यपदेशोऽयमत्र गौणः, कुतः, भोक्तॄणां चेतनत्व भोग्यानां च भूतेन्द्रियाणामचेतनत्वमिति प्राग्विशेषोक्तेः, "अग्निर्वाग्भूत्वा मुखं प्राविश"दित्यादिना मन्त्रार्थवादेन सर्वत्राभिमानिन्यश्चेतना देवता अनुगताः सन्ति, तदादायोपपादनीयम् ॥ ५ ॥

युक्त्यन्तरमाह दृश्यते त्विति ।

## दृश्यते तु ॥ ६ ॥

तुशब्दः पूर्वपक्षखण्डनार्थः, यदुक्तं विलक्षणत्वान्न कारणम्, इति तु न, बहूनां चेतनानां वृश्चिकादीनामचेतनाद्गोमयादुत्पत्तिर्दृश्यत इत्यर्थः ॥ ६ ॥

ननु चेतनादचेतनोत्पत्तिर्यदि तदा पूर्वमसतः कार्यस्यारम्भः स्यादत आह॰ असदिति ।

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

प्रतिषेधमात्रं हीदम्॰ नहि प्रतिषेधस्य प्रतिषेध्यमस्ति, न चायं प्रतिषेधः प्रागुत्पत्तेः कार्यसत्त्वं प्रतिषेधति, यथेदानीं कारणात्मना कार्यं सदेव तथा प्रागुत्पत्तेरपीति न दोषः ॥ ७ ॥

ननु सावयवमचेतनं परिच्छिन्नमशुद्धं जगद् ब्रह्मकार्यं तदा० अपीतौ लये सति कारणस्याशुद्धत्वादिप्रसङ्गः, अतोऽसमञ्जसमेतदित्याशङ्कते०अपीताविति ।

अपीतौ तद्वत् प्रसङ्गादसमञ्जसम् ॥ ८ ॥

॥ ८ ॥

समाधत्ते न त्विति ।

न तु दृष्टान्तभावात् ॥ ९ ॥

दृष्टान्ताभावान्न भवदुक्तमशुद्धत्वं कारणस्य, न दूषयतीत्यत्र तु दृष्टान्तोऽस्ति, यथा घटशरावादयो विकारावस्थायामुच्चावचभेदाः सन्तो नाशोत्तरं मृदं न स्वधर्मैर्दूषयेयुरेवम्, "अत्रेमाः प्रजाः सति संपद्य न विदु"रित्यादिश्रुतयोऽप्युपष्टम्भकतया योजनीयाः ॥ ९ ॥

तव मतेऽपीदं दूषणमस्ति, विलक्षणत्वाच्चेदं जगत् प्रधानप्रकृतिकम्० शब्दादिहीनात् प्रधानाच्छब्दादिमतो जगत उत्पत्त्यसंभवादिति स्वपक्षेऽपि दोषात्, तथा कार्यस्य कारणविभागाभ्युपगमात्, तद्वदपीतावपि प्रसङ्गः समानः, तस्माच्च नियमः समानमेव कार्यमित्याह स्वपक्षेति ।

स्वपक्षदोषाच्च ॥ १० ॥

॥ १० ॥

ननु युक्त्याख्यतर्कादिना प्रधानस्य परमाण्वादेर्वा जगत्कारणत्वं भवत्वित्याशङ्क्य समाधत्ते तर्काप्रतिष्ठानादिति ।

तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ ११ ॥ ३ ॥

आगमैकगम्येऽर्थे केवलेन तर्केण न विश्वासः, यतः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का अप्रतिष्ठिता भवन्ति, उत्प्रेक्षाया निरङ्कुशत्वात्, सर्वोत्प्रेक्षाया ऐकरूप्याभावात्,

ननु प्रसिद्धमाहात्म्यस्य कपिलकणादादेस्तर्कः प्रतिष्ठितो भविष्यति, अन्यथा पदार्थव्यवस्था न स्यात्, "आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" ॥ इति स्मृतिरपीति न तर्काप्रतिष्ठानं दोष इति प्रधानाद्येव कारणमिति चेत्, एवमपि संसाराविमोक्ष एव प्रसज्येत, श्रुतिविनाकृतस्तर्कोऽप्रमाणमेव सर्वेषामैक्यमत्यभावाद्विषयव्यवस्थानुपपत्तेः, औपनिषदज्ञानस्यैव निर्दुष्टत्वात् सम्यग्ज्ञानत्वम्, अतो वेदविरुद्धस्य प्रधानकारणत्वादेः स्वीकारे॰ अन्यथाज्ञानात् कस्यापि मोक्षो न स्यात्, तस्माच्छ्रुतिबलान्निर्विवादं ब्रह्मणः कारणत्वम् ॥ ११ ॥

वैदिकदर्शनस्य सांख्ययोगादेः प्रत्यासन्नत्वात् कैश्चिच्छिष्टैः परिगृहीता अप्येते निरस्ताः, इदानीं वैदिकापरिगृहीताः केवलतर्कमूलका अण्वादिकारणवादास्तेऽप्येतेन प्रधानकारणतानिराकरणकारणेन मन्वाद्यपरिगृहीता वादाः प्रतिषिद्धतया व्याख्यातास्तुल्ययुक्तेरित्याहैतेनेति।

एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥ ४ ॥

॥ १२ ॥

पुनस्तर्केण ब्रह्मकारणत्वमाक्षिप्य समाधत्ते भोक्त्रेति।

भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १३ ॥ ५ ॥

यदि ब्रह्म कारणं तर्हि लोकप्रसिद्धो यो भोक्ता चेतनः शारीरो भोग्यं शब्दादि त्वचेतनमिति विभागः स न स्याज्जगतः परमकारणाद्ब्रह्मणोऽनन्यत्वात्, इति प्राप्ते समाधत्ते लोकवत्, यथा लोके समुद्रादनन्यत्वेऽपि वीचीतरङ्गादेरितरेतरविभाग इतरेतरसंश्लेषादिव्यवहारस्तद्वदत्राप्युपाधिमादाय भोक्तृभोग्यविभागः संभवत्येवेति न दोषः ॥ १३ ॥

तत्रैवोपपत्तिमाह तदनन्यत्वेति।

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

व्यावहारिकं भोक्तृभोग्यविभागमङ्गीकृत्य समाहितम्, परमार्थतस्तु नायं विभागः, यतस्तयोः कार्यकारणयोरनन्यत्वमवगम्यते, वियदादि

कार्यं कारणाच्च पृथक्-न परमार्थतो भिन्नम्, कुतः, आरम्भणशब्दादिभ्यः एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तार्थमुक्तम्, 'यथा सौम्यैकेन मृत्पिण्डेन मृदात्मना विज्ञातेन सर्वं मृण्मयं घटशरावादि मृदोऽविशेषाद्विज्ञातं भवेत्', यतो 'घटादिविकारो वाचैव घटोऽस्तीत्यारभ्यते न वस्त्वन्तरं नामधेयमात्रं तदप्यनृतं मृदेव वास्तविकं' तथा ब्रह्मव्यतिरेकेण न किमपि कार्यजातमस्ति॰ "ऐतदात्म्यमिदं सर्वं" मित्यादिश्रुतेः, न ह्यन्यथा॰ एकविज्ञानेन सर्वविज्ञानं घटते, अत्र बहु वक्तव्यमपि विस्तरभयान्नोक्तम्, तथा च परमार्थतोऽनन्यत्व व्यवहारतो लोकवद्भेदः काल्पनिकः ॥ १४ ॥

युक्त्यन्तरमाह भावे चेति ।

## भावे चोपलब्धेः ॥ १५ ॥

मृदादितन्त्वादिभावे सत्त्व॰एव कार्योपलब्धेरनन्यत्वम्, न च नियमेनान्यभावेऽन्यस्योपलब्धिर्दृष्टा, न ह्यश्वो गोरन्यः सन् गोर्भावे॰एवोपलभ्यते, न च वह्निधूमयोरप्यनन्यत्वं स्यात्, उद्वापितेऽप्यग्नौ गोपालघटिकादौ धूमदर्शनाच्च नियतावस्थानम् । भावाच्चोपलब्धेरिति वा सूत्रम्, न केवलं श्रुतेरेव कार्यकारणयोरनन्यत्वम्, उपलब्धेर्भावादपि, नहि तन्तुसंस्थाने पटे तन्तुव्यतिरेकेण पटो नाम कार्यं किंचिदुपलभ्यते, आतानवितानयुक्तास्तन्तव एव दृश्यन्ते, एवं तन्तुष्वंशवोंऽशुषु तदवयवा इति क्रमेण लोहितशुक्लकृष्णानि रूपाणि, तत्र वाय्वाकाशमात्रं चेत्यनुमेयम्, ततः परं ब्रह्मैवाद्वितीयम्, तत्र सर्वप्रमाणनिष्ठामवोचाम ॥ १५ ॥

कार्यानन्यत्वे युक्त्यन्तरमाह सत्त्वेति ।

## सत्त्वाच्चावरस्य ॥ १६ ॥

यतः प्रागुत्पत्तेः कारणात्मनैव सत्त्वमवरकालिकस्य कार्यस्य श्रूयते, "सदेव सोम्येदमग्र आसीत्", "आत्मा वा इदमेक एवाग्र आसीत्"॰ इत्यादाविदंशब्दगृहीतस्य कारणेन सामानाधिकरण्याच्च, यदात्मना यत्र न वर्तते न तत्रोत्पद्यते यथा सिकताभ्यस्तैलम्, तस्मात् प्रागुत्पत्तेरनन्यत्वा-

दुत्पन्नमप्यनन्यदेव कारणात् कार्यमिति गम्यते, तथा च कालत्रये ब्रह्म सत्तैव त्रिकाले जगत्कार्यसत्ता, अतोऽप्यनन्यत्वम् ॥ १६ ॥

ननु क्वचित् पूर्वमसत्त्वमपि श्रुतमिति कथमनन्यत्वम्॰ "असदेवेदमग्र आसीत्" "असद्वा॰इदमग्र आसीत्" असदेवेत्यसद्व्यपदेशाच्च प्रागुत्पत्तेः कार्यसत्त्वमित्याशङ्क्य समाधत्ते॰ असदिति ।

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

नायमत्यन्तासत्त्वाभिप्रायेणासद्व्यपदेशः किंतु व्याकृतनामरूपत्वाद्धर्मादव्याकृतनामरूपत्वं धर्मान्तरम्, तेन रूपेणायमसद्व्यपदेशः, सदेव कार्यं कारणरूपेणाभिन्नम्, कुत एतत्, "तदात्मानं स्वयमकुरुते"ति दर्शनादौपाधिकमसत्त्वं वाक्यशेषादिभ्यः, तस्मादनन्यत्वम् ॥ १७ ॥

युक्तेः शब्दान्तराच्चानन्यत्वमित्याह युक्तेरिति ।

युक्तेः शब्दान्तराच्च ॥ १८ ॥

दधिघटरुचकाद्यर्थिभिः प्रागुत्पत्तेर्नियतकारणानि क्षीरमृत्सुवर्णादीन्युपादीयन्ते नियमेन, न दध्यर्थिभिर्मृत्तिका घटार्थिभिर्दुग्धम्, तदसत्कार्यपक्षे नोपपद्यते पूर्वं सर्वस्यासत्त्वे दुग्धादेव दधीत्यादिनियमः कथं भवेत्, तस्मात् कारणस्यात्मभूता शक्तिः शक्तेश्चात्मभूतं कार्यम्, किंच कार्यकारणयोर्द्रव्यगुणाद्योश्चाश्वमहिषवदत्यन्तभेदबुद्ध्यभावात् तादात्म्यमङ्गीकार्यम्, समवायकल्पने तस्य नित्यत्वानित्यत्वाभ्यां व्याहतत्वात्, अत उक्तं युक्त्यानन्यत्वम्, शब्दान्तरमपि पूर्वोक्तासच्छब्दाच्छब्दान्तरं "सदेव सोम्येदमग्र आसी"दित्यादि, तत्रेदंशब्दवाच्यस्य कार्यस्य प्रागुत्पत्तेः सच्छब्दवाच्येन कारणेन सामानाधिकरण्यात् ॥ १८ ॥

दृष्टान्तमप्याह पटवदिति ।

पटवत् ॥ १९ ॥

स्नारादिग्रहणेनाग्रहणेन वा सत्त्वासत्त्वव्यवहारः, तथा सर्वकार्यमुपाधिकृतमसत्त्वं न मुञ्चतीति भावः ॥ १९ ॥

दृष्टान्तान्तरमाह यथा चेति।

यथा च प्राणादि ॥ २० ॥ ६ ॥

यथा लोके प्राणापानादिप्राणभेदेषु प्राणायामेन निरुद्धेषु कारणमात्ररूपेण वर्तमानेषु जीवनमात्रं कार्यं निर्वर्त्यते नाकुञ्चनप्रसारणादि कार्यान्तरम्, तेष्वेव प्रभेदेषु पुनः प्रवृत्तेषु जीवनाधिकमाकुञ्चनादि निर्वर्त्यते, न च प्राणप्रभेदानां प्राणादन्यत्वं वायुस्वभावाविशेषात्, एवं कार्यस्य कारणादनन्यत्वम्, अतः सिद्धमेकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् ॥ २० ॥

पुनश्चेतनकारणत्वमाक्षिपति॰ इतरेति।

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

इतरस्य जीवस्य ब्रह्मात्मत्वं व्यपदिशति "तत् त्वमसी"त्यादिना, "तत् सृष्ट्वा तदेवानुप्राविश"दिति ब्रह्मणः कार्यानुप्रवेशेन शारीरात्मत्वदर्शनात्, एवं च जीवात्मकः परात्मैव यदि कर्ता तदा संसारिणां वैराग्यादि हितं कुतो न निर्मिमीते॰ अहितं नरकहेतुमधर्मं कुतः कुर्यादिति, नहि ज्ञाता कश्चन स्वस्य हितं न करोति॰ अहितं वा करोति, तस्माचात्मा कारणमिति ॥ २१ ॥

समाधत्ते॰ अधिकं त्विति।

अधिकं तु भेदनिर्देशात् ॥ २२ ॥

यत् सर्वज्ञं सर्वशक्ति ब्रह्म शारीरादधिकम्, "आत्मा द्रष्टव्यः सोऽन्वेष्टव्यः प्राज्ञेनान्वारूढ" इति कर्तृकर्मभेदनिर्देशात्, तदेव जगत्कार न जीवभावापन्नम्, ब्रह्म तु सर्वज्ञत्वादेव जीवसंसारस्य मिथ्यात्वं स्वस्य निर्लेपत्वं च पश्यति, अतो न हिताहितभोक्तृत्वदोषः ॥ २२ ॥

अश्मेति।

अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥ ७ ॥

यथा पृथिवीत्वसामान्यानामप्यश्मनां केचिन्महार्हा मणयो वज्रा॰

दयो मध्यमाः सूर्यकान्तादयो निकृष्टा वायसप्रक्षेपार्हाः, यथा पृथिवी-त्वाविशेषेऽपि यत्र पुष्पफलादिवैचित्र्यमुपलक्ष्यते, एवमेवैकस्यापि ब्रह्मणो जीवप्राज्ञपृथक्त्वं कार्यवैचित्र्यं चोपपद्यते, अतो न तस्य दोषप्रसक्तिः ॥ २३ ॥

लोके कुलालादयो घटादिकं कर्तुं मृद्दण्डचक्रसूत्राद्यनेककारको-पसंहारेण ससाधना दृश्यन्ते ब्रह्म चासहायं तवाभिमतम्, तस्य साधनान्त-रानुपसंग्रहे कथं स्रष्टृत्वमुपपद्यते, इत्याशङ्क्य स्वभावविशेषाद् यथा क्षीर-जलादि स्वयमेव दधिहिमभावेन परिणमते निरपेक्षं तथा ब्रह्मापी-त्याह· उपसंहारेति ।

उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

॥ २४ ॥

ननु क्षीराद्यचेतनानां निरपेक्षसाधनत्वं न तु कुलालादिवच्चेत-नस्य ब्रह्मण इत्याशङ्कायामाह देवादीति ।

देवादिवदपि लोके ॥ २५ ॥ ८ ॥

यथा चेतना अपि देवपितृऋष्यादयो महाप्रभावा अनपेक्ष्यैव किं-चिद् ध्यानमात्रेण नानाशरीरप्रासादादीन् निर्मिमाणा उपलभ्यन्ते यथोर्णनाभिः स्वयमेव तन्तून् बलाका च विनैव शुक्रं गर्भं सृजति, त-द्वदिति ॥ २५ ॥

ब्रह्म जगत्कारणमिति स्थितिं परिशुद्धये पुनराक्षिपति कृत्स्नेति ।

कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

निरवयवत्वात् कृत्स्नस्य ब्रह्मणः कार्यरूपेण परिणामः प्राप्नोति, यदि सावयवं तदा पृथिव्यादिवदेकदेशे परिणामो भवेत्, तथा सति निरवयवत्वप्रतिपादकशब्दानां "निर्गुणं निष्क्रियं शान्त" मित्यादीनां कोपः· अप्रामाण्यं वा स्यात् ॥ २६ ॥

श्रुतेरिति·।

श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

यथैव ब्रह्मणो जगदुत्पत्तिः श्रूयते, तुशब्दो व्यावृत्त्यर्थः, नायमा-

क्षेपः, श्रुतेः, एवं विकारव्यतिरेकेणापि ब्रह्मावस्थितिः श्रूयते, प्रकृतिविकारयोर्भेदेन व्यपदेशात्, "अनेन जीवेनात्मनानुप्रविश्ये"ति० "अतो ज्यायांश्च पूरुष" इति, हृदयायतनत्ववचनाच्च, यदि कृत्स्नपरिणामस्तर्हि "सता सोम्य तदा संपन्नो भवती"त्यनुपपन्नं स्यात्, अविकृतस्याभावात्, तस्मात् तदाप्यस्त्यविकृतं ब्रह्म, अतोऽकृत्स्नप्रसक्तिः, निरवयवत्वं च श्रुतिबलादुपपादनीयम्, मणिमन्त्रौषधिप्रभृतीनां विचित्रकार्यविषयाः शक्तयो दृश्यन्ते तद्वदचिन्त्यशक्तित्वात् सर्वमुपपन्नम्, यथाहुः,

"अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ।
प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम्" ॥

तस्मान्मायाकल्पितभेदेन सर्वमुपपादनीयम् ॥ २७ ॥

अपिच नात्र विवादः, एकस्मिन् ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः संभविष्यति, यथा० एकस्मिन्नात्मनि स्वप्ने स्वरूपानुपमर्देन रथाश्वपन्थानः सृज्यन्ते मायाविषु स्वानुपमर्देन हस्त्यश्वादि, तथैवैकात्मनि नानासृष्टिः स्वरूपानुपमर्देन भविष्यतीत्याह० आत्मनीति ।

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

॥ २८ ॥

परेषामपि निरवयवादि प्रधानं सावयवकार्यमुत्पादयति तत्रापि कृत्स्नप्रसक्तिर्निरवयवत्वश्रुतिकोपादयो दोषाः सन्त्येवेति न त्वया प्रतिक्षेप्तव्यं दोषसाम्यादित्याह स्वपक्षेति ।

## स्वपक्षदोषाच्च ॥ २९ ॥ ९ ॥

॥ २९ ॥

एकस्यापि विचित्रशक्तियोगाद्विचित्रकार्यजनकत्वमित्युक्तं तत् कथमवगम्यते तत्राह सर्वेति ।

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

सर्वशक्तियुता च परा देवतेति, कुतः, तद्दर्शनात्, "सर्वकर्मा

सर्वकामः सर्वगन्धः सर्वरसो यः सर्वज्ञः स सर्ववित्· एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इति ॥ ३० ॥

ननु· "अचक्षुष्कमश्रोत्रमवागमन" इति श्रुतेः प्रतिषिद्धसर्वविशेषाया देवतायाः कथं जनकत्वमिति चेत्, तत्र पूर्वमेव समाधानमुक्तम्, श्रुत्यैवेदमतिगम्भीरं ग्राह्यम्, मतिग्राह्यं न, अविद्याकल्पितरूपभेदोपन्यासेनोक्तमेव, तथाहि· "अपाणिपादो जवनो ग्रहीता" इत्यादिना सर्वसामर्थ्ययोगस्य दर्शितत्वात्, इत्याह विकरणेति ।

## विकरणत्वान्नेति चेत् तदुक्तम् ॥ ३१ ॥ १० ॥

॥ ३१ ॥

पुनराक्षिपति नेति ।

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

परात्मा· इदं जगद्रचयितुं नार्हति कुतः, सर्वप्रवृत्तीनां प्रयोजनवत्त्वात्, सर्वपरितृप्तस्य प्रयोजनाभावात् कथं जगत्कारणप्रवृत्तिः, अतो न चेतनः कर्ता ॥ ३२ ॥

समाधत्ते लोकवदिति ।

## लोकवत् तु लीलाकैवल्यम् ॥ ३३ ॥ ११ ॥

यथा कस्यचिदाप्तैषणस्य राज्ञोऽमात्यस्य वा किंचित् प्रयोजनमनभिसंधाय केवलं लीलारूपाः प्रवृत्तयः क्रीडाविहारेषु भवन्ति, यथा वोच्छ्वासप्रश्वासादयोऽनभिसंधाय प्रयोजनं स्वभावादेव, एवमीश्वरस्याप्यनपेक्ष्य प्रयोजनान्तरं स्वभावादेव कैवल्यं "स्वार्थे प्रत्ययः" केवलं लीलारूपा प्रवृत्तिर्भविष्यति, नहीशस्य प्रयोजनं न्यायतः श्रुतितो वा संभवति, आप्तकामत्वश्रुतेः, नाप्युन्मत्तवत् प्रवृत्तिः सर्वज्ञत्वात् ॥ ३३ ॥

पुनर्दार्ढ्याय स्थूणानिखननन्यायेनेश्वरस्य कारणत्वमाक्षिप्य समाधत्ते वैषम्येति ।

## वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति ॥ ३४ ॥

कांश्चिद्देवादीनत्यन्तसुखभाजः करोति मनुष्यादीन् मध्यमभोगभाजः पश्वादीनत्यन्तदुःखभाजः करोति, एवं च मनुष्यवद्विशेषोपपत्तेः श्रुत्यादिसिद्धस्वच्छत्वविलोपो दुःखदानात् प्रजासंहारादतिक्रूरत्वं नैर्घृण्यं च वैषम्यं च स्यात्, न चैतत् संभवति, तस्मान्न कारणमिति प्राप्ते॰ आह न सापेक्षत्वात्, धर्माधर्मादिसापेक्षस्तथा तथोत्पादयति सृज्यमानप्राणिधर्मानुसरणात्, ईश्वरस्तु साधारणं कारणं पर्जन्यवत्, असाधारणं धर्मादिकमपेक्षते, तत्र किं प्रमाणमिति चेत्, श्रुतिस्तथा दर्शयति, "एष एव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषते पुण्येन पुण्यो भवति पापः पापेने"ति, स्मृतिरपि, "ये यथा मां प्रपद्यन्ते॰" इत्यादि ॥ ३४ ॥

"सदेव सोम्येदमग्र आसीत्॰" "एकमेवाद्वितीय"मिति प्राक् सृष्टेरविभागावधारणात् सृष्ट्युत्तरं विभागापेक्षं कर्म कर्मापेक्षश्च विभाग इत्यन्योन्याश्रयात्, अतो विभागादूर्ध्वं कर्मापेक्ष ईश्वरः प्रवर्ततां नाम विभागात् प्राग् वैचित्र्यकारिकर्मणोऽभावात् तुल्यैवाद्या सृष्टिः स्यात्, इत्याशङ्क्याह न कर्मेति।

## न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥

अनादित्वादन्योन्याश्रयस्य बीजाङ्कुरवत् ॥ ३५ ॥

अनादित्वं कुत इत्यत आह॰ उपपद्यत इति।

## उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥ १२ ॥

आदिमत्त्वे संसारस्याकस्मिकत्वापत्तेर्मुक्तानां पुनः संसारोन्मज्जनप्रसङ्ग इत्युपपत्तिः, स्मृतावपि संसारस्यानादित्वमुपलभ्यते, "न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा, पुराणे चानादित्वं संसारस्योक्तम् ॥ ३६ ॥

स्वपक्षमुपसंहरन् ब्रह्मणि कारणे गृह्यमाणे दर्शितप्रकारेण सर्वमुपपद्यते सर्वज्ञं सर्वशक्ति महामायं च तद्ब्रह्मेति, तस्मान्निर्दुष्टमौपनिषदं जगत्कर्तृत्वमीश्वरस्येत्याह सर्वधर्मेति।

सर्वधर्मोपपत्तेश्च ॥ ३७ ॥ १३ ॥

इति ब्रह्मसूत्रे द्वितीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥ :: ॥

अत्र पादेऽधिकरणानि ॥ १३ ॥ * * ॥

॥ ३७ ॥

इति ब्रह्मसूत्रतात्पर्यविवरणे द्वितीयस्याविरोधाध्यायस्य प्रथमः पादः ॥ १ ॥ :: ॥

प्रधानादावपि सर्वब्रह्मधर्मोपपत्तिमाशङ्क्य निराचष्टे रचनानुपपत्तेश्चेति ।

रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥ ३८ ॥

यद्यपि परपक्षनिराकरणमयुक्तं तथापि तेन विना निःसंदिग्धब्रह्मनिर्णयानुपपत्तेस्तर्कपादे सांख्यादिदर्शनानि निराक्रियन्ते, यद्यपीक्षतेर्नाशब्दमित्यादिना निराकृतमेव तथाप्यत्र स्वतन्त्रतद्युक्तिप्रतिषेधार्थं विचारः,

ननु यथा घटादयो मृदात्मतयाऽन्वीयमाना मृत्सामान्यपूर्वका लोके दृष्टास्तथा सर्वे बाह्याध्यात्मिका भेदाः सुखदुःखमोहात्मकतयाऽन्वीयमानाः सुखदुःखमोहात्मकसामान्यात्मकप्रधानपूर्वका इति परिणामादिभिर्लिङ्गैस्तदेव प्रधानमनुमेयमित्याक्षेपे समाधानमाह, यदि दृष्टान्तबलेनैतदुच्यते तर्हि नाचेतनं चेतनानधिष्ठितं किंचिद् विजातीयपुरुषार्थनिर्वर्तनसमर्थविकारोत्पादकं दृष्टम्, लोके प्रज्ञावद्भिः कुशलैः शिल्पिभिर्विजातीयोच्चावचप्रासादादयः सुखदुःखमोहस्वभावा रचिताः, तथेदं जगन्नानाकर्मफलभोगयोग्यं बाह्याध्यात्मिकं शरीराद्यन्वितं प्रज्ञावद्भिः शिल्पिभिर्मनसाप्यशक्यालोचनं कथं प्रधानमचेतनं रचयेत्, कुम्भकारादिचेतनाधिष्ठितकुम्भादिरचनावत्, तस्माच्चेतनं विना रचनानुपपत्तेर्जगत्कारणं ब्रह्म, चकारेण हेत्वसिद्धिसमुच्चयः ॥ १ ॥

युक्त्यन्तरमाह प्रवृत्तेश्चेति ।

प्रवृत्तेश्च ॥ २ ॥ ३९ ॥

सर्गं कर्तुं या प्रवृत्तिः प्रधानस्य साम्यावस्थातः प्रच्युतिर्गुणानाम-

ङ्गाङ्गिभावापत्तिः सापि चेतनं विना न संभवति, अतः प्रवृत्तेश्च, चेतनमेव कारणं चेतनाधिष्ठितरथगत्यादिष्विव, न च प्रवृत्तिरहितादात्मनः कथं परप्रवर्तकत्वम्, अयस्कान्तवद्रूपादिवच्च स्वयमप्रवृत्तमपि अयसश्चक्षुरादीनां च प्रवर्तकम्, तथा प्रवृत्तिरहितोऽपीश्वरः सर्वगतः सर्वात्मा सर्वज्ञः सर्वशक्तिः सन् प्रवर्तयेत्, अतः ॥ २ ॥

यथा स्वत एव वत्सविवृद्धये क्षीरं प्रवर्तते यथा वा मेघजलं स्वत एव लोकोपकाराय प्रवर्तते तथा स्वयमेवाचेतनं प्रधानं प्रवर्तयेदित्याशङ्क्य तत्रापि चेतनगवादेः स्नेहेच्छया पयःप्रवर्तकत्वम्, एवं निम्नभूम्याद्यपेक्षमेव स्यन्दत इति समाधत्ते पय इति ।

पयोऽम्बुवच्चेत् तत्रापि ॥ ३ ॥ ४० ॥

॥ ३ ॥

युक्त्यन्तरमाह व्यतिरेकेति ।

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥ ४१ ॥

गुणत्रयसाम्यावस्थात्मकप्रधानस्य किंचिदन्यदपेक्षितमवस्थितं न दृष्टम्, पुरुषस्तूदासीन इत्यनपेक्षं प्रधानम्, तस्माच्च कदाचिन्महदाद्याकारेण परिणमते कदाचिन्नेति व्यतिरेकस्यानवस्थितेरेतदसंभवि, ईश्वरस्तु सर्वज्ञत्वान्महामायत्वाच्च प्रवर्तते निवर्तते चेति ॥ ४ ॥

ननु यथा तृणजलादि स्वभावादेव क्षीरादिरूपेण परिणमते तथा प्रधानमपीत्याशङ्क्य तत्रापि धेन्वोपयुक्तं तृणं क्षीरादि भवति न प्रहीणमनुपयुक्तं वा धेन्वसंबन्धि, इति तत्रापि चेतनाधिष्ठितत्वमित्याह अन्यत्रेति ।

शेषमग्रे ।

---

## ॥ शाश्वतधर्मदीपिका ॥

उक्तो मार्गस्त्रयाणां च तत्तथैव समाचर[१] ।
जिज्ञासा न तु कर्त्तव्या धर्मस्य परितर्कणात् ॥

---

१ पृथक् प्रमाणत्वे निर्णयासंभवस्यातिप्रसङ्गस्य चोपपादितत्वात्सर्वाविरोधेन निर्णीत एव धर्मः । पृथक्त्वेन प्रमाणता च न मम संमता । तत्रापि श्रौतो मार्गो बलीयानिति पिण्डितार्थः । केवलतर्केण धर्मविचारश्चायुक्त इत्याह । जिज्ञासेति ।

सदैव भरतश्रेष्ठ मा ते भूदत्र संशयः ।
अन्धो जडइवाशङ्की यद्ब्रवीमि तदाचर ॥
अहिंसा सत्यमक्रोधो दानमेतच्चतुष्टयम् ।
अजातशत्रो सेवस्व धर्म एष सनातनः ॥
ब्राह्मणेषु च वृत्तिर्या पितृपैतामहोचिता ।
तामन्वेहि महाबाहो धर्मस्यैते हि देशिकाः ॥
प्र[1]माणमप्रमाणं वै यः कुर्यादबुधो जनः ।
न स प्रमाणतामर्हो विवादजननो हि सः ॥
ब्राह्मणानेव सेवस्व सत्कृत्य बहुमन्य च ।
एतेष्वेव त्विमे लोकाः कृत्स्ना[2] इति निबोध तान् ॥

युधिष्ठिर उवाच ।

ये च धर्ममसूयन्ते ये चैनं पर्युपासते ।
ब्रवीतु मे भवानेतत् क्व ते गच्छन्ति तादृशाः ॥

भीष्म उवाच ।

रजसा तमसा चैव समवस्तीर्णचेतसः ।
नरकं प्रतिपद्यन्ते धर्मविद्वेषिणो जनाः ॥
ये तु धर्मं महाराज सततं पर्युपासते ।
सत्यार्जवपराः सन्तस्ते वै स्वर्गभुजो नराः ॥
धर्म एव गतिस्तेषामाचार्योपासनाद्भवेत् ।
देवलोकं प्रपद्यन्ते ये धर्मं पर्युपासते ॥
मनुष्या यदि वा देवाः शरीरमुपताप्य वै ।
धर्मिणः सुखमेधन्ते लोभद्वेषविवर्जिताः ॥

---

१ प्रमाणं श्रुत्यादि यः अप्रमाणं वदेदित्यर्थः ।
२ प्रतिष्ठिता इति शेषः ।

प्रथमं ब्राह्मणः पुत्रं धर्ममाहुर्मनीषिणः ।
धर्मिणः पर्युपासन्ते[१] फलं पक्कमिवाशयः ॥
युधिष्ठिर उवाच ।
असतां कीदृशं रूपं साधवः किं च कुर्वते ।
ब्रवीतु मे भवानेतत्सन्तोऽसन्तश्च कीदृशाः ॥
भीष्म उवाच ।
दुराचाराश्च दुर्धर्षा दुर्मुखाश्चाप्यसाधवः ।
साधवः शीलसंपन्नाः शिष्टाचारस्य लक्षणम् ॥
राजमार्गे गवां मध्ये धान्यमध्ये च धर्मिणः ।
नोपसेवन्ति राजेन्द्र सर्गं[२] मूत्रपुरीषयोरित्यादि ॥
न जातु त्वमिति ब्रूयादापन्नोपि महत्तरम् ।
त्वंकारो वा वधो वेति विद्वत्सु न विशिष्यते ॥
अवराणां समानानां शिष्याणां च समा[३]चरेत् ।
पापमाचक्ष[४]ते नित्यं हृदयं पापकर्मिणः ॥
ज्ञानपूर्वकृतं कर्म छादयन्ते ह्यसाधवः ।
ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने ॥
न मां मनुष्याः पश्यन्ति न मां पश्यन्ति देवताः ।
पापेनाभिहितः पापः पापमेवाभिजा[५]यते ॥
यथा वार्द्धुषिको वृद्धिं दिनभेदे प्रतीक्षते ।
धर्मेण पिहितं पापं धर्ममेवाभिवर्द्धयेत् ॥

---

१ तमिति शेषः । आशयो भोक्तुर्मन इति टी. ।
२ सर्गमुत्सर्गम् ।
३ त्वंकारम् ।
४ पापकर्मणो मनसः पापिष्ठत्वमनुमीयत इत्यर्थः ।
५ न कश्चन पश्यतीत्यालोच्य पापमाचरन्पापान्तरमुत्पादयतीत्यर्थः ।

यथा लवणमम्भोभिराप्लुतं प्रविलीयते ।
प्रायश्चित्तहतं पापं तथा सद्यः प्रणश्यति ॥
तस्मात्पापं न गूहेत गूहमानं विवर्द्धयेत् ।
कृत्वा तत्साधुष्वाख्येयं ते तत्प्रशमयन्त्युत ॥
आशया संचितं द्रव्यं कालेनैवोपभुज्यते ।
अन्ये चैतत्प्रपद्यन्ते वियोगे तस्य देहिनः ॥
मानसं सर्वभूतानां धर्ममाहुर्मनीषिणः ।
तस्मात्सर्वाणि भूतानि धर्ममेव समासते ॥
एक एव चरेद्धर्मं न धर्मध्व[1]जिको भवेत् ।
धर्मवाणिजका ह्येते ये धर्ममुपभुञ्जते ॥
अर्चेद्देवानदम्भेन सेवेतामायया गुरून् ।
निधिं निदध्यात्पारच्यं यथार्थं दानशब्दितम् ॥ इति ।

अत्र चान्तिमेन श्लोकद्वयेन दम्भाद्धर्माचरणस्य फलाभिसंधिपूर्वकं च तस्य निषेधो दर्शितः । तदेवं वचनैर्बोधिते विषये सामान्यतो लक्षणे ज्ञातेऽपि के ते धर्मा इत्यपेक्षायां मनुराह ।

धृतिः क्षमा दमो ऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणमिति ॥

एतेषां तुरीयाश्रमधर्मप्रकरणे मनुना पाठात्संन्यासिनामेवैते धर्मा इति तु न शङ्क्यम् ।

चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः ।
दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः ॥

इति प्रक्रम्यैतेषां पाठात् । तत्र द्विजैरिति दशकाभिप्रायमुपलक्षणं चेतरेषाम् । वक्ष्यमाणवचनैः

१ धर्मप्रकाशकः ।

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
एतं सामासिकं धर्मं चातुर्वर्ण्ये ऽब्रवीन्मनुः ॥

इति स्वयमेव वक्ष्यमाणत्वाच्च तद्वचनस्य संकरजप्रकरणे पाठात्तत्रत्यचातुर्वर्ण्यपदस्योपलक्षणतया क्षमादीनां द्विजतदितरसाधारण्यावगमात् । वेदार्थज्ञानपूर्वकात्मज्ञानमात्रस्येतरेषां निषेधात्पुराणाद्यर्थज्ञानपूर्वकात्मज्ञानस्य तेषामपि विधानाच्च । अत एव भक्तिशास्त्रे ऽधिकारो मनुष्यमात्रस्य शाण्डिल्यमुनिना प्रतिपादितः । भक्तेश्च ज्ञानादनतिरिक्तकालता ।

भक्तिः परेशानुभवो विरक्तिरन्यत्र चेति त्रिक एककालः ।

इति भागवतवचनेन स्पष्टैव । एवं शैवेश्वरप्रत्यभिज्ञाशास्त्रे ऽप्यधिकारस्तेषां तच्छास्त्रे प्रतिपादितो ऽधिकारिनिरूपणावसरे जन इत्युक्त्या जननमरणभीतजीवमात्रस्य ग्रहणादिति तत्रैव विस्तरः । विष्णुरप्याह ।

क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ॥
आत्मव्रतमलोभित्वं देवतानां च पूजनम् ।
अनभ्यसूया च तथा धर्मः सामान्य उच्यते ॥ इति ।

बृहस्पतिरपि ।

दया क्षमा ऽनसूया च शौचानायासमङ्गलम् ।
अकार्पण्यास्पृहत्वं च सर्वसाधारणो विधिः ॥ इति ।

युधिष्ठिरं प्रति भगवता साक्षाद्धर्मेणाप्येतदेवोक्तम् । वनप॰ अ॰ ३१२

यशः सत्यं दमः शौचं मार्दवं ह्रीरचापलम् ।
दानं तपो ब्रह्मचर्यमित्येतास्तनवो मम ॥ ७ ॥
अहिंसा समता शान्तिस्तपः शान्तिरमत्सरः ।
द्वाराण्येतानि मे विद्धि प्रियो ऽह्यसि सदा ममेति ॥ ८ ॥

एते चार्षधर्मा इत्याह। राजधर्मे। अ १२

शमो दमस्तथा धैर्यं सत्यं शौचमथार्जवम्।
यज्ञो धृतिश्च धर्मश्च नित्यमार्षो विधिः स्मृतः॥ १७॥ इति।

एते च प्रधाना धर्मा इष्टाश्चेत्याह। राजधर्मे-अ २१

अद्रोहेणैव भूतानां यो धर्मः स सतां मतः।
अद्रोहः सत्यवचनं संविभागो दया दमः॥ ११॥
प्रजनः स्वेषु दारेषु मार्दवं ह्रीरचापलम्।
एवं धर्मं प्रधानेष्टं मनुः स्वायंभुवोऽब्रवीत्॥ १२॥
तस्मादेतत्प्रयत्नेन कौन्तेय परिपालयेति।

प्रधानश्चासाविष्टश्चेति समासः। एते च सार्ववर्णिका इत्याह। रा अ-६०

अक्रोधः सत्यवचनं संविभागः क्षमा दया।
प्रजनः स्वेषु दारेषु शौचमद्रोह एव च।
आर्जवं भृत्यभरणं नवैते सार्ववर्णिकाः॥ ७॥ इति।

तपसः स्वर्गसाधनत्वं प्रसिद्धतमं तपश्चैतदेवेत्याह। रा अ ७९

तपो यज्ञादपि श्रेष्ठमित्येषा परमा श्रुतिः।
तत्ते तपः प्रवक्ष्यामि विद्वंस्तदपि मे शृणु।
अहिंसा सत्यवचनमानृशंस्यं दमो घृणा॥
एतत्तपो विदुर्धीरा न शरीरस्य शोषणमिति॥ १८॥

शरीरशोषणाभावेऽपि सर्वविधं तपो ऽधिकारिभेदाद्भवतीति युधिष्ठिरं प्रति भीष्म आह। मोक्षध-अ-५८

य[१]दिदं तप इत्याहुरुपवासं पृथग्जनाः।
तपः स्यादेतदेवेह तपोन्यद्वापि किं भवेत्॥

१ अनेनैव क्रमेणैते श्लोकाः आनुशासनिके ६३ अध्याये सन्ति।

भीष्म उवाच।

मासार्धमासोपवासाद्यत्तपो मन्यते जनः।
आत्मतन्त्रोपघाती यो न तपस्वी न धर्मवित्॥
त्यागस्यापि च संपत्तिः शिष्यते तप उत्तमम्।
सदोपवासी च भवेद् ब्रह्मचारी तथैव च॥
मुनिश्च स्यात्सदा विप्रो वेदांश्चैव सदा जपेत्।
कुटुम्बिको धर्मकामः सदाऽस्वप्नश्च मानवः॥
अमांसाशी सदा च स्यात्पवित्रं च सदा पठेत्।
ऋतवादी सदा च स्यान्नियतश्च सदा भवेत्॥
विघसाशी सदा च स्यात्सदा चैवातिथिप्रियः।
अमृताशी सदा च स्यात्पवित्री च सदा भवेत्॥

युधिष्ठिर उवाच।

कथं सदोपवासी स्याद् ब्रह्मचारी च पार्थिव।
विघसाशी कथं च स्यात्कथं चैवातिथिप्रियः॥

भीष्म उवाच।

अन्तरा सायमाशं च प्रातराशं च यो नरः।
सदोपवासी भवति यो न भुङ्क्ते ऽन्तरा पुनः॥
भार्यां गच्छन् ब्रह्मचारी ऋतौ भवति चैव हि।
ऋत[१]वादी सदा च स्याद्दानशीलश्च मानवः॥
अभक्षयन् वृथामांसममांसाशी भवत्युत।
दानं ददत्पवित्री स्यादस्वप्नश्च दिवाऽस्वपन्॥
भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु नरः सदा।
अमृतं केवलं भुङ्क्तेऽइति विद्धि युधिष्ठिर॥
अभुक्तवत्सु नाश्नाति ब्राह्मणेषु तु यो नरः।
अभोजनेन तेनास्य जितः स्वर्गो भवत्युत॥

१ ऋतवादी भवेन्नित्यं ज्ञाननित्यश्च यो नर इत्यपि पाठः।

देवेभ्यश्च पितृभ्यश्च संश्रितेभ्यस्तथैव च ।
अवशिष्टानि यो भुङ्क्ते तमाहुर्विघसाशिनम् ॥
तेषां लोका ह्यपर्यन्ताः सदने ब्रह्मणः स्मृताः ।
उपस्थिता ह्यप्सरसो गन्धर्वैश्च जनाधिप ॥
देवतातिथिभिः[1] सार्धं पितृभिश्चोपभुञ्जते ।
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा ॥ इति ।

अनेन हि प्रकरणेन गृहस्थस्य स्वकार्यमनुतिष्ठतोऽपि तपः सर्वविधं भवतीति प्रतिपाद्यते । अत्र च भृत्युक्तकालाधिकरणकभोजनादेः प्रवृत्तिमत्पुरुषविषयतया विहितस्य पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यतीति न्यायेन सदोपवासादिबोधकवचनसंकोचकतया संकुचितवाक्यार्थस्य यथावदनुष्ठानेन सिध्यत्येव यथोक्तफलसंपादकत्वमिति बोध्यम् ।

आतिदेशिकमेवैतत्सदोपवासादि मुख्यसंपाद्यफलमपेक्ष्य किं चिन्न्यूनं फलं ददातीति तु परे । इत्यलं प्रसक्तानुप्रसक्त्या । न केवलं नित्यत्वेनानुष्ठेया एते धर्मा अपि तु सुखसाधनतयापीत्याह । मोक्ष॰ अ॰ ४२ ।

अहिंसा सत्यवचनं सर्वभूतेषु चार्जवम् ।
क्षमा चैव प्रमादश्च यस्यैते स सुखी भवेत् ॥ ७ इति ।
दमः क्षमा धृतिस्तेजः संतोषः सत्यवादिता ।
ह्रीरहिंसाऽव्यसनिता दाक्ष्यं चेति सुखावहाः ॥ इति च ।

एतेषामेव वस्तुतो ब्राह्मण्य[2]प्रयोजकता ऽजगरयुधिष्ठिरसंवादे स्पष्टा । वनप॰ अ॰ १८० ।

सर्प उवाच ।

ब्राह्मणः[2] को भवेद्राजन् वेद्यं किं च युधिष्ठिर ।
ब्रवीह्यतिमतिं त्वां हि वाक्यैरनुमिमीमहे ॥

१ भृत्येभ्योऽतिथिभिः सहेत्यपि पाठः ।
२ अपरोक्षब्रह्मानुभूतिमत्त्वमिह विवक्षितमुपसंहारानुगुण्यात्साहचर्याच्च ।

युधिष्ठिर उवाच।

सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा।
दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतिः॥
वेद्यं सर्प परं ब्रह्म निर्दुःखमसुखं च यत्।
यत्र गत्वा न शोचन्ति भवतः किं विवक्षितम्॥

सर्प उवाच।

चातुर्वर्ण्यं प्रमाणं च सत्यं च ब्रह्म चैव हि।
शूद्रेष्व[1]पि च सत्यं च दानमक्रोध एव च॥
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर।
वेद्यं यच्चात्र निर्दुःखमसुखं च नराधिप॥
ताभ्यां हीनं पदं चान्यन्न तदस्तीति लक्षये॥

युधिष्ठिर उवाच।

शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते।
नैव शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः॥
यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः।
यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत्॥
यत्पुनर्भवता प्रोक्तं न वेद्यं विद्यतीति च।
ताभ्यां हीनमतोऽन्यत्र पदं नास्तीति चेदपि॥
एवमेतन्मतं सर्प ताभ्यां हीनं न विद्यते।
यथा शीतोष्णयोर्मध्ये भवेन्नोष्णं न शीतता॥
एवं वै सुखदुःखाभ्यां नास्ति हीनं पदं क्वचित्।
एषा मम मतिः सर्प यथा वा मन्यते भवान्॥

---

१ जातिवाचकं सत्यादिकं मन्वान आक्षिपति।

सर्प उवाच ।

यदि ते वृत्ततो राजन् ब्राह्मणः प्रसमीक्षितः ।
वृथा जातिस्तदाऽऽयुष्मन् कृतिर्यावन्न विद्यते ॥

युधिष्ठिर उवाच ।

जातिरत्र महासर्प मनुष्यत्वे महामते ।
संकरात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥
सर्वे सर्वास्वपत्यानि जनयन्ति सदा नराः ।
वाङ्मैथुनमथो जन्म मरणं च समं नृणाम् ॥
इदमार्षं प्रमाणं हि ये यजामह इत्यपि ।
तस्माच्छील[1]ं प्रधानेष्टं विदुर्ये तत्वदर्शिनः ॥
प्राङ्गाभिवर्धनात्पुंसो जातकर्म विधीयते ।
तदास्य माता सावित्री पिता त्वाचार्य उच्यते ॥
तावच्छूद्रसमो ह्येष यावद्वेदे न जायते ।
तस्मिन्नेवं मतिद्वैधे मनुः स्वायंभुवोऽब्रवीत् ॥
कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्य[2]ते ।
संस्कारस्त्वत्र नागेन्द्र बलवान्प्रसमीक्षितः ॥
यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वमुक्तवा[3]न्भुजगोत्तम[4] ॥ इति

इमे च कदापि न त्याज्या इत्याह धृतराष्ट्रं प्रति विदुरः। उ॰अ॰३३

---

१ आचार एव जातौ प्रमाणमित्युपसंहरति ।

२ शूद्रतुल्यतापातेन । अत इति शेषः ।

३ अतश्च संस्कारतथाविधाचारवृत्तानामबाधनिश्चायकता पर्यवस्यति ।

४ ब्राह्मणस्यैव चातुर्वर्ण्योपदेष्टृतया शीलशुद्धिर्विशेषेणापेक्षितेति तद्रक्षणाय गीयते अनर्थो ब्रह्मणस्यैष यद्वित्तनिचयो महानित्यादि सर्वे च वेदा इत्यादि तस्मात् क्षत्रिय मा मंस्था इत्यादि ज्यायांसमपि शीलेनेत्यादि च । प्रमदादासमहाशयः ।

षडेव तु गुणाः पुंसा न हातव्याः कदाचन ।
सत्यं दानमनालस्यमनसूया क्षमा धृतिरिति ॥ ८१ ॥

उ० अ० ३५ ।

अष्टौ नृपेमानि मनुष्यलोके स्वर्गस्य लोकस्य निदर्शनानि ।
चत्वार्येषामन्ववेतानि[1] सद्भिश्चत्वारि चैषामनुयान्ति[2] सन्तः ॥५४॥
यज्ञो दानमध्ययनं तपश्च चत्वार्येतान्यन्ववेतानि सद्भिः ।
दमः सत्यमार्जवमानृशंस्यं चत्वार्येतान्यनुयान्ति सन्तः ॥ ५५ ॥

इज्याध्ययनदानानि तपःसत्यं धृतिः क्षमा ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ५६ ॥
तत्र पूर्वश्चतुर्वर्गो दम्भार्थमपि सेव्यते ।
उत्तरस्तु चतुर्वर्गो महात्मन्येव तिष्ठति ॥ ५७ ॥ इति च ।

उ० अ० ३८ ।

धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा ।
मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः ॥ ३८ इति च ।

चातुराश्रम्यवासिनामेते धर्मा ययातिना ऽपि दर्शिताः । आदिप० अ० ९१ ।

आहूताध्यायी गुरुकर्मस्वचोद्यः[3] पूर्वोत्थायी चरमं चोपशायी ।
मृदुर्दान्तो धृतिमानप्रमत्तः स्वाध्यायशीलः सिध्यति ब्रह्मचारी ॥२
धर्मागतं प्राप्य धनं यजेत दद्यात्सदैवातिथीन्भोजयेच्च ।
अनाददानश्च परैरदत्तं सैषा गृहस्थोपनिषत्[4] पुराणी ॥ ३

१ नित्यसंबद्धानि । २ यत्नेन भजन्ति ।
३ अनुक्त एव गुरुकार्यकर्ता ।
४ गृहस्थधर्मरहस्यम् ।

स्ववीर्यजीवी वृजिनान्निवृत्तो दाता परेभ्यो न परोपतापी ।
तादृङ्मुनिः सिद्धिमुपैति मुख्यां वसन्नरण्ये नियताहारचेष्टः ॥ ४
अशिल्पजीवी गुणवांश्चैव नित्यं जितेन्द्रियः सर्वतो विप्रयुक्तः ।
अनोक[१]शायी लघुरल्पप्रचारश्चरन्देशानेकचरः स भिक्षुः ॥ ५

राच्या यया चाभिजाताश्च लोका
भवन्ति कामाभिजिताः सुखाश्च ।
तामेव रात्रिं प्रयतेत विद्वा-
नरण्यसंस्थो भवितुं यतात्मा ६ इति ॥

अत्रेदं बोध्यम् । केषु चिद्वचनेषु पण्णां केषु चिदष्टानां केषु चिद्दशानामित्यादि संख्यावैजात्यं केषां चित्तदन्येष्वन्तर्भावाभिप्रायेण । यथेज्याध्ययनेत्यादिवचने ऽक्रोधस्यानुक्तिस्तस्य क्षमायामन्तर्भावाभिप्रायेणेत्यादि केषु चिद् ब्राह्मणवसिष्ठन्यायेनादरार्थं प्रपञ्चार्थं वान्येषां पाठ इति । अयमेवार्थ आनुशासनिके पर्वण्युमामहेश्वरसंवादमुखेन विस्तरेण निरूपितः किं चिदुपदर्श्यते । आनु अ॰१४४ ।

महेश्वर उवाच ।

देवि धर्मार्थतत्त्वज्ञे धर्मनित्ये दमे रते ।
सर्वप्राणिहितः प्रश्नः श्रूयतां बुद्धिवर्द्धनः ॥
सत्यधर्मरताः सन्तः सर्वलिङ्ग[२]विवर्जिताः ।
धर्मलब्धार्थभोक्तारस्ते नराः स्वर्गगामिनः ॥
नाधर्मेण न धर्मेण बध्यन्ते छिन्नसंशयाः ।
प्रलयोत्पत्तितत्त्वज्ञाः सर्वज्ञाः सर्वदर्शिनः ॥
वीतरागा विमुच्यन्ते पुरुषाः कर्मबन्धनैः ।
कर्मणा मनसा वाचा ये न हिंसन्ति किं चन ॥

१ तरुमूलादिनिकेतनः । २ आश्रमलिङ्गरहिताः ।

ये न सज्जन्ति कस्मिंश्चित्ते न बध्यन्ति कर्मभिः ।
प्राणातिपाताद्विरताः शीलवन्तो दयान्विताः ॥
तुल्यद्वेष्यप्रिया दान्ता मुच्यन्ते कर्मबन्धनैः ।
सर्वभूतदयावन्तो विश्वास्याः सर्वजन्तुषु ॥
त्यक्तहिंसासमाचारास्ते नराः स्वर्गगामिनः ।
परस्वे निर्ममा नित्यं परदारविवर्जकाः ॥
धर्मलब्धान्नभोक्तारस्ते नराः स्वर्गगामिनः ।
मातृवत्स्वसृवच्चैव नित्यं दुहितृवच्च ये ॥
परदारेषु वर्त्तन्ते ते नराः स्वर्गगामिनः ।
स्तैन्यान्निवृत्ताः सततं संतुष्टाः स्वधनेन च ॥
स्वभाग्यान्युपजीवन्ति[१] ते नराः स्वर्गगामिनः ।
स्वदारनिरता ये च ऋतुकालाभिगामिनः ॥
अग्राम्यसुखभोगाश्च ते नराः स्वर्गगामिनः ।
परदारेषु ये नित्यं चरित्रावृतलोचनाः ॥
यतेन्द्रियाः शीलपरास्ते नराः स्वर्गगामिनः ।
एष देवकृतो मार्गः सेवितव्यः सदा नरैः ॥
अकषायकृतश्चैव मार्गः सेव्यः सदा बुधैः ।
दानधर्मतपोयुक्तः शीलशौचदयात्मकः ॥
वृत्त्यर्थं धर्महेतोर्वा सेवितव्यः सदा नरैः ।
स्वर्गवासमभीप्सद्भिर्न सेव्यस्त्वत उत्तरः ॥

उमा वाच ।

वाचा तु बध्यते येन मुच्यतेप्यथ वा पुनः ।
तानि कर्माणि मे देव वद भूतपतेनघ ॥

१ यदृच्छालाभसंतुष्टाः ।

महेश्वर उवाच।

आत्महेतोः परार्थे वा नर्महास्याश्रयात्तथा।
ये मृषा न वदन्तीह ते नराः स्वर्गगामिनः॥
वृत्यर्थं धर्महेतोर्वा कामकारात्तथैव च।
अनृतं ये न भाषन्ते ते नराः स्वर्गगामिनः॥
श्लक्ष्णां वाणीं निराबाधां मधुरां पापवर्जिताम्।
स्वागतेनाभिभाषन्ते ते नराः स्वर्गगामिनः॥
परुषं ये न भाषन्ते कटुकं निष्ठुरं तथा।
अपैशुन्यरताः सन्तस्ते नराः स्वर्गगामिनः॥
पिशुनां न प्रभाषन्ते मित्रभेदकरीं गिरम्।
ऋतं मैत्रं तु भाषन्ते ते नराः स्वर्गगामिनः॥
ये वर्जयन्ति परुषं परद्रोहं च मानवाः।
सर्वभूतसमा दान्तास्ते नराः स्वर्गगामिनः॥
शठप्रलापाद्विरता विरुद्धपरिवर्जकाः।
सौम्यप्रलापिनो नित्यं ते नराः स्वर्गगामिनः॥
न कोपाद्व्याहरन्ते ये वाचं हृदयदारणीम्।
सान्त्वं वदन्ति क्रुद्धापि ते नराः स्वर्गगामिनः॥
एष वाणीकृतो देवि धर्मः सेव्यः सदा नरैः।
शुभः सत्यगुणो नित्यं वर्जनीयो मृषा बुधैः॥

उमोवाच।

मनसा बध्यते येन कर्मणा पुरुषः सदा।
तन्मे ब्रूहि महाभाग देवदेव पिनाकधृक्॥

महेश्वर उवाच।

मानसेनेह धर्मेण संयुक्ताः पुरुषाः सदा।
स्वर्गं गच्छन्ति कल्याणि तान्मे कीर्तयतः शृणु॥

दुष्प्रणीतेन मनसा दुष्प्रणीततर.कृतिः।
मनो बध्यति येनेह शृणु वाक्यं शुभानने॥
अरण्ये विजने न्यस्तं परस्वं दृश्यते यदा।
मनसापि न हिंसन्ति ते नराः स्वर्गगामिनः॥
ग्रामे गृहे वा ये द्रव्य पारक्यं विजने स्थितम्।
नाभिनन्दन्ति वै नित्यं ते नराः स्वर्गगामिनः॥
तथैव परदारान् ये कामवृत्तान् रहोगतान्।
मनसापि न हिंसन्ति ते नराः स्वर्गगामिनः॥
शत्रुं मित्रं च य नित्यं तुल्येन मनसा नराः।
भजन्ति मैत्राः संगम्य ते नराः स्वर्गगामिनः॥
श्रुतवन्तो दयावन्तः शुचयः सत्यसंगराः।
स्वैरर्थैः परिसन्तुष्टास्ते नराः स्वर्गगामिनः॥
अवैरा ये त्वनायासा मैत्रीचित्तरताः सदा।
सर्वभूतदयावन्तस्ते नराः स्वर्गगामिनः॥
श्रद्धावन्तो दयावन्तश्चोक्षाश्चोक्षजनप्रियाः।
धर्माधर्मविदो नित्यं ते नराः स्वर्गगामिनः॥
शुभानामशुभानां च कर्मणां फलसञ्चये।
विपाकज्ञाश्च ये देवि ते नरः स्वर्गगामिनः॥
न्यायोपेता गुणोपेता देवद्विजपराः सदा।
समुत्थानपरा भूयस्ते नराः स्वर्गगामिनः॥

इति प्रभृतिसंदर्भेण। अत्र हि महेश्वरेण भवानीं प्रति वानुवर्ण्य-धर्मान्सामान्यधर्मांश्च वर्णयता शमादीनां स्वर्गसाधनत्वं मुहुरुपपादितम्।

१ धीराः।

एवमेतेषां स्वर्गफलकत्वं विपर्य्ययस्य च पापहेतुता संसरणक्रमश्च ययात्यष्टकसंवादे स्पष्टः । आदिप॰ अ९०

ज्ञातिः सुहृत्स्वजनो वा यथेह क्षीणे वित्ते त्यज्यते मानवैर्हि ।
तथा तत्र क्षीणपुण्यं मनुष्यं त्यजन्ति सद्यः सेश्वरा देवसंघाः ८

यदेनसस्ते पततस्तुदन्ति भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः ।
कथं भवन्ति कथमा[१]भवन्ति कथं भूता गर्भभूता[२] भवन्ति ॥ ९

ययातिरुवाच ।

अस्रं[३]रेतः पुष्पफलानुपृक्तमन्वेति तद्वै पुरुषेण सृष्टम् ।
स वै तस्या रज आपद्यते हि स गर्भभूतः समुपैति तत्र ॥ १०

वनस्पतीनोषधीश्चाविशन्ति अपो वायुं पृथिवीं चान्तरिक्षम् ।
चतुष्पदं द्विपदं चातिसर्व[४]मेवंभूता गर्भभूता भवन्ति ॥ ११ ॥

अष्टक उवाच ।

अन्यद्वपुर्विदधातीह गर्भमुताहो स्वित्स्वेन कायेन याति[५] ।
आपद्यमानो नरयोनिमेतामाचक्ष्व मे संशयात्प्रब्रवीमि ॥ १२

शरीरभेदादिसमुच्छ्रयं च चक्षुःश्रोत्रे लभते केन संज्ञाम् ।
एतत्तत्त्वं सर्वमाचक्ष्व पृष्टः क्षेत्रज्ञं त्वां तात मन्याम सर्वे ॥

ययातिरुवाच ।

वायुः समुत्कर्षति गर्भयोनिमृतौ रेतः पुष्परसानुपृक्तम् ।
स तत्र तन्मात्र[७]कृताधिकारः क्रमेण संवर्धयतीह गर्भम् ॥

स जायमानो विगृहीतमात्रः संज्ञामधिष्ठाय ततो मनुष्यः ।
स श्रोत्राभ्यां वेदयतीह शब्दं स वै रूपं पश्यति चक्षुषा च ॥

---

१ इन्द्रियादिमन्तो भवन्ति । २ गर्भं प्राप्ताः । ३ सूक्ष्मभूतपञ्चकम् । पुष्पफलसंबद्धं पुरुषेण सृष्टं रेतः कर्म अनुसरति । ४ इदं सर्वमतिक्रम्य । ५ पाञ्चभौतिकमपरं कायमादत्ते ऽथवा ऽऽतिवाहिककायेन यातीत्यर्थः । ६ नाम । ७ अवयवान्तराकर्षणमात्रकृत् ।

घ्राणेन गन्धं जिह्वयाथो रसं च त्वचा स्पर्शं मनसा वेद भावम् ।
इत्यष्टकेहोपहितं हि विद्धि महात्मनः प्राणभृतां शरीरे ॥

अष्टक उवाच ।

यस्संस्थितः पुरुषो दह्यते वा निखन्यते वापि निकृ[1]ष्यते वा ।
अभावभूतः स विनाशमेत्य केनात्म[2]ना चेतयते परस्तात् ॥

ययातिरुवाच ।

हित्वा सोसून्त्सुप्तवन्निष्टुनित्वा पुरोधाय सुकृतं दुष्कृतं वा ।
अन्यां योनिं पवनाग्रानुसारी हित्वा देहं भजते राजसिंह ॥
पुण्यां योनिं पुण्यकृतो व्रजन्ति पापां योनिं पापकृतो व्रजन्ति ।
कीटाः पतङ्गाश्च भवन्ति पापा न मे विवक्षास्ति महानुभाव ॥
चतुष्पदा द्विपदाः षट्पदाश्च तथाभूता गर्भभूता भवन्ति ।
आख्यातमेतन्निखिलेन सर्वं भूयस्तु किं पृच्छसि राजसिंह ॥

अष्टक उवाच ।

किं स्वित्कृत्वा लभते तात लोकान्मर्त्यः श्रेष्ठांस्तपसा कर्मणा वा ।
तन्मे पृष्टः शंस सर्वं यथावच्छुभांल्लोकान् येन गच्छेत्क्रमेण ॥

ययातिरुवाच ।

तपश्च दानं च शमो दमश्च ह्रीरार्जवं सर्वभूतानुकम्पा ।
स्वर्गस्य लोकस्य वदन्ति सन्तो द्वाराणि सप्तैव महान्ति पुंसाम् ॥
नश्यन्ति मानेन तमोभिभूताः पुंसः सदैवेति वदन्ति सन्तः ।
अधीयानः पण्डितं मन्यमानो यो विद्यया हन्ति यशः परेषाम्[3] ॥
तस्यान्तवन्तश्च भवन्ति लोका न चास्य तद् ब्रह्म फलं ददाति ।[4]
चत्वारि कर्माण्यभयंकराणि भयं प्रयच्छन्त्ययथा कृतानि ॥[5]
मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः ।

१ भक्षणादिना निकृष्टतां प्राप्यते । २ किंशरीरावच्छेदेन । ३ जल्पव्यसनी । ४ ह्रियो भूतानुकम्पायाः शमस्य च विपर्य्ययात् । ५ आर्ज्जवाद्यपर्य्यासात् ।

न मानमान्यो मुदमाददीत न संतापं प्राप्नुयाच्चावमानात् ॥
सन्तः सतः पूजयन्तीह लोके नासाधवः साधुबुद्धिं लभन्ते ।[१]
इति दद्यामिति यजइत्यधीयइति व्रतम् ।
इत्येतानि भयान्याहुस्तानि वर्ज्यानि सर्वशः ॥[२]
ये चाश्रयं वेदयन्ते पुराणं मनीषिणो मानसमार्गरुद्धम्[३] ।
तद्वः श्रेयस्तेन संयोगमेत्य परां शान्तिं प्राप्नुयुः प्रेत्य चेह ॥ इति ।

तत्र धृतिर्नामापत्काले ऽपि धर्मस्यात्यागः । सा च पण्डितलक्षणम् । यथाह विदुरः । उ॰अ॰३३

नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराःपण्डितबुद्धयः ॥ २३ इति ॥
विषमावस्थिते दैवे पौरुषे ऽफलतां गते ।
विषादयन्ति नात्मानं सत्वापाश्रयिणो नराः ॥ इति च ।
विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ इति च ।

इदं च सर्वस्यैव धर्मस्य निदानभूतं धैर्याभावे लोभादीनां सर्वेषामनर्थानां सुलभत्वादिति स्पष्टमेव । यस्य चाश्रयणेन हरिश्चन्द्ररामचन्द्रयुधिष्ठिरादयः परमं क्लेशमापन्ना अपि धर्मं न जहुरिति सुप्रसिद्धमाख्यानविदाम् ।

पश्यत युधिष्ठिरस्य कीदृशं धैर्यं दुरात्मभिर्दुर्योधनादिभिर्द्यूते सर्वस्वमपहृत्य वनं प्रस्थापितस्य तत्र त्रयोदशवर्षाण्यतिवाहयतोऽन्तरा-

१ परमः खलूत्कर्षो लभ्यते शमदमधर्मयोरीदृशचित्तवृत्तिना विरलेनैव केनचिन्महात्मना । २ आर्जवस्य ह्रियश्च विरोधी खलु दम्भः सत्यस्य चेति दम्भस्य धार्म्मिकैः सदा त्याज्यता । हीयते हि धर्म्मः स्वरूपात् यश एव प्राधान्येनानुसन्धायानुष्ठीयमानः । प्रमदादासमहाशयः ३ मनसो ऽप्यगम्यम् ।

ऽन्तरा भीमेन द्वारकायाः समागतैः सात्यकिप्रमुखैर्महारथैः केवलं भवानुमन्यतां वयं क्षणेन नाशयामः कुरूनित्यभिधीयमानस्य।

अनृतं नोत्सहे वक्तुं न ह्येतन्मम विद्यते।

इति सर्वदा धर्मानुरोधि धैर्यपूरितं च वाक्यम्।

अत एवोक्तम्।

चलन्ति गिरयः कामं युगान्तपवनाहताः।

कृच्छ्रेऽपि न चलत्येव धीराणां निश्चलं मनः॥ इति।

क्षमा तु सर्वभूतवशीकारफलिकाऽपराधं कृतवत्यपि वाक्याद्दण्डपारुष्याकरणरूपा। यथाह। उ॰ अ॰ ३३

एकः क्षमावतां दोषो द्वितीयो नोपपद्यते।

यदेनं क्षमया युक्तमशक्तं मन्यते जनः॥ ४८॥

सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम्।

क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा॥ ४९॥

क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते।

शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः॥ ५०॥

अतृणे पतितो वह्निः स्वयमेवोपशाम्यति।

अक्षमावान् परं दोषैरात्मानं चैव योजयेत्॥ ५१॥

एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा।

विद्यैका परमा तृप्तिरहिंसैका सुखावहेति॥ ५२॥

द्वाविमौ पुरुषौ राजन् स्वर्गस्योपरि तिष्ठतः।

प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान्॥ ५८॥ इति च

क्षमाकालश्च द्रौपद्या धर्मराजं प्रति दर्शितः।-वनप॰। अ २८

पूर्वोपकारी यस्ते स्यादपराधे गरीयसि।

उपकारेण तत्तस्य क्षन्तव्यमपराधिनः॥

अबुद्धिमाश्रितानां तु क्षन्तव्यमपराधिनाम् ।
न हि सर्वत्र पाण्डित्यं सुलभं पुरुषेण वै ॥
अथ ये बुद्धिजं कृत्वा ब्रूयुस्ते तदबुद्धिजम् ।
पापान्स्वल्पेऽपि तान्हन्यादपराधे तथाऽनृजून् ॥
सर्वस्यैकोऽपराधस्ते क्षन्तव्यः प्राणिनो भवेत् ।
द्वितीये सति वध्यस्तु स्वल्पेऽप्यपकृते भवेत् ॥
अजानता भवेत्कश्चिदपराधः कृतो यदि ।
क्षन्तव्यमेव तस्याहुः सुपरीक्ष्य परीक्षया ॥
मृदुना दारुणं हन्ति मृदुना हन्त्यदारुणम् ।
नासाध्यं मृदुना किं चित्तस्मात्तीव्रतरं मृदु ॥
देशकालौ तु संप्रेक्ष्य बलाबलमथात्मनः ।
नादेशकाले किं चित्स्याद्देशकालौ प्रतीक्ष्यताम् ॥
तथा लोकभयाच्चैव क्षन्तव्यमपराधिनः ।
एतएवंविधाः कालाः क्षमायाः परिकीर्तिताः ॥ इति ।

इदं च राजधर्मप्रदर्शनं नीतिप्रदर्शनं वा वस्तुतस्तु सर्वथा क्षमैव कर्तव्येत्युत्तरत्र स्फुटी भविष्यति ।

दमश्च विकारहेतुविषयसंनिधानेऽपि मनसोऽविक्रियत्वम् । शीतातपादिद्वन्द्वसहिष्णुता दम इति के चित् । स चायं दमोऽतीव प्रशस्यते । यथाहुः । आप॰ अ॰ ३० ।

धर्मस्य विधयो नैके ये वै प्रोक्ता मनीषिभिः ।
स्वं स्वं विज्ञानमाश्रित्य[1] दमस्तेषां परायणम् ॥
दमं निःश्रेयसं प्राहुर्वृद्धा निश्चितदर्शिनः ।
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ॥

---

१ स्वस्वमतिविभवानुसारेण ।

दमात्तस्य क्रियासिद्धिर्यथावदुपलभ्यते ।
दमो दानं तथा यज्ञानधीतं चातिव[१]र्तते ॥

दमस्तेजो वर्धयति पवित्रं च दमः परम् ।
विपाप्मा तेजसा युक्तः पुरुषो विन्दते महत् ॥

दमेन सदृशं धर्मं नान्यं लोकेषु शुश्रुम ।
दमो हि परमो लोके प्रशस्तः सर्वधर्मिणाम् ॥

अदान्तः पुरुषः क्लेशमभीक्ष्णं प्रतिपद्यते ।
अनर्थांश्च बहूनन्यान् प्रसृज[२]त्यात्मदोषजान् ॥

आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम् ।
तस्य लिङ्गानि वक्ष्यामि येषां समुदयो दमः ॥

क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
इन्द्रियाभिजयो दाक्ष्यं मार्दवं ह्रीरचापलम् ॥

अकार्पण्यमसंरम्भः संतोषः प्रियवादिता ।
अविहिंसानसूया चाप्येषां समुदयो दमः ॥

गुरुपूजा च कौरव्य दया भूतेषु पैशुनम् ।
जनवादं मृषावादं स्तुतिनिन्दाऽविवर्जनम् ॥

कामं क्रोधं च लोभं च द[३]र्पं स्त[४]म्भं विकत्थनम् ।
रोष[५]मीर्ष्याभिमानं[६] च नैव दान्तो निषेवतइति ॥

पैशुनमित्युत्तरेणान्वेति । मोक्ष॰ अ॰ ५९

तपोनिश्रेयसं जन्तोस्तस्य मूलं शमो दमः ।
तेन सर्वानवाप्नोति यान्कामान् मनसेच्छतीति च ॥ २३ ॥

१ सर्वेभ्यो ऽधिकमित्यर्थः । २ विदधाति । ३ गर्वम् । ४ अविनयम् ५ कोपमप्रकटमपि । ६ परगुणेषु दोषारोपम् । अहं तपस्वीत्याकारकं मानसम् ।

यथा[१] किलार्जुनस्य द्यूतजितेषु पाण्डवेषु वनं यातेषु व्यासवचसा शंकरमाराध्य पाशुपतास्त्रं लब्धुं प्रेषितवतः प्रीतेन शिवेन दत्तेऽस्त्रे महेन्द्रेण दिव्यास्त्रशिक्षणार्थं स्वर्गं नीतस्य सुधर्मायामुर्वशीमनिमिषलोचनं वीक्षितवतो महेन्द्रेणोर्वश्यामर्जुनस्याभिलाषमनुमिन्वता चित्रसेनमुखेन संदिश्य प्रस्थापितां स्वयं च कामातुराम्

ततो ऽहं समनुज्ञाता तेन पित्रा च तेनघ ।
तवान्तिकमनुप्राप्ता शुश्रूषितुमरिंदम ॥
त्वद्गुणाकृष्टचित्ताहमनङ्गवशमागता ।
चिराभिलषितो वीर ममाप्येष मनोरथः ॥

इत्यभिदधानां प्रति वाक्यम् ।

गुरुदारैः समाना मे निश्चयेन वरानने ।
यथा कुन्ती महाभागा यथेन्द्राणी शची मम ॥
तथा त्वमपि कल्याणि नात्र कार्या विचारणा ।
यच्चेक्षितासि विस्पष्टं विशेषेण मया शुभे ॥
तच्च कारणपूर्वं हि शृणु सत्यं शुचिस्मिते ।
इयं पौरववंशस्य जननी मुदितेति ह ॥
त्वामहं दृष्टवांस्तत्र विज्ञायोत्फुल्ललोचनः ।
न मामर्हसि कल्याणि अन्यथा ध्यातुमप्सरः ॥
गुरोर्गुरुतरा मे त्वं मम वंशविवर्धिनीति ।

अथ चोर्वश्या ऽपि ।

गुरुस्थाने न मां वीर नियोक्तुं त्वमिहार्हसि ।
पूरोर्वंशेहि ये पुत्रा नप्तारो वा त्विहागताः ॥
तपसा रमयन्त्यस्मान्न च तेषां व्यतिक्रम इत्यादिना ।
स्वस्या वेश्यातया तत्र दोषाभावं वदन्त्या प्रलोभितस्यापि

१ इयं कथा वनपर्वणि ४४ अध्याये ।

शृणु सत्यं वरारोहे यत्त्वां वक्ष्याम्यनिन्दिते ।
शृण्वन्तु मे दिशश्चैव विदिशश्च सदेवताः ॥
यथा कुन्ती च माद्री च शची चेह ममानघे ।
तथा च वंशजननी त्वं हि मेऽद्य गरीयसी ॥

इत्यादिना प्रत्याख्यातवतः ।

यस्मान्मां नाभिनन्देथाः कामबाणवशं गताम् ।
तस्मात्त्वं नर्तनः पार्थ स्त्रीमध्ये मानवर्जितः ॥
अपुमानिति विख्यातः षण्ढवद्विचरिष्यसि ।

इति शप्तस्या ऽपि विकाराराहित्यम् । अत एव च सो ऽस्य शापो ऽपि त्रयोदशे वर्षे ऽज्ञातवासायोपयुक्त एवाभूदिति शापोऽप्यनुग्रहरूपतामेव प्रपेदे इति सो ऽयं दमस्यैव प्रभावः ।

एवमेवाष्टावक्रस्य दमो ऽप्यत्र दृष्टान्तमौलिभूतः । पुरा किलाष्टावक्रो नाम महर्षिरासीत । स च स्वस्य गार्हस्थ्यमीहमानः कां चन मुनिदारिकां स्वस्यानुरूपां गुणवतीमवेक्ष्य तत्पितरमयाचत । तेन च तद्गुणपरीक्षार्थमेवोत्तरां दिशं याहि तत्र परेण कैलासं नीलवने का चन वृद्धा तापसी वर्तते तामालोक्यागतवते तुभ्यं मया कन्या दास्यत इत्युक्तस्तथेत्युदचलत् । अथ क्रमेण विविधान् देशानतिक्रामंस्तमुद्देशमासाद्य काञ्चनमयं प्रासादमवलोकयन् प्रविवेश ददर्श च वृद्धतापसीम् । तया च स्वागतेनाभिनन्दितस्तत्रोपविष्टाम् कन्यकास्वन्यासु मुन्याज्ञया बहिर्यातासु तत्रैव स्थितो निशि पर्यङ्के स्वपन् शीतातिशयव्याजेन समुपागत्य वृद्धयाऽऽलिङ्ग्यत । तथापि निर्विकारचेताः काष्ठोपमस्तया ऽहं कामार्ता तन्मां प्रत्यालिङ्गस्वेति मुहुरर्थितोऽपि परदाराभिमर्शनं न करिष्यामीति वदन् तया भृशं प्रलोभ्यमानोऽप्यननुमन्यमानस्तद्वचसा कानि चिद्दिनानि तत्रैवावसत् । अथ सा दिव्योपचारैस्तं तोषयन्ती पुनर्निशि दिव्यरूपा कन्यका भूत्वा तमुपातिष्ठत । स च तथा दृष्ट्वा विस्मितो ऽपि निर्विकारमनास्तया ऽहं स्वतन्त्रेति प्रदत्ता स्वपाणिग्रहणाय प्रेरितो ऽपि



## ॥ श्लोकवार्त्तिकम् ॥

नित्यस्य करणाभावात्प्रयोगे ऽस्मिन्मयोच्यते ।
भ्रान्तत्वं गौणता वेति शब्देप्येवं भविष्यति ॥ १६२ ॥
प्राग्भागो यः सुराष्ट्राणां मालवानाञ्चदक्षिणः ।
प्राग्भागः पुनरेतेषां तेषामुत्तरतः स्थितः ॥ १६३ ॥
तेन सूर्योदिते देशौ भिन्नावुभयवासिनाम् ।
दृष्टौ सवितुरेकत्वे ऽप्यतो नैकान्तिको भवेत् ॥ १६४ ॥
पश्यन्त्येके च यद्देशावुदयास्तमयौ रवेः ।
तावत्येवाभिमन्यन्ते परस्तात्तन्निवासिनः ॥ १६५ ॥
न हि भिन्ना निरीक्ष्यन्ते तेन नादित्यभिन्नता ।
मध्यान्हे सर्वपुंसां स्यादेकत्रोपरिदर्शनम् ॥ १६६ ॥
यो यो गृहीतः सर्वस्यात्पुरतः सवितेष्यते ।
तदन्तराधिकात्मा च भाति तेनायतः स्थितः ॥ १६७ ॥
विप्रकृष्टान्तराणां च स्तोकदेशे ऽपि दृश्यते ।
सिद्धभिन्नप्रदेशानां दूरदेशसमानता ॥ १६८ ॥
तत्रापि विप्रकृष्टस्य संनिध्याध्यासकारिता ।
देशभ्रान्तिर्भवेत्पुंसां तत्त्वदेशमपश्यताम् ॥ १६९ ॥
शब्दे तु किंनिमित्तैषा तत्रापि व्यापिता कृता ।
यो यो गृहीतस्सर्वस्मिन्देशे शब्दो हि विद्यते ॥ १७० ॥
न चास्यावयवास्सन्ति येन वर्त्तेत भागशः ।
शब्दो वर्त्ततइत्येवं तत्र सर्वात्मकश्च सः ॥ १७१ ॥

व्यञ्जकध्वन्यधीनत्वात्तद्विशेषु स गृह्यते ।
न च ध्वनीनां सामर्थ्यं व्याप्तुं व्योम निरन्तरम् ॥ १७२ ॥
तेनाविच्छिन्नरूपेण नासौ सर्वत्र गृह्यते ।
ध्वनीनां भिन्नदेशत्वं श्रुतिस्तत्रानुरुध्यते ॥ १७३ ॥
अपूरितान्तरालत्वाद्विच्छेदश्चावसीयते ।
तेषां चाल्पकदेशत्वाच्छब्दस्याविभुता मतिः ॥ १७४ ॥
गतिमद्वेगवत्त्वाभ्यां ते चायान्ति यतो यतः ।
श्रोता ततस्ततः शब्दमायान्तमिव मन्यते ॥ १७५ ॥
सूर्यस्य भिन्नदेशत्वं नन्वेकेन न गृह्यते ।
न नाम सर्वथा तावद्दृष्टास्यानेकदेशता ॥ १७६ ॥
सविशेषणहेतुश्चेत्तथापि व्यभिचारिता ।
दृश्यते भिन्नदेशोऽयमित्येकोऽपि हि बुध्यते ॥ १७७ ॥
जलपात्रेषु चैकेन नानेकः सवितेक्ष्यते ।
युगपन्नचभेदस्य प्रमाणं तुल्यवेदनात् ॥ १७८ ॥
आहैकेन निमित्तेन प्रतिपात्रं पृथक् पृथक् ।
भिन्नानि प्रतिबिम्बानि जायन्ते युगपन्मम ॥ १७९ ॥
अत्र ब्रूमो यदा तावज्जले सौरेण तेजसा ।
स्फुरता चाक्षुषं तेजः प्रतिस्रोतः प्रवर्त्तितम् ॥ १८० ॥
स्वदेशमेव गृह्णाति सवितारमनेकधा ।
भिन्नमूर्तिर्यथा पात्रं तदास्यानेकता कुतः ॥ १८१ ॥
ईषन्निमीलिते ऽङ्गुल्या यथा चक्षुषि दृश्यते ।
पृथगेको ऽपि भिन्नत्वाच्चक्षुर्वृत्तेस्तथैव नः ॥ १८२ ॥
अन्ये तु चोदयन्त्यत्र प्रतिबिम्बोदयैषिणः ।
स एव चेत्प्रतीयेत कस्मान्नोपरि दृश्यते ॥ १८३ ॥

कूपादिषु कुतो ऽधस्तादितिबिम्बाद्भिनेत्रणम् ।
प्राङ्मुखोदर्पणं पश्यं स्याच्चेत्प्रत्यङ्मुखः कथम् ॥ १८४ ॥
तत्रैव बोधयेदर्थं बहिर्यातं तदिन्द्रियम् ।
तत एतद्भवेदेवं शरीरे तत्तु बोधकम् ॥ १८५ ॥
असूर्यदर्शिनां नित्यं चक्षुर्द्वेधा प्रवर्त्तते ।
एकमुर्ध्वमधस्ताच्च तत्रोर्द्धांशं प्रकाशितम् ॥ १८६ ॥
अधिष्ठानानृजुस्थत्वान्नात्मा सूर्यंप्रपद्यते ।
पारंपर्यार्पितं संतमवाग्वृत्त्या तु बुध्यते ॥ १८७ ॥
उर्ध्ववृत्तेस्तदेकत्वादवागिव च मन्यते ।
अधस्तादेव तेनार्कः सान्तरालः प्रतीयते ॥ १८८ ॥
एवं प्राग्भूतया वृत्त्याप्रत्यग्वृत्तिसमर्पितम् ।
बुध्यमानो मुखं भ्रान्तेः प्रत्यगित्यवगच्छति ॥ १८९ ॥
अनेकदेशवृत्तौ वा सत्यपि प्रतिबिम्बके ।
समानबुद्धिगम्यत्वान्नानात्वं नैव विद्यते ॥ १९० ॥
वक्तृवक्त्रप्रदेशानां भिन्नत्वाद्भिन्नदेशता ।
श्रोत्रागमनपक्षे स्यात्तद्देशे त्वेकदेशता ॥ १९१ ॥
अधिष्ठानाबहिर्वृत्तेरन्यस्मिन्सत्यपीन्द्रिये ।
तद्देशाः कर्णशष्कुल्यो गृह्येरन्गामने सति ॥ १९२ ॥
इयं तु वक्त्रनेकत्वे श्रोत्रैकत्वे च कल्पना ।
वक्तर्यैकत्र भिन्नेषु श्रोतृषु स्याद्विपर्ययः ॥ १९३ ॥
तत्र हि श्रोत्रदेशानां भिन्नत्वाद्भिन्नदेशता ।
तदागमे तु वक्त्रैक्यादेकदेशत्वसंभवः ॥ १९४ ॥
ध्वन्यागत्या यदि भ्रान्तिरितरत्रापि सा समा ।
भिन्नव्यञ्जकताल्वादिदेशभेदाद्भविष्यति ॥ १९५ ॥

व्यञ्जकध्वन्यधीनत्वात्तद्विशेषु स गृह्यते ।
न च ध्वनीनां सामर्थ्यं व्याप्तुं व्योम निरन्तरम् ॥ १७२
तेनाविच्छिन्नरूपेण नासौ सर्वत्र गृह्यते ।
ध्वनीनां भिन्नदेशत्वं श्रुतिस्तत्रानुरुध्यते ॥ १७३ ॥
अपूरितान्तरालत्वाद्विच्छेदश्चावसीयते ।
तेषां चाल्पकदेशत्वाच्छब्दस्याविभुता मतिः ॥ १७४ ॥
गतिमद्वेगवत्वाभ्यां ते चायान्ति यतो यतः ।
श्रोता ततस्ततः शब्दमायान्तमिव मन्यते ॥ १७५ ॥
सूर्यस्य भिन्नदेशत्वं नन्वेकेन न गृह्यते ।
न नाम सर्वथा तावद्दृष्टास्यानेकदेशता ॥ १७६ ॥
सविशेषणहेतुश्चेत्तथापि व्यभिचारिता ।
दृश्यते भिन्नदेशोयमित्येको ऽपि हि बुध्यते ॥ १७७ ॥
जलपात्रेषु चैकेन नानेकः सवितेक्ष्यते ।
युगपन्नचभेदस्य प्रमाणं तुल्यवेदनात् ॥ १७८ ॥
आहैकेन निमित्तेन प्रतिपात्रं पृथक् पृथक् ।
भिन्नानि प्रतिबिम्बानि जायन्ते युगपन्मम ॥ १७९ ॥
अत्र ब्रूमो यदा तावज्जले सौरेण तेजसा ।
स्फुरता चाक्षुषं तेजः प्रतिस्रोतः प्रवर्त्तितम् ॥ १८० ॥
स्वदेशमेव गृह्णाति सवितारमनेकधा ।
भिन्नमूर्त्तिर्यथा पात्रं तदास्यानेकता कुतः ॥ १८१ ॥
ईषन्निमीलिते ऽङ्गुल्या यथा चक्षुषि दृश्यते ।
पृथगेको ऽपि भिन्नत्वाच्चक्षुर्वृत्तेस्तथैव नः ॥ १८२ ॥
अन्ये तु चोदयन्त्यत्र प्रतिबिम्बोदयैषिणः ।
स एव चेत्प्रतीयेत कस्मान्नोपरि दृश्यते ॥ १८३ ॥

कूपादिषु कुतो धस्तादितिबिम्बाद्विनेक्षणम् ।
प्राङ्मुखोदर्पणं पश्यं स्याच्चेत्प्रत्यङ्मुखः कथम् ॥ १८४ ॥
तच्चैव बोधयेदर्थं बहिर्यातं तदिन्द्रियम् ।
तत एतद्भवेदेवं शरीरे तत्तु बोधकम् ॥ १८५ ॥
असूर्यदर्शिनां नित्यं चक्षुर्द्वेधा प्रवर्त्तते ।
एकमुर्ध्वमधस्ताच्च तयोर्द्वाशं प्रकाशितम् ॥ १८६ ॥
अधिष्ठानानृजुस्थत्वान्नात्मा सूर्यंप्रपद्यते ।
पारंपर्यार्पितं संतमवागवृत्त्या तु बुध्यते ॥ १८७ ॥
उर्ध्ववृत्तेस्तदेकत्वादवागिव च मन्यते ।
अधस्तादेव तेनार्कः सान्तरालः प्रतीयते ॥ १८८ ॥
एवं प्राग्भूतया वृत्त्याप्रत्यग्वृत्तिसमर्पितम् ।
बुध्यमानो मुखं भ्रान्तेः प्रत्यगित्यवगच्छति ॥ १८९ ॥
अनेकदेशवृत्तो वा सत्यपि प्रतिबिम्बके ।
समानबुद्धिगम्यत्वान्नानात्वं नैव विद्यते ॥ १९० ॥
वक्तृवक्रप्रदेशानां भिन्नत्वाद्भिन्नदेशता ।
श्रोत्रागमनपक्षे स्यात्तद्देशे त्वेकदेशता ॥ १९१ ॥
अधिष्ठानाबहिर्वृत्तेरन्यस्मिन्सत्यपीन्द्रिये ।
तद्देशाः कर्णशष्कुल्यो गृह्येरन्गामने सति ॥ १९२ ॥
इयं तु वक्रनेकत्वे श्रोत्रैकत्वे च कल्पना ।
वक्तर्यैकच भिन्नेषु श्रोतृषु स्याद्विपर्ययः ॥ १९३ ॥
तत्र हि श्रोत्रदेशानां भिन्नत्वाद्भिन्नदेशता ।
तदागमे तु वक्रैक्यादेकदेशत्वसंभवः ॥ १९४ ॥
ध्वन्यागत्या यदि भ्रान्तिरितरत्रापि सा समा ।
भिन्नव्यञ्जकताल्वादिदेशभेदाद्भविष्यति ॥ १९५ ॥

सूचेण युगपद्भाव: श्रोचैकत्वादुदाहृत: ।
अतस्तदनुसारेण यद्यपीत्यादिकीर्त्तनम् ॥ १९६ ॥
देशभेदेन भिन्नत्वमित्येतच्चानुमानिकम् ।
प्रत्यक्षस्तु स एवेति प्रत्ययस्तेन बाधक: ॥ १९७ ॥
पर्यायेण तथा चैको भिन्नान्देशान्व्रजन्नपि ।
देवदत्तो न भिद्येत तथा शब्दो न भिद्यते ॥ १९८ ॥
ज्ञातैकत्वो यथैवासौ दृश्यमान: पुन: पुन: ।
न भिन्न: कालभेदेन तथा शब्दो न देशत: ॥ १९९ ॥
पर्यायादविरोधश्चेद्व्यापित्वादपि दृश्यता ।
दृष्टसिद्धैहिको धर्म: सर्वथा सोऽभ्युपेयते ॥ २०० ॥
वर्णान्तरविकार्यत्वादिति योक्ता विनाशिता ।
उक्ते च हेतुसिद्ध्यर्थं सादृश्यस्मरणे पुन: ॥ २०१ ॥
तच स्मृतेरसिद्धत्वं न ह्येवं पाणिनेर्वच: ।
इकारपरिणामेन यकार: क्रियतामिति ॥ २०२ ॥
सिद्धशब्दार्थसंबन्धे तच्छास्त्रं हि प्रवर्त्तते ।
प्रयोगनियमार्थाय न चैवं सिद्धता भवेत् ॥ २०३ ॥
भिन्नप्रसिद्ध्योस्तेन दधि दध्येति शब्दयो: ।
आचक्षाणेन साधुत्वं दधीत्यौत्सर्गिक: कृत: ॥ २०४ ॥
अन्वाख्यातुं स्वरूपेण दध्यशब्दं च वेदितुम् ।
स्वशास्त्रे लघुबोधार्थमेकत्वमिव दर्शितम् ॥ २०५ ॥
तथाचि परतो सिद्धं दध्यशब्दं निवर्त्तयन् ।
दधीति शास्त्रत: प्राप्त: सोऽयं तेनैव वार्यते ॥ २०६ ॥
इक्प्रयोगप्रसङ्गे तु यण् साधुरिति गम्यते ।
परमार्थस्तु नैवास्मिन्विकारोऽभूत्कदा चन ॥ २०७ ॥

केवलं यत्तु सादृश्यं तदनैकान्तिकीकृतम् ।
कुन्देदध्यविकारे ऽपि तत्सादृश्यं हि दृश्यते ॥ २०८ ॥
नास्ति सर्वात्मना तच्चेच्छब्दे ऽपि स्थानमात्रकम् ।
तेनैतयोरसिद्धत्वान्मूलहेतोरसिद्धता ॥ २०९ ॥
कारणानुविधायित्वं यच्चाल्पत्वमहत्त्वयोः ।
व्यङ्ग्यानां चैतदस्तीति लोके ऽप्यैकान्तिकं न तत् ॥ २१० ॥
दर्पणाल्पमहत्त्वे ऽपि दृश्यते ऽनुपतन्मुखम् ।
न स्यादव्यङ्ग्यता तस्मात्तक्रियाजन्यतापि वा ॥ २११ ॥
न चास्योच्चारणादन्या विद्यते जनिका क्रिया ।
यथा महत्यां खातायां मृदि व्योम्नि महत्वधीः ॥ २१२ ॥
अल्पायामल्पधीरेवमत्यन्ताकृतके सति ।
तेनाचैवं परोपाधिश्शब्दवृद्धौ मतिभ्रमः ॥ २१३ ॥
न च स्थूलत्वसूक्ष्मत्वे लक्ष्येते शब्दवृत्तिनी ।
बुद्धितीव्रत्वमन्दत्त्वे महत्त्वाल्पत्वकल्पना ॥ २१४ ॥
सा च पटूभवत्येव महातेजः प्रकाशिते ।
मन्दप्रकाशिते मन्दाघटादावपि सर्वदा ॥ २१५ ॥
एवं दीर्घादयस्सर्वे ध्वनिधर्मा इति स्थितम् ।
नादो वायुगुणास्तद्वान्वायुर्वा यदि कल्प्यते ॥ २१६ ॥
वर्णानां श्रोत्रगम्यत्वान्न च ये श्रोत्रगोचराः ।
तत्रावर्णात्मकश्शब्दश्शङ्खादेः श्रूयते कथम् ॥ २१७ ॥
ध्वनीनां श्रोत्रगम्यत्वं तस्मात्के न प्रपद्यते ।
मारुतप्रेरितास्ते च कुर्वंति श्रोत्रसंस्कृतिः ॥ २१८ ॥
वर्णव्यक्तौ च दृष्टत्वात्तेषां नादृष्टकल्पना ।
अन्ये तु वर्णयन्त्यत्र पूर्वोक्तध्वनिवादिनः ॥ २१९ ॥

मरुतामेव नानात्वाद्घोषश्रुत्युपपादनम् ।
तथाताल्वादिसंयोगविभागैः प्रेरिताः स्फुटम् ॥ २२० ॥
व्यञ्जन्ति वर्णमन्ये तु शब्दत्वं सर्ववर्णभाक् ।
वर्णासर्वगतत्वात्तु नापद्येत निराश्रयम् ॥ २२१ ॥
न च पर्यनुयोगः स्यात्क्व वर्णव्यक्तिरित्ययम् ।
एतएव च ते पूर्वमुक्ता बोध्यनुवर्तना ॥ २२२ ॥
येषां प्रचयनानात्वाद्वृत्तिभेदः प्रतीयते ।
यद्वा जात्यन्तरं सत्तु सर्वथा कार्यहेतुकम् ॥ २२३ ॥
प्रत्यक्षवद् ध्वनीनां न शक्तिभेदप्रकल्पनम् ।
दर्शनस्य परार्थत्वं यदि नामाप्रतीयते ॥ २२४ ॥
शब्दस्य किमिहायातं येन नित्यो ऽभ्युपेयते ।
अनित्येष्वपि दृष्टत्वाद्दीपज्वाला चरादिषु ॥ २२५ ॥
परार्थदर्शनत्वस्य धर्मत्वे ऽपि न हेतुता ।
विना साधर्म्यदृष्टान्ताद्विरुद्धो वा भवेदयम् ॥ २२६ ॥
नित्यानामप्रयोगित्वमणूनामपि दृश्यते ।
अर्थप्रत्यायनं चैष जन्मनैव करिष्यति ॥ २२७ ॥
विनापि स्यात्स्वरूपेण संयोगादीन्यथाक्रिया ।
पूर्वालोचनमेतस्य भूतस्मृत्या च कर्मवत् ॥ २२८ ॥
तस्मान्न विनियोज्यत्वात्प्रागस्तित्वं घटादिवत् ।
प्रकाशितं यथा चार्थे तेजसा केन चित्पुरा ॥ २२९ ॥
नवादयो ऽपिबुध्यन्ते शब्दादपि तथा भवेत् ।
दर्शनस्य परार्थत्वे यदसिद्ध्यादिचोद्यते ॥ २३० ॥
तत्काष्ठदहनो वह्निरब्दाहार्थे नियुज्यते ।
अनुमानप्रयोगे हि तत्त्वसिद्ध्यादि युज्यते ॥ २३१ ॥

अर्थापत्तिरियं चोक्ता पक्षधर्मादिवर्जिता ।
यदि नाशिनि नित्ये वा विनाशिन्येव वा भवेत् ॥ २३२ ॥
शब्दे वाचकसामर्थ्यं ततो दूषणमुच्यताम् ।
फलवद्व्यवहाराङ्गभूतार्थप्रत्ययाङ्गता ॥ २३३ ॥
निष्फलत्वेन शब्दस्य योग्यत्वादवधार्यते ।
परीक्ष्यमाणस्तेनास्य युक्त्या नित्यविनाशयोः ॥ २३४ ॥
सधर्मो ऽभ्युपगन्तव्यो यः प्रधानं न बाधते ।
न ह्यङ्गाङ्गानुरोधेन प्रधानफलबाधनम् ॥ २३५ ॥
युज्यते नाशिपक्षे च तदेकान्तात्प्रसज्यते ।
न ह्यदृष्टार्थसंबन्धश्शब्दो भवति वाचकः ॥ २३६ ॥
तथा चेत्स्यादपूर्वो ऽपि सर्वः सर्वं प्रकाशयेत् ।
संबन्धदर्शनं चास्य नानित्यस्योपपद्यते ॥ २३७ ॥
संबन्धज्ञानसिद्धिश्चेद्ध्रुवं कालान्तरस्थितिः ।
अन्यस्मिन्ज्ञातसंबन्धे न चान्यो वाचको भवेत् ॥ २३८ ॥
गोशब्दे ज्ञानसंबन्धे नाश्वशब्दो हि वाचकः ।
अथान्यो ऽपि स भावेन कश्चिदेवावबोधकः ॥ २३९ ॥
तत्रानिबन्धनेन स्यात्को ऽसाविति विनिश्चयः ।
यतः प्रत्यय इत्येवं व्यवहारो ऽवकल्पते ॥ २४० ॥
श्रोतॄणां स्यादपीच्छन्तु वक्तॄणां नावकल्पते ।
अज्ञात्वा कमसौ शब्दमादावेव विवक्षति ॥ २४१ ॥
जानाति चेदवश्यं स पूर्वं तेनावधारितः ।
तेजः प्रत्यक्षशेषत्वान्नवत्वे ऽपि प्रकाशकम् ॥ २४२ ॥
सदृशत्वात्प्रतीतिश्चेत्तद्द्वारेणाप्यवाचकः ।
कस्य चैकस्य सादृश्यात्कल्प्यतां वाचको ऽपरः ॥ २४३ ॥

अदृष्टसंगतित्वेन सर्वेषां तुल्यता यतः ।
अर्थवान्पूर्वदृष्टश्चेत्तस्य तावान्कुतः क्षणः ॥ २४४ ॥
द्विस्त्रिर्वानुपलब्धो हि नार्थवान्संप्रतीयते ।
अप्रतीतान्यशब्दानां तत्काले ऽसावनर्थकः ॥ २४५ ॥
स एवान्यश्रुतीनां स्यादर्थवानिति विस्मयः ।
अथास्य विद्यमानो ऽपि कैश्चिदर्थो न गम्यते ॥ २४६ ॥
तत्तुल्यमुत्तरस्येति किं सादृश्येन वाचकः ।
अनर्थकत्वमस्य स्यादथानन्यश्रुतीन्प्रति ॥ २४७ ॥
पूर्वस्मिन्नपि तत्सत्त्वात्सर्वानर्थकता भवेत् ।
अर्थवत्सदृशत्वेन यो वाश्रुतवतां मतः ॥ २४८ ॥
मुख्यो ऽसावश्रुतीनां स्यात्तदेकत्वेन युज्यते ।
संबन्धाकरणे युक्तिस्तदुक्तमिति कथ्यते ॥ २४९ ॥
शब्दानित्यत्वपक्षे ऽपि विशेषेण स दुष्करः ।
शब्दं तावदनुच्चार्य संबन्धकरणं कुतः ॥ २५० ॥
नचोच्चारितनष्टस्य संबन्धेन प्रयोजनम् ।
तेनासंबध्यनष्टत्वात्पूर्वस्तावदनर्थकः ॥ २५१ ॥
उत्तरो ऽकृतसंबन्धो विज्ञायेतार्थवान्कथम् ।
शब्दोच्चारणसंबन्धकरणव्यवहारिकाः ॥ २५२ ॥
क्रियाः क्रमस्वभावत्वात्कः कुर्याद्युगपत्क्वचित् ।
देशकालादिभेदानां पुंसां शब्दान्तरश्रुतेः ॥ २५३ ॥
पूर्वः कृत्रिमसंबन्धो ऽप्येकः शब्दो न सिध्यति ।
संबन्धकथने ऽप्यस्य स्यादेवैषा निराकृतिः ॥ २५४ ॥
नष्टा सद्वर्तमानेषु नाख्यानस्य हि संभवः ।
अर्थवान्कतरः शब्दः श्रोतुर्वक्ता च कल्प्यताम् ॥ २५५ ॥

यदा पूर्वश्रुतं शब्दं नासौ शक्नोति भाषितुम् ।
न तावदर्थवन्तं स ब्रवीति सदृशं वदेत् ॥ २५६ ॥
नार्थवत्सदृशः शब्दः श्रोतुस्तेनोपपद्यते ।
अर्थवद्ग्रहणाभावान्न वासावर्थवान्स्वयम् ॥ २५७ ॥
वक्तुः श्रोतृत्ववेलायामेतदेव प्रसज्यते ।
एवं च सर्ववक्तॄणां न शब्दः कश्चिदर्थवान् ॥ २५८ ॥
भवेद्यद्यपि संबन्धः सर्गादौ कस्य चित्कृतः ।
तस्मिन्नबुद्धेनैव स्यादेकस्मात्सदृशे मतिः ॥ २५९ ॥
अथ तत्कालजैः पुंभिस्तस्मिन्शब्दे ऽवधारिते ।
प्रवृत्तेरनुमीयेत तत्सादृश्यपरंपरा ॥ २६० ॥
तत्र संबन्धमार्गेण पूर्वोक्तेन प्रसज्यते ।
स्मार्यं तन्मूलसादृश्यं तदधीनार्थनिश्चयात् ॥ २६१ ॥
वस्तुन्युत्पत्तिभिन्ने च दूरादारभ्य कल्पितम् ।
स्तोकस्तोकविशेषेण सादृश्यं विप्रकृष्यते ॥ २६२ ॥
स्वरव्यञ्जनमात्रादिभेदाच्छब्दे विशेषतः ।
शालामालाबलावेलाशिलेत्यादिप्रकल्पनात् ॥ २६३ ॥
सादृश्याप्रतिपत्तौ च भ्रान्तिज्ञानं प्रसज्यते ।
धूमे दृष्टे ऽग्निसंबद्धु बाष्पादिव कृशानुधीः ॥ २६४ ॥
एवमस्त्विति चेद्ब्रूयान्नैतद्बाधकवर्जनात् ।
तावता सिद्धमिति चेच्छब्दाभेदो ऽपि सिध्यति ॥ २६५ ॥
तथा भिन्नमभिन्नं वा सादृश्यं व्यक्तितो भवेत् ।
एवमेकमनेकं वा नित्यं वा ऽनित्यमेव वा ॥ २६६ ॥
भिन्नत्वैकत्वनित्यत्वे जातिरेव प्रकल्प्यते ।
अभेदानित्यनानात्वे पूर्वोक्तेनैव तुल्यता ॥ २६७ ॥

व्यक्त्यनन्यत्तथैकं च सादृश्यं नित्यमिष्यते ।
व्यक्तिनित्यत्वमापन्नं तथा सत्यस्मदाहितम् ॥ २६८ ॥
न चावयवसामान्यरूपा सदृशता तव ।
वर्णभेदे हि सा सिध्येन्न वा भेदस्त्वयेष्यते ॥ २६६ ॥
गोशब्दत्वादि गत्वादि पूर्वमेव निराकृतम् ।
वर्णव्यक्तय एव स्युर्नित्यास्तेनावबोधिकाः ॥ २७० ॥
गोशब्दे ऽवस्थिते ऽस्माकं तदशक्तिजकारिता ।
गाव्यादेरपि गोबुद्धिर्मूलशब्दानुसारिणी ॥ २७१ ॥
स्यात्सादृश्यनिमित्ता चेद्गौरशब्दादपि ध्रुवम् ।
तेनाव्यावृत्तिरिष्टाच गोशब्दादेव सा हि धीः ॥ २७२ ॥
नत्वानुपूर्व्यनित्यत्वादनित्यो वाचको भवेत् ।
पदं वाचकमिष्टं हि क्रमाधीना च तन्मतिः ॥ २७३ ॥
वर्णस्सर्वगतत्वाद्वा न स्वतः क्रमवृत्तयः ।
अनित्यध्वनिकार्यत्वात्क्रमस्यातो विनाशिता ॥ २७४ ॥
पुरुषाधीनता वास्य तद्विवक्षावशाद्भवेत् ।
वर्णानां नित्यता तेन निष्फला परमाणुवत् ॥ २७५ ॥
यथा सत्यनुनित्यत्वे घटे तद्रचनात्मके ।
न नित्यतैवं वर्णेषु नित्येषु पदनाशिता ॥ २७६ ॥
न च क्रमाद्विना वर्णा विज्ञाताः प्रतिपादकाः ।
क्रमस्यैव प्रदत्वं च तस्मादेवं प्रसज्यते ॥ २७७ ॥
नहि वस्त्वन्तराधारमेतदृष्टं प्रकाशकम् ।
द्वये सत्यपि तेनाच विज्ञेयो ऽर्थस्यवाचकः ॥ २७८ ॥
वर्णाः किं नु क्रमोपेताः किंतु वर्णाश्रयः क्रमः ।
क्रमः क्रमवतामङ्गमिति किं युक्तिसाध्यता ॥ २७९ ॥

धर्ममात्रमसौ तेषां न वस्त्वन्तरमिष्यते ।
इत्थं प्रतीयमानाः स्युर्वर्णास्तेनावबोधकाः ॥ २८० ॥
न च क्रमस्य कार्यत्वं पूर्वसिद्धपरिग्रहात् ।
वक्ता न हि क्रमं कं चित्स्वातन्त्र्येण प्रपद्यते ॥ २८१ ॥
यथैवास्य परैरुक्तस्तथैवेनं विवक्षति ।
परोप्येवमतश्चास्य संबन्धवदनादिता ॥ २८२ ॥
तेनैवं व्यवहारात्स्यादकौटिल्ये ऽपि नित्यता ।
यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता ॥ २८३ ॥
वर्णानामपि नन्वेवमकौटस्थ्यो ऽपि सेत्स्यति ।
नित्येषु सत्सु वर्णेषु व्यवहाराक्रमोदयः ॥ २८४ ॥
घटादिरचना यद्वन्नित्येषु परमाणुषु ।
तदभावे हि निर्मूला रचना नावधार्यते ॥ २८५ ॥
अणुकल्पाश्च वर्णांशा नसन्तीत्युपपादितम् ।
परेणोक्तं ब्रवीमिती विवक्षा चेदृशी ध्रुवम् ॥ २८६ ॥
तथा च नित्यतापत्तेर्न चान्यच्चिन्हमस्ति वः ।
तज्जातीयत्ववशादृश्ये निषिद्धे यत्तु संभवेत् ॥ २८७ ॥
शब्दत्वेन सजातित्वं तुल्यं शब्दान्तरेषु तत् ।
जात्या यथा घटादीनां व्यवहारोपलक्षणम् ॥ २८८ ॥
तथैव चानुपूर्व्यादेर्जातिद्वारेण सेत्स्यति ।
ताल्वादिजातयस्तावत्सर्वपुंसि व्यवस्थिताः ॥ २८९ ॥
वक्ता तावद्ध्वनीं स्ताभिरुपलक्ष्य निरस्यति ।
तेषां च जातयो भिन्नाः शब्दाभिव्यक्तिहेतवः ॥ २९० ॥
यावद्वर्णे प्रवर्तन्ते व्यक्तयो वा तदन्विताः
तत्र ताल्वादिसंयोगविभागक्रमपूर्वकम् ॥ २९१ ॥

ध्वनीनामानुपूर्व्यं स्याज्जात्या चोभयनित्यता ।
यथैव भ्रमणादीनां भागा जात्यादिलक्षिताः ॥ २९२ ॥
क्रमानुवृत्तिरेवं स्यात्ताल्वादिध्वनिवर्णभाक् ।
व्यक्तीनामेव वा सौक्ष्म्याज्जातिधर्मावधारणम् ॥ २९३ ॥
यद्वशेन च वर्णानां व्यापित्वे ऽपि क्रमग्रहः ।
एवं ध्वनिगुणान्सर्वान्नित्यत्वेन व्यवस्थितान् ॥ २९४ ॥
वर्णा अनुपतन्तः स्युरर्थभेदावबोधिनः ।
आनुपूर्वी च वर्णानां ह्रस्वदीर्घप्लुताश्च ये ॥ २९५ ॥
कालस्य प्रतिभागास्तैर्ज्ञायन्ते ध्वन्युपाधयः ।
कालश्चैको विभुर्नित्यः प्रविभक्तो ऽपि गम्यते ॥ २९६ ॥
वर्णवत्सर्वभावेषु व्यज्यते केन चित्क्व चित् ।
वर्णेषु व्यज्यमानस्य तस्य प्रत्यायनां गता ॥ २९७ ॥
अन्यथापि तु सद्भावात्तत्स्वरूपस्य नित्यता ।
तस्मान्न पदधर्मो ऽस्ति विनाशी कश्चिदीदृशः ॥ २९८ ॥
तेन नित्यं पदं सिद्धं वर्णनित्यत्ववादिनाम् ।
परधर्मो ऽपि चाङ्गत्वमुक्तमश्वजवादिवत् ॥ २९९ ॥
नित्यतायां च सर्वेषामर्थापत्तेः प्रमाणता ।
पदे ऽनवयवे चापि व्यञ्जकैः क्रमवृत्तिभिः ॥ ३०० ॥
पुरुषाधीनतायां तु न प्रामाण्यं प्रसज्यते ।
वाक्येषु दृष्टमेतच्च तन्निर्भागत्ववादिनाम् ॥ ३०१ ॥
अन्यथानुपपत्त्या तस्सर्वथा पदनित्यता ।
परार्थदर्शनार्थत्वं येनायं प्रतिपद्यते ॥ ३०२ ॥
स धर्मो ह्यनुमानाय संबन्धापेक्षितोच्यते ।
न साधनप्रयोगो ऽयं सूत्रकारेण रच्यते ॥ ३०३ ॥

वृत्तिकारेण वार्थस्तु योग्यो द्वाभ्यां निरूपितः ।
अत्रोच्यते स्थिरश्शब्दे धूमगोत्वादिजातिवत् ॥ ३०४ ॥
संबन्धानुभवापेक्षं सामान्यार्थावबोधनात् ।
अन्यापोहनसारूप्यजातिलिङ्गत्वकल्पने ॥ ३०५ ॥
विशेषाणामलिङ्गत्वात्सर्वसामान्यनित्यता ।
स्ववाक्यादिविरोधो वा परार्थत्वेन कथ्यते ॥ ३०६ ॥
प्रतिज्ञोच्चार्यते सर्वा साध्यार्थप्रतिपत्तये ।
न चानित्या ब्रवीत्येषा स्वार्थमित्युपपादितम् ॥ ३०७ ॥
तेनार्थप्रत्ययापत्तान्नित्यत्वान्नाशिबाधनम् ।
अर्थाभिधानसामर्थ्यमभ्युपेत्य च साधयेत् ॥ ३०८ ॥
पूर्वाभ्युपगतेनापि नाशित्वं बाधते परः ।
अर्थप्रतीतिसामर्थ्यैः प्रतिशास्त्रमुपाश्रितैः ॥ ३०९ ॥
आगमेनापि नाशित्वं बाध्यते सर्ववादिनाम् ।
सर्वलोकप्रसिध्या च बाधः पूर्वोक्तया दिशा ॥ ३१० ॥
अनुमानविरोधो ऽपि प्रागुक्तेनैवहेतुना ।
प्रत्यक्षेण विरुद्धत्वं संख्याभावो ऽभिधास्यते ॥ ३११ ॥
वक्तव्यश्चैष कः शब्दो नाशित्वेन प्रसाध्यते ।
त्रिगुणः पौद्गलो वायुराकाशस्याथ वा गुणः ॥ ३१२ ॥
वर्णादन्यो ऽथ नागात्मा वायुरूपो ऽर्थवाचकः ।
पदवाक्यात्मकः स्फोटः सारूप्यान्यनिवर्त्तने ॥ ३१३ ॥
एतेषामस्त्वनित्यत्वं नास्माकं तेषु नित्यता ।
अप्रसिद्धविशेष्यत्वमाश्रयासिद्धहेतुता ॥ ३१४ ॥
अथास्मदिष्टः पक्षः स्याद्द्वयमेतत्समं तव ।
शब्दमात्रमथोच्येत शब्दत्वं च तथा सति ॥ ३१५ ॥

अनित्यं तच्च सर्वेषां नित्यमिष्टं विरुध्यते ।
यत्किं चिदिह सामान्यं नित्यं सर्वेण कल्प्यते ॥ ३१६ ॥
अनित्यत्वे हि नैतत्स्याद्व्याप्ति व्यक्तिषु कासु चित् ।
व्यक्तयः शब्दशब्देन न शक्यन्ते च भाषितुम् ॥ ३१७ ॥
तासां जात्यतिरेके च पूर्वोक्ते एव दूषणे ।
अन्वयानतिरेके तु जाताविव विरोधिना ॥ ३१८ ॥
अप्रसिद्धविशेष्यत्वं स्यात्परेषां च पूर्ववत् ।
अनित्यत्वं च नाशित्वं यद्यात्यन्तिकमुच्यते ॥ ३१९ ॥
ततोऽस्माकप्रतिपक्षः स्यादप्रसिद्धविशेषणः ।
यथा कथं चिदिष्टा चेदनित्यव्यपदेश्यता ॥ ३२० ॥
अनभिव्यक्त्यवस्थातः साभिव्यक्त्यात्मनेष्यते ।
एकान्तिकविकल्पे च व्यतिरेकविनाशयोः ॥ ३२१ ॥
पूर्वाभ्युपगमेनापि विरोधः सांख्यजैनयोः ।
प्रत्यक्षैन्द्रियकत्वादेरौलूक्यानामसिद्धता ॥ ३२२ ॥
अनेकशक्तिकल्प्यत्वादाद्यमध्यभवेषु च ।
अन्त्यशब्देऽपि पक्षे स्यादाश्रयासिद्धता मम ॥ ३२३ ॥
सर्वशब्देषु साध्येषु हेतुरव्यापकस्तव ।
सामान्यैर्व्यभिचारश्च जातिमत्त्वे सतीति चेत् ॥ ३२४ ॥
तथाप्यसिद्धमस्माकं तद्वत्त्वं व्यतिरिक्तया ।
अनन्यया तु तद्वत्ता तवासिद्धेत्यहेतुता ॥ ३२५ ॥
अथानुवृत्तव्यावृत्तहेतूनां युज्यते मतुप् ।
तथाप्यस्त्येव तद्वत्ता तेषां सामन्यबुद्धितः ॥ ३२६ ॥
गोत्वादिष्वपि सामान्यं समाभ्यामिति नो मतिः ।
व्यावर्तते विशेषेभ्यो सेतिशब्देन तुल्यता ॥ ३२७ ॥

नित्यत्वं चानुगम्येषामनित्येभ्यो निवर्त्तितम् ।
अथाच गौणमिथ्यात्वे स्यातां वर्णेषु ते समे ॥ ३२८ ॥
योगीन्द्रियावगम्यैश्च व्यभिचारो ऽणुभिस्तव ।
नित्यानामपि तेषां हि प्रत्यक्षत्वादिसंभवः ॥ ३२६ ॥
अथ स्यात्तन्निवृत्त्यर्थमस्मदादिविशेषणम् ।
अहंप्रत्ययविज्ञेयैरात्मभिर्व्यभिचारिता ॥ ३३० ॥
लिङ्गशब्दाद्यभावेन मनस्संयोगहेतुकम् ।
प्रत्यक्षं चेतदेकान्तासुखादाविव कल्प्यते ॥ ३३१ ॥
बाह्येन्द्रियावगम्यत्वमथ कुर्याद्विशेषणम् ।
तथापि व्यभिचार्येव जातीनां जातिमत्तया ॥ ३३२ ॥
एकार्थसमवायेन जातिर्जातिमती हि वः ।
आधारत्वमथोच्येत नामूर्त्ताधीयते ह्यसौ ३३३ ॥
समवायं यदि ब्रूयास्तदीयस्सोपि वारितः ।
अभेदवृत्तिं ब्रूयाश्चेज्जातीनामपि सेष्यते ॥ ३३४ ॥
क्लेशश्च नित्यवैधर्म्यै कृतो बहुविशेषणैः ।
स्वशब्देनैव तान्युक्त्वा तेभ्यो ऽन्यत्वं वरं कृतम् ॥ ३३५ ॥
एवं च शक्यते वक्तुं नित्यताप्यम्बरादिवत् ।
तद्भिन्ना नित्यवृक्षादिव्यतिरिक्तत्वहेतुका ॥ ३३६ ॥
केवलेन्द्रियकत्वे ऽपि सांख्यबौद्धप्रकल्पिते ।
असिद्धे पक्षधर्मत्वे तथैव प्रतिवादिनः ॥ ३३७ ॥
न हेतुर्लभ्यते तद्वदन्वयव्यतिरेकयोः ।
तत्र यद्यप्यसिद्धा स्याज्जातिः साधनवादिनः ॥ ३३८ ॥
तावत्तथाप्यहेतुत्वं यावत्सा न निराकृता ।
कार्या चेन्द्रियकत्वे ऽपि किं वास्त्विति निरूपणा ॥ ३३६ ॥

व्यक्त्यनन्यत्वनानात्वभेदाभेदेषु च स्फुटा।
तत्रासाधारणासिद्धौ साध्यहीनसपक्षता ॥ ३४० ॥
विकल्पितानुसारेण वक्तव्यावाद्यपेक्षया।
विरुद्धाव्यभिचारित्वं वक्ष्यमाणैश्च हेतुभिः ॥ ३४१ ॥
केवलाकाशवर्तित्वादौलूक्यस्य विभुत्ववत्।
तथा च श्रोत्रगम्यत्वाच्छब्दत्ववदितिस्थितिः ॥ ३४२ ॥
प्रागुक्तेन विभुत्वेन व्योमवच्चास्य नित्यता।
सपक्षो ऽपि विकल्प्योत्र श्रुत्यर्थे साध्यहीनता ॥ ३४३ ॥
व्यक्तिलक्षणपक्षे ऽपि जात्यन्यानन्यकल्पना।
अन्यत्वे धर्म्यसिद्धिर्नो ऽनन्यत्वे ऽपि परं प्रति ॥ ३४४ ॥
अविशेषे ऽपि नानित्यं न नित्यं वस्तु तन्मम।
अंशो ह्येतस्य जात्याख्यो नित्यो ध्वंसीतरो मतः ॥ ३४५ ॥
अनित्यता विकल्प्यात्र नाशश्चेत्साध्यहीनता।
ममान्यस्यां तु भवतामित्येषा दूषणोक्तिदिक् ॥ ३४६ ॥
सर्वेषां शब्दरूपं च वाचकं नित्यमिष्यते।
तत्स्वरूपे विवादस्तु वर्णास्तत्र च साधिताः ॥ ३४७ ॥
संबन्धनित्यतायाः किं शब्दाधिकरणे ऽभिधा।
तादर्थ्याच्छब्दचिन्तायास्सैव ह्यत्राधिकारिकी ॥ ३४८ ॥
यद्वा संबन्धनित्यत्वद्वारेयं शब्दनित्यता।
साध्यते न विनष्टे हि शब्दे तन्नित्यता भवेत् ॥ ३४९ ॥
अनित्यानां हि नित्यात्मायस्संबन्धः प्रतीयते।
आश्रयाणामनुच्छेदान्न क्व चिन्स निरुध्यते ॥ ३५० ॥
न चानुच्छेदरूपेण गोशब्दानामिह स्थितिः।
न चैषां गम्यते भेदस्तेनैकस्यैव नित्यता ॥ ३५१ ॥

## ॥ अथ ब्रह्मसूत्रतात्पर्यविवरणे ॥

### द्वितीयाध्यायस्य द्वितीयपादावशेषः ।

---

### अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥ ४२ ॥

॥ ५ ॥

ननु श्रद्धया स्वाभाविकी प्रधानप्रवृत्तिरभ्युगम्यत इति चेत्, तथा सति यथा सहकारिणं नापेक्षते तर्हि प्रयोजनमपि नापेक्षेतेति प्रधानं पुरुषार्थस्य साधनमिति तव प्रतिज्ञाभङ्गः स्यात्, तथा च बन्धमोक्षव्यवस्था न स्यात्, तस्मात् प्रधानस्य न जगत्प्रवर्तकत्वमित्याह॰ अभ्युपगमेऽपीति ।

### अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥ ४३ ॥

॥ ६ ॥

ननु यथा दर्शनशक्तिसहितः प्रवृत्तिशक्तिरहितः कश्चित् पुरुषः पङ्गुरपरं प्रवृत्तिशक्तिसंपन्नं दृक्शक्तिरहितमन्धं पुरुषमधिष्ठाय प्रवर्तयति॰ अयस्कान्तः स्वयमप्रवर्तमानोऽप्ययः प्रवर्तयति, एवं पुरुषः प्रधानं प्रवर्तयिष्यति, इत्याशङ्कायां समाधत्ते पुरुषेति ।

### पुरुषाश्मवदिति चेत् तथापि ॥ ७ ॥ ४४ ॥

तथापि नैव दोषपरिहारः, अभ्युपेतहानदोषात्, त्वया प्रधानस्य स्वतन्त्रप्रवृत्त्यभ्युपगमात्, कथं वोदासीनः पुरुषः प्रवर्तयेत्, पङ्गुरप्यन्धं वागादिभिः प्रवर्तयति, नैवं पुरुषस्य कश्चिद्व्यापारो निष्क्रियत्वान्निर्गुणत्वाच्च,

नापि संनिधानमात्रेणायस्कान्तवत् प्रवर्तकः, संनिधिनित्यत्वेन प्रवृत्तिनित्यत्वप्रसङ्गात्, प्रकृतिपुरुषाभ्यां तृतीयस्य संबन्धुरभावाद् योग्यताया अप्यनुच्छेदादनिर्मोक्षप्रसङ्गः, परात्मनस्तु स्वरूपत औदासीन्यं मायाव्यापाराश्रयं प्रवर्तकत्वमित्यस्यातिशयः ॥ ७ ॥

युक्त्यन्तरमाह॰ अङ्गित्वेति ।

अङ्गित्वानुपपत्तेश्च ॥ ८ ॥ ४५ ॥

गुणत्रयस्य मिथो गुणगुणिभावमुत्सृज्य साम्यस्वरूपमात्रेणावस्थानं प्रधानावस्था, तस्यां स्वस्वरूपनाशभयान्मिथोऽङ्गाङ्गिभावानुपपत्तेरन्यस्य क्षोभयितुरभावाद् गुणवैषम्यनिमित्तो महदाद्युत्पादो न स्यात् ॥ ८ ॥

अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥ ४६ ॥

ननु कार्यवशेन साम्यावस्थायामपि वैषम्योपगमयोग्या एव गुणा अवतिष्ठन्त इत्यन्यथानुमीयत इत्याशङ्क्यैवमपि प्रधानस्य ज्ञानशक्तिवियोगाद्रचनानुपपत्तिः स्वतः प्रवृत्त्यनुपपत्त्यादयः पूर्वोक्ता दोषास्तदवस्था एव, ज्ञशक्त्यनुमाने तु चेतनमेकमनेकप्रपञ्चस्योपादानमिति ब्रह्मवादप्रसङ्गः, साम्यावस्थायां निमित्ताभावान्नैव वैषम्यम्, भावे तु सर्वदैव वैषम्यमित्यस्त्येव दोषः ॥ ९ ॥

परस्परविरोधादप्यसमञ्जसं सांख्यदर्शनमित्याह विप्रतिषेधेति ।

विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥ ४७ ॥ १ ॥

क्वचित् सप्तेन्द्रियाणि, क्वचिदेकादश, तथा क्वचिदहंकारात् क्वचिन्महतः पञ्चतन्मात्रोत्पत्तिः, एवं क्वचित् त्रीण्यन्तःकरणानि क्वचिदेकं वर्णयन्ति, इति प्रसिद्ध एवेश्वरकारणवादिश्रुतिस्मृतिविरोधः, तस्मादयुक्तं सांख्यदर्शनम् ॥ १० ॥

एवं प्रधानवादं निराकृत्य अणवादिकारणवादं निराकर्तुं स्वपक्षे तदुक्तं दोषं निराकरोति महदिति ।

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥ ४८ ॥ २ ॥

यथा शुक्लाणुभ्यः शुक्लोऽवयवी श्यामेभ्योऽवयवी श्याम एव, तथा च सजातीयात् सजातीयमेवोत्पद्यत इति नियमात् कथं चेतनादचेतनं जगदित्याक्षेपे नायं नियमः, परमाणवः पारिमाण्डल्ययुक्ता न त्वणुह्रस्वपरिमाणा इत्यह्रस्वानणुभ्यां परमाणुभ्यामणुह्रस्वपरिमाणं द्व्यणुकं जायते, तथा ह्रस्वपरिमाणोपेतं दीर्घपरिमाणरहितं द्व्यणुकं तादृशत्रिभ्यो द्व्यणुभ्यो दीर्घपरिमाणमणुह्रस्वपरिमाणरहितं त्र्यणुकम्, एवं चेतनादप्यचेतनमित्यर्थः ॥ ११ ॥

काणादादिमतप्रसिद्धाणुकारणवादं दूषयति उभयथेति ।

## उभयथापि न कर्मातस्तदभावः ॥ १२ ॥ ४९ ॥

सर्गादौ तत्तदात्मादृष्टवशात् परमाणुषु परस्परसंयोगजनकं कर्म, ततो विभागादिक्रमेण द्व्यणुकादि, एवमयेऽप्यन्त्यावयविपर्यन्तं कार्यं भवति, इति यत् तत्र विभक्तावस्थायामणूनां संयोगः कर्मापेक्षः, कर्मणश्च जन्यत्वान्निमित्तं किंचिदभ्युपगन्तव्यम्, अनभ्युपगमे कारणाभावान्नाणुषु कर्म स्यात्, अभ्युपगमे प्रयत्नोऽभिघातादिर्वा भवेत्, स च न संभवति, तदा त्वशरीरस्यात्मनः प्रयत्नाभावात्,एवमभिघाताद्यपि न तज्जनकक्रियाद्यभावात्, उभयथापि न कर्म, अतो मिथोऽणुसंयोगाभावः, अदृष्टं निमित्तमिति तु न, तादात्म्यसमवेतमणुसमवेतं वा, उभयथापि न निमित्तं तस्याचेतनत्वात्, नह्यचेतनं प्रवर्तते प्रवर्तयति वेत्युक्तं प्राक्, अदृष्टवत्पुरुषसंयोगो निमित्तमित्यपि न, संबन्धसातत्येन प्रवृत्तिसातत्यप्रसङ्गात्, तस्मात् कर्मनिमित्तस्याभावान्नाणुकर्म नतरां च संयोगादि द्व्यणुककार्यम् ।

किंचाण्वोः संयोगः सर्वात्मना एकदेशेन वा, आद्ये उपचयानुपपत्तेः, निरवयवयोः संयोगदर्शनाच्च, अन्त्ये सावयवत्वप्रसङ्गः, एवं प्रलयेऽपि विभागार्थं नाणुकर्म निमित्ताभावात्, एवं च सर्गप्रलययोरनुपपत्तिः, तस्माच्च परमाणूनां हेतुत्वम् ॥ १२ ॥

एवमणुभ्यां द्व्यणुकं समवेतमिति समवायस्तयोरतिरिक्त इति तवानुमतम्, तच्च, तथा सत्यतिरिक्तसमवायस्याप्यतिरिक्तेनैव संबन्धेन स्थितिरत्यन्तभेदस्य समानत्वात् तस्याप्यतिरिक्त इत्यनवस्था स्थितौ स्यादित्याह समवायेति ।

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥ ५० ॥

॥ १३ ॥

## नित्यमेव च भावात् ॥ १४ ॥ ५१ ॥

किंच अणवः प्रवृत्तिस्वभावा निवृत्तिस्वभावा उभयस्वभावा अनुभयस्वभावा वेति चतुर्धापि नोपपद्यते, आद्ये नित्यमेव प्रवृत्तेः प्रल-

याभावप्रसङ्गः, द्वितीये सर्गाभावप्रसङ्गः, तृतीये विरुद्धत्वाच्च सामञ्जस्यम्, चतुर्थोऽपि न, अदृष्टादेर्निमित्तस्य तन्त्रत्वे नित्यसंनिधानान्नित्यं प्रवृत्तिप्रसङ्गः, अतन्त्रत्वे नित्याप्रवृत्तिप्रसङ्गः, तस्मादपि नाणुवादः॥ १४॥

हेत्वन्तरमाह रूपादीति।

रूपादिमत्त्वाच्च विपर्ययो दर्शनात्॥ १५॥ ५२॥

रूपादिमन्तः परमाणवो रूपादिमतां भौतिकानामारम्भका नित्याश्चेति वैशेषिका वदन्ति, तच्चोपपद्यते, रूपादिमत्त्वात् परमाणूनामणुत्वनित्यत्वविपर्ययः परमकारणापेक्षया स्थूलत्वमनित्यत्वं च प्रसज्येतेत्यर्थः, कुत इति चेत्, यद्धि लोके रूपादिमद्वस्तु तत् स्वकारणापेक्षया स्थूलमनित्यं चेति दर्शनात्, पटस्तन्तूनपेक्ष्य स्थूलोऽनित्यश्च, तन्तवोंऽश्वपेक्षया, न चाप्रत्यक्षं रूपादिमद्यत् तन्नित्यमिति, द्व्यणुकादीनामपि नित्यत्वापत्तेः॥ १५॥

यथा गन्धरसरूपस्पर्शगुणका स्थूला पृथ्वी, रसादित्रयगुणाः सूक्ष्मा आपः, रूपस्पर्शगुणं तेजस्ततः सूक्ष्मम्, स्पर्शमात्रगुणो वायुः सूक्ष्मतमः, इत्येवं चत्वारि भूतान्युपचितापचितगुणानि स्थूलसूक्ष्मतारतम्योपेतानि च लोके दृश्यन्ते, तद्वत् परमाणवोऽप्युपचितापचितगुणाः कल्प्येरन् न वा, उभयथापि दोषोऽपरिहार्य एव, उपचितापचितगुणत्वे० उपचितगुणानां मूर्त्युपचयादपरमाणुत्वप्रसङ्गः, न ह्यन्तरेण मूर्त्युपचयं गुणोपचयो भवति कार्यद्रव्यगुणोपचये द्रव्योपचयदर्शनात्, तेषूपचितापचितगुणत्वानङ्गीरे परमाणुत्वसाम्याय सर्वे० एकैकगुणा एवेत्यभ्युपगमे तेजोऽबादिषु स्पर्शादीनामनुपलब्धिप्रसङ्गः कार्यगुणानां कारणगुणपूर्वकत्वात्, यदि सर्वे चतुर्गुणास्तदाप्स्वपि गन्धोपलब्ध्यापत्तिः, न चैतदनुभवारूढम्, तस्मादपि नाणुकारणवाद इत्याह० उभयथेति।

उभयथा च दोषात्॥ १६॥ ५३॥

॥ १६॥

युक्त्यन्तरमाह० अपरिग्रहेति।

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥ ५४ ॥ ३ ॥

प्रधानकारणवादो वैदिकैरपि मन्वादिभिः सत्कार्यत्वाद्यंशोपजीवनान्निबद्धो न तु परमाणुकारणैरसतः कार्यस्य वादोऽङ्गीकृतस्तैरित्यत्यन्तानादरणीयो वेदविद्भिः, किंच विनाप्यवयवसंयोगान्तरं क्षीरजलादिभ्यो दधिहिमादिकार्यारम्भदर्शनात्, तस्मादसारतरं तर्कावलम्बनमीश्वरकारणतावादिश्रुतिविरुद्धं चेति न तत्र श्रेयोऽर्थिभिर्विश्वसनीयमिति वाक्यशेषः ॥ १७ ॥

एवमर्धवैनाशिकतार्किकादीन् दूषयित्वा प्रसङ्गात् सर्ववैनाशिकबौद्धादीन् दूषयति समुदाय उभयेति ।

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥ ५५ ॥

सर्ववैनाशिकास्त्रयः । सर्वास्तित्ववादिनः, विज्ञानमात्रास्तित्ववादिनः, सर्वशून्यवादिनः । तत्राद्यानां भूतभौतिकचित्तचैत्तं वस्तु बाह्याभ्यन्तरभेदेन द्वेधा· इति,भूतं पृथिव्यादयः, भौतिकं चक्षुरादयो रूपादयश्च, पृथिव्यादिपरमाणवः खरस्नेहोष्णस्वभावाः, ते पृथिव्यादिभावेन संहन्यन्त इति मतम् । द्वितीयानां रूपस्कन्धो विज्ञानस्कन्धो वेदनास्कन्धः संज्ञास्कन्धः संस्कारस्कन्ध इति, तेऽप्यध्यात्मं सर्वव्यवहारास्पदभावेन संहन्यन्त इति मतम् । तद्दूषणम्, योऽयमुभयहेतुक उभयप्रकारः समुदायोऽणुहेतुकः स्कन्धहेतुकश्च, तादृशेऽङ्गीक्रियमाणे तदप्राप्तिः, समुदायभावानुपपत्तिः स्यात्, समुदायिनामचेतनत्वात्, चित्ताभिज्वलनस्य च समुदायसिद्ध्यधीनत्वात्, अन्यस्य च स्थिरस्य कस्यचिच्चेतनस्य भोक्तुः प्रशास्तुर्वा संहन्तुरभावात्, निरपेक्षप्रवृत्त्यभ्युपगमे च प्रवृत्त्यनुपरमापत्तेः, आशयस्यान्यत्वानन्यत्वाभ्यां दुर्निरूप्यत्वात्, क्षणिकत्वेन निर्व्यापारत्वात् प्रवृत्त्यनुपपत्तेः । अतः समुदायानुपपत्त्या तदाश्रयलोकयात्रानुपपत्तिरिति भावः ॥ १८ ॥

नन्वतिरिक्तस्य संहन्तुरभावेऽप्यविद्यास्मितादयः परस्परकारणभूताः सन्तो लोकयात्रां विधास्यन्तीति सर्वेषां सौगतादीनां मतम्, तेषु

मिथो निमित्तनैमित्तिकभावेन घटीयन्त्रवदनिशमावर्तमानेष्वर्थाक्षिप्त उपपन्नः संघात इत्याशङ्क्य दूषयति- इतरेतरेति ।

## इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥ ५६ ॥

तत्र, इतरेतरोत्पत्तिमात्रनिमित्तत्वात्, संघात उपपद्येत, यदि तन्निमित्तमतिरिक्तं स्यात्, न तु तदस्ति, यद्यविद्यादयः संघातं विना- अल-ब्धात्मानः संघातमपेक्षन्ते तर्हि तस्य निमित्तं वाच्यम्, तच्चाणुवादेष्विव क्षणिकवादेष्वपि किंचिदतिरिक्तं त्वया समुदायनिमित्तं नाङ्गीक्रियते,

अथ संघातात् संघात इत्यनाद्यनवस्थास्त्विति चेत्, तर्हि पूर्व-समुदायात् सजातीय एव संघातः स्यात्, तथा च पुल्कसमनुष्यदेवति-र्यग्योनिनारकप्राप्त्यभावः स्यात्, सजातीयानियमे मनुष्य एव कदाचिद्ध-स्त्यादिर्भूत्वा देवो वा मनुष्यो वा स्यात्, उभयमप्यनुभवबाधितम् ।

अपिच यदर्थं संघातः स स्थिरो भोक्ता नास्त्येवेति भोगो भोगार्थ एव, स च नान्येन प्रार्थनीयः, तथा च मोक्षो मोक्षार्थ एवेति मुमुक्षुणा नान्येन भवितव्यम्, अन्येन चेत् प्रार्थनीयस्तदा भोगकालावस्थायिना भवि-तव्यम्, अवस्थायित्वे क्षणिकत्वाभ्युपगमविरोधः, तस्मात् संघातो नैव सिध्यतीति भावः ॥ १९ ॥

अविद्यादीनामुत्पत्तिमात्रनिमित्तत्वाच्च संघातसिद्धिरस्तीत्युक्तम्, तदुत्पत्तिमात्रनिमित्तत्वमपि न संभवतीत्युच्यते- उत्तरेति ।

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥ ५७ ॥

क्षणिकत्ववादिना हि- उत्तरक्षणे- उत्पद्यमाने पूर्वक्षणो निरुध्यते- इत्यङ्गीक्रियते, एवं सति पूर्वोत्तरक्षणयोर्हेतुफलभावः कथमपि न शक्यते वक्तुम्, निरुद्धस्य निरुध्यमानस्य वा पूर्वक्षणस्याभावग्रस्तत्वादुत्तरक्षणहेतु-त्वानुपपत्तेः, परिनिष्पन्नावस्थः पूर्वक्षणो हेतुरिति तु न, भावभूतस्य पुनः व्यापारकल्पनाय क्षणान्तरसंबन्धप्रसङ्गात्, क्षणिकत्वाभ्युपगमेन प्रकारान्त-राण्यप्यत्र संभवन्ति, तस्मादसंगतं सौगतादिमतम् ॥ २० ॥

अहेतुकैवोत्पत्तिरिति ब्रूयात् तद्दूषयति- असतीति ।

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥ ५८ ॥

तथा सति तव प्रतिज्ञाविरोधः, चतुर्विधहेतून् प्रतीत्य चित्तचैत्ता उत्पद्यन्ते॰ इत्यस्योपरोधात् सर्वं सर्वत्रोत्पद्येत, पूर्वक्षणो यावदुत्तरोत्पत्तिमवतिष्ठते तदा फलहेत्वोर्यौगपद्यं स्यात्, सर्वक्षणिकत्वप्रतिज्ञाविरोधः ॥ २१ ॥

## प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥ ५९ ॥

अपिच वैनाशिका बुद्धिबोध्यं त्रयादन्यत् संस्कृतं क्षणिकं चेति त्रयं प्रतिसंख्याऽप्रतिसंख्यानिरोधावाकाशं चेत्यङ्गीकुर्वन्ति, त्रयमप्यवस्तुभूतं निरुपाख्यमिति मन्यन्ते । बुद्धिपूर्वकः किल भावानां विनाशः प्रतिसंख्यानिरोधः तद्विपरीतोऽप्रतिसंख्यानिरोधः, यथाऽऽवरणभङ्गुराणां स्तम्भादीनामावरणाभावमात्रमाकाशमिति; तत्राकाशं परस्तात् प्रत्याख्यास्यति । निरोधद्वयमत्र प्रत्याख्यायते, प्रतिसंख्याऽप्रतिसंख्यानिरोधयोरप्राप्तिरसंभवः, कुतः, अविच्छेदात्, तौ निरोधौ संतानगोचरौ भावगोचरौ वा, नाद्यः, सर्वसंतानेषु संतानिनामविच्छिन्नेन हेतुफलभावेन संतानिविच्छेदासंभवात्, न द्वितीयः, नहि भावानां निरन्वयो निरुपाख्यो विनाशः संभवति सर्वावस्थासु प्रत्यभिज्ञानादन्वय्यविच्छेददर्शनात्, दृष्टेनाऽन्वय्यविच्छेदेनान्यत्रापि तथानुमानात्, तस्मात् परकल्पितनिरोधद्वयस्यानुपपत्तिः ॥ २२ ॥

## उभयथा च दोषात् ॥ २३ ॥ ६० ॥

योऽयं द्विविधोऽविद्यानिरोधः परकल्पितः, स सपरिकरसम्यग्ज्ञानात्, स्वयमेव वा, प्रथमे निर्हेतुकविनाशाभ्युपगमहानिः, द्वितीये मार्गोपदेशानर्थक्यत्वप्रसङ्गः, एवमुभयथापि दोषात् ॥ २३ ॥

यदपि निरोधद्वयं गगनं च निरुपाख्यमिति, तत्र निरोधद्वयं निराकृतम् । आकाशस्य निरुपाख्यत्वं निराकरोति॰ आकाशेति ।

आकाशे चाविशेषात् ॥ २४ ॥ ६१ ॥

पूर्ववद् वस्तुत्वप्रतिपत्तेरविशेषात्· "आत्मन आकाशः संभूत" इति श्रुत्या गन्धादिगुणहेतुकानुमानेन वा तत्सिद्धेर्न निरुपाख्यमावरणाभावमात्रं तत्, अभावमात्ररूपत्वे· एकस्मिन् सुपर्णे पतति· आवरणस्य सत्त्वात् सुपर्णान्तरस्योत्पित्सतो निरवकाशत्वप्रसङ्गः, यत्रावरणाभावस्तत्र पतिष्यतीति चेत्, यच्छब्दार्थो वस्तुभूत आकाश एव नावरणाभावमात्रम्, किंच सौगतशास्त्रे 'भगवन् पृथ्वी किं संनिश्रये'त्यादिनोपक्रम्य 'वायुराकाशसंनिश्रय' इत्युक्तम्, तदा·आकाशस्य वस्तुत्व एव तत्र समञ्जसं स्यात्, एवमन्यदपि दूषणं बोद्धव्यम् ॥ २४ ॥

अनुस्मृतेश्च ॥ २५ ॥ ६२ ॥

अपिच सर्वस्य क्षणिकताभ्युपगमे· उपलब्धिमनुस्मृत्यनुपपत्तिः, अनुभवस्मरणयोरेककर्तृकत्वात्, तत्र त्वनुभवितुरात्मनो नष्टत्वात् स्मर्तुरन्यत्वात् कथं वा· अहमदोऽद्राक्षमिदं पश्यामीति च पूर्वोत्तरदर्शिन्येकस्मिन्नसति भवेत्, यदान्यः कर्ता स्यात् तदाहं स्मराम्यन्योऽद्राक्षीदित्यापत्तिः, अहमदोऽद्राक्षमिति दर्शनस्मरणयोरात्मानमेकं वैनाशिकोऽप्यवगच्छति, न नाहमिति दर्शनं निर्वृत्तं निन्हुते, एवं च दर्शनस्मरणलक्षणद्वयसंबन्धे क्षणिकत्वाभ्युपगमो वैनाशिकस्य नैव संभवति, य एवाहं बाल आसं स एवाहं स्थविर इति प्रत्यभिज्ञाविरोधश्च, न च सादृश्यात् प्रत्यभिज्ञानम्, वस्तुद्वयग्रहीतुरेकस्याभावात्, उभयसाधारणैकधर्माभावाच्च, एकस्य क्षणद्वयावस्थायित्वे क्षणिकत्वहानिः, तदेवेदं तत्सदृशं वेति संदेहोऽप्यनुपपन्नः, उपलब्धरि तु स एवाहं तत्सदृशो वेति तु नैव संभवति, य एवाहं पूर्वमद्राक्षं स एवाहं स्मरामीति दर्शनात्, तस्मात् वैनाशिकसमयः ॥ २५ ॥

युक्त्यन्तरमाह नासत इति।

नासतोऽदृष्टत्वात् ॥ २६ ॥ ६३ ॥

विनष्टाद् बीजात् किलाङ्कुर उत्पद्यते, विनष्टात् क्षीराद्दधि, नष्टा·

न्मृत्पिण्डाद् घटः, कूटस्थाच्चेत् कार्योत्पत्तिस्तदाऽविशेषात् सर्वं सर्वस्मादुत्पद्येत, अत एवोक्तं "नानुपमृद्य प्रादुर्भावा" दिति, तस्मादभावग्रस्तेभ्यो बीजादिभ्योऽङ्कुरादीनामुत्पन्नत्वादभावाद्भावोत्पत्तिरिति मन्यन्ते वैनाशिकास्तच्च, यद्यभावाद्भावस्तदाऽभावत्वाविशेषात् कार्यमप्यभावरूपमेव स्यात्, न ह्युपमृदितबीजाभावस्य निःस्वभावत्वाविशेषाच्छशशृङ्गादेर्विशेषोऽस्ति येन बीजादेवाङ्कुरः क्षीरादेव दधीत्येवं कारकविशेषाभ्युपगमोऽर्थवान् स्यात्, निर्विशेषाभावस्य कारणत्वे शशशृङ्गादप्यङ्कुरः स्यात्, अभावस्योपादानहेतुत्वमपि न संभवति, अभावान्वितमेव तदा कार्यं स्यात्, न चैवं दृश्यते, किंच चतुर्भ्यश्चित्तचैत्ता उत्पद्यन्त इति स्वप्रतिज्ञाविरोधः ॥ २६ ॥

यद्यभावादुत्पत्तिस्तदोदासीनानामनीहमानानां जनानां फलसिद्ध्यापत्तिरभावस्य सुलभत्वात्, एवं कृषीबलादेरप्रयतमानस्य शस्यादिनिष्पत्तिः स्यात्, स्वर्गापवर्गादि न कश्चित् समीहेत, इत्याह· उदासीनेति ।

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥ ६४ ॥ ४ ॥

॥ २७ ॥

ननु विज्ञानैकस्कन्धवाद एवाभिमतस्तत्र बुद्ध्यारूढेन रूपेणान्तःस्थ एव प्रमाणप्रमेयफलव्यवहारः सर्वं उपपद्यते सत्यपि बाह्येऽर्थे बुद्ध्यारोहं विना प्रमाणादिव्यवहारानवतारात्,

किंच, बाह्योऽर्थोऽभ्युपगम्यमानः किं परमाण्वादयस्तत्समूहो वा, नाद्यः, घटपटस्तम्भादिषु परमाणुत्वप्रत्ययस्यानुपपत्तेः, अप्रत्यक्षत्वं च स्यात्, नापि द्वितीयः, परमाण्वन्यत्वानन्यत्वाभ्यां दुर्निरूपत्वात् ।

किंच ज्ञानत्वाविशेषेऽपि घटज्ञानं पटज्ञानमिति विषयपक्षपातः स ज्ञानगतविशेषं विना न संभवति, इति विषयसारूप्यं ज्ञानस्याङ्गीकार्यम्, सति तस्मिन् विषयाकारस्य ज्ञानेनैवावरुद्धत्वादपार्थिकार्थसद्भावकल्पना,

किंच सह नियतोपलब्धिसद्भावादप्यभेदो ज्ञानविषययोः, यथा स्वप्नमृगतृष्णाजलभ्रमादीनां विनैवार्थेन ग्राह्यग्राहकभावस्तथा जाग्रत्य्‌त्यया अपीति बीजाङ्कुरवज्ज्ञानवासनयोरन्योन्यं निमित्तनैमित्तिकभावेन प्रतीतीनां वस्तूनां च वैचित्र्यमप्युपपन्नम्, तस्माच्च विज्ञानातिरिक्तं वस्त्विति द्वितीयबौद्धमतं दूषयति नेति।

## नाभाव उपलब्धेः ॥ २८ ॥ ६५ ॥

न बाह्यार्थापलापः संभवति, उपलब्धेः, स्तम्भः कुम्भः पट इत्यादिप्रत्यक्षेणैव सिद्धेः, विज्ञानव्यतिरेकेण नोपलम्भ इति तु न निरङ्कुशत्वात्, त्वन्मुखस्य निर्युक्तित्वात्, न ह्युपलब्धिरेव स्तम्भः कुड्यं चेति प्रत्ययोऽस्ति, उपलब्धिविषयत्वेनैवोपलम्भात्, अत एव बाह्यमर्थं प्रत्याचक्षाणा अपि लोका बाह्यमर्थं बहिर्वदिति वत्कारं कुर्वन्ति, अन्यथा कस्माद्बहिर्वदिति ब्रूयुः, नहि चैत्रोऽयं वन्ध्यापुत्रवदवभासत इति कश्चिदाचक्षते, तस्माद्बहिरेवावभासते घटादिर्न बहिर्वदिति, घटज्ञानं पटज्ञानमिति विषयभेदो न धीवैलक्षण्यम्, यथा शुक्लो गौः कृष्णो गौरिति, तस्माज्ज्ञानार्थयोर्भेद एव,

किंच द्वयोर्ज्ञानयोः पूर्वापरयोः स्वसंवेदनेनैवोपक्षीणयोरितरेतरग्राह्यग्राहकानुपपत्तिः, अतो विज्ञानभेदप्रतिज्ञाक्षणिकत्वविक्षेपप्लवबन्धमोक्षाः स्वप्रतिज्ञाता हीयेरन्, अतः प्रदीपवत् स्वव्यतिरिक्तग्राहकत्वम् ॥ २८॥

यदुक्तं स्वप्नादिवद्विषयं विनैव सर्वे प्रत्ययास्तदपि दूषयति वैधर्म्यादिति।

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥ ६६ ॥

न स्वप्नवद् बाह्यप्रत्ययो वैधर्म्यात्, बाध्यत्वरूपधर्मभेदात्, स्वप्नोत्तरं जागरणे मिथ्या मया महाजनसमागमो दृष्टः स्वप्ने न सत्यः, एवं मिथ्या जलमिदं मृगतृष्णायां मिथ्यासर्पो रज्जौ दृष्ट इति बाधात्, नत्वेवं बाह्यघटादिज्ञाने मिथ्या घट इत्यादि किंतु सदेव घटादि दृष्टमिति धर्मभेदाच्च बाह्यं मिथ्या ॥ २९ ॥

यदुक्तं विनाप्यर्थेन वासनावैचित्र्याज्ज्ञानवैचित्र्यमिति तद्दूषयति नेति।

न भावोऽनुपलब्धेः ॥ ३० ॥ ६७ ॥

न भावो वासना॰ उत्पद्यते, तव बाह्यानामनुपलब्धेः, अर्थोपलब्ध्या प्रत्यर्थं नाना वासनाः, अनुपलभ्यमानेष्वर्थेषु किंनिमित्ता वासना विचित्रा भवेयुः, अनादित्वे त्वन्धपरम्परानवस्था व्यवहारलोपिनी स्यात्, किंच वासना संस्कारः, स च नाश्रयं विना, स च नेष्यते त्वयेति न किंचिदेतत् ॥ ३० ॥

क्षणिकत्वात्[1] ॥ ३१ ॥ ६८ ॥

यदप्यालयविज्ञानं नाम वासनाश्रयत्वेन कल्प्यते त्वया तदपि क्षणिकत्वादव्यवस्थितमेव। शून्यवादस्तृतीयस्तु सर्वप्रमाणप्रतिषिद्ध इति तन्निराकरणेऽनादरः ॥ ३१ ॥

किंचायं वैनाशिकसमय उपपत्तये परीक्ष्यते यथा यथा तथा तथा सिकतासु कूपवद्विदीर्यत एव न कामप्युपपत्तिं पश्यामः, अतः सर्वथानुपपत्तेश्च न सुगतसमयः श्रद्धेय इत्याह सर्वथेति।

सर्वथानुपपत्तेश्च ॥ ३२ ॥ ६९ ॥ ५ ॥

॥ ३२ ॥

निरस्तः सुगतः। आर्हतः परो विवसनः, तन्मतं दूषयति नैकस्मिन्निति।

नैकस्मिन्नसंभवात् ॥ ३३ ॥ ७० ॥

आर्हतमते जीवोऽजीवश्चेति द्वौ पदार्थौ, जीवश्चेतनः शरीरपरिमाणः सावयवः, अजीवः षोढा, महीधरादिरेकः, आस्रवसंवरनिर्जरबन्धमोक्षाः पञ्च, आस्रवत्यनेन जीवो विषयेष्वित्यास्रव इन्द्रियसंघातः, संवृणोतीति संवरोऽविवेकः, निःशेषेण जीर्यत्यनेन कामक्रोधादिः क्लेश-

१ भाष्ये चसहितः पाठः।

ल्लुञ्चनतप्तशिलारोहणादिर्निर्जरः, कर्माष्टकेनापादिता जन्ममरणपरम्परा बन्धः, चत्वारि पापकर्माणि चत्वारि चाघातिपुण्यकर्माणि शास्त्रोक्तोपायेन तदष्टभ्यो विनिर्गतस्य जीवस्य सततोर्ध्वगमनं मोक्षः, एते सप्त सप्तभङ्गीरूपन्यायेन व्यवस्थाप्यन्ते, स्यादस्ति, स्यान्नास्ति, स्यादस्ति न चास्ति च, स्याद् वक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यः, स्यादस्ति न चास्ति चावक्तव्यश्चेति, स्याच्छब्द ईषदर्थवादी, तेषां प्रतिवादिनः सप्त, सद्वादी॰असद्वादी सदसद्वादी॰अनिर्वचनीयवादी सदनिर्वाच्यवादी॰असदनिर्वाच्यवादी सदसदनिर्वाच्यवादी चेति सप्त, त्वन्मते मोक्षोऽस्ति न वेति सद्वादिनः प्रश्ने॰ईषदस्तीत्युत्तरम्, एवमुत्तरषण्णां प्रश्ने षडुत्तराणि, ततः सर्वे नोत्तरं प्रतिपद्यन्ते, अतोऽस्य सप्तानां भङ्गात् सप्तभङ्गीन्यायस्य सत्त्वाज्जीवादिसप्तपदार्थानां सिद्धौ किं कारणान्तरेणेति प्राप्ते॰ आह नेति, सप्तभङ्गी॰अन्याय एव, एकस्मिन् धर्मिणि युगपत् सदसत्त्वादिविरुद्धधर्मसमावेशासंभवात्, शीतोष्णवत्, न च जीवस्य सावयवत्वम्, अनित्यत्वापत्तेः, इष्टापत्तौ कस्य मोक्षः पुरुषार्थः स्यात्, तस्मान्न्यायाभासेन सप्तभङ्ग्या न जीवादिसप्तसिद्धिः ॥ ३३ ॥

यत् तु पुद्गलसंज्ञेभ्योऽणुभ्यः संघातास्तद्व्यणुकारणवादनिराकरणेन निराकृतम्, एवं जीवस्याकार्त्स्न्यं निराकरोति॰ एवं चेति ।

## एवं चात्माऽकार्त्स्न्यम् ॥ ३४ ॥ ७१ ॥

जीवस्य शरीरपरिमाणत्वेऽकृत्स्नोऽसर्वगतः परिच्छिन्नश्चेत्यतो मध्यमपरिमाणाद् घटादिवदनित्यत्वप्रसङ्गः, एकस्यैव कर्मवशाद् गजपिपीलिकादिनानापरिमाणाज्जन्मन्यपि कौमारयौवनस्थविरत्वादनित्यत्वापत्तिश्च ॥ ३४ ॥

नन्वनन्तावयवो जीवः, तस्य सन्त एवावयवा अल्पशरीरे संकुचेयुः, महति विकसेयुरिति चेत्, तदपि दूषयति न चेति ।

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥ ७२ ॥

अनन्तावयवस्य देहपरिमाणत्वमविरोधेनोपपादयितुं न च शक्यं विकारादिदोषप्रसङ्गात्, अनिशमापूर्यमाणस्यापचीयमाणस्य च जीवस्य

विकारित्वमपरिहार्यमेव, विकारित्वे चर्मादिवदनित्यत्वम्, ततश्च बन्धमोक्षानुपपत्तिः, कर्माष्टकवेष्टितजीवस्यालाबुवत् संसारसागरमग्नस्य बन्धोच्छेदादूर्ध्वगामित्वं हि मोक्षस्तव, आगच्छतामपगच्छतां चावयवानामागमापायिधर्मत्वादेवानात्मत्वं शरीरादिवत्।

किंच॰ आगच्छन्तोऽपगच्छन्तश्च कुत आयान्ति कुतो लीयन्त इति वक्तव्यम्, न हि भूतेभ्य आगमापायौ, अभौतिकत्वादात्मनः, एवमन्येऽपि दोषा ऊहनीयाः॥ ३५॥

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः॥ ३६॥ ७३॥ ६॥

अपिच॰ अन्त्यस्य मोक्षावस्थायिनो जीवपरिमाणस्य नित्यत्वमिष्यते जैनैः, तद्वत् पूर्वयोरप्याद्यमध्यमपरिमाणयोरपि नित्यत्वप्रसङ्गादविशेषप्रसङ्गः स्यात्, एकपरिमाणतैव स्यात्, नोपचितापचितशरीरान्तरप्राप्तिः स्यात्, इत्यार्हतमतमप्यसदेव॥ ३६॥

'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा' दित्यादिनोपादानत्वमुक्तम्, तदसहमानास्तार्किकशैवादयः केवलं निमित्तत्वमात्रं मन्यन्ते, तद्दूषयति, तन्मते कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षायोपदिष्टाः, पशुपतिरीश्वरो निमित्तमात्रमिति, तत्रोत्तरं पत्युरसामञ्जस्यादिति।

पत्युरसामञ्जस्यात्॥ ३७॥ ७४॥

पत्युरीश्वरस्य प्रधानपुरुषयोरधिष्ठातृत्वेन कारणत्वम्, तच, असामञ्जस्यात्, हीनमध्यमोत्तमभावेन भेदाद् विदधत ईश्वरस्य रागद्वेषादिदोषप्रसक्तेरनीश्वरत्वापत्तेः, कर्मापेक्षत्वे परस्पराश्रयदोषप्रसङ्गः, अनादित्वे॰ अन्धपरम्परापत्तेः, तस्मादुपादाननिमित्तत्वम्॥ ३७॥

असामञ्जस्यान्तरमाह संबन्धेति।

संबन्धानुपपत्तेश्च॥ ३८॥ ७५॥

न प्रकृतिपुरुषातिरिक्त ईश्वरो विना संबन्धमीशिता, स च न

संयोगः, प्रधानपुरुषेश्वराणां निरवयवत्वात् सर्वगतत्वात्, न समवायः, आश्रयाश्रयिभावानिरूपणात् कार्यकारणभावस्यासिद्धत्वेन संबन्धान्तरासिद्धिः, अस्माकं तु तादात्म्यमेवास्ति श्रुतिबलात्, तव तु दृष्टान्तबलेन यथादृष्टमेव सर्वं न श्रुतिबलात्, आगमात् सर्वज्ञसिद्धिः सर्वज्ञप्रत्ययाच्चागमसिद्धिरित्यन्योन्याश्रयात्, तस्माच्च सांख्ययोगवादिनामीश्वरकल्पना, एवमन्यास्वपि वेदबाह्यकल्पनास्वसामञ्जस्यं योजनीयमित्युक्तं संबन्धेति ॥ ३८ ॥

किंच तार्किककल्पितमीश्वरस्य प्रवर्तकत्वं मृदादीन् प्रति कुम्भकार इव न संभवति, न ह्यप्रत्यक्षं नीरूपं प्रधानमधिष्ठेयं संभवति, मृदादिवैलक्षण्यात्, इत्याह· अधिष्ठानेति ।

अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥ ७६ ॥

॥ ३९ ॥

ननु यथा करणग्रामश्चक्षुरादिरप्रत्यक्षो रूपादिहीनश्च पुरुषाधिष्ठितः, एवं प्रधानमप्यधिष्ठास्यतीति चेन्न, पुरुषस्य भोगादिदर्शनात्, न चेश्वरस्य भोगादयः, अतो न प्रधानाधिष्ठातृत्वमित्याह करणेति ।

करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥ ७७ ॥

॥ ४० ॥

इतश्च तार्किकोक्तमीश्वरकल्पनं न सम्यक्, अनन्तं प्रधानमनन्ताश्च पुरुषा मिथो भिन्नास्त्वयाङ्गीक्रियन्ते, तत्र सर्वज्ञेनेश्वरेण प्रधानपुरुषादय आत्मानश्चेयत्तया परिच्छिद्यन्ते न वा, नाद्यः, प्रधानपुरुषाणां परिच्छिन्नत्वादनित्यत्वप्रसङ्गः, यद्धि लोके· इयत्तापरिच्छिन्नं घटादि तदन्तवद्दृष्टम्, द्वितीये· ईश्वरस्य सर्वज्ञतानुपपत्तिः, परिच्छिन्नविषयकज्ञानस्यापरिच्छिन्नेऽसंभवात्, तस्मादसंगतस्तार्किकसमय इत्याह अन्तवत्त्वेति ।

येषां पुनरीश्वरः प्रकृतिरधिष्ठाता चेत्युभयात्मकं कारणं तेषां मतं दूषयति॰ उत्पत्तीति ।

## उत्पत्त्यसंभवात् ॥ ४२ ॥ ७९ ॥

नन्विदमभिन्ननिमित्तोपादानत्वं सिद्धान्तेऽप्यनुमतमतः कथं दूषणमिति न, उभयरूपत्वे॰ अदूषणीयत्वेऽपि॰ अंशान्तरे दूषणीयत्वात्, यथा भागवता ईश्वरकारणतावादिनः (वासुदेवो निरञ्जनज्ञानस्वरूपः परमात्मा, स एव चतुर्धा भूत्वा वासुदेवव्यूहः परात्मा, संकर्षणव्यूहो जीवः, प्रद्युम्नो नाम मनः, अनिरुद्धोऽहङ्कारः, तत्र वासुदेवः परा प्रकृतिः, संकर्षणादयः कार्यम्, तं भगवन्तमिज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यते) इति वदन्ति, तदेकोऽनेकधा व्यूह्य स्थित इत्यादिरस्तु, यत् तु वासुदेवात् संकर्षणो जीव उत्पद्यते ततः प्रद्युम्नः प्रद्युम्नादनिरुद्ध इति, तद्दूष्यते, न जीवोत्पत्तिः, अनित्यत्वप्रसङ्गात्, तथा च भगवत्प्राप्तिर्मोक्षो नैव स्यात्, कारणप्राप्तौ कार्यस्य विलयप्रसङ्गात्, जीवस्यानित्यत्वं च श्रुत्यादिप्रतिषिद्धम्, तस्मान्नैवम् ॥ ४२ ॥

नहि जीवात् कर्तुः करणमुत्पद्यते, दृष्टं श्रुतं वा, नहि छिदाकर्तुः कुठाराद्युत्पत्तिर्दृष्टा श्रुता वा, इत्याह न चेति ।

## न च कर्तुः करणम् ॥ ४३ ॥ ८० ॥

॥ ४३ ॥

ननु नैते संकर्षणादयो जीवाः किंत्वीश्वरा एवैते, इत्युक्तेऽपि प्रकारान्तरेण दोषमाह विज्ञादीति ।

## विज्ञादिभावे वा तदप्रतिषेधः ॥ ४४ ॥ ८१ ॥

यदि भिन्ना एते तुल्यधर्माणः, तर्ह्यनेकेश्वरकल्पनावैयर्थ्यं भगवानेवैको वासुदेवः परमार्थतत्त्वमिति विरोधश्च, यदि चत्वारो व्यूहास्तुल्यधर्माणस्तर्हि॰पूर्वोक्तस्तदवस्थ एवोत्पत्त्यसंभवः, न च चतुर्णामुत्तरोत्तरमल्पत्वमिति न साम्यम्, ब्रह्मादिस्तम्बपर्यन्तस्य सर्वजगतो भगवद्व्यूहत्वेन चतुष्कस्यापार्थकत्वात् ॥ ४४ ॥

## विप्रतिषेधाच्च ॥ ४५ ॥ ८२ ॥ ८ ॥

विप्रतिषेधश्चात्र दृश्यते, गुणगुणित्वकल्पनया ज्ञानैश्वर्यशक्तिबल-वीर्यतेजांसि गुणाः, आत्मान एवैते भगवन्तो वासुदेवाद्या इत्यादिदर्शनात्, तच्च वेदान्तविरुद्धं चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं भागवतशास्त्रमधीतवानित्यादिवेदनिन्दादर्शनात्, तस्मादसंगतैषां कुसृष्टिः ॥ ४५ ॥

इति ब्रह्मसूत्रे द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥ :: :: ॥

अत्र तर्कपादेऽधिकरणानि ॥ ८ ॥ * * ॥

इति ब्रह्मसूत्रतात्पर्यविवरणे द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

## ॥ शाश्वतधर्मदीपिका ॥

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्राश्च स्थाविरे काले नास्ति स्त्रीणां स्वतन्त्रता ॥

इति वदन् दान्त एव प्रसन्नया तया विसृष्टः पुनरेत्य तामेव कन्यकां प्रीतात्कुबेरलभतेति ।

अस्तेयं च अन्यायेन परधनग्रहणाभावरूपं तदपि चौर्यस्य ब्राह्मणसुवर्णादिविषयस्य ब्रह्महा मद्यपः स्तेनः, धान्यकुप्यपशुस्तेय,मित्यादिना महापापोपपापरूपत्वाभिधानात्तेषां च निषेधविषयत्वात्तत्परिपालनरूपतया धर्म एव । पापं कृत्वा प्रायश्चित्तमनुष्ठितवन्तमपेक्ष्य पापमकृतवतः फलभूयस्त्वावश्यकत्वादिति राद्धान्तितं तान्त्रिकैः ।

इदं च महतो दोषस्य सार्वजनिक्याश्च निन्दाया निरासकमिति प्रसिद्धमेवाबालमित्यलमत्र वचनोपन्यासेन ।

शौचं चोचितमृज्जलादिभिर्देहशोधनरूपं स्वस्ववर्णाश्रमादिषु नित्यतया चोदितानां सन्ध्योपास्त्यादीनामाचरणरूपं च । एतस्यावश्यकत्वं च युधिष्ठिरादीन्प्रति मुनिवचनादवसीयते वनप० अ ९३ ।

आत्मा नदी संयमपुण्यतीर्था सत्योदका शीलतटा दयोर्म्मिः ।
तत्राभिषेकं कुरुपाण्डुपुत्र न वारिणा शुध्यति चान्तरात्मा ॥
युधिष्ठिर यमो भीम मनसा कुरुतार्जवम् ।
मनसा कृतशौचा हि शुद्धास्तीर्थानि यास्यथ ॥ २० ॥
शरीरनियमं प्राहुर्ब्राह्मणा मानुषं व्रतम् ।
मनोविशुद्धां बुद्धिं च दैवमाहुर्व्रतं द्विजाः ॥ २१ ॥
मनो ह्यदुष्टं शौचाय पर्याप्तं वै नराधिप ।
मैत्रीं बुद्धिं समास्थाय शुद्धास्तीर्थानि द्रक्ष्यथ ॥ २२ ॥
ते यूयं मानसैः शुद्धा शरीरनियमव्रतैः ।
दैवं व्रतं समास्थाय यथोक्तफलमाप्स्यथ ॥ २३ ॥ इदं च
संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यद्यन्द्धि कुरुते कर्म न तस्य फलभाग्भवेत् ॥

इत्यादिना एका लिङ्गे गुदे तिस्र इत्यादिना च प्रपञ्चितं स्मृतिषु निरूपितं च मान्यनिबन्धेष्विति तत एवावगन्तुं सुशकमिति विस्तरभीरुभिरस्माभिस्तत उपरम्यते । बाह्यशौचापेक्षयाऽऽन्तरस्य तस्य प्रशस्यताऽऽन्तराभावे बाह्यतद्वैयर्थ्यं चोपपादयति शान्तनवः । आनु० अ०१०८ ।

सर्वाणि खलु तीर्थानि गुणवन्ति मनीषिणः ।
यत्तु तीर्थं च शौचं च तन्मे शृणु समाहितः ॥
अगाधे विमले शुद्धे सत्यतोये धृतिह्रदे ।
स्नातव्यं मानसे तीर्थे सत्त्वमालम्ब्य शाश्वतम् ॥
तीर्थशौचमनर्थित्वमार्जवं सत्यमार्दवम् ।
अहिंसा सर्वभूतानामानृशंस्यं दमः शमः ॥
निर्ममा निरहंकारा निर्द्वन्द्वा निष्परिग्रहाः ।
शुचयस्तीर्थभूतास्ते ये भैक्ष्यमुपभुञ्जते ॥

तत्ववित्त्वनहंबुद्धिस्तीर्थप्रवरमुच्यते ।
शौचलक्षणमेतत्ते सर्वत्रैवान्ववेक्षत: ॥
रजस्तम: सत्वमथो येषां निर्धौतमात्मन: ।
शौचाशौचसमायुक्ता: स्वकार्यपरिमार्गिण: ॥
सर्वत्यागेष्वभिरता: सर्वज्ञा: समदर्शिन: ।
शौचेन वृत्तशौचार्थास्ते तीर्था: शुचयश्च ये ॥
नोदकक्लिन्नगात्रस्तु स्नात इत्यभिधीयते ।
स स्नातो यो दमस्नात: स बाह्याभ्यन्तर: शुचि: ॥
अतीतेष्वनपेक्षा ये प्राप्तेष्वर्थेषु निर्ममा: ।
शौचमेव परं तेषां येषां नोत्पद्यते स्पृहा ॥
प्रज्ञानं शौचमेवेह शरीरस्य विशेषत: ।
तथा निष्किञ्चनत्वं च मनसश्च प्रसन्नता ॥
वृत्तशौचं मन:शौचं तीर्थशौचमत: परम् ।
ज्ञानोत्पन्नं च यच्छौचं तच्छौचं परमं स्मृतम् ॥
मनसा च प्रदीप्तेन ब्रह्मज्ञानजलेन च ।
स्नाति यो मानसे तीर्थे तत्स्नानं तत्त्वदर्शिन: ॥
समारोपितशौचस्तु नित्यं भावसमाहित: ।
केवलं गुणसंपन्न: शुचिरेव नर: सदा ॥
शरीरस्थानि तीर्थानि प्रोक्तान्येतानि भारत ।
पृथिव्यां यानि तीर्थानि पुण्यानि शृणु तान्यपि ॥
शरीरस्य यथोद्देशा: शुचय: परिकीर्तिता: ।
तथा पृथिव्या भागाश्च पुण्यानि सलिलानि च ।
कीर्तनाच्चैव तीर्थस्य स्नानाच्च पितृतर्पणात् ।
धुनन्ति पापं तीर्थेषु ते प्रयान्ति सुखं दिवम् ॥

परिग्रहाच्च साधूनां पृथिव्याश्चैव तेजसा ।
अतीव पुण्यभागास्ते सलिलस्य च तेजसा ॥
मनसश्च पृथिव्याश्च पुण्यास्तीर्थास्तथा परे ।
उभयोरेव यः स्नायात्स सिद्धं शीघ्रमाप्नुयात् ॥
यथा बलं क्रियाहीनं क्रिया वा बलवर्जिता ।
नेह साधयते कार्यं समायुक्ता तु सिध्यति ।
एवं शरीरशौचेन तीर्थशौचेन चान्वितः ॥
शुचिः सिद्धिमवाप्नोति द्विविधं शौचमुत्तमम् ।

इत्यादिना च मानसशौचपूर्वकतीर्थशौचस्यैव तत्तत्तीर्थोपसेवनजनितफलदातृत्वमुक्तम् । अत एवान्यत्रोक्तम् ।

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ इति ।
कीकटेन समा काशी गङ्गाप्यङ्गारवाहिनी ।

इत्यादिनाऽपरिशुद्धचेतसस्तीर्थफलाभावो दर्शितः । यत्तु वन्ह्यादीनां बुद्धिपूर्वमबुद्ध्या वा स्पृष्टानां दाहजनकत्वमिव तीर्थानां साधुभिः पापिभिर्वा सेवितानां फलदातृत्वं पुराणादौ प्रदर्शितं तन्मनोमालिन्यनाशपूर्वकशौचापादनद्वारेणेति बोध्यम् । तत्तत्तीर्थप्रशंसार्थवादा एव तदिति केचित् । वनप॰अ॰८२

पुलस्त्येनापि युधिष्ठिरं प्रतीदमेवोक्तम् । यस्य हस्तौ च पादौ चेत्यादि ।

प्रतिग्रहादपावृत्तः संतुष्टो येन केन चित् ।
अहंकारनिवृत्तश्च स तीर्थफलमश्नुते ॥
अकल्कको[१] निरारम्भो लघ्वाहारो जितेन्द्रियः ।
विमुक्तः सर्वपापेभ्यः स तीर्थफलमश्नुते ॥

१ दम्भादिहीनः । कल्कः शाठ्ये च दम्भे चेति विश्वः ।

अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥ इति।

इन्द्रियनिग्रहश्च प्रशस्ततमस्तेनैव सर्वकार्याणां सुसाधत्वात्। एकस्यापीन्द्रियस्याजये संभवन्ति महान्तो ऽनर्थाः किमुत पञ्चानाम्। निदर्शयन्ति चात्र विपश्चितः।

एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च।
कुरङ्गमातङ्गपतङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्चेति ॥

उ॰ अ॰ ३३

पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम्।
तेनास्य क्षरति प्रज्ञादृतेः पादादिवोदकम् ॥ ७१ ॥

उ॰ अ ३४

यो जितः पञ्चवर्गेण सहजेनात्मकर्षिणा।
आपदस्तस्य वर्धन्ते शुक्लपक्षइवोडुराट् ॥ ५९ ॥
धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ ६२ ॥
अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः।
इन्द्रियाणामनैश्वर्यादैश्वर्याद्भ्रश्यते हि सः ॥ ६३ ॥
यः पञ्चाभ्यन्तरान् शत्रूनविजित्य मनोमयान्।
जिगीषति रिपूनन्यान् रिपवोऽभिभवन्ति तम् ॥ ६८ ॥
दृश्यन्ते हि महात्मानो बध्यमानाः स्वकर्मभिः।
इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः ॥ ६९ ॥
निजानुत्पततः शत्रून् पञ्च पञ्चप्रयोजनान्।
यो मोहान्न निगृह्णाति तमापद्ग्रसते नरमिति ॥ ७१ ॥

अत एव ययातिना पूरोर्यौवनं गृहीत्वा चिरं सुखान्यनुभूयाप्यतृप्तेन पुनः पुत्राज्जरा जगृहे गीतं च । आदिप॰ अ॰ ७५

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥
पृथिवी रत्नसंपूर्णा हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥
यदा न कुरुते पापं सर्वभूतेषु कर्हि चित् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥
यदा चायं न बिभेति यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥
इत्यवेक्ष्य महाप्राज्ञः कामानां फल्गुतां नृप ।
समाधाय मनो बुध्या प्रत्यगृण्हाज्जरां सुतात् ॥

इति । निन्दन्ति च ।

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥

प्रशंसन्ति च ।

वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥

उ॰ अ॰ ३४ ।

रथः शरीरं पुरुषस्य राज-
न्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशली सदश्वै-
र्दान्तैः सुखं याति रथीव धीरः । ५८ इति ।

अयं चेन्द्रियनिग्रहः पुंसामिव स्त्रीणामप्यावश्यकोऽन्ये चैतत्प्रकरणोक्ताः सामान्यधर्मा विशेषतो भर्तृशुश्रूषा च । अत एव दमयन्तीं प्रति नलवाक्यम् । वन॰ अ॰ ७४ ।

वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः ॥ २५ ॥
रहिता भर्तृभिश्चैव न कुप्यन्ति कदा चन ।
प्राणांश्चारित्रकवचान्धारयन्ति वरस्त्रियः ॥ २६ ॥

तत्रासां नियमाः सुमनाशाण्डिलीसंवादे संक्षिप्य दर्शिताः आनु॰ १२३ ।

युधिष्ठिर उवाच ।

सत्स्त्रीणां समुदाचारं सर्वधर्मविदां वर ।
श्रोतुमिच्छाम्यहं त्वत्तस्तन्मे ब्रूहि पितामह ॥

भीष्म उवाच ।

सर्वज्ञां सर्वतत्वज्ञां देवलोके मनस्विनीम् ।
कैकेयी सुमना नाम शाण्डिलीं पर्यपृच्छत ॥
केन वृत्तेन कल्याणि समाचारेण केन वा ।
विधूय सर्वपापानि देवलोकं त्वमागता ॥
हुताशनशिखेव त्वं ज्वलमाना स्वतेजसा ।
सुता ताराधिपस्येव प्रभया दिवमागता ॥
अरजांसि च वस्त्राणि धारयन्ती गतक्लमा ।
विमानस्था शुभा भासि सहस्रगुणमोजसा ।
न त्वमल्पेन तपसा दानेन नियमेन वा ॥
इमं लोकमनुप्राप्ता त्वं हि तत्वं वदस्व मे ।
इति पृष्टा सुमनया मधुरं चारुहासिनी ।
शाण्डिली निभृतं वाक्यं सुमनामिदमब्रवीत् ॥
नाहं काषायवसना नापि वल्कलधारिणी ।
न च मुण्डा च जटिला भूत्वा देवत्वमागता ॥

१ सतीभिरिति शेषः ।

अहितानि च वाक्यानि सर्वाणि परुषाणि च।
अप्रमत्ता च भर्त्तारं कदा चिन्नाहमब्रुवम्॥
देवतानां पितॄणां च ब्राह्मणानां च पूजने।
अप्रमत्ता सदा युक्ता श्वश्रूश्वशुरवर्तिनी[१]॥
पैशुन्ये न प्रवर्त्तामि न ममैतन्मनोगतम्।
अद्वा[२]रि न च तिष्ठामि चिरं न कथयामि च॥
असद्वा हसितं किं चिदहितं वापि कर्मणा।
रहस्यमरहस्यं वा न प्रवर्त्तामि सर्वथा॥
कार्यार्थे निर्गतं चापि भर्त्तारं गृहमागतम्।
आसनेनोपसंयोज्य पूजयामि समाहिता॥
यदन्नं नाभिजानाति यद्भोज्यं नाभिनन्दति।
भक्ष्यं वा यदि वा लेह्यं तत्सर्वं वर्जयाम्यहम्॥
कुटुम्बार्थे समानीतं यत्किं चित् कार्यमेव तु।
प्रातरुत्थाय तत्सर्वं कारयामि करोमि च॥
प्रवासं यदि मे याति भर्त्ता कार्येण केन चित्।
मङ्गलैर्बहुभिर्युक्ता भवामि नियता तदा॥
अञ्जनं रोचनां चैव स्नानं माल्यानुलेपनम्।
प्रसाधनं च निष्क्रान्ते नाभिनन्दामि भर्त्तरि॥
नोत्थापयामि भर्त्तारं सुखसुप्तमहं सदा।
आ[३]न्तरेष्वपि कार्येषु तेन तुष्यति मे मनः॥
नायासयामि भर्त्तारं कुटुम्बार्थेपि सर्वदा।
गुप्तगुह्या सदा चास्मि सुसंमृष्ट[४]निवेशना॥

१ वशगा। २ गवाक्षादौ। ३ आवश्यकेष्वपि। ४ सम्यक् पवित्रितगृहा।

इमं धर्मपथं नारी पालयन्ती समाहिता ।
अरुन्धतीव नारीणां स्वर्गलोके महीयते ॥

एवंविधैरन्यैश्च पत्यनुमोदितैर्व्रतोपवासनियमादिभिराचारैस्त साधयन्त्या न स्त्रिया केवलं स्वश्रेयः साधयितुं शक्यते मुनिवर्यैरप्यसाध कर्मापि सुकरं भवति । यथा त्रैकालिकं ज्ञानं मुनीनामपि क्रोधेन दुःखा भावः । यथा वनप॰अ॰१॰५

आसीत्पुरा द्विजातिः कौशिकनामा । सोऽयं कदाचिद्वेदानुच्चार यन् कस्मिंश्चिद्वृक्षमूले स्थितोऽभूत् । तस्मिन्वृक्षाग्रे कापि बलाका वि· लीयामेध्यं पुरीषादिकं तस्योपर्यसृजत् । ततस्तामवेक्ष्यातीव रुष्टो विप्रो रोषारुणेन चक्षुषा प्रदहन्निव तां प्राणैर्वियोजयामास । तदनु तामचेतनां दृष्ट्वा कारुण्यात् रोषेणाकार्यमहं कृतवानस्मीति भृशं शुशोच । एवं संतप्तो ऽयं भैक्ष्यार्थं शुचीनि द्विजकुलानि पर्यटन् किं चित्पतिव्रतागृहमवजगाहे । तत्र सा देहीति याचमानमेनं दृष्ट्वा तिष्ठेत्युक्त्वा क्षुधापीडितं पतिं चालोक्य पत्युरेव परिचरणपराऽभवत् । तस्मिंश्च तुष्टे सति भैक्ष्यकाङ्क्षिणमेनं नि· रीक्ष्य भिक्षामुपहृत्योपाजगाम । कौशिकस्तु रुष्टः सन् मां तिष्ठेति उक्त्वा उपरोधं मम कृत्वा न विसर्जितवतीत्युवाच । सा तं रुष्टं विज्ञायातिन· म्राभिर्वाग्भिः प्रशस्य पतिशुश्रूषणावृत्तमकथयत् । एतां वाचमाकर्ण्य द्वि· गुणितरोषः कौशिको ब्राह्मणमविगणय्य पतिस्त्वया सेवितो न जानीषे ऽग्निकल्पानां ब्राह्मणानां प्रभावमित्युक्त्वा विरराम । एतन्निशम्य भा· षितं कौशिक नाहं बलाका रुष्टोऽपि त्वं किं करिष्यसि पतिदेवताया मे परन्त्विममपराधं क्षमस्व यस्मात्पतिशुश्रूषणात्त्वया दग्धा बलाका मया ज्ञाता त्वं तु विद्वानपि तत्त्वतो धर्मं न जानासि ज्ञातुमिच्छसि चेन्मि· थिलां पुरीं गत्वा धर्मव्याधं पृष्ट्वा धर्मांस्तत्त्वतो ज्ञास्यसि मयोक्तं च सर्वं क्षमस्वेत्युवाच । तदनु सोऽयं कौशिकः स्वस्त्यस्तु इत्युक्त्वातीव संतप्तः स्वभवनं ययौ । एतत्सर्वं पतिशुश्रूषणाज्जातम् ।

एवं[1] सावित्री गतप्राणं स्वपतिं सत्यवन्तमजीवयत्स्वमाहात्म्ये· नैव । तथा हि ।

[1] इयं कथा वनपर्वणि २९१ अध्यायप्रभृति ।

आसीत्किल पुरा समस्तक्षमार्जवादिगुणगणनिधिर्मद्रदेशेष्वश्वपतिर्नाम राजा । अयं चातिकालं राज्यभारं वहन्ननपत्यतया दूयमानमानसः पुत्रोत्पादने कृतनियमः सावित्र्या ऋचा तीव्रं होमादिकं कृत्वा षष्ठे काले मितभोजनो ऽभवत् । इति तपस्यतोऽस्याष्टादशसु वर्षेषु गतेषु प्रसन्नाऽग्निहोत्रात्समुत्थाय सावित्री दृष्टिपथमाजगामावादीच्च । भो अश्वपते तपसा तव तुष्टाहं यथेप्सितं वरं वृणीष्वेति । इति गिरं निशम्य देवि तुष्टासि चेत्कुलरक्षकान्बहून् पुत्रान्देहीत्ययाचत । इत्यभ्यर्थनां श्रुत्वा राजन्पूर्वमेव मया तवाभिप्रायं बुद्ध्वोक्तस्य भगवतः पितामहस्य प्रसादात्त्वं तेजस्विनीं कन्यां प्राप्स्यसीत्युक्त्वान्तरधात् । तदनन्तरमश्वपतिः स्वनगरं प्राप्य चिरं प्रजाः पालयन् ज्येष्ठायां महिष्यामादधे गर्भम् । तदनु प्रतिदिनं शुक्लपक्षे उपचीयमानं तारापतिमिव गर्भं यथोचितकाले प्रासूत देवी । राजा चातिहर्षसमन्वितः सावित्रीप्रसादलब्धाया दुहितुः सावित्रीत्येव नाम चकार । सा मूर्त्तिमती श्रीरिव वर्द्धमाना बाल्यात्परामवस्थां प्राप । तस्यास्तेजसा निवारितः कोपि तां परिणेतुं नाशकत् । सा कदा चिदुपोष्य शिरःस्नाता देवान् द्विजांश्च पूजयित्वाग्निं च संतर्प्य तत्प्रसादं परिगृह्य पितुश्चरणौ नत्वा कृताञ्जलिस्तस्यैव पार्श्वे स्थिता ऽभवत् । राजा च तां यौवनोपेतां वरैरयाच्यमानां सुतां निरीक्ष्य पुत्रि स्वयमेवात्मनोऽनुरूपं पतिं संप्रार्थ्य निवेद्य च मह्यं वरयेत्युक्त्वानुयात्रार्थं तस्याः स्थविरान्सचिवांश्च प्रेषयामास । साभिवाद्य पितुश्चरणौ हैमं रथमास्थाय वनादुनं प्रविशन्त्याश्रमांस्तीर्थानि च जगाम । गत्वा च सा बहूनि वनानि मनसा वरं च निश्चित्य पुनरपि पितुः सदेशमागत्य नारदेन सह संभाषमाणं तमभिवाद्य क्व गतेयमस्याश्च विवाहः कथं न कृत इति नारदपृष्टेन पित्रानेनैव कार्येण प्रेषितेयमद्यैवागतेत्यभिधाय कः पतिस्त्वया वृत इति पृष्टेयमुदाजहार गिरम् । अभूच्छाल्वेष्वतिधर्मात्मा द्युमत्सेन इति ख्यातो राजा । सोयं जातपुत्रोन्धो भूत्वा शत्रुभिर्हृतराज्यः सन् बालवत्सलया स्वपत्न्या सह वनानि प्रविश्य तप आचचार । तेषु वनेषु संवृद्धस्य पुत्रः सत्यवान्मेनुरूपः पतिरिति । अस्या वचनमाकर्ण्य

राज्ञास्य गुणदोषान्वर्णयेति पृष्टो नारदो नृप सर्वगुणालङ्कृतोप्ययमेकेना-ब्दप्रभृतिवत्सरान्ते मरणरूपेण महादोषेणाक्रान्त इत्युवाच। इति वचनं निशम्य राज्ञा पुत्र्ययं वत्सरान्ते देहन्यासं करिष्यतीत्युक्तेयं महाराज

सकृदंशो निपतति सकृत्कन्या प्रदीयते।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत्॥

तस्मात्सकृद्वृतोयं नान्यं वृणोमीत्युवाच। नारदेनापि वाचमेनामनुमन्यस्व राजन्नैषा कथं चन वार्येत्युक्तो राजा तथेति प्रतिश्रुत्य नारदे गते सति वैवाहिकं सज्जं कृत्वातिशुद्धान्सपुरोहितान्ब्राह्मणानाहूय पुण्यदिने कन्यया तैश्च सह पद्भ्यामेव द्युमत्सेनाश्रमं मेध्यारण्यं जगाम। तत्र शालवृक्षमुपाश्रितं कुशासनोपविष्टं चक्षुर्विहीनं नृपमवलोक्य यथार्हं संपूज्य भो राजर्षे कन्यां मम स्नुषार्थं गृहाणेत्यभाषत। सोपि द्युमत्सेनोङ्गीकृत्य तत्रत्यान्द्विजानाहूय विवाहं कारयामास। अश्वपतिश्च यथार्हं वधूवरयोर्हर्षसमन्वितो भूषणादीनि दत्वा स्वराज्यं प्रति ययौ। गते पितरि सावित्र्याभरणान्यवमुच्य वल्कलान्येव धृत्वा पर्यतोषयत्परिचर्यया सर्वानेव। एवं बहुले काले गते सर्वदा दिनानि गणयन्ती सावित्री मरणदिवसेषु चतुर्ष्ववशिष्टेषु त्रैरात्रिकं व्रतं कृत्वा मरणदिवसे समायाते दीप्तमनलं हुत्वा सर्वान्द्विजातींश्चाभिवाद्य तैर्दीयमाना अवैधव्याशिषो मनसा प्रतिगृह्य भर्त्तरि वनं गन्तुं समुपस्थिते सति तस्याज्ञया श्वशुरयोश्चाज्ञया स्वयमपि विविधानि वनानि नदीश्चावलोकमाना पतिमनुजगाम। तदनु सत्यवान्कानि चित्फलानि प्रतिगृह्य काष्ठानि पाटयन् जातशिरोवेदनस्तत्रैव भूतले निषीदन्त्याः सावित्र्या उत्सङ्गे शिरः कृत्वाऽस्वपत्। सावित्री च तस्य पार्श्वभागे स्थितं रक्ताक्षं कमपि पुरुषं दृष्ट्वा चकितहृदया भर्त्तुः शिरो भूतले शनैर्न्यस्य सहसोत्थाय कृताञ्जलिर्देवेश कस्त्वं किं चिकीर्षसीति जगाद। स च पुरुषः हे सावित्रि पतिव्रतासीत्यभिभाषे मां यमं विद्धि भृत्यैर्ग्रहीतुमशक्यस्य क्षीणायुषस्तव पत्युर्नयनमेव मम चिकीर्षितमित्युक्त्वा पाशेन तच्छरीरान्तःस्थितमङ्गुष्ठमात्रं पुरुषं बलादाचकर्ष। तदनु निर्गतश्वासं हतप्रभं देहं विहायान्तःस्थितं पुरुषं बद्धा यान्तमन्तकं सावित्र्य-

नुजगाम। तां दृष्ट्वा यमोऽपि गच्छ कुरुष्वास्यौर्ध्वदैहिकीं क्रियामित्युक्त्वा विरराम। सावित्र्यपि श्रवणकटुभूतां तां गिरमाकर्ण्य यत्र मे नीयते भर्ता तत्रैव मया गन्तव्यमेष एव सनातनो धर्मो गुरुशुश्रूषया पतिभक्त्या च तव प्रसादात्क्वुत्रापि मम गतिर्न प्रतिहता परं च साप्तपदीनं सख्यं भवतीति मित्रतां पुरस्कृत्य कथ्यमानां वाचं शृणिवत्युक्त्वाऽवादीत्।

नानात्मवन्तस्तु वने च[१]रन्ति धर्मं च वासं च परिश्रयं च।
विज्ञानतो धर्ममुदाहरन्ति तस्मात्सन्तो धर्ममाहुः प्रधानम्॥
एकस्य धर्मेण सतां मतेन सर्वे स्म तं मार्गमनुप्रपन्नाः[२]।
मा वै द्वितीयं मा तृतीयं च वाञ्छे तस्मात्सन्तो धर्ममाहुः प्रधानम्॥

यमश्चैव तुष्टात्माऽस्य जीवितं विना वरं वृणीष्वेत्यवदत्। सापि श्वशुरस्य नष्टे चक्षुषी अयाचतावादीच्चातिधर्म्या पुनरपि गिरम्। तामाकर्ण्य पुनः प्रसन्नेन वैवस्वतेन वरं वृणीष्वेत्यनुज्ञातेयं श्वशुरस्य राज्यं वव्रेऽभाषत च॥

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा।
अनुग्रहश्च दानं च सतां धर्मः सनातनः॥
एवं प्रायश्च लोकोऽयं मनुष्याशक्तिपेश[३]लाः।
सन्तस्त्वेवाप्यमित्रेषु दयां प्राप्तेषु कुर्वते[४]॥

तदनु गिरमिमामाकर्ण्य पुनरपि वरयेत्युक्ता सावित्री पितुः पुत्रशतं संप्रार्थ्यावादीत्॥

---

१ अजितेन्द्रियाः वने यज्ञादिरूपं धर्मं गुरुकुलवासं परित्यागरूपं तुर्याश्रमं प्रतिनिवृत्तः कर्मफलश्रयो यत्र तादृशं वा न चरन्ति। सन्तश्च विज्ञानाय धर्मं वदन्त्यत एव तं प्रधानमाहुः। अहं च तादृक्त्वादनुग्राह्येति भावः।

२ सतामिष्टेनैकस्याश्रमस्य धर्मेण सर्वे वयं तं ज्ञानमार्गं प्राप्ताः। अतः गृहस्थाश्रमाद्द्वितीयं तृतीयं वा न वाञ्छामि तद्भर्तृहरणेन मम धर्मं मा नाशयेति भावः।

३ मनुष्याः शक्तिकौशलहीना इत्यर्थः। संधिरार्षः।

४ तादृशा अपि सन्तो मनुष्याः शरणं प्राप्तेषु शत्रुष्वपि दयां कुर्वते किं पुनस्त्वादृशा इति भावः।

आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः।

तस्मात्सत्सु विशेषेण सर्वः प्रणयमिच्छति।

इत्याकर्ण्य पुनस्तुष्टेन तेन वरं चतुर्थं वरयेत्युक्ता स्वात्मजं सत्यवत औरसं पुत्रशतमयाचत। पुनरपि जगाद गिरम्॥

सतां सदा शाश्वतधर्मवृत्तिः सन्तो न सीदन्ति न च व्यथन्ति।

सतां सद्भिर्नाफलः संगमोऽस्ति सद्भ्यो भयं नानुवर्तन्ति सन्तः॥

सन्तो हि सत्येन नयन्ति सूर्यं सन्तो भूमिं तपसा धारयन्ति।

सन्तो गतिर्भूतभव्यस्य राजन्सतां मध्ये नावसीदन्ति सन्तः। इति॥

इति च निशम्यातिहृष्टेन यमेन पुनरपि यदिच्छसि तत्सर्वं वरं वृणीष्वेत्युक्ता पत्युर्जीवितमाचकाङ्क्ष। सोपि तथैवेति प्रतिश्रुत्यायं मुक्तस्ते पतिस्त्वयि शतं पुत्राणामुत्पाद्य त्वया सह चतुर्वर्षशतायुरवाप्स्यतीत्युक्त्वा जगाम स्वपुरम्। सा च पतिकलेवरसमीपमागत्य यदि शक्यं तर्ह्युत्तिष्ठेत्युक्त्वा विरराम। सोपि संज्ञां लब्ध्वा तं कालपुरुषमपश्यन्सहसोत्थाय अतिगाढां रजनीं च पश्यन्नपि पितृविरहेण तत्र स्थातुमशक्तस्तया सहाश्रमं प्रविश्य तत्र स्वानागमनदुःखितयोः पित्रोश्चरणयोः प्रणिपपात। सा च श्वशुरौ नमस्कृत्योपाविशत्। एतदन्तरे राजापि लब्धचक्षुर्ब्राह्मणैः सह विस्मितः सन्किमिति विलम्बः कृत इति पप्रच्छ स्नुषाम्। सापि यथातत्वं सर्वमेव न्यवेदयत्। तद्वाक्यात्सर्वे तुष्टाः प्रशस्य सावित्रीं यथागतं जग्मुः। तदनु अपरेन्हि सर्वाः प्रकृतयो राज्यादागत्य शत्रून्निहतानाचख्युः स्वेनामात्येन। तच्छ्रुत्वा लब्धचक्षू राज्यलाभादतिहृष्टः सन्स्वराज्यं सर्वैः पुत्रादिभिर्द्युमत्सेनः प्रतिजगाम। तत्र पुरोहितेनाभिषिक्तः पुत्रं च यौवराज्येऽभिषिच्य परां मुदमवापत्। ततश्च बहुतिथे काले गते सति सावित्र्याः पुत्रशतं भ्रातृशतं च जज्ञे। एतत्सर्वं पातिव्रत्येन लब्धमिति निश्चितमेव।

धीश्च शास्त्रादितत्वज्ञानम्। तच्च स्वस्ववर्णाश्रमाद्युचितानुष्ठाननिदानतयाऽऽवश्यकमेव। यथाह मनुः।

सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।
श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै ॥ इति ।

विद्या चात्मज्ञानम् । एतच्च सकलप्रयोजनमौलिभूतं स्वप्राप्तिक्षणएव निरस्तसमस्तदुःखमिति महानुद्घोषः सर्वतन्त्रेष्विति प्रसिद्धमेव । सर्वेषां च धर्माणां साक्षात्परंपरया वात्मज्ञानोपयोगित्वादिदमवश्यसंपाद्यमित्यप्यभिव्यक्तमेव । यथार्थाभिधानरूपं सत्यं सर्वत्रैव नितरां प्रशस्यते ।

मो॰ अ॰ १९९

न यज्ञफलदानानि नियमास्तारयन्ति हि ।
यथा सत्यं परे लोके तथेह पुरुषर्षभ ॥ ६२ ॥
तपांसि यानि चीर्णानि चरिष्यन्ति च यत्तपः ।
शतैः शतसहस्रैश्च तैः सत्यान्न विशिष्यते ॥ ६३ ॥
तुलामारोपितो धर्मः सत्यं चैवेति नः श्रुतम् ।
समकक्षां तुलयतो यतः सत्यं ततोऽधिकम् ॥ ६६ ॥
यतो धर्मस्ततः सत्यं सर्वं सत्येन वर्धते । इति ।

मार्कण्डेयेनापि । आनु॰ अ॰ २२

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
नाभिजानामि यद्यस्य सत्यस्यार्धमवाप्नुयादिति ॥ १४ ॥

स्वमतमुपवर्णयता सत्यस्य सर्वेभ्य उत्कर्षः प्रख्यापितः ।

दमयन्त्या च । वनप॰ अ॰ ६३ ।

चत्वार एकतो वेदाः साङ्गोपाङ्गाः सविस्तराः ।
स्वधीता मनुजव्याघ्र सत्यमेकं किलैकत इति ॥

सर्वेभ्यो वेदेभ्यः सत्यस्योत्कर्ष उदघुष्यत । स्वयमवोचच्च ।

वनप॰ अ॰ ७३ ।

न स्मराम्यनृतं किंचिन्न स्मराम्यपकारिताम् ।
न च पर्युषितं वाक्यं स्वैरेष्वपि कदा चनेति ।

अत एव सा शेपे सत्येनैव । वनप· ७६ ।

स्पृशेयं तेन सत्येन पादावेतौ महीपते ।
यथा नासत्कृतं किं चिन्मनसापि चराम्यहम् ॥
एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्ति वै ।
विब्रुवन्तु यथा सत्यमेतद्देवास्त्यजन्तु माम् ॥

एवं भीष्मवचनमपि ।

परित्यजेयं त्रैलोक्यं राज्यं देवेषु वा पुनः ।
यद्वाप्यधिकमेताभ्यां न तु सत्यं कथं चन ॥

आप· अ· ३२ ।

सत्यं सत्सु सदा धर्मः सत्यं धर्मः सनातनः ।
सत्यमेव नमस्येत सत्यं हि परमा गतिः ॥
सत्यं धर्मस्तपो योगः सत्यं ब्रह्म सनातनम् ।
सत्यं यज्ञः परः प्रोक्तः सर्वं सत्ये प्रतिष्ठितम् ॥
आचारानिह सत्यस्य यथावदनुपूर्वशः ।
लक्षणं च प्रवक्ष्यामि सत्यस्येह यथाक्रमम् ॥
प्राप्यते च यथा सत्यं तच्च श्रोतुमिहार्हसि ।
सत्यं त्रयोदशविधं सर्वलोकेषु भारत ॥
सत्यं च समता चैव दमश्चैव न संशयः ।
अमात्सर्यं क्षमा चैव ह्रीस्तितिक्षानसूयता ॥
त्यागो ध्यानमथार्यत्वं धृतिश्च सततं दया ।
अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश ॥ इति ।

एतन्मूलकमेवोक्तम् । आदिप· अ ७४ ।

अन्यान्परिवदन् साधुर्यथा हि परितप्यते ।
तथा परिवदन्नन्यांस्तुष्टो भवति दुर्जनः ॥
अभिवाद्य यथा वृद्धान्सन्तो गच्छन्ति निर्वृतिम् ।
एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः ॥
सुखं जीवन्त्यदोष[१]ज्ञा मूर्खा दोषानुदर्शिनः ।
यत्र वाच्याः परैः सन्तः परानाहुस्तथाविधान् ॥
अतो हास्यतरं लोके किं चिदन्यन्न विद्यते ।
यत्र दुर्जनमित्याह दुर्जनः सज्जनं स्वयम् ॥
सत्यधर्मच्युतात्पुंसः क्रुद्धादाशीविषादिव ।
अनास्ति[२]कोप्युद्विजते जनः किं पुनरास्तिकः ॥ इति ।

यद्यपि दमप्रशंसायां दमस्यैवेते सत्यादयोऽवयवा इत्युक्तं तथापि सर्वेषामेषामवश्यानुष्ठेयत्वे तात्पर्यादेषां परस्पराश्रयत्वाच्चाविरोधः । आप० १६२

नान्तः शक्यो गुणानां हि वक्तुं सत्यस्य पार्थिव ।
अतः सत्यं प्रशंसन्ति विप्राः सपितृदेवताः ॥
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ।
श्रुति[३]र्हि सत्यं धर्मस्य तस्मात्सत्यं न लोपयेत् ॥
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यतइति च ॥

तत्र च ।

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातन इति स्मर्यते ।

---

१ आत्मदोषानजानन्तः । २ आस्तिकभिन्नोऽपि । ३ धर्मश्रवणमपि सत्यमेवेत्यर्थः ।

एतेषां च सत्याहिंसादीनां कार्यतारतम्यपर्यालोचनया गुरुलघुभावो युधिष्ठिरसर्पसंवादे स्पष्टः। वनप॰ अ॰ १८१

पात्रे दत्वा प्रियाण्युक्त्वा सत्यमुक्त्वा च भारत।
अहिंसानिरतः स्वर्गं गच्छेदिति मतिर्मम॥

युधिष्ठिर उवाच।

दानाद्वा सर्प सत्याद्वा किमतो गुरु दृश्यते।
अहिंसाप्रिययोश्चैव गुरुलाघवमुच्यताम्॥

सर्प उवाच।

दानं च सत्यं तत्वं वा अहिंसा प्रियमेव च।
एषां कार्यगरीयस्त्वाद्दृश्यते गुरुलाघवम्॥
कस्माच्चिद्दानयोगाद्धि सत्यमेव विशिष्यते।
सत्यवाक्याच्च राजेन्द्र किं चिद्दानं विशिष्यते॥
एवमेव महेष्वास प्रियवाक्यान्महीपते।
अहिंसा दृश्यते गुर्वी ततश्च प्रियमिष्यते॥
एवमेतद्भवेद्राजन् कार्यापेक्षमनन्तरम्।
यदभिप्रेतमन्यत्ते ब्रूहि यावद्ब्रवीम्यहम्॥

यत्र च सत्येन परपीडा स्यादसत्येन च तत्त्राणं तत्र सत्यादप्यनृतमेव विशिष्यतइति निश्चीयते युधिष्ठिरभीष्मसंवादेन। राज॰ अ॰ १०९

युधिष्ठिर उवाच।

कथं धर्मे स्थातुमिच्छन्नरो वर्तेत भारत।
विद्वञ्जिज्ञासमानाय प्रब्रूहि भरतर्षभ॥
सत्यं चैवानृतं चोभे लोकानावृत्य तिष्ठतः।
तयोः किमाचरेद्राजन्पुरुषो धर्मनिश्चितः॥
किं स्वित्सत्यं किमनृतं किंस्विद्धर्मं सनातनम्।
कस्मिन्काले वदेत्सत्यं कस्मिन्काले ऽनृतं वदेत्।

भीष्म उवाच ।

सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
यत्तु लोकेषु दुर्ज्ञानं तत्प्रवक्ष्यामि भारत ॥
भवेत्सत्यं न वक्तव्यं वक्तव्यमनृतं भवेत् ।
यत्रानृतं भवेत्सत्यं सत्यं वाप्यनृतं भवेत्[1] ॥
तादृशो बध्यते बालो यत्र सत्यमनुष्ठितम् ।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ॥
अप्यनार्योकृतप्रज्ञः पुरुषोप्यतिदारुणः ।
सुमहत्प्राप्नुयात्पुण्यं बलाकोन्धवधादिव ॥
किमाश्चर्यं च यन्मूढो धर्मकामोप्यधर्मवित् ।
सुमहत्प्राप्नुयात्पुण्यं गङ्गायामिव कौशिकः ॥
तादृशोयमनुप्रश्नो यत्र धर्मः सुदुर्लभः ।
दुष्करः प्रतिसंख्यातुं तत्केना[2]त्र व्यवस्यति ॥
प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम् ।
यः स्यात्प्रभवसंयुक्तः स धर्म इति निश्चयः ॥
धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः ।
यः स्याद्धारणसंयुक्तः स धर्म इति निश्चयः ॥
अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम् ।
यः स्यादहिंसया युक्तः स धर्म इति निश्चयः ॥
श्रुतिधर्म इति ह्येके नेत्याहुरपरे जनाः ।
न च तत्प्रत्यसूयामो न हि सर्वं विधीयते ॥

१ यत्र सत्येन परस्य सुजनस्य पीडास्यात्तत्र ।
२ धर्मविषये केन कारणेन निश्चिनोति ।

ये ऽन्यायेन जिहीर्षन्तो धनमिच्छन्ति कस्य चित्।
तेभ्यस्तु न तदाख्येयं स धर्म इति निश्चयः॥
अकूजनेन चेन्मोक्षो नावकूजेत्कथं चन।
अवश्यं कूजितव्यं वा शङ्केरन्वाप्यकूजनात्॥
श्रेयस्तत्रानृतं वक्तुं सत्यादिति विचारित[१]म्।
यः पापैः सह संबन्धान्मुच्यते शपथादपि॥
न तेभ्यो ऽपि धनं देयं शक्ये सति कथं चन।
पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत्॥
स्वशरीरोपरोधेन धनमादातुमिच्छतः।
सत्यसंप्रतिपत्त्यर्थं यद् ब्रूयुः साक्षिणः क्व चित्।
अनुक्त्वा तत्र तद्वाच्यं सर्वे ते ऽनृतवादिनः॥
प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत्।
अर्थस्य रक्षणार्थाय परेषां धर्मकारणात्॥
परेषां सिद्धिमाकाङ्क्षन्नीचः स्याद्धर्मभिक्षुकः।
प्रतिश्रुत्य प्रदातव्यः स्वकार्यस्तु बलात्कृतः॥
यः कश्चिद्धर्मसमयात्प्रच्युतो धर्मसाधनः।
दण्डेनैव स हन्तव्यस्तं पन्थानं समाश्रितः॥
च्युतः सदैव धर्मेभ्यो मानवं धर्ममास्थितः।
शठः स्वधर्ममुत्सृज्य तमिच्छेदुपजीवितुम्॥
सर्वोपायैर्निहन्तव्यः पापो निकृतिजीवनः।
धनमित्येव पापानां सर्वेषामिह निश्चयः॥
अविषह्या ह्यसंभोज्या निकृत्या पतनं गताः।
च्युता देवमनुष्येभ्यो यथा प्रेतास्तथैव ते॥

१ निश्चितम्।

निर्यन्नास्तपसा हीना मा स्म तैः सह संगमः।
धननाशाद्दुःखतरं जीविताद्विप्रयोजनम् ॥
अयं ते रोचतां धर्म इति वाच्यः प्रयत्नतः।
न कश्चिदस्ति पापानां धर्म इत्येष निश्चयः ॥
तथागतं च यो हन्यान्नासौ पापेन लिप्यते।
स्वकर्मणा हतं हन्ति हत एव स हन्यते ॥
तेषु यः समयं कश्चित्कुर्वीत हतबुद्धिषु।
यथा काकाश्च गृध्राश्च तथैवोपधिजीविनः ॥
ऊर्ध्वं देहविमोक्षान्ते भवन्त्येतासु योनिषु।
यस्मिन्यथा वर्तते यो मनुष्यस्तस्मिंस्तथा वर्तितव्यं स धर्मः।
मायाचारो मायया बाधितव्यः साध्वाचारः साधुना प्रत्युपेयः ॥

इत्यन्तेन। एतच्च राजधर्ममात्रस्यैव प्रदर्शनं दण्डाद्यधिकारस्य तत्रैव सत्त्वेन दण्डादेस्तन्मात्रधर्मत्वं सिद्धे तत्सहचरितानामसत्यादीनामपि तन्मात्रधर्मत्वसिद्धेः प्रकरणाच्चेत्याहुः।

अत एव सत्यस्य सर्वधर्मनिदानत्वं प्रपञ्चितं युधिष्ठिराय भीष्मेण। शा॰ अ॰ १६२

युधिष्ठिर उवाच।
सत्यं धर्मं प्रशंसन्ति विप्रर्षिपितृदेवताः।
सत्यमिच्छाम्यहं श्रोतुं तन्मे ब्रूहि पितामह ॥
सत्यं किंलक्षणं राजन् कथं वा तदवाप्यते।
सत्यं प्राप्य भवेत्किं च कथं चैव तदुच्यताम् ॥

भीष्म उवाच।
चातुर्वर्ण्यस्य धर्माणां संकरो न प्रशस्यते।
अविकारितमं सत्यं सर्ववर्णेषु भारत ॥

सत्यं सत्सु सदा धर्मः सत्यं धर्मः सनातनः ।
सत्यमेव नमस्येत सत्यं हि परमागतिः ॥
सत्यं धर्मस्तपो योगः सत्यं ब्रह्म सनातनम् ।
सत्यं यज्ञः परः प्रोक्तः सर्वं सत्ये प्रतिष्ठितम् ॥
आचारानिह सत्यस्य यथावदनुपूर्वशः ।
लक्षणं च प्रवक्ष्यामि सत्यस्येह यथाक्रमम् ॥
प्राप्यते च यथा सत्यं तच्च श्रोतुमिहार्हसि ।
सत्यं त्रयोदशविधं सर्वलोकेषु भारत ॥
सत्यं च समता चैव दमश्चैव न संशयः ।
अमात्सर्यं क्षमा चैव ह्रीस्तितिक्षानसूयता ॥
त्यागो ध्यानमथार्यत्वं धृतिश्च सततं दया ।
अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश ।
सत्यं नामाव्ययं नित्यमविकारि तथैव च ॥
सर्वधर्माविरुद्धं च योगेनैतदवाप्यते ।
आत्मनीष्टे तथानिष्टे रिपौ च समता तथा ।
इच्छा द्वेषं क्षयं प्राप्य कामक्रोधक्षयं तथा ॥
दमो नान्यस्पृहा नित्यं गाम्भीर्यं धैर्यमेव च ।
अभयं रोगशमनं ज्ञानेनैतदवाप्यते ।
अमात्सर्यं बुधाः प्राहुर्दाने धर्मे च संयमः ।
अवस्थितेन नित्यं च सत्येनामत्सरी भवेत् ॥
अक्षमायाः क्षमायाश्च प्रियाणीहाप्रियाणि च ।
क्षमते संमतः साधुः साध्वाप्नोति च सत्यवान् ॥
कल्याणं कुरुते बाढं धीमान्न ग्लायते क्वचित् ।
प्रशान्तवाङ्मना नित्यं ह्रीस्तु धर्मादवाप्यते ॥

धर्मार्थहेतोः क्षमते तितिक्षा क्षान्तिरुच्यते।
लोकसंग्रहणार्थं वै सा तु धैर्येण लभ्यते॥
त्यागः स्नेहस्य यत्त्यागो विषयाणां तथैव च।
रागद्वेषप्रहीणस्य त्यागो भवति नान्यथा॥
आर्यता नाम भूतानां यः करोति प्रयत्नतः।
शुभं कर्म निराकारो वीतरागस्तथैव च।
धृतिर्नाम सुखे दुःखे यथा नाप्नोति विक्रियाम्।
तां भजेत सदा प्राज्ञो य इच्छेद्धृतिमात्मनः।
सर्वथा क्षमिणा भाव्यं तथा सत्यपरेण च॥
वीतहर्षभयक्रोधो धृतिमाप्नोति पण्डितः।
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा॥
अनुग्रहश्च दानं च सतां धर्मः सनातनः।
एते त्रयोदशाकाराः पृथक्सत्यैकलक्षणाः॥
भजन्ते सत्यमेवेह बृंहयन्ते च भारत।
नान्तः शक्यो गुणानां च वक्तुं सत्यस्य भारत॥
अतः सत्यं प्रशंसन्ति विप्राः सपितृदेवताः।
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम्॥
श्रुतिर्हि[१] सत्यं धर्मस्य तस्मात्सत्यं न लोपयेत्।
उपैति सत्याद्दानं हि यथा यज्ञाः सदक्षिणाः॥
त्रेताग्निहोत्रं वेदाश्च ये चान्ये धर्मनिश्चयाः।
अश्वमेधसहस्रं च सत्यं च तुलया धृतम्॥
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते। इति।

१ धर्मश्रवणं सत्यमेवेत्यर्थः।

अक्रोधश्च क्षमारूपो ऽपि निरपराधे ऽपि वृत्तिविशेषानुत्पादनरूपः प्रशस्यः । क्रोधेनैव वाग्दण्डपारुष्ययोः संभवात् । यथाह ।

सर्वोपायात्तु कामस्य क्रोधस्य च विनिग्रहः ।
कार्यः श्रेयोऽर्थिना तौ हि श्रेयोघातार्थमुद्यतौ ॥
नित्यं क्रोधात्तपो रक्षेच्छ्रियो रक्षेच्च मत्सरात् ।
विद्यां मानावमानाभ्यामात्मानं तु प्रमादत इति ॥

अत एव द्रौपदीं प्रति धर्मराजवाक्यम् । वनप॰ २९

क्रोधो हन्ता मनुष्याणां क्रोधो भावयिता पुनः ।
इति विद्धि महाप्राज्ञे क्रोधमूलौ भवाभवौ ॥
यो हि संहरते क्रोधं भवस्तस्य सुशोभने ।
यः पुनः पुरुषः क्रोधं नित्यं न सहते शुभे ॥
तस्याभावाय भवति क्रोधः परमदारुणः ।
क्रोधमूलो विनाशो हि प्रजानामिह दृश्यते ॥
तत्कथं मादृशः क्रोधमुत्सृजेल्लोकनाशनम् ।
क्रुद्धः पापं नरः कुर्यात्क्रुद्धो हन्याद्गुरूनपि ॥
क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते ।
वाच्यावाच्यौ हि कुपितो न प्रजानाति कर्हि चित् ॥
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा ।
हिंस्यात्क्रोधादवध्यांस्तु वध्यान्संपूजयीति च ॥
आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ।
एतान्दोषान्प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः ॥
इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम् ।
तं क्रोधं वर्जितं धीरैः कथमस्मद्विधश्चरेत् ॥

एतद्द्रौपदि संधाय न मे मन्युः प्रवर्द्धते ।
आत्मानं च परांश्चैव त्रायते महतो भयात् ॥
क्रुध्यन्तमप्रतिक्रुध्यन्द्वयोरेव चिकित्सकः ।
मूढो यदि क्लिश्यमानः क्लिश्यते शक्तिमान्नरः ॥
बलीयसां मनुष्याणां त्यजत्या[१]त्मानमात्मना ।
तस्यात्मानं संत्यजतो लोका नश्यन्त्यनात्मनः ॥
तस्माद्द्रौपद्यशक्तस्य मन्योर्नियमनं स्मृतम् ।
विद्वांस्तथैव यः शक्तः क्लिश्यमानो न कुप्यति ॥
अनाशयित्वा क्लेष्टारं परलोके च नन्दति ।
तस्माद्बलवता चैव दुर्बलेन च नित्यदा ॥
क्षन्तव्यं पुरुषेणाहुरापत्स्वपि विजानता ।
मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः ॥
क्षमावतो जयो नित्यं साधोरिह सतां मतम् ।
सत्यं चानृततः श्रेयो नृशंसाच्चानृशंसता ॥
तमेवं बहुदोषं तु क्रोधं साधुविवर्जितम् ।
मादृशः प्रसृजेत्कस्मात्सुयोधनवधादपि ॥
तेजस्वीति यमाहुर्वै पण्डिता दीर्घदर्शिनः ।
न क्रोधोऽभ्यन्तरस्तस्य भवतीति विनिश्चितम् ॥
यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते ।
तेजस्विनं तं विद्वांसो मन्यन्ते तत्वदर्शिनः ॥
क्रुद्धो हि कार्यं सुश्रोणि न यथावत्प्रपश्यति ।
न कार्यं न च मर्यादां नरः क्रुद्धोऽनुपश्यति ॥

१ बलीयसां मनुष्याणामुपरि क्लिश्यते तर्हि आत्मनैवात्मानं देहं त्यजतीत्यर्थः ।

हन्त्यवध्यानपि क्रोधो गुरून् क्रुद्धस्तुदत्यपि ।
तस्मात्तेजसि कर्तव्यः क्रोधो दूरे प्रतिष्ठितः ॥
दाक्ष्यं ह्यमर्षः शौर्यं च शीघ्रत्वमिति तेजसः ।
गुणाः क्रोधाभिभूतेन न शक्याः प्राप्तुमञ्जसा ॥
क्रोधं त्यक्त्वा तु पुरुषः सम्यक् तेजोऽभिपद्यते ।
कालयुक्तं महाप्राज्ञे क्रुद्धैस्तेजः सुदुःसहम् ॥
क्रोधस्तु पण्डितैः शश्वत्तेज इत्यभिनिश्चितम् ।
रजस्तल्लोकनाशाय विहितं मानुषं प्रति ॥
तस्माच्छश्वत्त्यजेत्क्रोधं पुरुषः सम्यगाचरन् ।
श्रेयान्स्वधर्मानपगो न क्रुद्ध इति निश्चितम् ॥
यदि सर्वमबुद्धीनामतिक्रान्तमचेतसाम् ।
अतिक्रमो मद्विधस्य कथं स्वित्स्यादनिन्दिते ॥
यदि न स्युर्मानुषेषु क्षमिणः पृथिवीसमाः ।
न स्यात्सन्धिर्मानुषाणां क्रोधमूलो हि विग्रहः ॥
अभिषक्तो ह्यभिषजेदाहन्याद्गुरुणा हतः ।
एवं विनाशे भूतानामधर्मः प्रथितो भवेत् ॥
आक्रुष्टः पुरुषः सर्वं प्रत्याक्रोशेदनन्तरम् ।
प्रतिहन्याद्धतश्चैव तथा हिंस्याच्च हिंसितः ॥
हन्युर्हि पितरः पुत्रान् पुत्राश्चापि तथा पितॄन् ।
हन्युश्च पतयो भार्याः पतीन्भार्यास्तथैव च ॥
एवं संकुपिते लोके जन्म कृष्णे न विद्यते ।
प्रजानां सन्धिमूलं हि जन्म विद्धि शुभानने ॥
ताः क्षिपेरन्प्रजाः सर्वाः क्षिप्रं द्रौपदि तादृशे ।
तस्मान्मन्युर्विनाशाय प्रजानामभवाय च ॥

यस्मात्तु लोके दृश्यन्ते क्षमिणः पृथिवीसमाः ।
तस्माज्जन्म च भूतानां भवश्च प्रतिपद्यते ॥
क्षन्तव्यं पुरुषेणेह सर्वापत्सु सुशोभने ।
क्षमावतो हि भूतानां जन्म चैव प्रकीर्त्तितम् ॥
आक्रुष्टस्ताडितः क्रुद्धः क्षमते यो बलीयसः ।
यश्च नित्यं जितक्रोधो विद्वानुत्तमपूरुषः ॥
प्रभाववानपि नरस्तस्य लोकाः सनातनाः ।
क्रोधनस्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति ॥
अत्राप्युदाहरन्तीमा गाथा नित्य क्षमावताम् ।
गीताः क्षमावतां कृष्णे काश्यपेन महात्मना ॥
क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतम् ।
य एतदेवं जानाति स सर्वं क्षन्तुमर्हति ॥
क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च ।
क्षमा तपः क्षमा शौचं क्षमयेदं धृतं जगत् ॥
अति यज्ञविदां लोकान्क्षमिणः प्राप्नुवन्ति च ।
क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम् ॥
क्षमा सत्यं सत्यवतां क्षमा यज्ञः क्षमाश्रमः ।
तां क्षमा तादृशीं कृष्णे कथमस्मद्विधस्त्यजेत् ॥
यस्यां ब्रह्म च सत्यं च यज्ञा लोकाश्च धिष्ठिताः ।
क्षन्तव्यमेव सततं पुरुषेण विजानता ॥
यदा हि क्षमते सर्वं ब्रह्म संपद्यते तदा ।
क्षमावतामयं लोकः परश्चैव क्षमावताम् ॥
इह संन्मानमर्च्छन्ति परत्र च शुभां गतिम् ।
येषां मन्युर्मनुष्याणां क्षमयाभिहतः सदा ॥

तेषां परतरे लोकास्तस्मात्क्षान्तिः परा मता। इति।

तर्हि दुर्योधन एव कुतो न क्षमां करोतीत्यत आह।

सुयोधनो नार्हतीति क्षमामेवं न विन्दति॥

अर्हस्तथाहमित्येव तस्मान्मां विन्दते क्षमा।

एतदात्मवतां वृत्तमेष धर्मः सनातनः॥

क्षमा चैवानृशंस्यं च तस्मान्मां विन्दते क्षमा। इति।

अत एवोक्तं वनप॰ अ॰ ३११

क्रोधः सुदुर्जयः शत्रुर्लोभो व्याधिरनन्तकः ।६० । इति।

रा॰ अ॰ ८४

किं च। शक्र उवाच।

किं स्विदेकपदं ब्रह्मन्पुरुषः सम्यगाचरन्।

प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत्॥

बृहस्पतिरुवाच।

सान्त्वमेकपदं शक्र पुरुषः सम्यगाचरन्।

प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत्॥

एतदेकपदं शक्र सर्वलोकसुखावहम्।

आचरन्सर्वभूतेषु प्रियो भवति सर्वदा॥

यो हि ना भाषते किंचित्सर्वदा भ्रुकुटीमुखः।

द्वेष्यो भवति भूतानां स सान्त्वमिह नाचरन्॥

यस्तु सर्वमभिप्रेक्ष्य पूर्वमेवाभिभाषते।

स्मितपूर्वाभिभाषी च तस्य लोकः प्रसीदति॥

दानमेव हि सर्वत्र सान्त्वेनानभिजल्पितम्।

न प्रीणयति भूतानि निर्व्यञ्जनमिवाशनम्॥

आदा[1]नादपि भूतानां मधुरामीरयन्गिरम् ।
सर्वलोकमिमं शक्र सान्त्वेन कुरुते वशे ॥
तस्मात्सान्त्वं प्रयोक्तव्यं दण्डमाधित्सतापि हि ।
फलं च जनयत्येवं न चास्योद्विजते जनः ॥
सुकृतस्य हि सान्त्वस्य श्लक्ष्णस्य मधुरस्य च ।
सम्यगासेव्यमानस्य तुल्यं जातु न विद्यते ॥

इति शक्रबृहस्पतिसंवादेन स्मितपूर्वाभिभाषणस्य सकललोकप्रीतिजनकतायां व्यवस्थितायां पूर्वोदाहृतवचननिचयेन परप्रीत्युत्पादने धर्मप्राप्तिश्रवणादपूर्वोत्पादकत्वं नीतिरूपत्वं च लभ्यते ।

अत एव शक्रं प्रति ययातिवचनम् । आदि प. अ ८७

अक्रोधनः क्रोधनेभ्यो विशिष्टस्तथा तितिक्षुरतितिक्षोर्विशिष्टः ।
अमानुषेभ्यो मानुषश्च प्रधानो विद्वांस्तथैवाविदुषः प्रधानः ॥
आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्द[2]ति ॥
नारुंतुदः स्यान्न नृशंसवादी न हीनतः परमभ्याददीत[3] ।
ययास्य वाचा पर उद्विजेत न तां वदेदुष[4]तीं पापलोक्याम् ॥
अरुंतुदं परुषं तीक्ष्णवाचं वाक्कण्टकैर्वितुदन्तं मनुष्यान् ।
विद्यादलक्ष्मीकतमं जनानां मुखे निबद्धां निर्ऋतिं वहन्तम् ॥
सद्भिः पुरस्तादभिपूजितः स्यात्सद्भिस्तथा पृष्ठतो रक्षितः स्यात् ।
सदाऽसतामतिवादांस्तितिक्षेत्सतां वृत्तं चाददीतार्यवृत्तः ॥
वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि ।
परस्य नामर्मसु ते पतन्ति तान्पण्डितो नावसृजेत्परेषु ॥

---

१ द्रव्यं गृहीत्वापि । २ आक्रुश्यमान इति शेषः । ३ हीनकर्मणा शत्रुं न वशे कर्तुमिच्छेत् । योग्यताहीनाद्द्रव्यं न गृह्णीयादिति केचित् । ४ अमङ्गल्याम् ।

न ह्रीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥
तस्मात्सान्त्वं सदा वाच्यं न वाच्यं परुषं क्वचित् ।
पूज्यान्त्संपूजयेद्दद्यान्न च याचेत्कदा चन ॥ इति ।

दानस्य च क्रोधादिपूर्वकं कृतस्य महतोऽपि न तादृक्फलदातृत्वं यथा स्तोकस्यापि सान्त्वपूर्वं कृतस्येति सक्तुप्रस्थाख्यानेन स्फुटी भविष्यति ।

क्रोधादीनां स्वरूपं तदुत्पत्तिवृद्धी तन्नाशोपायाश्चोपपादिताः पितामहेन धर्मात्मजपृष्टेन । आप॰ अ॰ ३३

युधिष्ठिर उवाच ।
यतः प्रभवति क्रोधः कामो वा भरतर्षभ ।
शोकमोहौ विधित्सा च परासुत्वं च तद्वद ॥
लोभो मात्सर्यमीर्ष्या च कुत्सा ऽसूया कृपा भयम् ।
एतत्सर्वं महाप्राज्ञ याथातथ्येन मे वद ॥
भीष्म उवाच ।
त्रयोदशैते ऽतिबलाः शत्रवः प्राणिनां स्मृताः ।
उपासन्ते महाराज समन्तात्पुरुषानिह ॥
एते प्रमत्तं पुरुषमप्रमत्ता स्तुदन्ति च ।
वृकाइव विलुम्पन्ति दृष्ट्वैव पुरुषं बलात् ॥
एभ्यः प्रवर्तते दुःखमेभ्यः पापं प्रवर्तते ।
इति मर्त्यो विजानीयात्सततं पुरुषर्षभ ॥
एतेषामुदयं स्थानं क्षयं च पृथिवीपते ।
हन्त ते कथयिष्यामि क्रोधस्योत्पत्तिमादितः ॥

लोभात्क्रोधः प्रभवति परदोषैरुदीर्यते[1] ।
क्षमया ति[2]ष्ठते राजन् क्षमया विनिवर्तते ॥
संकल्पाज्जायते कामः सेव्यमानो विवर्धते ।
यदा प्राज्ञो विरमते तदा सद्यः प्रणश्यति ॥
परासूया क्रोधलोभावन्तरा प्रतिमु[3]च्यते ।
दयया सर्वभूतानां निर्देशा[4]द्विनिवर्तते ॥
अवद्यदर्शनादेति तत्त्वाज्ञानाच्च धीमताम् ।
अज्ञानप्रभवो मोहः पापाभ्यासात्प्रवर्धते ॥
यदा प्राज्ञेषु रमते तदा सद्यः प्रणश्यति ।
विरुद्धानीह शास्त्राणि पश्यन्तीह कुरूद्वह ॥
विधित्सा जायते तत्र तत्त्वज्ञानान्निवर्तते ।
प्रीत्या शोकः प्रभवति वियोगात्तस्य देहिनः ॥
यदा निरर्थकं वेत्ति तदा सद्यः प्रणश्यति ।
परासु[5]ता क्रोधलोभादभ्यासाच्च प्रवर्धते ॥
दयया सर्वभूतानां निर्देशा[6]द्विनिवर्तते ।
सत्यत्यागात्तु मात्सर्यमहितानां च सेवया ॥
एतत्तु क्षीयते तात साधूनामुपसेवनात् ।
कुलाज्ज्ञानात्तथैश्वर्यान्मदो भवति देहिनाम् ॥
एभिरेव तु विज्ञा[7]तैः स च सद्यः प्रणश्यति ।
ईर्ष्या कामात्प्रभवति संघर्षाच्चैव जायते ॥
इतरेषां तु सत्त्वानां प्रज्ञया सा प्रणश्यति ।
विभ्रमाल्लोकबाह्यानां द्वेष्यैर्वाक्यैरसंमतैः ॥

---

१ वर्धते । २ निरुध्यते निवर्तते च । ३ क्रोधाल्लोभाद्वा भवतीत्यर्थः । ४ निर्वेदादित्यपि पाठः । ५ अकार्ये प्रवृत्तिः । ६ निर्वेदादित्यपि पाठः । क्रोधजा दयया लोभजा निर्वेदादिति भावः । ७ कुलोत्कर्षप्रयोजकत्वेनेति शेषः ।

कुत्सा संजायते राजल्लोकान्प्रेक्ष्याभिशाम्यति ।
इति कर्त्तुं न शक्ता ये बलस्थायापकारिणे ॥
असूया जायते तीव्रा कारुण्याद्विनिवर्त्तते ।
कृपणान्सततं दृष्ट्वा ततः संजायते कृपा ॥
धर्मनिष्ठां यदा वेत्ति तदा शाम्यति सा कृपा ।
अज्ञानप्रभवो लोभो भूतानां दृश्यते सदा ॥
अस्थिरत्वं च भोगानां दृष्ट्वा ज्ञात्वा निवर्त्तते ॥
एतान्येव जितान्याहुः प्रशमाच्च त्रयोदश ।
एते हि धार्त्तराष्ट्राणां सर्वे दोषास्त्रयोदश ॥
त्वया सत्यार्थिना नित्यं विजिता ज्येष्ठसेवनात् ।

इति ग्रन्थेन । अहिंसाया एव च सर्वधर्मोत्तमत्वं युधिष्ठिरबृहस्पतिसंवादेनोपबृंहितम् आनु॰ अ॰ ११३

युधिष्ठिर उवाच ।

अहिंसा वैदिकं कर्म ध्यानमिन्द्रियसंयमः ।
तपोथ गुरुशुश्रूषा किं श्रेयः पुरुषं प्रति ॥

बृहस्पतिरुवाच ।

सर्वाण्येतानि धर्म्याणि पृथग्द्वाराणि सर्वशः ।
शृणु संकीर्त्यमानानि षडेव भरतर्षभ ॥
हन्त निःश्रेयसं जन्तोरहं वक्ष्याम्यनुत्तमम् ।
अहिंसापाश्रयं धर्मं यः साधयति वै नरः ॥
त्रीन्दोषान्सर्वभूतेषु निधाय पुरुषः सदा ।
कामक्रोधौ च संयम्य ततः सिद्धिमवाप्नुते ॥
अहिंसकानि भूतानि दण्डेन विनिहन्ति यः ।
आत्मनः सुखमन्विच्छन् स प्रेत्य न सुखी भवेत् ॥

आत्मोपमस्तु भूतेषु यो वै भवति पूरुषः ।
न्यस्तदण्डो जितक्रोधः स प्रेत्य सुखमेधते ॥
सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।
देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥
न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः ।
एष संक्षेपतो धर्मः कामादन्यः प्रवर्त्तते ॥
प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये ।
आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ॥
यथा परः प्रक्रमते परेषु तथा परे प्रक्रमन्ते परस्मिन् ।
तथैव ते ऽस्तूपमा जीवलोके यथा धर्मो नैपुणे नोपदिष्टः ॥
वैशम्पायन उवाच ।
इत्युक्त्वा तं सुरगुरुर्धर्मराजं युधिष्ठिरम् ।
दिवमाचक्रमे धीमान्पश्यतामेव नस्तदा । इति

इत्थमभिधायान्तर्हितेन सुरगुरुणा सर्वेषां समत्वमेवाहिंसायाः सकलधर्ममूलत्वं व्यवास्थापि । प्रसिध्यति चात्र महाभारतइतिहासः । पुरा किल कश्चन मुनिश्चिरं तपस्यंस्तत्तपसा निजपदच्युतिं शङ्कमानैः सुरैर्विज्ञापितेन महेन्द्रेणाभिमतं वरं याचस्वेति मुहुरनुबध्यमानोऽपि वरमनिच्छंस्तं प्रत्याचख्यौ । अथेन्द्रो निराशश्चिरं विचार्य तदाश्रमादनतिदूरवर्त्तितरुतले विकोशं निशातमसिं संस्थाप्य यथागतमगच्छत् । अथ मुनिः कदा चन कुशसमिदाद्याहरणाय पर्यटन्वृक्षतले खड्गमालक्ष्य तेन समिदादिच्छेदं सुकरमुत्प्रेक्ष्य तमसिं संजग्राह । अनन्तरं च कुतुकाविष्टो मुहुस्तेन विविधा वीरुधो वृक्षांश्च छिन्दन्नहीयत तपसइति । अनेन चेतिहासेन जङ्गमहिंसाया अपि पापप्रयोजकत्वे स्थिते पश्वादीनां हिंसायाः पापजनकत्वमर्थादेव सिध्यति विशेषतश्च विवेकवन्मनुष्यादि-

कर्मिकायास्तस्यास्तथाविधत्वम् । प्रपञ्चितं चेदं पूर्वमेव । एवं स्थिते उपकर्त्तर्यपि ये ऽपकारकारिणस्तेषां कृतघ्नपदाभिधेयानामतीव शास्त्रेषु लोके च निन्दा युक्तैव । उक्तं च कृतघ्ने नास्ति निष्कृतिरिति ।

बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेदिति ॥

प्रसिध्यति चात्रेतिहासः[१] । मित्रद्रोहिकृतघ्नयोः कथं परिहार्यता तद्विषयमितिहासं कथयेति युधिष्ठिरेण सविनयं पृष्टः शान्तनवो ऽवादीत् । पुरा किल कश्चिन्मध्यदेशीयो ब्रह्मकर्मणा परिवर्जितो गौतमो नाम द्विजन्मा ऽऽसीत् । सो ऽयमतिदरिद्रो व्यतीतेषु कतिपयेषु दिवसेषु समृद्धं कं चिच्छबरनगरं निरीक्ष्य भिक्षार्थं प्राविशत् । तत्र च धनयुतं कर्मदानादिषु निरतं शबरमवलोक्याचनिवासाद्यर्थमयाचत । सो ऽप्येनमवलोक्य करुणापूरतरङ्गितहृदयो ऽन्नादिकं कां चिद्विधवां स्त्रियं चादात् । तदनन्तरमयमतिहृष्टात्मा तस्यैव गृहे तया सह रममाणो बाणवधे परं यत्नमकरोत् । प्रत्यहं च वनाद्वनं प्रविश्य तत्रत्यानेकविधपशुपक्ष्यादीनतिनिर्घृणः शबर इव जघान । एवं शबरालये वसतस्तस्य सुखेन बहवो मासा व्यतीयुः । अथ कश्चिद्द्विजन्मा सकलागमपारदृश्वा शूद्राचादिषु घृणी ब्राह्मणगृहमेव मृगयमाणो द्विजगृहमगमत् । निरीक्ष्य चैनं चापपाणिं रुधिरावसिक्ततनुं कुत्सयन्निदमवोचत् । रे द्विजोत्पन्नस्त्वं विप्रकुले शबरालये वस्तुं नार्हसि । इति स्वहितकारिणा तेनेरितां गिरं निशम्य सन्तापाकुलहृदयः सन् भो द्विज निर्धनतया शबरालये वसामि परं चावामिमां शर्वरीमत्रैव विनीय श्वः सह यास्याव इत्यब्रवीत् । सोऽपि तथेति प्रतिश्रुत्य क्षुधया पीडितोऽप्यपवित्रमन्नादिकमस्पृशन्नवसत् । तदनन्तरमयं प्रभाते तस्मिन्विप्रे गते सति समुद्रं प्रति गच्छन्पथि स्थितान्समुद्रोपान्तगतान्वणिजः पश्यंस्तैः सह समुद्रमभ्यगच्छत् । सोऽयं वणिक्समूहः कस्मिंश्चिद्गिरिगह्वरे मत्तमतङ्गजेन निहतोऽभवत् । अयं विप्रोऽपि कथं चित्तस्माद्भयाद्विमुक्तः कां दिशं प्रयामीत्याकुलचेता उत्तरां दिशं जगाम । शेषमपराङ्के ।

१ प्रथमापत्रमें ३८ अध्यायप्रभृति ।



## ॥ श्लोकवार्त्तिकम् ॥

कृत्रिमत्वे ऽपि संबन्धस्तत्प्रयोगापवर्जनात् ।
तदेकव्यक्तिनिष्ठत्वान्नैव सार्वत्रिको भवेत् ॥ ३५२ ॥
पार्थिवद्रव्यसत्तादिलाङ्गूलत्वादिसङ्करात् ।
विना प्रयोगभूयस्त्वं न स्याद्गोत्वावधारणात् ॥ ३५३ ॥
तस्मादकृत्रिमश्शब्दो न कदा चिद्विनश्यति ।
नित्येन नित्यसंबन्धादाकाशपरमाणुवत् ॥ ३५४ ॥
यद्वासंबन्धनित्यत्वं सूत्रे ऽस्मिन्नेव वर्ण्यते ।
शब्दनित्यत्वमात्रे ऽपि भाष्यं ह्येतस्य युज्यते ॥ ३५५ ॥
समुग्धानेकसामान्यविषयो हि सकृच्छ्रुतः ।
निष्कृष्टस्वार्थवाचित्वं शब्दो न प्रतिपद्यते ॥ ३५६ ॥
बहुभिः श्रवणैरेष प्राणित्वादीनि वर्जयेत् ।
शुक्लादिगमनादीनि सास्नालाङ्गूलतादि च ॥ ३५७ ॥
शाबलेयादिखण्डादिव्यक्तीश्च स्वनिबन्धनाः ।
निष्कृष्टगोत्ववाचित्वं चिरेण प्रतिपद्यते ॥ ३५८ ॥
तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति ।
अनपेक्षितसूत्रेण तच्चैतत्साधयिष्यते ॥ ३५९ ॥
क्रियावतामभेदे हि क्रियावृत्तिषु कृत्वसुच् ।
तत्प्रयोगाद्ध्रुवं तस्य शब्दस्यावर्त्तते क्रिया ॥ ३६० ॥
पुनः प्रयोगविज्ञानं न हि शब्दान्तरे भवेत् ।
सत्यां च शब्दसंख्यायामष्टाविति भवेच्छ्रुतिः ॥ ३६१ ॥

भुक्तवन्तो ऽष्टकृत्वो ऽद्य ब्राह्मणा इति दृश्यते ।
द्रव्यभेदे ऽप्यनेकान्तं मत्वाह किमतो यदि ॥ ३६२ ॥
तस्मात्तत्परिहाराय प्रमाणान्तरमुच्यते ।
प्रत्यभिज्ञानमेतेन प्रयोगेणोपलक्षितं ॥ ३६३ ॥
कृत्वसुच्चापि नैवायं व्यभिचारीति गम्यते ।
यतः प्रयुज्यते चैकब्राह्मणत्वविवक्षया ॥ ३६४ ॥
प्रमाणं प्रत्यभिज्ञानं दृढेन्द्रियतयोच्यते ।
इतरो ऽसिद्धतामाह सादृश्याद्ग्राह्यदूषणात् ॥ ३६५ ॥
नित्यं सदृश एवेति यत्र रूढा मतिर्भवेत् ।
स इति प्रत्यभिज्ञानभ्रान्तिस्तत्रावकल्पते ॥ ३६६ ॥
इह नित्यमिहैवेति विज्ञानं ज्ञायते दृढम् ।
तदास्तित्वाधिकत्वाच्च प्रामाण्यात्तस्य साधितम् ॥ ३६७ ॥
नित्यप्रसंगद्वारेण स्पृष्टयोरप्यनित्ययोः ।
प्रत्यभिज्ञानसद्भावादनैकान्तिकतोच्यते ॥ ३६८ ॥
न प्रत्यक्ष इति त्वेतदसंबद्धमिवोत्तरम् ।
यतो ऽनाच परेणोक्ता प्रत्यक्षत्वेन नित्यता ॥ ३६९ ॥
प्रत्यक्षत्वाद्घटादीनां माप्रसांक्षीद्धि नित्यता ।
अतीन्द्रियत्वान्मा भूच्च व्योमादेरप्यनित्यता ॥ ३७० ॥
न च नित्ये स्वरूपेण तेनोक्ते बुद्धिकर्मणी ।
यात्वनैकान्तिकत्वोक्तिस्सा तथैवावतिष्ठते ॥ ३७१ ॥
न तयोः प्रत्यभिज्ञानमेतदेव किलोच्यते ।
प्रत्यक्षत्वनिषेधेन प्रत्यक्षेण हि तद्भवेत् ॥ ३७२ ॥
तेन हेतोरभावो ऽयं विपक्षानुज्ञयोच्यते ।
हेतुं चाप्यभ्यनुज्ञाय विपक्षो नेति कथ्यते ॥ ३७३ ॥

साध्यं नित्यस्वरूपं चेदेतयोः प्रत्यभिज्ञयोः ।
तत्रासंबद्धता वाच्या योक्तापङ्क्तिवने प्रति ॥ ३७४ ॥
प्रत्यभिज्ञाननित्यत्वे या प्येषा ऽनवधारणा ।
अनादराय न ह्यस्मात्प्रकृतं मम दुष्यति ॥ ३७५ ॥
व्यक्तिरूपेण वा येन नाशित्वं बुद्धिकर्मणोः ।
न तत्र प्रत्यभिज्ञानं घटबुद्धौ हि नाश्वधीः ॥ ३७६ ॥
येन तु प्रत्यभिज्ञानं शक्तिजात्यात्मना ऽनयोः ।
तेन नित्यत्वमेवेष्टं कथं चित्सर्ववादिनाम् ॥ ३७७ ॥
एवं तु प्रत्यभिज्ञानं वाचोक्तं क्लिष्टयानया ।
न च शक्यं निराकर्तुं सर्वलोकप्रसिद्धितः ॥ ३७८ ॥
येन नाम प्रमाणेन ग्रहणं बुद्धिकर्मणोः ।
तेनैव प्रत्यभिज्ञाननित्यत्वं किं न सिध्यति ॥ ३७९ ॥
वाङ्मात्रात्प्रत्यभिज्ञानं शक्यं शब्दे ऽपि भाषितुम् ।
प्रत्यभिज्ञानपेक्षेण न प्रत्यक्षेण किंचन ॥ ३८० ॥
रूपशब्दाविभागाच्चेत्यचैतत्स्वापयिष्यते ।
प्रत्यक्षनित्यं कर्मेति तेनैषाचोपवर्णना ॥ ३८१ ॥
नास्माभिः प्रत्यभिज्ञानं नित्यसाधनमिष्यते ।
अनित्यवादिनस्त्वेषा प्रत्यक्षेण विरुद्धता ॥ ३८२ ॥
तेनानैकान्तिको नायं सिद्धान्तान्तरदूषणम् ।
धीकर्मस्वपि किं नैवमनित्यत्वं निवार्यते ॥ ३८३ ॥
तदुच्यते विनाशित्वमनुमानात्प्रतीयते ।
शब्दे प्रत्यक्षगम्ये च तेन बाध्ये बलीयसा ॥ ३८४ ॥
धीकर्मप्रत्यभिज्ञानान्नित्यता त्वानुमानिकी ।
तादृशी नाशितापीति तस्मात्तत्र बलाबलम् ॥ ३८५ ॥

न हि ते इति तेनाह सद्वा हेतोर्विशेषणम्।
प्रत्यक्षं श्रोत्रता चेयं हेतुः शब्दत्ववत्कृतः॥ ३८६॥
यत्कर्मातीन्द्रियाधारं तदप्रत्यक्षमुच्यते।
अप्रत्यक्षेति बुद्धिश्च शून्यवादे निरूपिता॥ ३८७॥
प्रत्यक्षद्रव्यवर्त्तिन्यो दृश्यंते याः पुनः क्रियाः।
तासां वर्णवदेवेष्टं नित्यत्वं प्रत्यभिज्ञया॥ ३८८॥
व्यञ्जकाभावतश्चासां संततानुपलब्धिता।
यदेवोत्पादकं वः स्यात्तदेव व्यञ्जकं मम॥ ३८९॥
न च शब्दत्वकर्मत्वे नित्ये अपि सती यथा।
न नित्यमुपलभ्येते तथा मे बुद्धिकर्मणी॥ ३९०॥
यथा वा शक्तिसद्भावे कुतश्चित्कारणादृते।
न कार्याण्युपजायन्ते तथाभिव्यक्तिरिष्यताम्॥ ३९१॥
व्यक्तिभ्योन्यतया तावत्कर्मक्लेशेन कल्प्यते।
पुनर्जातिसहस्राणां तद्भेदे क्लिष्टकल्पना॥ ३९२॥
ततएकत्वनित्यत्वप्रत्येकसमवायिता।
वृत्तिश्च विप्रकीर्णेषु कर्मभागेषु नाशिषु॥ ३९३॥
एकत्वाज्ज्वलनादीनां तस्मादेकात्मिका मतिः।
प्रयत्नाश्रयनानात्वाद्बुद्धिभेदः प्रवर्त्तते॥ ३९४॥
नैव ह्यत्रापि विच्छिन्नाःशाबलेयादिपिण्डवत्।
कर्मव्यक्तीर्विजानीमः कल्पयेम द्वयं यतः॥ ३९५॥
शीघ्रमन्दादिभेदोपि स्यात्प्रयत्नादिभेदतः।
व्यक्तिद्वारो यथा जातेर्व्यक्तेर्वा जनने यथा॥ ३९६॥
बुद्धीनामपि चैतन्यस्वाभाव्यात्पुरुषस्य नः।
नित्यत्वमेकता चेष्टा भेदस्तु विषयाश्रयः॥ ३९७॥

स्वरूपेण यथा वह्निर्नित्यं दहनकर्मकः ।
उपनीतं दहत्यर्थं दाह्यं नान्यन्नवान्यथा ॥ ३९८ ॥
यथा वा दर्पणः स्वच्छो यथा च स्फटिको मलः ।
यद्यन्निधीयते योग्यं तच्छायां प्रतिपद्यते ॥ ३९९ ॥
तथैवनित्यचैतन्याः पुमांसोदेहवृत्तयः ।
गृह्णन्तिकरणानीतान्रूपादीन्धीरसौ मतः ॥ ४०० ॥
तेनोपनेतृसंबन्धभङ्गित्वाद्भङ्गिनी मतिः ।
न नित्यं दाहको वह्निर्दाह्यासन्निधिना यथा ॥ ४०१ ॥
तच्च बोधात्मकत्वेन प्रत्यभिज्ञायते मतिः ।
घटहस्त्यादिबुद्धित्वं तद्भेदाल्लोकसंमतं ॥ ४०२ ॥
सैवेति नोच्यते बुद्धिरर्थभेदानुसारिभिः ।
न चास्याप्रत्यभिज्ञानमर्थभेदे ऽनुपाश्रिते ॥ ४०३ ॥
एतन्मनसि कृत्वाह नित्ये एवेतिभाष्यकृत् ।
एतयैव दिशा वाच्या शुक्लादेरपिनित्यता ॥ ४०४ ॥
संसर्गमात्रभेदेन स्यात्तत्रापि हि भेदधीः ।
स्वरूपं तु तदेवेति को जातिं कथयिष्यति ॥ ४०५ ॥
क्वचिद्द्रव्येण संसर्गः क्वचिच्चस्याद्गुणान्तरैः ।
शुक्लादेस्तेन भिन्नत्वं सिद्धं भासुरधूसरैः ॥ ४०६ ॥
ज्वालादेः क्षणिकत्वे ऽपि प्रत्यभिज्ञेति चेन्न तत् ।
तत्रापि प्रत्यभिज्ञेयं सामान्यं नित्यमेव नः ॥ ४०७ ॥
भेदबुद्धिस्तु यत्रांशे स्यात्केनचिदुपाधिना ।
तत्र नः प्रत्यभिज्ञानं भेदबुध्यैव वारितम् ॥ ४०८ ॥
ह्यस्तनोच्चारितस्तस्माद्गोशब्दो ऽद्यापि विद्यते ।
गोशब्दज्ञानगम्यत्वाद्यथोक्तो ऽद्यैव गौरिति ॥ ४०९ ॥

ह्यो वासीदेव गोशब्दः पूर्वोक्तेनैव हेतुना ।
यद्वा गोत्वाभिधायित्वं वाच्यो हेतुद्वयोरपि ॥ ४१० ॥
गोशब्दबुद्ध्या ह्यस्तन्या गोशब्दो ऽयं प्रकाशितः ।
गोशब्दविषयत्वेन यथैवा ऽद्यप्रसूतया ॥ ४११ ॥
इयं वा तं विजानाति तद्धेतोः पूर्वबुद्धिवत् ।
उभे वाप्येकविषये भवेतामेकबुद्धिवत् ॥ ४१२ ॥
देशकालादिभिन्ना वा समस्ता गोत्वबुद्धयः ।
एकगोशब्दजन्याःस्युर्गोधीत्वादेकबुद्धिवत् ॥ ४१३ ॥
गोशब्दबुद्धयोप्येवमेकगोशब्दगोचराः ।
गोशब्दविषयत्वेन कल्प्यतामेकबुद्धिवत् ॥ ४१४ ॥
गोशब्दत्वनिषेधाच्च नात्र स्यात्सिद्धसाध्यता ।
घटादेरेकतापत्तौ जात्येष्टं सिद्धसाधनं ॥ ४१५ ॥
व्यक्तीनामेकतापत्तिं कुर्याच्चेदनया दिशा ।
तस्य दृष्टविरुद्धत्वं वाच्यं सर्वप्रमाणकम् ॥ ४१६ ॥
येपि स्थूलविनाशानामन्यथानुपपत्तितः ।
कल्पयन्त्यन्तरासूक्ष्मं विनाशित्वं प्रतिक्षणम् ॥ ४१७ ॥
ते ऽपि क्षणिकनाशित्वादधिकां स्थूलनाशिताम् ।
शब्दानामविजानन्तो न शक्ता नाशिसाधने ॥ ४१८ ॥
क्षणभङ्गो घटादीनां वार्यस्तैरेव साधनैः ।
तथैव प्रत्यभिज्ञानाद्यावद्दृष्टं न बाधते ॥ ४१९ ॥
साधनं तु ब्रुवाणस्य दीपज्वालादिदर्शनात् ।
शब्दोक्तेनैव मार्गेण प्रत्यक्षादिविरुद्धता ॥ ४२० ॥
पूर्वक्षणविनाशे च कल्प्यमाने निरन्वये ।
उत्तरस्यानिमित्तत्वादुत्पत्तिर्नोपपद्यते ॥ ४२१ ॥

अत्यन्तासन्नसौ तस्मिन्नतावद्व्यापृतिक्षमः ।
स्वयं चाभावदृष्टत्वात्कस्मिन्काले करिष्यते ॥ ४२२ ॥
नाशोत्पादसमत्वे ऽपि नैरपेक्ष्यात्परस्परम् ।
न कार्यकारणत्वे स्तस्तद्व्यापारानुग्रहात् ॥ ४२३ ॥
न ह्यलब्धात्मकं वस्तु पराङ्गत्वाय कल्पते ।
न विनष्टं न च स्थानं तस्य कार्यकृतिक्षमम् ॥ ४२४ ॥
जायमानं च गन्धादि घटरूपे विनश्यति ।
तत्कार्यं नेष्यते यद्वत्तथा रूपान्तराण्यपि ॥ ४२५ ॥
तस्मात्प्राक्कार्यनिष्पत्तेर्व्यापारो यस्य दृश्यते ।
तदेव कारणं तस्य नत्वानन्तर्यमात्रतः ॥ ४२६ ॥
ज्वालादेरपि नाशित्वं नैव सिद्धं प्रतिक्षणम् ।
लघवो ऽवयवास्तत्र यान्ति देशान्तरं लघु ॥ ४२७ ॥
प्रभूतं वर्तिदेशे हि तेजस्तिष्ठति पिण्डितम् ।
तच्च यावद्व्रजत्यूर्द्धं तावज्ज्वालेति गम्यते ॥ ४२८ ॥
ततो ऽपि यदतिक्रम्य याति तत्स्यात्प्रभात्मकम् ।
ततः परं तु यद्याति तत्सौक्ष्म्यान्नावधार्यते ॥ ४२९ ॥
उत्तरावयवैरुद्धे मार्गे पूर्वे न यान्ति च ।
यथोत्तरे विमुञ्चन्ति पूर्वे यान्ति यथा तथा ॥ ४३० ॥
संक्रान्तावपि तेनैषां तृणादौ वृद्ध्यसंभवः ।
शब्दे वृद्ध्याद्यभावो ऽपि ध्वनिशैघ्र्येण जायते ॥ ४३१ ॥
शरीरे यौवनाद्याप्तिः परिणामाच्च सेत्स्यति ।
तथाहि संनिवेशादिप्रत्यभिज्ञायते जनैः ॥ ४३२ ॥
तत्रान्यानन्यवृत्तीनामनैकान्तस्वभावतः ।
उत्पत्तिस्थितिनाशानां विरोधः प्राङ्निराकृतः ॥ ४३३ ॥

एकसन्तानसंबन्धात्प्रत्यभिज्ञानकल्पना ।
ज्ञानसंततिमार्गेण वार्यान्यत्वाद्यसंभवात् ॥ ४३४ ॥

एवं स्थितस्य शब्दस्य श्रुतिकालात्क्षणान्तरे ।
संभाव्यते विनाशित्वं न भूयोऽन्येन हेतुना ॥ ४३५ ॥

यथा शस्त्रादिभिर्भेदाज्जरया वा पटादयः ।
नश्यन्तीत्यवगम्यन्ते नैवं शब्देऽस्ति कारणम् ॥ ४३६ ॥

शब्दो यथा पौद्गलिको निषिद्धः
स्याद्वायवीयस्य स एव मार्गः ।
तस्मादनिर्धारितहेतुभाग-
स्सर्वत्र साक्षाद्भवतीति नित्यः ॥ ४३७ ॥

॥ इति श्रीभट्टकुमारिलविरचिते मीमांसावार्त्तिके
शब्दाधिकरणं समाप्तम् ॥ :: ॥ :: ॥

---

## ॥ अथ ब्रह्मसूत्रतात्पर्यविवरणे द्वितीयाध्यायस्य ॥
### ॥ तृतीयपादारम्भः ॥

सांख्या योगाः पाशुपतास्तार्किका जिनबुद्धकाः ।
निरस्ता यत्प्रभावेण तस्मै शाम्बाय ते नमः ॥ १ ॥

तृतीयपादे वेदान्तेषु तत्र तत्र भिन्नक्रमेणाकाशक्रमेणोत्पत्तिः क्वचिद्वायुक्रमेण क्वचित् तेजःक्रमेणेति विरुद्ध उत्पत्तिक्रमः श्रूयते, एवं जीवप्राणादीनां क्रमादिद्वारको विप्रतिषेध उपलभ्यते, अतोऽविरोधाय परः संदर्भः प्रपञ्च्यते न वियदिति ॥

### न वियदश्रुतेः ॥ १ ॥ ८३ ॥

तत्रादावाकाशस्योत्पत्तिरस्ति न वेति चिन्त्यते न वियदिति,

उत्पत्तिप्रकरणे श्रवणमाकाशस्य नोपलभ्यते, "सदेव सोम्येद मग्र आसी"-दित्युपक्रम्य "तत् तेजोऽसृजते"ति त्रयाणामेव तेजोऽबन्नानां श्रवणात् ॥ १ ॥

उक्तयुक्तेर्नाकाशोत्पत्तिरिति प्राप्ते आह अस्तीति ॥

## अस्ति तु ॥ २ ॥ ८४ ॥

तुशब्दो नेत्यर्थः, श्रुत्यन्तरे "सत्यं ज्ञान"मित्युपक्रम्य "आत्मन आकाशः संभूत" इत्यादिश्रुतेरस्त्येवोत्पत्तिः ॥ २ ॥

ननु परस्परश्रुतिविरोधाचाकाशस्योत्पत्तिः संभवति विप्रतिषेधात्, इति प्राप्ते कश्चिदाह गौणीति ॥

## गौण्यसंभवात् ॥ ३ ॥ ८५ ॥

समवायिकारणादीनामश्रवणात् संभवो गौणोऽस्तीत्यर्थः, "आकाशेष्वालभे"न्नितिवत् ॥ ३ ॥

स एव स्वार्थे उपष्टम्भकमाह शब्दाच्चेति ॥

## शब्दाच्च ॥ ४ ॥ ८६ ॥

"वायुश्चान्तरिक्षं चैतदमृत"मिति शब्दादपि नोत्पत्तिर्मुख्येत्यर्थः ॥ ४ ॥

ननु तेजःप्रभृतिषु मुख्यः संभवः कथमाकाशे गौण इति चेन्नेत्याह स्याच्चेति ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥ ८७ ॥

यथैकस्यापि ब्रह्मशब्दस्य "तपो ब्रह्मे"तीत्यादावन्नादिषु गौण आनन्दे मुख्यस्तद्वदाकाशशब्दोऽपीत्यर्थः ॥ ५ ॥

कस्यचिन्मतं दूषयित्वा मुख्योत्पत्तिमुपपादयति प्रतिज्ञेति ॥

## प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥ ८८ ॥

"येनाश्रुतं श्रुतं भवती"त्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा हीयेत, तथा सत्यनुपपन्ना स्यात्, यदि नित्यं स्यात् तदा कारणानात्मकत्वादि-

कविज्ञानप्रतिज्ञाहानिः, शब्देभ्यश्च, एवं कार्यजातं ब्रह्मणः प्रदर्श्याव्यतिरेकप्रदर्शकशब्देभ्यः, "ऐतदात्म्यमिदं सर्व"मित्याद्या प्रपाठकसमाप्ते"रिदं सर्वं यदयमात्मा" "ब्रह्मैवेदममृतं पुरस्ता"दित्यादिभ्यः॰ तेजआदिवज्जन्यत्वमेवाकाशस्य, नहीयं श्रुतिस्तेजोजनिप्रथानाकाशस्योत्पत्तिं वारयति, एकवाक्यत्वानुपपत्तेः, क्रमविरोधेऽपि स्रष्टव्यं सृजतीत्येकवाक्यत्वे संभवति न श्रुतहानिर्युक्ता, न च "तज्जलानिति शान्त उपासीते"ति शमविधानार्थत्वाच्चोत्पत्तिरभिमता, नहि तेजःप्राथम्यानुरोधेन श्रुत्यन्तरसिद्धाकाशस्य परित्याज्यत्वं संभवति, क्रमस्य पदार्थधर्मत्वात् त्यागो युक्तः क्रमवाचकशब्दाभावात्, अर्थक्रमस्य श्रुत्यन्तरसिद्धस्याबाधितत्वाच्च, सर्वकार्याणामन्यदेशकालत्वात् प्रतिज्ञोपपत्तिरिति तु न, विकृतिप्रकृतिप्रायेणैवेदं सर्वविज्ञानं मृदादिदृष्टान्तकथनाच्चेतव्यम्, अतः सर्वब्रह्मकार्यत्वापेक्षयोपन्यासात् ॥ ६ ॥

यदुक्तमसंभवाद्गौण्युत्पत्तिरिति तत्राह यावदिति ॥

## यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥ ८९ ॥ १ ॥

तुशब्दोऽसंभवनिवृत्त्यर्थः, यतो यावद् घटादिविकारजातं तावदेव लोके॰उपलभ्यते, न त्वविकृतं कुतश्चिद्विभक्तं दृश्यते, आकाशस्य पृथिव्यादिभ्यो विभागोऽवगम्यते, अतः सोऽपि विकार एव भवति, एतेन दिक्कालमनःपरमाणूनां विकारत्वं व्याख्यातम्, नहि॰आत्मनस्त्वहमेव भूतं भवद् भविष्यच्च जानामीति ज्ञातुरात्मनोऽन्यथाभावोऽस्ति, सर्वदा वर्तमानस्वभावत्वात्, भस्मीभवत्यपि देहादौ नात्मन उच्छेदः, न तथाकाशस्य, अतः कार्यत्वमाकाशस्य, आकाशमनित्यम्॰ अनित्यगुणाश्रयत्वाद् घटादिवदिति श्रुत्यनुगृहीतानुमानाच्च, यदुक्तं शब्देभ्य इति तदपि॰ अमृता दिवौकस इतिवत् तदुपपत्तेः, "अतोऽन्यदार्त"मिति श्रुतेश्च, तस्माद्ब्रह्मकार्यं वियत् ॥ ७ ॥

एवं वाय्वादिष्वपीत्याह॰ एतेनेति ॥

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥ ९० ॥ २ ॥

न च सूत्रान्तरवैयर्थ्यं मन्दधियां शब्दमात्रकृताशङ्कानिवृत्त्यर्थत्वात् ॥ ८ ॥

नन्वनुपलभ्यमानोत्पत्तिकस्याकाशादेरुत्पत्तिस्तर्हि ब्रह्मणोऽप्युत्पत्तिरस्त्वित्याशङ्कायामाह असंभवस्त्विति ॥

## असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥ ९१ ॥ ३ ॥

सन्मात्रं ब्रह्म, न तस्य सन्मात्रादेवोत्पत्तिः, असत्यतिशये प्रकृतिविकृतिभावानुपपत्तेः, नहि विशेषेभ्यः सामान्योत्पत्तिः, मृत्सामान्याद्धि घटादयो विशेषाः, "स कारणं कारणकारणाधिपो न चास्य कश्चिज्जनिता न चाधिप" इति श्रुतेश्च, न च मूलप्रकृतेस्तदुत्पद्यते सर्वमूलप्रकृतेरेव नो ब्रह्मत्वात् ॥ ९ ॥

ननु छान्दोग्ये सदुपक्रम्य "तत् तेजोऽसृजते"ति श्रुतेस्तेजसः सन्मूलत्वं तैत्तिरीये वायुमूलत्वमिति संदेहेऽप्याह तेज इति ॥

## तेजोऽतस्तथाह्याह ॥ १० ॥ ९२ ॥ ४ ॥

अतो ब्रह्मणस्तेजः, कुतः, "सदेवे"त्युपक्रम्य तत् तेजोऽसृजते"ति श्रुतेः, सर्वविज्ञानप्रतिज्ञायाः सर्वस्य ब्रह्मस्वभावत्वे उपपत्तेः, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे"त्यादौ सर्वस्याप्यविशेषब्रह्मजन्यत्वोपदेशात्, "स तपस्तप्त्वेदं सर्वमसृजत यदिदं किंचे"त्यविशेषश्रवणात्, "वायोरग्नि"रिति तु पारम्पर्येऽप्युपपन्नम्, वायुं सृष्ट्वा वायुभावापन्नं ब्रह्म तेजोऽसृजतेति कल्पनात्, तस्याः शृतं तस्या दधीतिवत् "तदात्मानं स्वयमकुरुते"ति विकारात्मनावस्थानं ब्रह्मण उपपद्यते, "भवन्ति भावा भूतानामत एव पृथग्विधा" इति भगवदुक्तेश्च, एतेनाक्रमवादिन्यः श्रुतयो व्याख्याताः, सद्दृश्यत्वमात्रस्यापेक्षणात्, नाव्यवधानमप्यपेक्षितम् ॥ १० ॥

अपामपि "तदपोऽसृजत" "अग्नेराप" इतिश्रुतेर्न मूले संदेह इत्याह आप इति ॥

## आपः ॥ ११ ॥ ९३ ॥ ५ ॥

अतस्तथाह्याहेत्यनुवर्तते ॥ ११ ॥

"ता आपोऽन्नमसृजन्ते"ति श्रुतम्, तत्रान्नं किमोदनव्रीह्यादि उत पृथिव्यादि, तत्रान्नशब्दो व्रीह्यादिषु लोके वेदे च प्रत्ययात्, तस्मा"द्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवती"ति वृष्टिसाध्यत्वश्रवणाद्व्रीह्याद्येवेति प्राप्ते॰ आह पृथिवीति ॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥ ९४ ॥ ६ ॥

पृथिव्येव, कुतः, "तत् तेजोऽसृजते"ति महाभूताधिकारात्, "यत् कृष्णं तदन्नस्ये"ति रूपात्, नहि व्रीह्योदनादि कृष्णमेव, "अद्भ्यः पृथिवी"ति श्रुतिशब्दान्तराच्चेत्यर्थः ॥ १२ ॥

किं वियदादीनि भूतानि स्वयमेव स्वतन्त्राणि विकारान् सृजन्ति किं वा तथा परेश्वर एवेति संशये॰ "आकाशाद्वायु"रिति स्वातन्त्र्यश्रवणाद्वियदादेरेवेति प्राप्ते॰ आह तदभिध्यानादिति ॥

## तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥ ९५ ॥ ७ ॥

ईश्वर एव तत्तदात्मनावस्थितस्तं तमभिध्यायन् सृजति तल्लिङ्गात्, "यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयती"त्यादिसाध्यत्वाणामेव भूतानां प्रवृत्तिदर्शनात्, "नान्योऽतोऽस्ति द्रष्टे"त्यादि "तदात्मानं स्वयमकुरुते"ति दर्शनाच्च ॥ १३ ॥

तदेवं भूतानामुत्पत्तिक्रमे निर्णीते॰ इदानीं लयक्रमश्चिन्त्यते किमुत्पत्तिक्रमेण लयो विपर्ययेण वेति तत्राविशेषादनियमः श्रुतत्वादुत्पत्तिक्रमेणैव वेति प्राप्ते॰ आह विपर्ययेति ॥

## विपर्ययेण च[1]क्रमोऽत उपपद्यते च ॥ १४ ॥ ९६ ॥ ८ ॥

यथा लोके येन क्रमेण सोपानारोहणं तद्विपरीतक्रमेणावरोहणं तथात्रापि विपर्ययेण लयः, उपपद्यते च, तथा दृष्टत्वात्, मृदो जातं घटादि मृद्येव लयं प्राप्नोति, हिमकरकादि॰ अद्भ्यो जातमप्स्वेव लीयते

१ भाष्ये तुः पठितः।

ıवमग्रादि स्वस्वकारणद्वारात्मन्येव लीयत इति, "पृथिव्यप्सु प्रलीयते ज्योतिष्याप" इत्यादिश्रुतेश्चेति चशब्दार्थोऽयम् ॥ १४ ॥

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथिवी सर्वस्य धारिणी" ॥

इति श्रुतेः ।

"बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्" ॥

इति स्मृतेश्च पूर्वोक्तेश्वरादाकाशादिभूतोत्पत्तिप्रलयक्रमभङ्गो भूतानामिति प्राप्त आह॰ अन्तरेति ॥

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥ ९७ ॥ ९ ॥

नन्विन्द्रियादीनि करणानि भौतिकान्यभौतिकानि वा, उभयथापि पूर्वोक्त एवोत्पत्तिप्रलयक्रमः, न तयोः क्रमान्तरम्, भौतिकत्वे श्रुतिश्च "अन्नमयं हि सोम्य मन आपो मयः प्राणस्तेजोमयी वा"गित्यादि, तदा भूतत्वाविशेषाद् भिन्नव्यपदेशो ब्राह्मणपरिव्राजकन्यायेन । यद्यभौतिकानि तथापि न विशेषः, प्रथमं करणानि ततो भूतानि, आदौ भूतानि ततः करणानीति । तथापि सत एवोत्पत्तिलयौ । तस्माच्च पूर्वोक्तभूतोत्पत्तिलयक्रमभङ्गः ॥ १५ ॥

देवदत्तो जातो मृत इतिव्यपदेशाज्जातकर्मादिसंस्कारविधानाच्च स्यादुत्पत्तिप्रलयौ जीवस्येत्याशङ्कायामाह चराचरेति ॥

चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥ ९८ ॥ १० ॥

न जीवस्योत्पत्तिप्रलयौ, शरीरानुविनाशिनि जीवे शरीरान्तरगतेष्टानिष्टप्राप्तिपरिहारार्थौ विधिप्रतिषेधावनर्थकौ स्याताम्, श्रुतं च "जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते" इति, लौकिकौ जन्मादि-

व्यपदेशौ, चराचरव्यपाश्रयः स्थिरचरजगद्विषयौ भाक्तौ, तद्भावभावित्वात् शरीरप्रादुर्भावविनाशयोर्जीवस्य तौ व्यवहारौ न तौ विना, नहि शरीरादन्यत्र तौ जीवस्य, अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः स उत्क्रामन् म्रियमाण इति, जातकर्मादिकमपि देहप्रादुर्भावापेक्षम्, देहाश्रयौ स्थूलावुत्पत्तिप्रलयौ जीवस्य नेत्येतत् तावदत्रोच्यते, उत्तरत्र तु वियदादिवत् पुनरात्मनो जीवोत्पत्तिर्विचार्यते ॥ १६ ॥

जीवः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलभोगी स वियदादिवत् परस्मादुत्पद्यते यथाग्नेर्विस्फुलिङ्गा इत्यादिदर्शनात्, अपहतपाप्मत्वादिधर्मकात् परात्मनो भिन्नत्वादस्य विकारसिद्धेः, विकारत्वादेवास्य जन्मादी॰ इति प्राप्ते॰ आह नात्मेति।

## नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥ ९९ ॥ ११ ॥

न जीव उत्पद्यते, अश्रुतेः, विस्फुलिङ्गवच्छ्रवणेऽपि ताभ्यो "न जीवो म्रियते""अनेन जीवेनात्मनानुप्रविश्य नामरूपे"॰ "अजो नित्यः शाश्वतोऽयं पुराणः" "न जायते म्रियते" इत्यादिभ्यो नित्यत्वावधारणात्, चकारादजत्वं ग्राह्यम् ॥ १७ ॥

स किमागन्तुकचैतन्यो नित्यचैतन्यो वेति,तत्रात्ममनःसंयोगजज्ञानः, नित्यचेतनत्वे सुप्तमूर्छितग्रहाविष्टा अपि चेतनाः स्युरिति प्राप्त आह ज्ञ इति ॥

## ज्ञोऽत एव ॥ १८ ॥ १०० ॥

ज्ञो नित्यचैतन्यः, अत एव, यस्मादेव परं ब्रह्मैवोपाधिना जीवत्वेन तिष्ठति नोत्पद्यते॰ अतः, सुप्तादीनां तु विषयाभावादचेतनता, यथा वियदाश्रयप्रकाशस्य प्रकाश्याभावादनभिव्यक्तिस्तथेहापि, तस्मान्नित्यचेतनः, वैशेषिकादितर्कस्त्वाभास एव ॥ १८ ॥

विषयाभावे ज्ञानानुपलब्धेश्चेति युक्त्यन्तरमाह युक्तेश्चेति ॥

## [१]युक्तेश्च ॥ १९ ॥ १०१ ॥ १२ ॥

॥ १९ ॥

१ इदं सूत्रमत्र भाष्ये नोपलभ्यते।

इदानीं जीवोऽणुपरिमाण उत मध्यमो महान् वेति चिन्ता, तत्र 'शरीरात् समुत्क्रामती'त्युत्क्रान्तिश्रवणा'च्चन्द्रमसमेव ते गच्छन्ती'ति गते'स्तस्माल्लोकात् पुनरेति'-इत्यागतिश्रवणात् परिच्छिन्नः, तत्र मध्यपरिमाणस्यार्हतनिरासे निरस्तत्वादणुरात्मेत्याशङ्क्ते॰ उत्क्रान्तीति ॥

## उत्क्रान्तिगत्यागतीनाम् ॥ २० ॥ १०२ ॥

॥ २० ॥

"चक्षुषो वा मूर्ध्नो वा"॰ इत्यादिना "शुक्रमादाय पुनरेती"ति स्वात्मनैवोत्तरयोर्गमनागमनयोः सत्त्वाद् 'गम धातोः' कर्तृस्थक्रियत्वादप्यणुत्वमित्याह स्वात्मनेति ॥

## स्वात्मना चोत्तरयोः ॥ २१ ॥ १०३ ॥

॥ २१ ॥

मध्ये "स एष महानज आत्मे"त्यतच्छ्रुतेरणुत्वविपरीतमहत्त्वश्रुतेर्नाणुत्वमिति समाधानमाशङ्क्य दूषयति नाणुरिति ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २२ ॥ १०४ ॥

नैतत्, इतरस्य परात्मनोऽधिकाराच्च जीवस्याणुत्वे विरोधः, न च "योऽयं विज्ञानमयः प्राणे"ष्वित्यादौ महत्त्वं निर्दिष्टम्, शास्त्रदृष्ट्या वामदेववन्निर्देशात्, तस्माज्जीवोऽणुः ॥ २२ ॥

"एषोऽणुरात्मा चेतसा वेदितव्य" इति साक्षाच्छ्रुते"र्बालाग्रशतभागस्य शतधा कल्पितस्य तु । भागो जीवः स विज्ञेय"इति॰ "आराग्रमात्रो ह्यवरोऽपि दृष्ट" इति चोन्मानादणुत्वमित्याह स्वशब्देति ॥

## स्वशब्दोन्मानाभ्यां च ॥ २३ ॥ १०५ ॥

॥ २३ ॥

नन्वणुत्वे॰ एकदेशस्थस्य सकलदेहगतोपलब्धिर्विरुद्धा, यथा गङ्गाह्रदादिमग्नानां सर्वाङ्गशैत्यस्य निदाघे परितापस्य चोपलब्धेर्विरोध इत्यत्रोत्तरयति॰अविरोध इति ॥

## अविरोधश्चन्दनवत् ॥ २४ ॥ १०६ ॥

यथा चन्दनविन्दुः शरीरैकदेशसंबद्धोऽपि सकलदेहमाह्लादयति, तद्वदात्मापि सर्वत्रोपलब्धिं करिष्यतीति न विरोधः ॥ २४ ॥

न विरोध इत्युक्तम्, तदयुक्तम्, दृष्टान्तवैषम्यात्,चन्दनस्य त्वेकदेशस्थत्वं वैशेष्यं दृश्यते, आत्मनस्तु नैकदेशवर्तित्वं प्रत्यक्षम्, अनुमेयं हि तत्, इति शङ्कायामाह॰ अवस्थितीति ॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाहृदि हि ॥ २५ ॥ १०७ ॥

आत्मनोऽप्येकदेशस्थत्वं "हृदि॰ एष आत्मा प्राणेषु हृद्यन्तर्ज्योति"रिति श्रुतिष्वभ्युपगमान्नानुमेयमिति दृष्टान्तसंगतिः ॥ २५ ॥

ननु चन्दनस्य सावयवत्वात् सूक्ष्माणूनां विसर्पणेनापि सर्वदेहव्यापित्वं यथा मणिप्रदीपाद्येकदेशस्थमपि सकलदेशवर्तिप्रभादिकार्यद्रव्यं करोति, तद्वच्चैकत्रस्थो जीवः सर्वशरीरे चैतन्यगुणव्याप्तिं करिष्यति चैतन्यस्य गुणत्वात्, नहि गुणो गुणिव्यतिरेकेणान्यत्र वर्तितुमीष्टे, प्रभा तु द्रव्यं न गुणः, तस्माच्च जीवस्याणुत्वमित्याशङ्कते गुणाद्वेति ॥

## गुणाद्वा लोकवत् ॥ २६ ॥ १०८ ॥

॥ २६ ॥

महापूर्वपक्षी समाधत्ते व्यतिरेकेति ॥

## व्यतिरेको गन्धवत् ॥ २७ ॥ १०९ ॥

यथा गुणस्यापि गन्धस्य कुसुमव्यतिरेकेण वृत्तिः, अप्राप्तेष्वपि कुसुमेषु तद्गन्धोपलब्धेः, एवमणोरपि चैतन्यगुणव्यतिरेकः ॥ २७ ॥

॥ २७ ॥

हृदयायतनत्वमणुत्वं चात्मनोऽभिधाय तस्यैव "आलोमभ्य आ नखाग्रेभ्य" इति चेतनगुणेन समस्तशरीरव्यापित्वं च दर्शयति तथा च दर्शयतीति ॥

## तथा च दर्शयति ॥ २८ ॥ ११० ॥

॥ २८ ॥

"प्रज्ञया शरीरमारुह्ये"ति च॰ आत्मनः प्रज्ञायाश्च करणभावेन पृथगुपदेशाच्चैतन्यगुणेनैवास्य शरीरव्यापितावगम्यते, "तदेषां प्राणानां विज्ञानेन विज्ञानमादाये"ति कर्तुः शरीरात् पृथग्विज्ञानोपदेशे॰ एतमभिप्रायमुपोद्बलयति पृथगुपदेशेति ॥

## पृथगुपदेशात् ॥ २९ ॥ १११ ॥

तस्मादणुरात्मेति ॥ २९ ॥

अणुत्वं खण्डयति तद्गुणेति ॥

## तद्गुणसारत्वात् तु [1]व्यपदेशः प्राज्ञवत् ॥ ३० ॥ ११२ ॥

त्वर्थः पूर्ववत्, उत्पत्त्यश्रवणात् परस्यैव प्रवेशस्मरणात् तादात्म्योपदेशाच्चेश्वर एव जीव इत्युक्तम्, एवं च यावद् ब्रह्म तावान् जीवः, ब्रह्मणश्च परत्वमुक्तमेव, एवं च जीवविषया विभुत्ववादाः श्रौताः स्मार्ताश्च समर्थिताः, न चाणोर्जीवस्य सर्वशरीरवेदनोपपद्यते, शरीरसंबन्धादिति चेत्, कण्टकवेदनेऽपि सकलगतैव वेदना प्रसज्येत, पाद एव वेदनाप्रतीतेः, न चाणोर्गुणस्य व्यापित्वमुपपद्यते गुणस्य गुणिदेशत्वात्, गुणनाश्रयत्वे गुणत्वमेव हीयेत, प्रदीपप्रभायाश्च द्रव्यान्तरत्वमेव, गन्धोऽपि गुणत्वादेव साश्रय एव संचरति, यदा चैतन्यं सर्वशरीरव्यापि तदा नैवाणुर्जीवः स्यात्,चैतन्यमेवास्य स्वरूपम्, अग्नेरिवौष्ण्यप्रकाशौ, मध्यमपरिमाणत्वं च दूषितमेव, कथमणुत्वव्यपदेशस्तत्राह, तस्या बुद्धेर्गुणा इच्छादिः सारः प्रधानं यस्यात्मनस्तत्त्वात् संसारित्वस्य, तस्मादौपाधिकमणुत्वादि दुर्ज्ञेयत्वाभिप्रायं वाणुत्वम् ॥ ३० ॥

ननूपाधिप्रयुक्तमणुत्वं यदि तदा बुद्ध्यात्मनोः संयोगावसानमावश्यकमिति बुद्धिवियोगे तस्याणुत्वाद्सत्त्वमसंसारित्वं वा स्यादत उत्तरयति यावदिति ॥

[1] भाष्ये तद्व्यपदेश इति पाठः ।

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३१ ॥ ११३ ॥

पूर्वोक्तं न, बुद्धिसंयोगस्य यावदात्मभावित्वात्, यावदयं संसा तावदस्य बुद्धिसंयोगः, परमार्थतो नास्य संसारो जीवत्वं च, किंतु बुद्ध पाधिकल्पितम्, स्वरूपं तु ब्रह्मैव, "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोते"ति· "अहं ब्रह्मास्मि" "तत् त्वमसि" इत्यादिश्रुतिशतेभ्यः, कथ मेतदवगम्यते, तद्दर्शनात्, तथा श्रुतिदृष्टत्वात्, "योऽयं विज्ञानमय प्राणेषु हृद्यन्तर्ज्योतिर्ध्यायतीव लेलायतीवे"त्यादिषु बुद्धिमयत्वं च बुद्धि गुणसारत्वमिव यथा स्त्रीमयोऽयं पुमानिति, किंच मिथ्याज्ञानपुरःसर ए बुद्ध्युपाधिसंबन्धः, मिथ्याज्ञानस्य च सम्यगात्मदर्शनेन नाश इति, अतः यावत् तत्त्वज्ञानं नोत्पन्नं तावत् संसारो न नश्यति, "तमेव विद्वानमृ इह भवति नान्यः पन्थे"त्यादि दर्शयति च ॥ ३१ ॥

ननु सुषुप्तिप्रलययोर्नात्मनो बुद्धिसंबन्धः "सता सोम्य तदा संपन्न भवती"त्यादिना सर्वविकाराणां लयदर्शनात् कथं यावज्जीवत्वं बुद्धि संबन्धस्तत्राह पुंस्त्वादिवदिति ॥

पुंस्त्वादिवत् त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३२ ॥ ११४ ॥

यथा पुंस्त्वादीनि बाल्येऽपि बीजात्मना विद्यमानान्येवानुपलभ्य मानान्यविद्यमानवदभिप्रेतानि यौवनादिष्वाविर्भवन्ति, नाविद्यमाना त्पद्यन्ते षण्ढादीनामपि तदुत्पत्तिप्रसङ्गात्, एवं बुद्धिसंबन्धोऽपि शक्त्य त्मना सुषुप्तिप्रलययोः सन् प्रबोधप्रसवयोराविर्भवति, न ह्याकस्मि कस्याप्युत्पत्तिरतिप्रसङ्गात्, "सति संपद्य न विदुः सति संपद्यामह"इ "त इह व्याघ्रो वा सिंहो वा वराहो वे"त्यादि, तस्मात् सिद्धमेतद्या दात्मभावी बुद्धिसंबन्ध इति ॥ ३२ ॥

नित्योपलब्धीति ॥

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॥ ३३ ॥ ११५ ॥ १३ ॥

तदुपाधिभूतमन्तःकरणं मनो बुद्धिर्विज्ञानं चित्तमित्यनेकधा

तत्राभिलप्यते, क्वचित् संशयादिवृत्तिकं मन इत्युच्यते निश्चयात्मिका बुद्धिरित्यादि, तच्चैतादृशमन्तःकरणमवश्याभ्युपगन्तव्यम्, अन्यथा नित्यमुपलब्धेरनुपलब्धेर्वा प्रसङ्गः, आत्मेन्द्रियविषयाणां सत्त्वात्, फलानङ्गीकारे नित्यमेवानुपलब्धिप्रसङ्गः, अथ॰ आत्मन इन्द्रियादेर्वा शक्तिप्रतिबन्ध एव तदानीमस्तु किमन्तःकरणेनेति तु न, अविक्रियत्वेन शक्तिप्रतिबन्धासंभवात्, नापीन्द्रियस्य, नहि तस्य पूर्वमर्थे चाप्रतिबद्धशक्तिकस्य सतोऽकस्माच्छक्तिः प्रतिबध्येत, तस्माद् यदवधानानवधानाभ्यामुपलब्ध्यनुपलब्धी भवतस्तन्मनः, "अन्यत्रमना अभूवं नादर्शं नाश्रौषं" "मनसा ह्येव पश्यति शृणोति" कामादयस्त्वस्यैव वृत्तयः, "कामः संकल्पो विचिकित्सेत्यादि सर्वं मन एव", तस्माद्युक्तं बुद्धिगुणसारत्वाद्व्यपदेश इति ॥ ३३ ॥

तद्गुणोपाधिका एवान्येऽपि धर्मा इत्याह कर्तेति ॥

## कर्ता शास्त्रार्थवत्त्वात् ॥ ३४ ॥ ११६ ॥

अयं जीवः कर्ता च स्यात्, 'यजेत' 'दद्यात्' 'जुहुयात्'॰ इत्यादिविधयोऽपि सार्थका भवन्ति, अन्यथा अनर्थकत्वमेव स्यात्, "एष हि द्रष्टा श्रोता मन्ते" त्यादि ॥ ३४ ॥

जीवप्रक्रियायां संध्ये स्थाने "स ईयते मृतो यत्र काम"मिति स्वे शरीरे यथाकामं परिवर्तते, अतोऽपि जीवस्य कर्तृत्वमित्याह विहारेति ॥

## विहारोपदेशात् ॥ ३५ ॥ ११७ ॥

॥ ३५ ॥

'प्राणानां विज्ञानेन विज्ञानमादाये'त्युपादानश्रवणादपि कर्तृत्वमित्याहोपादानेति ॥

## ॰उपादानात् ॥ ३६ ॥ ११८ ॥

॥ ३६ ॥

कर्तृत्वे युक्त्यन्तरमाह व्यपदेशेति ॥

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ॥ ३७ ॥ ११९ ।

यतो वैदिकक्रियासु कर्तृत्वं व्यपदिश्यते, "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चे"ति,अतोऽपि कर्तृत्वम्, न च विज्ञानं बुद्धिस्तस्यैः कर्तृत्वमुक्तं न जीवस्येति, जीवस्यैवायं निर्देशो न बुद्धेः, एवं न चेत्, जीवस तदा विज्ञानेनेति करणत्वेन निर्देशविपर्ययः स्यात्, यथा करणत्वविव तथा प्राणानां विज्ञानेन विज्ञानमादायेति तथेहापि स्यात्, इह तु 'त नुते' इति कर्तृसामानाधिकरण्याद् बुद्धिभिन्नस्यैवात्मनः कर्तृत्व सूच्यते ॥ ३७ ॥

यदि बुद्धिव्यतिरिक्तो जीवः कर्ता स्यात् स स्वतन्त्रः सन् प्रि हितं चात्मनो नियमेन संपादयेन्न विपरीतम्, तथासंपादयन्नुपलभ्यते : च स्वतन्त्रस्येदृशी प्रवृत्तिरनियमेनोपपद्यते, तत्रोत्तरमाह॰ उपलब्धिव दिति ॥

उपलब्धिवदनियमः ॥ ३८ ॥ १२० ॥

यथायमात्मोपलब्धिं प्रति स्वतन्त्रोऽप्यनियमेनेष्टमनिष्टं चोपल भते, एवमनियमेनैवेष्टानिष्टे संपादयिष्यति, न चोपलब्धिहेतूनामपेक्षणा नोपलब्धौ स्वातन्त्र्यं विषयकल्पनामात्रे ह्यनपेक्षणात्, बुद्धौ स्वातन्त्र्यमेः चैतन्ययोगात्, किंचार्थक्रियायामपि देशकालनिमित्ताद्यपेक्षत्वात् सहका रिवैचित्र्याच्चेष्टानिष्टक्रियास्वनियमेन प्रवृत्तिर्न विरुध्यते ॥ ३८ ॥

यदि बुद्धिरेव कर्त्री तदा कर्तृत्वकरणत्वविपर्ययः स्यात्, करणत्व हीयेत, कर्तृत्वं च स्यात्, तथा च संज्ञामात्रभेदः स्यान्न वस्तुभेदः, करणभि न्नस्य कर्तृत्वाङ्गीकारात्, इत्याह शक्तीति ॥

शक्तिविपर्ययात् ॥ ३९ ॥ १२१ ॥

॥ ३९ ॥

योऽप्यौपनिषदः प्रतिपत्तिप्रयोजनः समाधिरुक्तः, "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", "ओमित्येवं ध्यायथा त्मान" मित्यादिना, सोऽपि कर्तृत्वे सत्येवोपपद्यत इत्याह समाधीति

समाध्यभावाच्च ॥ ४० ॥ १२२ ॥ १४ ॥

॥ ४० ॥

यत् कर्तृत्वं तदेव शास्त्रार्थवत्त्वादिहेतुभिः स्वाभाविकमेव नोपाधिप्रयुक्तमित्यत्राह यथा चेति ॥

यथा च तक्षोभयथा ॥ ४१ ॥ १२३ ॥ १५ ॥

स्वाभाविकत्वेऽनिर्मोक्षप्रसङ्गः, अग्नेरिवौष्ण्यस्य, साधनविधानान्मोक्ष इति न, साधनायत्तस्यानित्यत्वात्, किंच नित्यशुद्धमुक्तात्मप्रतिपत्त्या मोक्षः, कर्तृत्वे नैतदुपपद्यते, श्रुतिरपि "ध्यायतीव लेलायतीवे"ति, "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्ये"दित्यादिना कर्तृत्वादिनिषेधात्, सूत्रे चकारस्त्वर्थः, यथा तु लोके तक्षा वास्यादिकरणसापेक्षो दुःखी भवति विमुक्तवास्यादिः स्वगृहं प्राप्तः स्वस्थो भवति तथा मोक्षावस्थायां ध्वान्तं विद्ययावधूय केवलः सुखी भवति, एतेन विहारोपादाने वास्तविके परिहृते ॥ ४१ ॥

सोपाधिकं कर्तृत्वमपि किमीश्वरमनपेक्ष्य उतेश्वरापेक्षम्, तत्र प्रयोजनाभावान्निरपेक्षस्यैव कारकान्तरसहकृतस्य कृष्यादिवज्जन्तूनां धर्माधर्मसहकारेण वैषम्यनैर्घृण्यवारणात्, इति प्राप्त आह परात् त्विति ॥

परात् तु तच्छ्रुतेः ॥ ४२ ॥ १२४ ॥

त्वर्थः पूर्ववत्, जीवावस्थायामविवेकदर्शिनस्तिमिरान्धस्य सतः कर्माध्यक्षसाक्षिचेतयितुरीश्वरात् तदनुज्ञया कर्तृभोक्तृत्वरूपसंसारस्य सिद्धिः, तदनुग्रहहेतुकेनैव विज्ञानेन मोक्षसिद्धिर्भवति, तच्छ्रुतेः, "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते", "य आत्मानमन्तरो यमयती"त्यतः ॥ ४२ ॥

नन्वेवमीश्वरस्य कारयितृत्वे वैषम्यनैर्घृण्ये स्यातामकृताभ्यागमश्च जीवस्येत्याशङ्क्याह कृतप्रयत्नेति ॥

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धवैयर्थ्यादिभ्यः ॥ ४३ ॥ १२५ ॥ १६ ॥

तुशब्दो व्यावृत्त्यर्थः, कृतप्रयत्नौ धर्माधर्मौ तदपेक्षस्तु परमेश्वरः कथमीश्वरस्तदपेक्ष इत्यत्राह विहितप्रतिषिद्धवैयर्थ्यादिभ्यः, "यजेत" "न हन्तव्य' इत्यादिवैयर्थ्यात्, आदिना वेदप्रामाण्यं न स्यात्,पुरुषकारवैयर्थ्यं च ॥ ४३ ॥

जीवेशयोरुपकार्योपकारकभाव उक्तः, स च संबद्धयोरेव लोके दृष्टः स्वामिभृत्ययोरग्निविस्फुलिङ्गयोरिव, जीवेश्वरयोः किमात्यन्तिकभेदप्रयुक्त स्वामिभृत्यादिवत् संबन्ध उत भेदाभेदावगमाभ्यामग्निविस्फुलिङ्गयोरिवेति तत्र स्वामिभृत्यवदनियमो वेति प्राप्त आह-अंश इति ॥

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४४ ॥ १२६ ॥

अंश इवांशो निरवयवत्वात्, मुख्यांशत्वं तु न संभवति, कुतः नानाव्यपदेशात्, "सोऽन्वेष्टव्यः स जिज्ञासितव्यः", "एतं विदित्वा मुनिर्भवति", "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयती"त्यादिनिर्देशो नासति भेदे युज्यते, ननु स्वामिभृत्यसारूप्ये युज्येत नानात्वव्यपदेश इत्यत आह- अन्यथा चापीति,नानाव्यपदेशादेव नांशत्वप्रतिपत्तिः किं त्वभेदप्रतिपादकोऽपि व्यपदेशोऽस्ति, एके- 'आथर्वणिका ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा' इति च,अन्ये कितवा द्यूतकृतस्ते सर्वं ब्रह्मैवेति हीनजन्तूदाहरणेन सर्वेषामेव नामरूपकृतकार्यकरणसंघातप्रविष्टानां जीवानां ब्रह्मत्वमाह, एवं "त्वं स्त्री त्वं पुमानसि त्वं कुमार इति वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुख" इति, "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वे"त्यादि, "नान्योऽतोऽस्ति द्रष्टे"त्यादिभ्यश्चास्यार्थस्य सिद्धिः, चैतन्यं चाविशिष्टं जीवेशयोरग्निविस्फुलिङ्गयोरिवौष्ण्यम्, तस्माद् भेदाभेदाभ्यामंशत्वमित्यर्थः ॥ ४४ ॥

"तावानस्य महिमा ततो ज्यायांश्च पूरुषः पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि", अत्र भूतशब्देन स्थावरजंगमानि, पादोंऽश इत्यनर्थान्तरम्, इति मन्त्रवर्णादपीत्याह मन्त्रेति ॥

## मन्त्रवर्णाच्च ॥ ४५ ॥ १२७ ॥

॥ ४५ ॥

स्मर्यते च "ममैवांशो जीवलोके जीवभूतः सनातन" इत्यादीत्याह· अपिचेति ॥

## अपिच स्मर्यते ॥ ४६ ॥ १२८ ॥

॥ ४६ ॥

नन्वंशांशित्वाङ्गीकारे जीवदुःखेनांशिन ईश्वरस्यापि दुःखित्वापत्तिः, यथा हस्तपादादिदुःखेन देवदत्तस्य दुःखित्वम्, एवं च सम्यग्दर्शनानर्थक्यमित्याशङ्कां वारयति प्रकाशादिवदिति ॥

## प्रकाशादिवन्नैवं परः ॥ ४७ ॥ १२९ ॥

जीवस्याविद्यकनामरूपकृतदेहेन्द्रियाद्युपाधितादात्म्याभिमानेन देहगतदुःखादिकस्यानुभवो न पारमार्थिकः, नैवं सर्वज्ञस्येश्वरस्य देहाद्यात्मभावो दुःखाभिमानो वास्तीति न दुःखित्वम्, स्नेहातिशये पुत्रमित्रादिदुःखं भ्रान्त्या, तथेति भावः ॥ ४७ ॥

## स्मरन्ति च ॥ ४८ ॥ १३० ॥

स्मरन्ति च, "नहि जैवेन दुःखेन परात्मा दुःखभाग्भवेत् । तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः ॥ न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा" । इत्यादि, "तयोरन्यः पिप्पलं स्वाद्वत्ती"ति च ॥ ४८ ॥

ननु निरवयवस्य ब्रह्मणो मुख्यमंशांशित्वं नेत्युक्तम्, तर्हि "ऋतौ भार्यामुपेया"दित्यनुज्ञा, "गुर्वङ्गनां नोपगच्छे"दिति परिहारः, एवं च 'मित्रमुपसेवेत' 'शत्रुः परिहर्तव्य' इत्यनुज्ञापरिहारौ, तयोरुपपत्तिर्वाच्या, इति तामाह· अनुज्ञेति ॥

अनुज्ञापरिहारौ देहसंबन्धाज्ज्योति-
रादिवत् ॥ ४९ ॥ १३१ ॥

देहेन संबन्धः, अयमिन्द्रियादिसंघातो देहोऽहमेवेति विपरीत प्रत्ययोत्पत्तिः, सा च सर्वप्राणिनामहं गच्छाम्यहं तिष्ठामीत्यादिरूपा नह्यस्याः सम्यग्ज्ञानव्यतिरिक्तं निवारकमस्ति, तदेवमविद्योपाधिसंबन्ध कृतविशेषादैकात्म्याङ्गीकारेऽप्यनुज्ञापरिहाराववकल्प्येते, सम्यग्दर्शने सति तयोरानर्थक्यं कृतार्थत्वान्नियोज्यत्वानुपपत्तेः, तस्माद्देहसंबन्धादेवानुज्ञाप रिहारौ, यथा ज्योतिष एकत्वेऽपि क्रव्यादग्निः परिहार्यो नेतरस्तद्वत् ॥ ४९

नन्वेवमपि कर्मफलसंबन्ध ऐकात्म्ये व्यतिकीर्येत स्वाम्यैकत्वात् इति प्राप्त आह· असंततेरिति ॥

असंततेश्चाव्यतिकरः ॥ ५० ॥ १३२ ॥

नहि कर्तुर्भोक्तुरात्मनः संततः सर्वशरीरसंबन्धः, उपतन्त्रो जीव इत्युक्तम्, उपाध्यसंतानाच्च न जीवसंतानः, ततः कर्मव्यतिकरः फलव्य तिकरो वा न भविष्यति ॥ ५० ॥

आभास एवेति ॥

आभास एव च ॥ ५१ ॥ १३३ ॥

अयं जीवः परमात्मनो जलसूर्यवच्चिदाभास एव, नेश्वर एव साक्षात् नापि वस्त्वन्तरम्, अतश्च यथा नैकजलसूर्ये कम्प्यमाने जलसूर्यान्तरं कम्पते एवं नैकजीवे कर्मफलसंबन्धिनि सति जीवान्तरस्य तत्संबन्धापत्तिः, अनयापि युक्त्या कर्मफलयोरव्यतिकरः, आभासस्य चाविद्याकृतत्वात् तदाश्रयसं सारस्याप्यविद्याकृतत्वम्, तन्निरासेन पारमार्थिकब्रह्मभावस्योपपत्तिः बहवो जीवा वास्तवा इत्यादिवैशेषिकादिमते त्वेकस्यात्मनः सुखादि योगे हेत्वविशेषात् फलाविशेषाच्च सर्वात्मनामेव समानसुखदुःखित्व प्रसज्येत ॥ ५१ ॥

अदृष्टनिमित्तो नियमो भविष्यतीत्यत्राह· अदृष्टेति ॥

अदृष्टानियमात् ॥ ५२ ॥ १३४ ॥

बहुषु सर्वगतेष्वात्मसु प्रतिशरीरं बाह्यान्तराविशेषेण संनिहितेषु मनोवाक्कायैरदृष्टमुपार्ज्यत इत्यस्यैवेदमदृष्टमस्य नेति नियमहेत्वभावादेष एव दोषः स्यात् ॥ ५२ ॥

नन्वहमिदं फलं प्राप्तवानिदं परिहरामि॰ इत्थं प्रयते॰इत्थं करवाणीत्येवंविधा अभिसंध्यादयः प्रत्यात्मं प्रवर्तमाना अदृष्टस्यात्मनां च स्वस्वामिभावं नियंस्यन्तीत्याशङ्क्याह॰अभिसंध्यादीति ॥

अभिसंध्यादिषु चैवम् ॥ ५३ ॥ १३५ ॥

अभिसंध्यादीनामपि साधारणेनैवात्मसंयोगेन सर्वात्मसंनिधौ क्रियमाणानां नियमहेत्वभावादुक्तदोष एव स्यात् ॥ ५३ ॥

ननु विभुत्वेऽप्यात्मनः शरीरप्रतिष्ठेन मनसा संयोगः शरीरावच्छिन्ने॰ एवात्मप्रदेशे भविष्यति, अतः प्रदेशकृता व्यवस्थाभिसंध्यादीनामदृष्टसुखदुःखादीनां भविष्यतीत्याशङ्क्याह प्रदेशेति ॥

प्रदेशादिति चेन्नान्तर्भावात् ॥ ५४ ॥ १३६ ॥ १७ ॥

इति ब्रह्मसूत्रे द्वितीयाध्यायस्य तृतीय पादः ॥ ३ ॥ :: :: ॥

अत्र पादेऽधिकरणानि ॥ १७ ॥ * * ॥

तदपि नोपपद्यते, अन्तर्भावात्, विभुत्वाविशेषात् सर्वे॰ आत्मानः सर्वशरीरेष्वन्तर्भवन्ति, एवं च सर्वात्मसंनिधावुत्पद्यमानमपि शरीरमेतदात्मन एव नेतरेषामिति नियन्तुं न शक्यते, प्रदेशविशेषाभ्युपगमेऽपि च समानसुखदुःखभाजोर्द्वयोरात्मनोः कदाचिदेकेनैव शरीरेणोपभोगः स्यात्, द्वयोरात्मनोः समानप्रदेशस्यादृष्टस्य संभवात्, ब्राह्मणादिशरीरप्रदेशेष्वदृष्टनिष्पत्तेः, स्वर्गोपभोगस्य च शरीरान्तरे च जायमानत्वात्, भवन्मते यागादिकर्तुः स्वर्गाद्युपभोगो न स्यात्, आत्मप्रदेशस्य निजस्य कर्तृत्वात्, भिन्नस्यात्मान्तरस्य भोक्तृत्वात्, सर्वगतत्वानुपपत्तेश्च, तस्मादविद्याविचित्र्यादेव सर्वोपपत्तिसंभवे॰ आत्मैकत्वपक्ष एव निर्दोष इति भावः, अत एवाकाशादीनामपि विभुत्वं ब्रह्मवादेऽसिद्धमेव कार्यत्वात् ॥ ५४ ॥

इति ब्रह्मसूत्रतात्पर्यविवरणे द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ :: :: ॥

पूर्वं वियदादिविषया० उत्पत्तिः प्रतिपादिता, इदानीं प्राणादि विषयो विप्रतिषेधः परिह्रियते, "तत् तेजोऽसृजत्" "आकाशाद्वायु"रि त्यादौ प्राणादीनामुत्पत्तिराम्नाता, क्वचिच्चानुत्पत्तिरेवैषामाम्नायते, तदाहु "अग्रे किं तदासीदृषयो वाव तेऽग्रे असदासीत् तदाहुः के ते ऋषय इ प्राणा वा ऋषय" इति, अत्र प्रागुत्पत्तेः प्राणसद्भावश्रवणात् क्वचिच्चात्मनः प्राणानामुत्पत्तिः, "आत्मनः सर्वे प्राणा" इति, एवं विप्रतिपत्तावनियः एवेति, गौणी वा प्राणादीनामुत्पत्तिरिति प्राप्त आह तथेति ॥

## तथा प्राणाः ॥ १ ॥ १३७ ॥

यथा लोकादयः परब्रह्मणा उत्पद्यन्ते तथा प्राणादयोऽपि० "ए तस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे"त्यादौ श्रुतत्वात्, नहि क्व चिदुत्पत्त्यश्रवणेऽप्यन्यत्र नेति वक्तुं शक्यम्, तस्मात् प्राणादयोऽप्युत्प द्यन्ते ॥ १ ॥

## गौण्यसंभवात् ॥ २ ॥ १३८ ॥

"कस्मिन्नु भगवो विज्ञाते" इत्यादिना०एकविज्ञानेन सर्वविज्ञान प्रतिज्ञाभङ्गभयाद् गौण्यपि प्राणोत्पत्तिर्न संभवति, किंतु मुख्यैवेत्यर्थः असंभवात्, यतः, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायु र्ज्योतिरापश्चे"त्यादौ जायत इत्यस्याकाशादौ मुख्योत्पत्तिपरत्वे पूर्ववर्ति प्राणेष्वपि मुख्यैवोत्पत्तिः, नह्येकं पदं क्वचिन्मुख्यमन्यत्र गौणं वैरूप्यप्रसङ्गात् तस्मात् प्राणा अपि ब्रह्मविकारः ॥ २ ॥

इतश्च प्राणानामपि मुख्यैव जन्मश्रुतिः, कुतः, 'जायत' इत्यस्य प्राणेषु प्राक् श्रुतं सदुत्तरेष्वप्याकाशादिष्वनुवर्तत इत्याह तत्प्रागिति ॥

## तत्प्राक्श्रुतेश्च ॥ ३ ॥ १३९ ॥

॥ ३ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥ १४० ॥ १ ॥

अत्रैव प्रकरणे तेजोऽबन्नपूर्वकत्वं वाक्प्राणमनसामाम्नायते, "अन्न मयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वा"गिति, अतोऽपि प्राणान ब्रह्मविकारत्वसिद्धिः ॥ ४ ॥

उत्पत्तिं प्राणानां व्यवस्थाप्य संख्या विचार्यते, क्वचित् "सप्त प्राणाः प्रभवन्ति तस्मा"दिति श्रुताः,"अष्टावतिग्रहा" इत्यत्राष्टौ,"सप्त शीर्षण्या द्वाववाञ्चा"विति नव, "नव प्राणा नाभिर्दशमी"ति दश,एवं प्रतिपत्तौ सप्तैव, गतेः-अवगतेः "सप्त वै प्राणा" इति विशेषितत्वात्,लाघवाच्च, इति पूर्वपक्षमाह सप्तगतेरिति ॥

## सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥ १४१ ॥

॥ ५ ॥

"हस्तो वै ग्रहः स कर्मणातिग्रहेण गृहीतो हस्ताभ्यां हि कर्म करोती"ति श्रुतेः सप्तभ्योऽप्यतिरिक्ताः प्राणाः, उत्तरत्र "दशेमे पुरुषे प्राणा आत्मैकादशे"त्येकादशत्वश्रवणादात्मात्रान्तःकरणं करणाधिकारादिति समाधत्ते हस्तादय इति ॥

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥ १४२ ॥ २ ॥

"हस्तो वै ग्रहः स कर्मणातिग्रहेणे"त्यादिना सप्तत्वातिरेके स्थिते सप्तत्वमन्तर्भावनीयम्, अतो नैवं मन्तव्यं सप्तैवेति, "सर्वेषां स्पर्शानां त्वगेकायतन" मित्यत्र द्वादश, "चक्षुश्च द्रष्टव्यं चे"त्यत्र त्रयोदशेति, कथमेकादशेति तु न,नह्येकादशभ्यः कार्यजातेभ्योऽधिकं कर्मास्ति यदर्थमधिकं करणं कल्प्येत, शब्दादिपञ्चतन्मात्राग्रहणार्थं श्रोत्रादीनि पञ्च, वचनादानविहरणोत्सर्गानन्दार्थानि पञ्च वागादीनि, सर्वार्थविषयं त्रैकाल्यं मन एकमित्येकादश, मनोवृत्तिभेदात् तु क्वचिन्मनोबुद्धिरहंकारश्चित्तमिति, एवं संख्यान्तरमपि वृत्तिभेदादेव योजनीयम्, तस्माच्छब्दतः कार्यतश्चैकादशैव प्राणाः ॥ ६ ॥

प्राणानां धर्मान्तरमाह-अणव इति ॥

## अणवश्च ॥ ७ ॥ १४३ ॥ ३ ॥

एते प्राणा अणवः, अणुत्वं चात्र सूक्ष्मत्वमतीन्द्रियत्वं परिच्छिन्नत्वं च, न परिमाणं कृत्स्नदेहव्यापिकार्यानुपपत्तेः, यदि स्थूला ग्रहणयोग्याः

स्युस्तदोत्क्रान्तिकाले विलाद्बहिर्विप्रलक्ष्येरन्, एवमपरिच्छिन्नत्वे गत्याग
तिश्रुतिकोपः, तद्गुणसारत्वं च जीवस्य न सिध्येत् ॥ ७ ॥

मुख्यः प्राणोऽपि ब्रह्मविकार एवेत्याह श्रेष्ठ इति ॥

## श्रेष्ठश्च ॥ ८ ॥ १४४ ॥ ४ ॥

नन्वविशेषेण सर्वेषां ब्रह्मविकारत्वमुक्तमेवेति कुतः पुनर्विचार
अधिकाशङ्कापरिहाराय, नासदासीये ब्रह्मसूत्रे "न मृत्युरासीदमृतं
तर्हि न रात्र्या अह्न आसीत् प्रकेतः, आनीदवातं स्वधये"ति मन्त्रे॰ उ
त्पत्तेः प्राक्॰ 'आनी'दित्यननरूपप्राणकर्मोपादानात् पूर्वं प्राणोऽप्यस्तीरि
सूचयति, तस्मादजः प्राण इत्यधिकाशङ्कायाम'वात'मिति विशेषणा
"अप्राणो ह्यमना" इति च मूलप्रकृतेः प्राणादिसर्वरहितस्य दर्शितत्वा
कारणसत्त्वप्रतिपादनार्थ एवायमानीच्छब्दः, श्रेष्ठ इति मुख्यप्राणमभिद
धाति, "प्राणो वा ज्येष्ठश्च श्रेष्ठश्चे"ति, "न च शक्यामस्त्वदृते जीवि
तु"मिति गुणाधिक्यश्रुतेः ॥ ८ ॥

कोऽसौ मुख्यः प्राण इति विचारयति न वायुक्रिये इति ॥

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥ १४५ ॥ ५ ॥

वायुर्वा तत्क्रिया वा मुख्यः प्राण उत ताभ्यामन्य एवेति, तत्र य
प्राणः स वायुः, अथवा शास्त्रान्तरात् समस्तकरणवृत्तिः प्राणः, इति
प्राप्त आह न वायुः प्राणो नापि करणव्यापारः पृथगुपदेशात्, "प्राण
एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च"वा
गादिकरणान्यनुक्रम्य तत्र पृथक् प्राणस्यानुक्रमणात्, वृत्तितद्वतोरभेदात्
नहि करणव्यापारः सन् करणेभ्यः पृथगुपदिश्येतेति, "एतस्माज्जाय
प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योति"रित्यादौ पृथगुपदेशात्, "य
प्राणः स वायु"रिति तु॰ अध्यात्मं पञ्चव्यूहविशेषात्मनोच्यते न तत्त्वा
न्तरमिति भेदाभेदश्रुत्युपपत्तिः ॥ ९ ॥

ननु प्राणस्यापि जीववत् स्वातन्त्र्यप्रसङ्गस्तत्राह चक्षुरादीति ॥

चक्षुरादिवत् तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥ १४६ ॥

तुशब्दः स्वातन्त्र्यं वारयति, यथा चक्षुरादीनि राज्ञो जीवस्य कर्तृत्वभोक्तृत्वादौ करणानि न स्वतन्त्राणि तथा मुख्यप्राणो राजमन्त्रीव जीवस्योपकरणम्, कुतः, प्राणसंवादे हि चक्षुरादिभिः सहैव मुख्यप्राणः शिष्यते, समानधर्माणां हि सह शासनं युक्तं बृहद्रथन्तरादिवत्, आदिना संहतत्वचेतनत्वादीनां हेतूनां ग्रहणम् ॥ १० ॥

ननु प्राणस्य करणत्वे चक्षुरादीनां रूपादिवदेतस्यापि विषयान्तरं स्यात्, इष्टापत्तौ पूर्वमेकादशविषयद्वारा॰ एकादशग्रहणवद् द्वादशस्यापि प्रतिपादन भवेत्,अत्रोत्तरम्॰ अकरणत्वेति ॥

अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ११ ॥ १४७ ॥

न चक्षुरादिवद् विषयपरिच्छेदकः, किमर्थं तर्हि प्राणः, शरीरस्थित्यर्थम्, यथा॰ "अथ प्राणा अहं श्रेयसे व्यूदिरे" इत्युपक्रम्य "यस्मिन्नुत्क्रान्ते इदं शरीरं पापिष्ठमिव दृश्यते स च श्रेष्ठ" इत्यादिनान्ते प्राणनिमित्तां शरीरेन्द्रियस्थितिं दर्शयति ॥ ११ ॥

इतश्चास्ति मुख्यप्राणस्य कार्यविशेषः प्राणादिपञ्चवृत्तिरूपः, प्राण उच्छ्वासादिकर्मा, अवाङ्निश्वासोऽपानः, व्यानस्तयोः संधिर्वीर्यवत्कर्महेतुः, उदान ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः, समानः समं सर्वेष्वङ्गेषु योऽन्नरसान् नयति, इति पञ्चवृत्तिकः प्राणो मनोवत्, अत एव जीवोपकरणत्वमपीत्याह पञ्चेति ॥

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥ १४८ ॥

॥ १२ ॥

अयं मुख्यः प्राणः सूक्ष्मोऽतीन्द्रियः परिच्छिन्नश्चेत्याह॰ अणुश्चेति ॥

अणुश्च ॥ १३ ॥ १४९ ॥ ६ ॥

क्वचिद्विभुत्वाम्नानं हैरण्यगर्भेण प्राणात्मना नाध्यात्मिकेन ॥ १३ ॥

ते प्राणाः किं स्वमहिम्नैव स्वकार्याय प्रभवन्त्युत देवताधिष्ठिताः, तत्र स्वत एव देवताङ्गीकारे तासामेव भोक्तृत्वप्रसङ्ग ति प्राप्त आह ज्योतिरादीति ॥

ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥ १५० ॥

अग्न्याद्यभिमानिदेवताभिरधिष्ठितं वागादि स्वकार्येषु प्रवर्
कुतः, तदाम्नानात् "अग्निर्वाग्भूत्वा मुखं प्राविश"दित्यादिना, "वा
प्राणो भूत्वा" इत्यादिना, तथा च "वागेव ब्रह्मणश्चतुर्थः पादः सो
ग्निना ज्योतिषा भाति च तपति चे"ति, "वक्तव्यमधिभूतं च वह्नि
त्राधिदैवत"मिति स्मृतेश्च ॥ १४ ॥

यदुक्तं देवतानामेव भोक्तृत्वापत्तिस्तत्राह प्राणेति ॥

प्राणवता शब्दात् ॥ १५ ॥ १५१ ॥

सतीष्वपि देवतासु प्राणवता संघातस्वामिना जीवेन प्राणसंब
श्रुत्यावगम्यते, "अथ यत्रैतदाकाशमनुविषण्णं स चाक्षुषः पुरुषो दर्शनाये
त्यादिशब्दात् तासामनेकत्वात् एको ह्यस्मिन् शरीरे भोक्तावगम्यते प्र
संधानात् ॥ १५ ॥

शारीरस्य शरीरे भोक्तृत्वेन नित्यत्वं न देवतानाम्, ता हि प
स्मिन्नैश्वर्येऽवतिष्ठमाना न हीने शरीरे भोक्तृत्वं प्रतिलब्धुमर्हन्ति, श्रुति
"पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति" "प्राणमनूत्क्राम
सर्वे प्राणा अनूत्क्रामन्ति",करणपक्षस्यैव देवता न भोक्तृत्वपक्षस्येत्य
तस्य चेति ॥

तस्य च नित्यत्वात् ॥ १६ ॥ २५२ ॥ ७ ॥

॥ १६ ॥

किं मुख्यप्राणस्यैव वृत्तिभेदा इतरे प्राणा वागादय उत तत्त
न्तराणीति, तत्र "ते एतस्यैव सर्वे रूपमभव"न्निति श्रुतेस्तस्य एव
इति प्राप्त आह त० इति ॥

न इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥ १५३ ।

तत्त्वान्तराण्येव वागादीनि, "एतस्माज्जायते प्राणो मनः सर्वा
याणि चे"ति श्रेष्ठात् प्राणादन्यत्र भिन्नव्यपदेशात्, न च मनोवृत्तीना
पीन्द्रियाणां पार्थक्यमेकादशत्वदर्शनात् ॥ १७ ॥

मुख्याद् भेदे वचनान्तरमपीत्याह भेद इति ॥

## भेदश्रुतेः ॥ १८ ॥ १५४ ॥

"ते ह वाचमूचु"रित्युपक्रम्य वागादीनसुरपापविध्वस्तानुपन्यस्य "अथ ह इममासन्यं प्राणमूचु"रित्यसुरध्वंसिनो मुख्यप्राणस्य पृथगुपक्रमात् ॥ १८ ॥

युक्त्यन्तरमाह वैलक्षण्येति ॥

## वैलक्षण्याच्च ॥ १९ ॥ १५५ ॥ ८ ॥

सुप्तेषु वागादिषु मुख्य एवैको जागर्तीति देहधारणहेतुत्वविषयालोचनवृत्तित्वं चेन्द्रियाणां न प्राणस्येति लक्षणभेदोऽस्ति, तस्मात् तत्त्वान्तराणि प्राणादिन्द्रियाणि ॥ १९ ॥

तेजोऽबन्नानां सृष्टिं विधायोक्तं "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणी"ति, तत्र किं जीवकर्तृकं नामरूपव्याकरणमुत परमेश्वरकर्तृकम्, तत्र 'अनेन जीवेने'ति करणात्, यथा चारेणाहं परसैन्यं प्रविश्य संकलयामीत्यादौ चारकर्तृकमेव तत्सैन्यसंकलनं हेतुकर्तृकत्वाद्राजात्मन्यारोपयत्युत्तमपुरुषप्रयोगेण तद्वज्जीव एवेति प्राप्त आह संज्ञेति ॥

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥ १५६ ॥

तुशब्दो व्यावृत्त्यर्थः, संज्ञामूर्तिक्लृप्तिर्नामरूपव्याकरणं त्रिवृत्कुर्वत इति परमेश्वरं लक्षयति, उपदेशात्, त्रिवृत्करणे तस्य निरपवादकर्तृत्वनिर्देशात्, येयमनेकभूतभौतिकेषु प्रत्याकृत्यनेकप्रकारा नामरूपादिक्लृप्तिः सा तेजोऽबन्नकर्तुरीश्वरस्यैव, उपदेशात्, 'व्याकरवाणी'त्युत्तमपुरुषप्रयोगेणेश्वरस्यैव निर्देशात्, 'जीवेने'ति तु 'प्रविश्ये'त्यत्रान्वयि, अव्यवहितत्वात्, "आकाशो वै नामरूपयोर्निर्वहिते" त्यादिश्रुतेश्च ॥ २० ॥

ननु भूम्यादि सर्वं त्रिवृत्कृतं चेन्मांसतः प्राणादीनां विलक्षणत्वानुपपत्तिरत आह मांसादीति ॥

## मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥ १५७ ॥

"अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् पुरी भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मन" इति त्रिवृत्कृता भूरेव प्रोक्ता एवं "तस्याशितस्य स्थूलं रूपं पुरीषं मध्यमं मांसं सूक्ष्मांशो मनो जल स्थूलभागस्य मूत्रं मध्यमस्य लोहितं सूक्ष्मं प्राणः अशिततेजःस्थूलभागस्य अस्थीति मध्यमो मज्जा सूक्ष्मं वागि"त्यादिश्रुतेः, सूक्ष्मत्वादिकृतमेव वैल क्षण्यं परं तु त्रिवृत्कृतमेवेति भावः,एवं यथाशास्त्रमप्तेजसोरपि बोध्यम्॥२१

ननु कथमिदं तेज इदं जलमित्यादिव्यवहारस्तत्राह वैशेष्या दिति ॥

वैशेष्यात् तु तद्वादस्तद्वादः ॥ २२ ॥ १५८ ॥ ९ ॥

इति ब्रह्मसूत्रे द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तश्च द्वितीयाध्यायः ॥ २ ॥ :: :: ॥

अत्र पादेऽधिकरणानि ॥ ९ ॥ * * ॥

विशेषस्य भावो वैशेष्यमाधिक्यम्, अग्नेस्तेजोभूयस्त्वमुदकस्याब् भूयस्त्वं पृथिव्या अन्नभूयस्त्वम्, इत्येवं त्रिवृत्कृतेष्वपि तत्तद्भागानां बहु त्वात् तदीयत्वव्यवहारः, त्रिगुणरज्जुवत्, तस्माद्वैशेष्यात् तद्वादः। पदा भ्यासोऽध्यायसमाप्त्यर्थः ॥ २२ ॥

इति ब्रह्मसूत्रतात्पर्यविवरणे द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥ :: ::

समाप्तश्चाविरोधाध्यायः ॥ २ ॥ * * ॥

## ॥ शाश्वतधर्मदीपिका ॥

तत्र वने भ्रमन्नेकाकी किंचर इव चरन्नन्यानमासाद्य शालतालतम लादिभिः पादपैरुपशोभितमतिप्रल्हादकरं किंचिद्वनं प्रविश्यातिरमणीयानि पल्लवादीनां विततानि शाखबहतिसुखावहं न्यग्रोधमूलमुपाजगाम। तत्र सौरभादिगुणयुतेन मातरिश्वना सेव्यमानोऽयं सुखेन सुष्वाप। तदनु नीरज बन्धौ रवावस्तं याते सति ब्रह्मसखः काश्यपपुत्रो राजधर्मेति ख्यातो बकपति रभजत् स्वकीयं गृहं तमेव न्यग्रोधम्। आगते च तस्मिन्विहगराजेऽतिस्वि

तोयं तं दृष्ट्वा क्षुत्पीडितो हिंसार्थमुद्युक्तः। राजधर्मा तमवलोक्य भो विप्र ममातिथिस्त्वमसि त्वां पूजयामीत्यवोचत्। इति हृदयाह्लादिनीं राजधर्मणो गिरं निशम्य विस्मितः सचैक्षत। सोपि राजधर्मणा काश्यपदाक्षायणीभ्यां मे जन्मेत्युक्त्वा पाद्यादिकैरतिथिसत्कारैः पूजयित्वा गोत्रमागमनकारणं च वदेत्युक्तो ब्राह्मणो गौतमोहमतिदरिद्रो धनार्थं पर्यटन्नागत इत्यब्रवीत्। इति विप्रेरितां वाचमाकर्ण्य धनार्थमहं यतिष्य इत्युक्त्वा विरराम। तदनु भानावुदयाचलमधिरूढे सति भो गौतमानेन पथेतस्त्रियोजनं गत्वा मम सखायं राक्षसाधिपतिं विरूपाक्षनामानं गच्छ स च ते सर्वकामान्पूरयिष्यतीत्युवाच। इति वाचं श्रुत्वा गौतमोतिशीघ्रं मेरुव्रजं नाम विरूपाक्षनगरमगमत्। विरूपाक्षेण च सुहृत्प्रेषितमेनं विज्ञायानीयतां गौतम इति आज्ञप्तैस्तैर्दूतैराहूतोय द्रुततरं जगाम तस्य पार्श्वम्। सचैनमागतमवलोक्य यथार्हं संपूज्य गोत्रनिवासदारादीन् समपृच्छत्। पृष्टोयं गौतमः स्वस्य मध्यदेशप्रसूतिं शबरावसथे निवासं पुनर्भूं भार्यां चाकथयत्। इति सर्वमाकर्ण्य विरूपाक्षः किं चिद्विमृश्य द्विजन्मतयैनमन्नधनादिकैरपूपुजत्। तत्रापरानपि ब्राह्मणानागतान्पूजयामास। सर्वे ब्राह्मणा अन्नधनादिलाभेन हृष्टाः स्वं स्वं भवनं प्रतीयुः। अयं द्विजन्मापि अधिकां रत्नराशिमावहन्कथं चिन्न्यग्रोधमूलमुपागत्य दूरदेशगमनार्थं पाथेयमलभमान एनमेव पक्षिराजं निहत्य द्रुततरं गृहीत्वा यास्यामीति चिन्तयित्वा चिरमुचितोपचारेण परिचर्य पार्श्वे स्वपन्तमेनमलातेन निहत्य स्वगृहं प्रति ययौ। तदनु अपरे ऽह्नि स्वगृहं प्रत्यनागतं राजधर्माणं विचार्य सुतं विरूपाक्षो ऽवदत्। अयि पुत्र न दृष्टो मयाद्य राजधर्मा मन्ये च पापीयसा ब्रह्मवर्जितेन तेन गौतमेनैव हत इति। तस्मात्तत्र गत्वा विचार्यतामनागमनकारणमिति। एवमाज्ञप्तः पित्रा शीघ्रं तत्र गत्वा ऽनवलोकितराजधर्मातिविषादाकुलो गत्वा स्वनगरं धावद्भिर्भृत्यैश्च गृहीतं विप्रसमीपे तं दृष्ट्वा पक्षास्थिचरणादिरहितं राज्ञो दर्शयामास। राजाप्यतिसंतापाकुलः सन् वध्यतामयं कृतघ्नो ब्राह्मणोस्य मांसेन तृप्ता भवन्तु भवन्त इत्युवाच। आज्ञप्ता भृत्याः

ऽख्यादा अपि नैच्छन्तु तन्मांसम्। तदनु शबरेभ्यो दीयतामित्यादिष्टास्तं खण्डशश्छित्वा शबरेभ्योऽदुः। ते ऽपि तं कृतघ्नं भोक्तुं नैवैच्छन्। किं बहुना पक्षिणो ऽपि न बुभुजिरे तस्य मांसम्। ततश्चिरं विलप्य विरूपाक्षो रत्नवस्त्राद्यैरलंकृतां चितां कारयित्वा तस्य प्रेतकार्याणि कारयितुं प्रववृते। तस्मिन्काले चितायाः उपरि पयस्विनी सुरभिराजगाम। तस्या मुखाच्च दुग्धमिश्रः फेनश्चितायामपतत्। तदा तेन लब्धजीवितो ऽयं विहगप-तिरगमद्विरूपाक्षपार्श्वम्। एतदन्तरे देवराजो विरूपाक्षनगरमागत्य तम-वादीत्। पुरा ब्रह्मसभायामयं यदा न गतस्तदा ऽचिरादेव वधं प्राप्स्य-सीति विधात्रा शप्तः पक्षिराट्। पुनश्च तेनैव दयालुना जीवित इति। सो ऽपि राजधर्मा देवराजं प्रणिपत्यावोचत्। मयि चेद्दयसे प्रभो गौतमं तर्हि जीवयेति। ततः शक्रे सुधासेकेन तमुज्जीव्य गते तं पापं परिष्वज्य स पक्षी सधनं व्यसर्जयत्। देवाश्च तं शेपुस्त्वं पुनर्भूकुत्तावुत्पादितापत्यो देहावसाने दुःसहमनन्तं निरयमेष्यसीति सैव चास्यासीद्दशा। राज-धर्मा च ब्रह्मलोकं यथापूर्वमासाद्य ब्रह्मणा बहुमानितश्चिरमभ्यनन्द-दिति।

एवमानृशंस्यस्य शुकाख्यानेन परमश्रेयस्साधनत्वं स्पष्टं दर्शितम्। आनु॰ अ॰ ५ कश्चिच्छुको वनस्पतौ जातो जन्मतः प्रभृति तत एव लब्धस-कलजीवनसाधनः कालक्रमेण च तस्मिन् शुष्यति तमत्यजन् क्षीणतम-कायो भगवता महेन्द्रेण स्वयमागत्य तं वनस्पतिं मोक्तुमाश्रयितुं च देशा-न्तरमतीवोपादिशता भृशं प्रलोभितो ऽपि।

अनुक्रोशो हि साधूनां महद्धर्मस्य लक्षणम्।
अनुक्रोशश्च साधूनां सदा प्रीतिं प्रयच्छति॥
नार्हसे मां सहस्राक्ष द्रुमं त्याजयितुं चिरात्।
समर्थमुपजीव्येमं त्यजेयं कथमद्य वै॥

इत्यादि वदन्नानृशंस्यमेव दधत्प्रसीदता तेन पुनर्वनस्पत्युज्जीव-नपूर्वकं परितोषित इति।

युधिष्ठिरेणापि क्षपितप्रायद्वादशवार्षिकवनवासेन पानीयानयनार्थे गतेषु चतुर्ष्वपि भ्रातृषु यक्षेण शमितेषु तानुपसर्पन् यक्षमालोक्य तदुद्दितांश्च प्रश्नानुत्तरयता प्रसीदता तेनैकभ्रातृज्जीवनं वरं दातुकामेनाभिहितेन विहाय भीमार्जुनौ नकुलं जीवन्तमभिलष्यता ऽऽनृशंस्यं महान्धर्म इति ख्यापितमभिहितं च। वनप० अ० ३११

आनृशंस्यं परो धर्मः परमार्थाच्च मे मतम्।
आनृशंस्यं चिकीर्षामि नकुलो यक्ष जीवतु॥ १२२ इति॥

तेनैव च।

कश्च धर्मः परो लोके कश्च धर्मः सदाफलः।
किं नियम्य न शोचन्ति कैश्च संधिर्न जीर्यते॥ ७२॥

इति यक्षपृष्टेन।

आनृशंस्यं परो धर्मस्त्रयीधर्मः सदाफलः।
मनो यम्य न शोचन्ति संधिः सद्भिर्न जीर्यते॥ ७४॥

इत्युत्तरितम्। अत एव नलमुद्दिश्य दमयन्तीवाक्यम्।

आनृशंस्यं परो धर्मस्त्वत्त एव हि मे श्रुतः॥ इति।

एवमानृशंस्याभावे ऋणनिवृत्तिर्न भवतीत्याह पाण्डुः। आदि० अ० १२०

ऋणैश्चतुर्भिः संयुक्ता जायन्ते मानवा भुवि।
पितृदेवर्षिमनुजैर्देयं तेभ्यश्च धर्मतः॥
एतानि तु यथाकालं यो न बुध्यति मानवः।
न तस्य लोकाः सन्तीति धर्मविद्भिः प्रतिष्ठितम्॥
यज्ञैस्तु देवान्प्रीणाति स्वाध्यायतपसा मुनीन्।
पुत्रैः श्राद्धैः पितृंश्चापि आनृशंस्येन मानवान्॥ इति।

एवं गुरुशुश्रूषाया धर्म्यत्वमुद्घुष्यते। रा० अ० १०८

महानयं धर्मपथो बहुशाख[1]श्च भारत।
किं स्विदेवेह धर्माणामनुष्ठेयतमं मतम्॥
किं कार्यं सर्वधर्माणां गरीयो भवतो मतम्।
यथाहं परमं धर्ममिह च प्रेत्य चाप्नुयां॥

इति युधिष्ठिरप्रश्ने।

मातापित्रोर्गुरूणां च पूजा बहुमता मम।
इह युक्तो नरो लोकान् यशश्च महदश्नुते॥
यच्च ते ऽभ्यनुजानीयुः कर्म तात सुपूजिताः।
धर्माधर्मविरुद्धं वा तत्कर्तव्यं युधिष्ठिर॥
न च तैरननुज्ञातो धर्ममन्यं समाश्रयेत्।
यं च तेऽभ्यनुजानीयुः स धर्म इति निश्चयः॥

इति प्रभृति शान्तनवीयोत्तरसंदर्भात्। एतदेव विमातुरप्याज्ञया चतुर्दशसमा वनं प्रवसता दाशरथिना प्रकाशितम्। तथैव। वन। अ० ३११

दाक्ष्यमेकपदं स्वर्ग्यं दानमेकपदं यशः।
सत्यमेकपदं स्वर्ग्यं शीलमेकपदं सुखम्॥ ६८॥
मानं हित्वा प्रियो भवति क्रोधं हित्वा न शोचति।
कामं हित्वार्थवान् भवति लोभं हित्वा सुखी भवेत्॥
तपः स्वधर्मवर्तित्वं मनसो दमनं दमः।
क्षमा द्वन्द्वसहिष्णुत्वं ह्रीरकार्यनिवर्तनम्॥

इत्यादिना दाक्ष्यदानालोभित्वक्षमाह्रीप्रभृतीनामवश्यानुष्ठेयत्वं तत्प्रदर्शनद्वारोक्तम्। मनुना च।

मङ्गलाचारयुक्तः स्यात्प्रयतात्मा जितेन्द्रियः।
जपेच्च जुहुयाच्चैव नित्यमग्निमतन्द्रितः॥

१ बहुप्रकारः।

मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम्।

जपतां जुह्वतां चैव विनिपातो न विद्यते॥

इति वदता माङ्गलिकैः शान्त्यादिभिराचरणैर्युक्तता सुखसाधनतया संकीर्तिता।

दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च।

इत्यादिना मनुना कृपणस्याभोज्यान्नत्वेन गणनात्।

श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्द्धुषेः।

मीमांसित्वोभयं देवाः सममन्नमकल्पयन्॥

तान्प्रजापतिराहैत्य मा कृध्वं विषमं समम्।

श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत्॥

इत्यादिना कदर्यस्य श्रोत्रियस्यापि निन्द्यमपि वार्द्धुषिकमपेक्ष्य निन्द्यतायास्तेनैवाभिधानात्कार्पण्यस्य सर्वथैव हेयता परिख्यापिता चौदार्यस्य स्पष्टमेव प्रादर्शि। तथा च लोभस्य सर्वात्मना हेयता सार्वजनीनाऽपि दृष्टान्तेनोपोद्बलिता पितामहेन। पुरा[१] किल सप्तर्षयस्तपस्यन्तश्चेरुर्महीम्। अरुन्धती च वसिष्ठमनुययौ तां सेवमाना गण्डा नाम शूद्रा तत्पतिश्च शूद्रसखो नाम तानेव परिचचार। अथ दैववशेन महती बभूवानावृष्टिः। तस्यां च क्षुधाकुलानचार्थं परिक्लिश्यमानानेतान्वृषादर्भिर्नाम राजा भूरिधनं प्रतिग्राहयितुं प्रार्थयत प्रत्याचख्ये च प्रतिग्रहं परिहरद्भिरेतैः

राजन्प्रतिग्रहो राज्ञां मध्वास्वादो विषोपमः।

तज्जान[२]मानः कस्मात्त्वं कुरुषे नः प्रलोभनम्॥

इत्यादि वदद्भिः। अथ तेषु प्रत्याख्यायाहारान्वेषणाय वनं गतेषु राज्ञा चोदितास्तन्मन्त्रिणः फलेषु सुवर्णं कद्रुना निक्षिप्य तेभ्यः प्रदातुं भृशमयाचन्त ते तु तान्यादायालोच्य गुरुतराणि सुवर्णपूरितानि वृषादर्भिणा दित्सितानि निश्चित्य।

१ इयं कथाऽऽनुशासनिके ९३ अध्याये। २ जानन्।

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
सर्वं तन्नालमेकस्य तस्माद्विद्वाञ्छमं चरेत्॥
प्रतिग्रहे संयमो[1] वै तपो धारयते ध्रुवम्।
तद्धनं ब्राह्मणस्येह लुभ्यमानस्य विस्रवेत्॥

इत्याद्युक्त्वा मन्त्रिणः प्रत्याचख्युः। अथैतदुपश्रुत्य राजा कुपितस्तद्वधाय हुत्वा जातवेदसं कृत्यामुदपादयद्यातुधानीं नाम। तां चाज्ञापयेति वदंस्तामादिदेश सप्तर्षीन्विज्ञाय घातयेति। सा तु तथेत्युक्त्वाताननुययौ। अथेन्द्रस्तेषां रिरक्षिषया स्थूलकायः परिव्राजको भूत्वा श्वानं चैकमादाय तदन्तिकमुपाययौ तैः सहैव च व्यचरत्तीर्थयात्राम्। अथैकदा शुचिजलां सरसीमालोक्य तेषां तितीर्षन्तस्तद्रक्षिकां यातुधानीमपश्यन्का त्वमित्यपृच्छंश्चैनाम्। सा तु या का चनास्मि नानुयोज्या भवद्भिः सरसीमिमां रक्षामीत्यवोचत्। अथासौ क्षुधार्त्तैर्जलं बिसखण्डांश्च जिघृक्षद्भिस्तैरर्थ्यमाना स्वस्वनामानि निरुच्यावतरत सरसीमित्यादिदेश तांस्तथा चक्रुश्च ते। अथ परिव्राजं नामनिर्वचनं पृच्छन्तीं तेन सकृत्स्वनाम्नि शुनःसखसखायं मां यातुधान्युपधारयेति निरुक्ते ऽपि तत्स्वमनवबुध्य पुनर्वदेति वदन्तीं।

सकृदुक्तं मया नाम न गृहीतं त्वया यदि।
तस्मात्त्रिदण्डाभिहता गच्छ भस्मेति मा चिरम्॥

इति तेन शप्ता सद्य एव भस्मसादभवत्। अथ ते मुनयः सरसीमवगाह्य यथेष्टं बिसान्याहृत्य निक्षिप्य च तीरे कृताह्निकास्तीरे बिसान्यनवलोक्य श्रान्ताः क्षुधार्त्ताः परस्परं चौर्यमाशङ्कमानाः शपथायोपचक्रमिरे। तथैषु शपथैः शुद्धेषु परिव्राडपि।

अध्वर्यवे दुहितरं ददातु छन्दोगे वा चरितब्रह्मचर्यै।
अथर्वणं वेदमधीत्य विप्रः स्नायीत वा यो हरते बिसानि।

इति शपथं कुर्वन्निष्टमेवैतद्विजानामतस्त्वमेव चोर इत्युक्तः सत्यमहं चोर इन्द्रोऽहं यातुधानीमिमां हत्वा भवद्रक्षणार्थमागतोऽस्मीत्युक्त्वा तैः सहैव स्वर्गमगच्छत्।

[1] प्रतिग्रहनियमः।

एवमेते महात्मानो भोगैर्बहुविधैरपि।
क्षुधा परमया युक्ताश्छन्द्यमाना महात्मभिः॥
नैव लोभं तदा चक्रुस्ततः स्वर्गमवाप्नुवन्।
तस्मात्सर्वास्ववस्थासु नरो लोभं विवर्जयेत्॥
एष धर्मः परो राजंस्तस्माल्लोभं विवर्जयेत्। इति।

अतश्च वदान्येन श्रद्धापूतेन दत्तमल्पमपि भूरिफलदमिति प्रजापतेरभिप्रायः। अत एव श्रद्धया दत्तमसूयाविरहितेन स्तोकमपि भूरिफलदमिति सक्तुप्रस्थदृष्टान्तेन स्पष्टमेवावगम्यते।

पुरा[१] किल निःशेषितारिचक्रेण युधिष्ठिरेण कृते ऽश्वमेधे साधु संतर्पितेषु चतुर्षु वर्णेषु कश्चिन्नकुल आगत्य नायं सदृशो यज्ञः सक्तुप्रस्थदानस्येत्युच्चैरुदघोषयत्। तन्निशम्य तत्रत्या जनाश्चित्रीयमाणा इतस्ततः शब्दहेतुमन्विष्यन्तः सुवर्णमयैकपार्श्वं नकुलं नायं यज्ञः सदृशो ब्राह्मणसक्तुदानस्येति वदन्तमपश्यन्नपृच्छंश्च। कथमनन्तस्वर्णदक्षिणो ऽयं यज्ञो न सदृशः सक्तुप्रस्थदानस्येति। सो ऽब्रवीत्। पुरा किल कुरुक्षेत्रे बहुषु स्वधर्मतत्परेषु विप्रेषु वसत्सु चिरमनावृष्टिरजनि। तस्यां च महताप्यायासेनाशनमलभमाना ब्राह्मणाः कदा चिच्चतुर्थे कदा चित् षष्ठे कन्दमूलादिकमासाद्य विभज्यावर्तयन्। एकदा तु तैः कुतो ऽप्याढकं यवानामलभ्यत व्यभजंश्च ते तम्। तेष्वेको ब्राह्मणो लब्धयवप्रस्थो भार्यया पुत्रस्नुषाभ्यां च संयुतस्तान् सक्तूकृत्य विभज्य यथोचितं निजकुटुम्बाय गृहीतस्वांशो माध्याह्निकं विधिमन्वतिष्ठत्। तदैव कश्चनातिथिरतीव बुभुक्षितस्तदन्तिकमेत्य क्षुधितो ऽस्मीत्यवादीत्। स एनं पाद्यार्घ्यादिभिरभ्यर्च्य प्रत्यग्राहयत्स्वमंशम्। भुक्त्वैनमपरितुष्टमालोक्य विचिन्तयन्भार्यया सविनयमूचे ममांशो ऽस्मै दीयतामिति। तां क्षुधया वेपमानामतीव दुर्बलामालक्ष्य तदंशग्रहणायानिच्छन् मुहुरभ्यर्थ्यमानया प्रसन्नया सपादपतनं ब्राह्मणार्थे स्वांशमग्राह्यत। अशित्वैनमप्यपरितुष्टे तस्मि-

१ इयं कथा ऽऽश्वमेधिके ९० अध्याये।

न्युत्र आह ममांशो ऽस्मै दीयतामिति । तं तु बालो ऽसि त्वं न शक्यसि क्षुधार्तः स्थातुमिति निषेधन्नाहमौरस उदरंभरिः पितुरर्थे दद्यामि स्वजीवितमतो मा ते धर्मोपरोधो ऽभूदिति भाषमाणेन ग्राहितः स्वांश मार्पयद्देनमतिथये । अथाप्यतृप्ताय तस्मै दातुमलब्धाशनो विचिन्तयन् स्नुष याचे ममाप्यंशो ऽस्मै दीयतामिति । तां तु चिरमुपोषितां स्थातुमप्य पारयन्तीमवलोक्य बह्वाश्वासयन् विविधानि धर्म्याणि वचांसि भाष माणया न स्वल्पोप्यायामः साम्प्रतं क्षुधाजनित इति प्रसादपूर्वकमेत या ऽर्पितं स्वांशं प्रत्यपादयदमुष्मै । अथासौ तृप्तो धर्मरूपेण प्रादुर्भू तं द्विजं बहु प्रशस्य

न चाश्वमेधैर्बहुभिः समं फलमिदं तव ।
सक्तुप्रस्थेन विजितो ब्रह्मलोकस्त्वया ऽक्षयः ॥
विरजो ब्रह्मसदनं गच्छ विप्र यथासुखम् ।
सर्वेषां वो द्विजश्रेष्ठ दिव्यं यानमुपस्थितम् ॥

इत्याद्युक्त्वा ऽन्तरधात् । तत्र तेन सक्तुगन्धेन दिव्येन पुष्पवर्षे तदीयदानजललेशेन च ममायमेको भागः सुवर्णीकृतः । ततः प्रभृ पार्श्वान्तरस्यापि काञ्चनीभावाशया बहूनि तीर्थानि भ्रमन्स्विष्टमलभ मानो यज्ञमिममुपश्रुत्य प्राप्तवानस्मि न च सिद्धं मदिष्टमतो ऽहं ब्रवीमि नैष यज्ञस्तेन तुल्य इति । इत्युक्त्वा च स ततो ऽगादिति । उपसंहृ चैतत् ।

अद्रोहः सर्वभूतेषु संतोषः शीलमार्जवम् ।
तपो दमश्च सत्यं च प्रदानं चेति संमितम् ॥ इति ।

एवं लोभस्य विविधपापनिदानत्वं युधिष्ठिरभीष्मसंवादमुखे दर्शितम् । आपद्धर्मे अ॰ २८

युधिष्ठिर उवाच ।

पापस्य यदधिष्ठानं यतः पापं प्रवर्तते ।
एतदिच्छाम्यहं श्रोतुं तत्त्वेन भरतर्षभ ॥

भीष्म उवाच ।

पापस्य यदधिष्ठानं तच्छृणुष्व नराधिप ।
एको लोभो महाग्राहो[1] लोभात्पापं प्रवर्तते ॥
अतः पापमधर्मश्च तथा दुःखमनुत्तमम् ।
निकृत्या[2] मूलमेतद्धि येन पापकृतो जनाः ॥
लोभात्क्रोधः प्रभवति लोभात्कामः प्रवर्तते ।
लोभान्मोहश्च माया च मानः स्तम्भः परासुता ॥
अक्षमा ह्रीपरित्यागः श्रीनाशो धर्मसंक्षयः ।
अभि[3]ध्याऽप्रख्य[4]ता चैव सर्वं लोभात्प्रवर्तते ॥
अत्यागश्चातितर्षश्च विकर्मसु च याः क्रियाः ।
कुलविद्यामदश्चैव रूपैश्वर्यमदस्तथा ॥
सर्वभूतेष्वभिद्रोहः सर्वभूतेष्वसत्कृतिः ।
सर्वभूतेष्वविश्वासः सर्वभूतेष्वनार्जवम् ॥
हरणं परवित्तानां परदाराभिमर्शनम् ।
वा[5]ग्वेगो मनसो वेगो निन्दावेगस्तथैव च ॥
उपस्थोदरयोर्वेगो मृत्युवेगश्च दारुणः ।
ईर्ष्यावेगश्च बलवान् मिथ्यावेगश्च दुर्जयः ॥
रसवेगश्च दुर्वार्यः श्रोत्रवेगश्च दुःसहः ।
कुत्सा विकत्था मात्सर्यं पापं दुष्कर्मकारिता ॥
साहसानां च सर्वेषामकार्याणां क्रियास्तथा ।
जा[6]तौ बाल्ये च कौमारे यौवने चापि मानवाः ॥

१ ग्राह इव ग्रासकर्ता । २ शाठ्यस्य । ३ चिन्ता । ४ अकीर्तिः । ५ वेगाऽविचारपूर्वा प्रवृत्तिः । ६ जन्मनीति टी॰ ।

न संत्यजन्त्यात्मकर्म यो न जीर्यति जीर्यतः ।
यो न पूरयितुं शक्यो लोभः प्राप्त्या कुरूद्वह ॥
नित्यं गम्भीरतोयाभिरापगाभिरिवोदधिः ।
न प्रहृष्यति यो लाभैः कामैर्यश्च न तृप्यति ॥
यो न देवैर्न गन्धर्वैर्नासुरैर्न महोरगैः ।
ज्ञायते नृप तत्त्वेन सर्वैर्भूतगणैस्तथा ॥
स लोभः सह मोहेन विजेतव्यो जितात्मना ।
दम्भो द्रोहश्च निन्दा च पैशुन्यं मत्सरस्तथा ॥
भवन्त्येतानि कौरव्य लुब्धानामकृतात्मनाम् ।
सुमहान्त्यपि शास्त्राणि धारयन्ति बहुश्रुताः ॥
छेत्तारः संशयानां च क्लिश्यन्तीहाल्पबुद्धयः ।
द्वेषक्रोधप्रसक्ताश्च शिष्टाचारबहिष्कृताः ॥
अन्तः क्रूरा वाङ्मधुराः कूपाश्छन्नास्तृणैरिव ।
धर्मवैतंसिका[1]: क्षुद्रा मुष्णन्ति ध्वजिनो[2] जगत् ॥
कुर्वते च बहून्मार्गांस्तान्हेतुबलमाश्रिताः ।
सतां मार्गान्विलुम्पन्ति लोभज्ञानेष्ववस्थिताः ॥
धर्मस्य ह्रियमाणस्य लोभग्रस्तैर्दुरात्मभिः ।
या या विक्रियते संस्था ततः सापि प्रप[3]द्यते ॥
दर्पः क्रोधो मदः स्वप्नो हर्षः शोकोऽतिमानिता ।
एत एव हि कौरव्य दृश्यन्ते लुब्धबुद्धिषु ॥
एतानशिष्टान्बुध्यस्व नित्यं लोभसमन्वितान् ।
शिष्टांस्तु परिपृच्छेथा यान् वक्ष्यामि शुचिव्रतान् ॥

१ शोभार्थं धर्मचारिणः । २ धर्मप्रख्यापकाः । ३ यथा विक्रियते तथैव प्र याति ।

येष्वावृत्तिभयं नास्ति परलोकभयं नहि।
नामिषेषु प्रसङ्गो ऽस्ति न प्रियेष्वप्रियेषु च॥
शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः।
सुखं दुःखं समं येषां सत्यं येषां परायणम्॥
दातारो न ग्रहीतारो दयावन्तस्तथैव च।
पितृदेवातिथेयाश्च नित्योद्युक्तास्तथैव च॥
सर्वोपकारिणो वीराः सर्वधर्मानुपालकाः।
सर्वभूतहिताश्चैव सर्वदेया[१]श्च भारत॥
न ते चालयितुं शक्या धर्मव्यापारचारिणः।
न तेषां भिद्यते वृत्तं यत्पुरा साधुभिः कृतम्॥
न त्रासिनो न चपला न रौद्राः सत्पथे स्थिताः।
ते सेव्याः साधुभिर्नित्यं येष्वहिंसा प्रतिष्ठिता॥
कामक्रोधव्यपेता ये निर्ममा निरहंकृताः।
सुव्रताः स्थिरमर्यादास्तानुपास्व च पृच्छ च॥
न धनार्थं यशोर्थं वा धर्मस्तेषां युधिष्ठिर।
अवश्यं कार्य इत्येव शरीरस्य क्रियास्तथा॥
न भयं क्रोधचापल्ये न शोकस्तेषु विद्यते।
न धर्मध्वजिनश्चैव न गुह्यं कं चिदास्थिताः॥
येष्वलोभस्तथा ऽमोहो ये च सत्यार्जवे स्थिताः।
तेषु कौन्तेय सज्जेथा येषां न भ्रश्यते पुनः॥
ये न हृष्यन्ति लाभेषु नालाभेषु व्यथन्ति च।
निर्ममा निरहंकाराः सत्वस्थाः समदर्शिनः॥

१ सर्वं देयं येषांते।

लाभालाभे सुखदुःखे च तात प्रियाप्रिये मरणं जीवितं च।
समानि येषां स्थिरविक्रमाणां बुभुत्सतां सत्वपथे स्थितानाम्
धर्मप्रियांस्तान्सुमहानुभावान् दान्तो ऽप्रमत्तश्च समर्चयेथाः।
देवान्सर्वे गुणवन्तो भवन्ति शुभाशुभे वाक्प्रलापास्तथान्ये ॥ २६

युधिष्ठिर उवाच।

अनर्थानामधिष्ठानमुक्तो लोभः पितामह।
अज्ञानमपि वै तात श्रोतुमिच्छामि तत्वतः॥

भीष्म उवाच।

करोति पापं यो ऽज्ञानान्नात्मनो वेत्ति च क्षयम्।
प्रद्वेष्टि साधुवृत्तांश्च स लोकस्यैति वाच्य[1]ताम्॥
अज्ञानान्निरयं याति तथा ऽज्ञानेन दुर्गतिम्।
अज्ञानात्क्लेशमाप्नोति तथा ऽपत्सु निमज्जति॥

युधिष्ठिर उवाच।

अज्ञानस्य प्रवृत्तिं च स्थानं वृद्धिक्षयोदयौ।
मूलं यो[2]गं गतिं कालं कार[3]णं हेतु[4]मेव च॥
श्रोतुमिच्छामि तत्त्वेन यथावदिह पार्थिव।
अज्ञानप्रभवं हीदं यद् दुःखमुपलभ्यते॥

भीष्म उवाच।

रागो द्वेषस्तथा मोहो हर्षः शोको ऽभिमानिता।
मानः क्रोधश्च दर्पश्च तन्द्री चालस्यमेव च॥
इच्छा द्वेषस्तथा तापः परवृद्ध्युपतापिता।
अज्ञानमेतन्निर्दिष्टं पापानां चैव याः क्रियाः॥

१ निन्द्यताम्। २ संगतिम्। ३ कारकहेतुम्। ४ ज्ञापकहेतुम्।

एतस्य वा प्रवृत्तेश्च वृद्ध्यादीन्यांश्च पृच्छसि ।
विस्तरेण महाराज शृणु तत्त्व विशेषतः ॥
उभावेतौ समफलौ समदोषौ च भारत ।
अज्ञानं चापि लोभश्चाप्येकं जानीहि पार्थिव ॥
लोभप्रभवमज्ञानं वृद्धं भूयः प्रवर्द्धते ।
स्थाने स्थाने भवेत्क्षीणमुपैति विविधां गतिम् ॥
मूलं लोभस्य मोहो वै काला[१]त्मगतिरेव च ।
छिन्ने भिन्ने तथा लोभे कारणं काल एव च ॥
तस्याज्ञानाद्धि लोभो हि लोभादज्ञानमेव च ।
सर्वदोषास्तथा लोभात्तस्माल्लोभं विवर्जयेत् ॥
जनको युवनाश्वश्च वृषादर्भिः प्रसेनजित् ।
लोभक्षयाद्दिवं प्राप्तास्तथैवान्ये नराधिपाः ॥
प्रत्यक्षं तु कुरुश्रेष्ठ त्यज लोभमिहात्मना ।
त्यक्त्वा लोभं सुखं लोके प्रेत्य चानुचरिष्यसि ॥ इति

अत एव दमादीनां स्वर्गसाधनतया तत्प्रतिबन्धकक्रोधादिनाशकतया च तद्गुतां शूरत्वं प्रपञ्चितमानुशासनिके युधिष्ठिरभीष्मसंवादमुखेन आनु० अ० ७५

व्रतानां किं फलं प्रोक्तं कीदृशं वा महाद्युते ।
नियमानां फलं किं च स्वधीतस्य च किं फलम् ॥
दत्तस्येह फलं किं च वेदानां धारणे च किम् ।
अध्यापने फलं किं च सर्वमिच्छामि वेदितुम् ॥
अप्रतिग्राहके किं च फलं लोके पितामह ।

१ कालेन विपरीतेनात्मनि गतिः प्राप्तिः ।

तस्य किं च फलं दृष्टं श्रु[१]तं यस्तु प्रयच्छति ॥
स्वकर्मनिरतानां च शूद्राणां चापि किं फलम् ।
शौचे च किं फलं प्रोक्तं ब्रह्मचर्ये च किं फलम् ॥
पितृशुश्रूषणे किं च मातृशुश्रूषणे तथा ।
आचार्यगुरुशुश्रूषास्वनु[२]क्रोशानुकम्पने ॥
एतत्सर्वमशेषेण पितामह यथातथम् ।
वेत्तुमिच्छामि धर्मज्ञ परं कौतूहलं हि मे ॥

भीष्म उवाच ।

यो व्रतं वै यथोद्दिष्टं तथा संप्रतिप[३]द्यते ।
अखण्डं सम्यगारभ्य तस्य लोकाः सनातनाः ॥
नियमानां फलं राजन्प्रत्यक्षमिह दृश्यते ।
नियमानां क्रतूनां च त्वयावाप्तमिदं फलम् ॥
स्वधीतस्यापि च फलं दृश्यते ऽमुत्र चेह च ।
इह लोके ऽथ वा नित्यं ब्रह्मलोके च मोदते ॥
दमस्य तु फलं राजञ्छृणु त्वं विस्तरेण मे ।
दान्ताः सर्वत्र सुखिनो दान्ताः सर्वत्र निर्वृताः ॥
यत्रेच्छागामिनो दान्ताः सर्वशत्रुनिषूदनाः ।
प्रार्थयन्ति च यद्दान्ता लभन्ते तन्न संशयः ॥
युज्यन्ते सर्वकामैर्हि दान्ताः सर्वत्र पाण्डव ।
स्वर्गे यथा प्रमोदन्ते तपसा विक्रमेण च ॥
दानैर्यज्ञैश्च विविधैस्तथा दान्ताः क्षमान्विताः ।
दानाद्दमो विशिष्टो हि ददत्किं चिद् द्विजातये ॥

१ शास्त्रम् । २ दयायामुपकारे च । ३ करोति ।

तस्य किं च फलं दृष्टं श्रुतं यस्तु प्रयच्छति ॥
स्वकर्मनिरतानां च शूद्राणां चापि किं फलम् ।
शौचे च किं फलं प्रोक्तं ब्रह्मचर्ये च किं फलम् ॥
पितृशुश्रूषणे किं च मातृशुश्रूषणे तथा ।
आचार्यगुरुशुश्रूषास्वनुक्रोशानुकम्पने ॥
एतत्सर्वमशेषेण पितामह यथातथम् ।
वेत्तुमिच्छामि धर्मज्ञ परं कौतूहलं हि मे ॥

भीष्म उवाच ।

यो व्रतं वै यथोद्दिष्टं तथा संप्रतिपद्यते ।
अखण्डं सम्यगारभ्य तस्य लोकाः सनातनाः ॥
नियमानां फलं राजन्प्रत्यक्षमिह दृश्यते ।
नियमानां क्रतूनां च त्वयावाप्तमिदं फलम् ॥
स्वधीतस्यापि च फलं दृश्यतेऽमुत्र चेह च ।
इह लोकेऽथ वा नित्यं ब्रह्मलोके च मोदते ॥
दमस्य तु फलं राजञ्शृणु त्वं विस्तरेण मे ।
दान्ताः सर्वत्र सुखिनो दान्ताः सर्वत्र निर्वृताः ॥
यत्रेच्छागामिनो दान्ताः सर्वशत्रुनिषूदनाः ।
प्रार्थयन्ति च यद्दान्ता लभन्ते तन्न संशयः ॥
युज्यन्ते सर्वकामैर्हि दान्ताः सर्वत्र पाण्डव ।
स्वर्गे यथा प्रमोदन्ते तपसा विक्रमेण च ॥
दानैर्यज्ञैश्च विविधैस्तथा दान्ताः क्षमान्विताः ।
दानाद्दमो विशिष्टो हि ददत्किंचिद् द्विजातये ॥

१ शास्त्रम् । २ दयायामुपकारे च । ३ करोति ।

दाता कुप्यति नो दान्तस्तस्माद्दानात्परं दमः ।
यस्तु दद्यादकुप्यन्हि तस्य लोकाः सनातनाः ॥
क्रोधो हन्ति हि यद्दानं तस्माद्दानात्परं दमः ।
अदृश्यानि महाराज स्थानान्ययुतशो दिवि ॥
ऋषीणां सर्वलोकेषु यानि ते यान्ति देवताः ।
दमेन यानि नृपते गच्छन्ति परमर्षयः ॥
कामयाना महत्स्थानं तस्माद्दानात्परं दमः ।
अध्यापकः परिक्लेशादक्षयं फलमश्नुते ॥
विधिवत्पावकं हुत्वा ब्रह्मलोके नराधिप ।
अधीत्यापि हि यो वेदान्न्यायविद्भ्यः प्रयच्छति ॥
गुरुकर्मप्रशंसी तु सोपि स्वर्गे महीयते ।
क्षत्रियोऽध्ययने युक्तो यजने दानकर्मणि ॥
युद्धे यश्च परित्राता सोऽपि स्वर्गे महीयते ।
वैश्यः स्वकर्मनिरतः प्रदानाल्लभते महत् ॥
शूद्रः स्वकर्मनिरतः स्वर्गं शुश्रूषयर्च्छति ।
शूरा बहुविधाः प्रोक्तास्तेषामर्थांस्तु मे शृणु ॥
शूरान्वयानां निर्दिष्टं फलं शूरस्य चैव हि ।
यज्ञशूरा दमे शूराः सत्यशूरास्तथापरे ॥
युद्धशूरास्तथैवोक्ता दानशूराश्च मानवाः ।
सांख्यशूराश्च बहवो योगशूरास्तथापरे ॥
अरण्ये गृहवासे च त्यागे शूरास्तथापरे ।
आर्जवे च तथा शूराः शमे वर्तन्ति मानवाः ॥
तैस्तैश्च नियमैः शूरा बहवः सन्ति चापरे ।
वेदाध्ययनशूराश्च शूराश्चाध्यापने रताः ॥

गुरुशुश्रूषया शूराः पितृशुश्रूषयापरे।
मातृशुश्रूषया शूरा भैक्ष्यशूरास्तथापरे॥
अरण्ये गृहवासे च शूराश्चातिथिपूजने।
सर्वे यान्ति परांल्लोकान्स्वकर्मफलनिर्जितान्॥
धारणं सर्ववेदानां सर्वतीर्थावगाहनम्।
सत्यं च ब्रुवतो नित्यं समं वा स्यान्न वा समम्॥
अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते॥
सत्येन सूर्यस्तपति सत्येनाग्निः प्रदीप्यते।
सत्येन मरुतो वान्ति सर्वं सत्ये प्रतिष्ठितम्॥
सत्येन देवाः प्रीयन्ते पितरो ब्राह्मणास्तथा।
सत्यमाहुः परो धर्मस्तस्मात्सत्यं न लङ्घयेत्॥
मुनयः सत्यनिरता मुनयः सत्यविक्रमाः।
मुनयः सत्यशपथास्तस्मात्सत्यं विशिष्यते॥
सत्यवन्तः स्वर्गलोके मोदन्ते भरतर्षभ।
दमः सत्यफलावाप्तिरुक्ता सर्वात्मना मया॥
असंशयं विनीतात्मा स वै स्वर्गे महीयते।
ब्रह्मचर्यस्य च गुणं शृणु त्वं वसुधाधिप॥
आजन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह।
न तस्य किंचिदप्राप्यमिति विद्धि नराधिप॥
बह्व्यः कोट्यस्त्वृषीणां तु ब्रह्मलोके वसन्त्युत।
सत्ये रतानां सततं दान्तानामूर्ध्वरेतसाम्॥
ब्रह्मचर्यं दहेद्राजन् सर्वपापान्युपासितम्।
ब्राह्मणेन विशेषेण ब्राह्मणो ह्यग्निरुच्यते॥

प्रत्यक्षं हि तथा ह्येतद्ब्राह्मणेषु तपस्विषु ।
बिभेति हि यथा शक्रो ब्रह्मचारिप्रधर्षित: ॥
तद्ब्रह्मचर्यस्य फलमृषीणामिह दृश्यते ।
मातापित्रो: पूजने यो धर्मस्तमपि मे शृणु ॥
शुश्रूषते य: पितरं न चासूयेत्कदा चन ।
मातरं भ्रातरं वापि गुरुमाचार्यमेव च ॥
तस्य राजन्फलं विद्धि स्वर्लोके स्थानमर्चितम् ।
न च पश्येत नरकं गुरुशुश्रूषयात्मवान् ॥

इति सन्दर्भेण दमस्य सर्वार्थसाधनत्वं दानापेक्षया ऽऽधिक्यं च दर्शितम् । अध्यापनाग्निहोत्रयो: स्वर्गसाधनत्वं च । सत्यस्य च सकलजगत्स्थितिप्रयोजनत्वं प्रधानसूर्यादिप्रकाशनादिकार्यनिर्वहणमुखेन परमत्वं व्यवस्थापितम् । ब्रह्मचर्यस्य चोपासितस्य निखिलपापनाशकत्वं देवताभ्यो ऽप्युत्कर्षाधायकत्व च शक्रादीनामपि भीतिसंपादकत्वद्वारा निरूपितम् । गुरुशूश्रूषायाश्च स्वर्गसाधनत्वं नरकनाशकत्वं च प्रकाशितम् ।

धर्मे वर्त्तमानस्य स्वर्गे निश्चिते धार्मिकस्य यावत्कालं यश: पृथिव्यां दिवि वा गीयते तावदसौ स्वर्गे तिष्ठत्यन्यथा पततीतीन्द्रद्युम्नाख्यानेन स्पष्टम् ।

वैशम्पायन उवाच * ।

मार्कण्डेयमृषय: पाण्डवा: पर्यपृच्छन्नस्ति कश्चिद्भवतश्चिरजाततर इति । स तानुवाचास्ति खलु राजर्षिरिन्द्रद्युम्नो नाम क्षीणपुण्यस्त्रिदिवात्प्रच्युत: कीर्त्तिस्ते व्युच्छिन्नेति स मामुपातिष्ठदथ प्रत्यभिजानाति मां भवानिति । तमहमब्रुवं कार्यचेष्टाकुलत्वाच्च वयं वासायनिका ग्रामैकरात्रवासिनो न प्रत्यभिजानीमो ऽप्यात्मनो ऽर्थानामनुष्ठानं न शरीरोपतापेनात्मन: समारभामो ऽर्थानामनुष्ठानम् । अस्ति खलु हिमवति प्राकारकर्णो नामोलूक: प्रतिवसति । स मत्तश्चिरजातो भवन्तं यदि जानीया-

* वनपर्वणि अष्टनवत्युत्तरशततमाध्यायो ऽयं तथैवोद्धृत: ।

वितः प्रभ्रष्टे चाध्वनि हिमवांस्तत्रासौ प्रतिवसतीति। ततः स मामश्वो भूत्वा तत्रावहद्यत्र बभूवोलूकः। अथैनं स राजा पप्रच्छ प्रतिजानाति मां भवानिति। स मुहूर्त्तमिव ध्यात्वा ऽब्रवीदेनं नाभिजानामि भवन्तमिति। स एव मुक्त इन्द्रद्युम्नः पुनस्तमुलूकमब्रवीद्राजर्षिः। अथास्ति कश्चिद्भवतः सकाशाच्चिरजात इति स एवमुक्तोऽब्रवीदस्ति खल्विन्द्रद्युम्नं नाम सरस्तस्मिन्नाडीजङ्घो नाम बकः प्रतिवसति सो ऽस्मत्तश्चिरजाततरस्तं पृच्छेति तत इन्द्रद्युम्नो मां चोलूकमादाय तत्सरो ऽगच्छद्यत्रासौ नाडीजङ्घो नाम बको बभूव। सोऽस्माभिः पृष्टो भवानिममिन्द्रद्युम्नं राजानमभिजानातीति। स एष मुहूर्त्तं ध्यात्वा ऽब्रवीन्नाभिजानाम्यहमिन्द्रद्युम्नं राजानमिति। ततः सो ऽस्माभिः पृष्टः कश्चिद्भवतो ऽन्यश्चिरजाततरोऽस्तीति स नो ऽब्रवीदस्ति खल्वस्मिन्नेव सरस्यकूपारो नाम कच्छपः प्रतिवसति। स मत्तश्चिरजाततरः स यदि कथं चिदभिजानीयादिमं राजानं तमकूपारं पृच्छध्वमिति। ततः स बकस्त्वकूपारं कच्छपं विज्ञापयामास। अस्त्यस्माकमभिप्रेतं भवन्तं कं चिदर्थं प्रष्टुं साध्वागम्यतां तावदिति। तच्छ्रुत्वा कच्छपस्तस्मात्सरस उत्थायाभ्यगच्छद्यत्र तिष्ठामो वयं तस्य सरसस्तीरे। आगतं चैनं वयमपृच्छाम। भवानिन्द्रद्युम्नं राजानमभिजानाति। स मुहूर्त्तं ध्यात्वा बाष्पसंपूर्णनयन उद्विग्नहृदयो वेपमानो विसंज्ञकल्पः प्राञ्जलिरब्रवीत्। किमहमेनं न प्रत्यभिज्ञास्यामि। इह अनेकसहस्रकृत्वश्चितिषु यूपा आहिताः। सरश्चेदमस्य दक्षिणाभिर्दत्ताभिर्गोभिरतिक्रममाणाभिः कृतमत्र चाहं प्रतिवसामीति। अथैतत्सकलं कच्छपेनोदाहृतं श्रुत्वा तदनन्तरं देवलोकाद्दिव्यरथः प्रादुरासीत्। वाचश्चाश्रूयन्त इन्द्रद्युम्नं प्रति प्रस्तुतस्ते स्वर्गो यथोचितं स्थानं प्रतिपद्यस्व कीर्त्तिमानस्यव्यग्रो याहीति। भवन्ति चात्र श्लोकाः।

दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः।
यावत्स शब्दो भवति तावत्पुरुष उच्यते॥

अकीर्त्तिः कीर्त्यते लोके यस्य भूतस्य कस्य चित्।
स पतत्यधमांल्लोकान्यावच्छब्दः प्रकीर्त्यते॥

तस्मात्कल्याणवृत्तःस्यादनन्ताय नरः सदा ।
विहाय वित्तं पापिष्ठं धर्ममेव समाश्रयेत् ॥ इति ।

अत एव युधिष्ठिरं प्रति धर्मेण यशसः स्वतनुत्वमुक्तम् । वनप॰ अ॰ ३१४

यशः सत्यं दमः शौचं मार्दवं ह्रीरचापलम् ।
दानं तपो ब्रह्मचर्यमित्येतास्तनवो ममेति ॥ ८ ।

दानस्य धर्मतनुत्वं च दानधर्मप्रकरणपर्यालोचनेन स्पष्टमेव । किंचित्तु निबध्यते ।

नन्दिपुराणे ।

दानं परं प्रशंसन्ति दानमेव परायणम् ।
दानं बन्धुर्मनुष्याणां दानं कोशो ह्यनुत्तमः ॥
दानं पुत्रः परं द्रव्यं दानं माता पिता तथा ।
न दानेन विना किंचित्प्रार्थितं फलमाप्यते ॥
अपि वालाग्रमात्रस्य तुला तस्य न विद्यते ।
न दानशीलिनामापत्तस्माद्दानं समाश्रयेत् ॥
हारनूपुरसंघोषपूरितोत्तममन्दिरा ।
लावण्यगुणसंपत्तिर्दानादेव हि लभ्यते ॥

सौरपुराणे ।

न दानादधिकं किंचिद्दृश्यते भुवनत्रये ।
दानेन प्राप्यते स्वर्गः श्रीर्दानेनैव लभ्यते ॥
दानेन शत्रून् जयति व्याधिर्दानेन नश्यति ।
दानेन लभ्यते विद्या दानेन युवतीजनः ॥
धर्मार्थकाममोक्षाणां साधनं परमं स्मृतम् ।

उशनाः ।

दानादृते नोपचारो विद्यते धनिनोऽपरः ।
दीयमानं हि तत्तस्य भूय एवाभिवर्द्धते ॥

वेदव्यासः ।

यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने ।
तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि ॥

यद्ददाति यदश्नाति तदेव धनिनो धनम् ।
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥

बृहस्पतिः ।

तपो धर्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतम् ।
द्वापरे चाध्वराः प्रोक्ताः कलौ दानं दया दमः ॥

दानेन योगी भवति मेधावी वृद्धसेवया ।
अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः ॥

यमः ।

यतीनां परमो धर्मस्त्वनाहारो वनौकसाम् ।
दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणाम् ॥

पापकर्मसमायुक्तं पतन्तं नरके नरम् ।
त्रायते दानमेकं तु पात्रभूते द्विजे कृतम् ॥

न्यायेनार्जनमर्थानां वर्धनं चाभिरक्षणम् ।
सत्पात्रप्रतिपत्तिश्च सर्वशास्त्रेषु पठ्यते ॥

महाभारते ।

आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः ।
गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥

ब्राह्मणायाभिरूपाय यो दद्यादर्थमर्थिने ।
निदधाति निधिं श्रेष्ठं पारलौकिकमात्मनः ॥

व्यासः ।

अहन्यहनि याचन्तमहं मन्ये गुरुं यथा ।
मार्जनं दर्पणस्येव यः करोति दिनेदिने ॥
किं धनेन करिष्यन्ति देहिनो भङ्गुराश्रयाः ।
यदर्थे धनमिच्छन्ति तच्छरीरमशाश्वतम् ॥
यदि नाम न धर्माय न कामाय न कीर्तये ।
यत्परित्यज्य गन्तव्यं तद्धनं किं न दीयते ॥
स्वल्पं स्वल्पतरं वापि ग्रासं ग्रासार्द्धमेववा ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥
अदाता पुरुषस्त्यागी धनं संत्यज्य गच्छति ।
दातारं कृपणं मन्ये मृतोप्यर्थं न मुञ्चति ॥

मनुः ।

दानं धर्मं निषेवेत नित्यमैष्टिकपौष्टिकम् ।
परितुष्टेन भावेन पात्रमासाद्य शक्तितः ॥

इष्टौ यज्ञे यद्दीयते दक्षिणादि तद्दानमैष्टिकम् । बहिर्वेदि च यद्दानं तत्पौष्टिकम् ।

स्वर्गायुर्भूतिकामेन तथा पापोपशान्तये ।
मुमुक्षुणा च दातव्यं ब्राह्मणेभ्यो युधिष्ठिर ॥

याज्ञवल्क्यः ।

दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ।
याचितेनापि दातव्यं श्रद्धापूतं तु शक्तितः ॥

मार्कण्डेयः ।

कुटुम्बं पीडयित्वापि ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवेप्यन्नमात्मनो भूतिमिच्छता ॥

अगस्त्यः।

गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः।
अलुब्धैर्दानशीलैश्च सप्तभिर्धार्यते मही॥
येन भुक्तं न च हुतं सुतीर्थे मज्जनं कृतम्।
हिरण्यमन्नमुदकं ब्राह्मणेभ्यो न चार्पितम्॥
दीना विवसना रूक्षाः कपालाङ्कितपाणयः।
दृश्यन्ते ते महाराज जायमानाः पुनः पुनः॥

विष्णुधर्मे।

सीदते द्विजमुख्याय योऽर्थिने न प्रयच्छति।
सामर्थ्ये सति दुर्बुद्धिर्नरकायोपपद्यते॥

कूर्मपुराणे।

यस्तु द्रव्यार्जनं कृत्वा नार्चयेद्ब्राह्मणान् सुरान्।
सर्वस्वमपहृत्यैनं राजा राष्ट्रात्प्रवासयेत्।

व्यासः।

अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत्पुरा।
तदिदं देहि देहीति विपरीतमुपस्थितम्॥

स्कन्दपुराणे।

बोधयन्ति न याचन्ते देहीति कृपणा नराः।
अवस्थेयमदानस्य मा भूदेवं भवानपि॥
देहीत्येवं ब्रुवन्नर्थी जनं बोधयतीव सः।
यदिदं कष्टमर्थित्वं प्रागदानफलं हि तत्॥
दीयमानं तु यो मोहाद् गोविप्राग्निनरेषु च।
निवारयति पापात्मा तिर्यग्योनिं व्रजेत्तु सः

आर्हतामनुरूपाणां नादेयं चास्ति किं चन ।
उच्चैःश्रवसमप्यश्वं प्रापणीयं सतां विदुः ॥

अथ दानस्वरूपम् । तत्र देवलः ।

अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् ।
दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य कथ्यते ॥
द्विहेतु षडधिष्ठानं षडङ्गं षड्विपाकयुक् ।
चतुष्प्रकारं त्रिविधं त्रिनाशं दानमुच्यते ॥

द्विहेतुत्वं च ।

नाल्पत्वं वा बहुत्वं वा दानस्याभ्युदयावहम् ।
श्रद्धा भक्तिश्च दानानां वृद्धिक्षयकरे स्मृते इति ॥

षडधिष्ठानत्वं च ।

धर्ममर्थं च कामं च व्रीडा हर्षभयानि च ।
अधिष्ठानानि दानानां षडेतानि प्रचक्षते ।
पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् ॥
केवलं त्यागबुध्या यद्धर्मदानं तदुच्यते ।
प्रयोजनमपेक्ष्यैव प्रसङ्गाद्यत्प्रदीयते ॥
अनर्हेषु च रागेषु कामदानं तदुच्यते ।
संसदि व्रीडया स्तुत्या चार्थार्थिभ्यः प्रयाचितः ॥
प्रदीयते च यद्दानं व्रीडादानमिति स्मृतम् ।
दृष्ट्वा प्रियाणि श्रुत्वा वा हर्षवद्यत्प्रदीयते ॥
हर्षदानमितिप्राहुर्दानं तद्धर्मचिन्तकाः ।
आक्रोशनार्थं हिंस्राणां प्रतीकाराय यद्भवेत् ॥
दीयते तापकर्तृभ्यो भयदानं तदुच्यते । इति

षडङ्गत्वं च।

दाता प्रतिग्रहीता च श्रद्धा देयं च धर्मयुक् ॥
देशकालौ च दानानामङ्गान्येतानि षड्विदुः।

दाता च।

अपापरोगी धर्मात्मा दित्सुरव्यसनः शुचिः।
अनिन्द्याजीवकर्मा च षड्भिर्दाता प्रशस्यते ॥
त्रिशुक्लः कृशवृत्तिश्च घृणालुः सकलेन्द्रियः।

प्रतिग्रहीतेति शेषः।

सौमुख्याद्यभिसंप्रीतिरर्थिनां दर्शने सदा ॥
सत्कृतिश्चानसूया च सदा श्रद्धेति कीर्त्यते।
अनापराधमक्लेशं स्वयं तेनार्जितं धनम् ॥
स्वल्पं वा विपुलं वापि देयमित्यभिधीयते।
यत्र यद्दुर्लभं भद्रं यस्मिन्कालेपि वा पुनः ॥
दानार्हौ देशकालौ तौ श्रेष्ठौ स्यातां न चान्यथा।
अवस्था देशकालानां पात्रदातृश्च संपदा ॥
हीनं वापि भवेत् श्रेष्ठं श्रेष्ठं वाप्यन्यथा भवेत्।

षड्विपाकत्वं च।

दुष्फलं निष्फलं हीनं तुल्यं विपुलमक्षयम्।
षड्विपाकं समुद्दिष्टं षडेतानि विपाकतः ॥ इति।

तथा हि।

नास्तिकस्तेनहिंस्रेभ्यो जाराय पतिताय च।
पिशुनब्रह्महन्तृभ्यः प्रदत्तं दुष्फलं भवेत् ॥
महदप्यफलं दानं श्रद्धया परिवर्जितम्।
परबाधाकरं दानं परमप्यूनतां व्रजेत् ॥

यथोक्तमिति यद्दत्तं चित्तेन कलुषेण तु ।
तत्तु संकल्पदोषेण दानं तुल्यफलं भवेत् ॥
युक्ताङ्गैः सकलैः षड्भिर्दानं स्याद्विपुलोदयम् ।
अनुक्रोशवशाद्दत्तं दानमक्षयतां व्रजेत् ॥

अथ पात्रस्वरूपम् । भविष्यपुराणे ।

क्षान्तिः स्पृहा दया सत्यं दानं शीलं तपः श्रुतम् ।
एतदष्टाङ्गमुद्दिष्टं परमं पात्रलक्षणम् ॥

स्पृहा च प्रकृतदीयमानद्रव्यविषयिणी । अन्यथा दानस्यैवासंभवाच्च तु लोभरूपा । तस्या अकार्पण्यास्पृहत्वं चेत्यनेन हानएव धर्मत्वाभिधानात् ।

महाभारते ।

साङ्गांस्तु चतुरो वेदान् योऽधीते वै द्विजर्षभः ।
षड्भ्यो निवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः ॥

उत्तमतमं पात्रमित्यर्थः ।

याज्ञवल्क्योऽपि ।

न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितम् ॥

पात्रविशेषेण फलविशेषश्च ।

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
सहस्रगुणमाचार्ये अनन्तं वेदपारगे ॥ इति वचनाद् ।

शूद्रे समगुणं दानं वैश्ये तु द्विगुणं स्मृतम् ।
क्षत्रिये त्रिगुणं प्राहुः षड्गुणं ब्राह्मणे स्मृतम् ॥
श्रोत्रिये चैव साहस्रमाचार्ये द्विगुणं ततः ।
आत्मने शतसाहस्रमनन्तं वेदपारगे ॥

इति बृहस्पतिवचनाच्च।

वृथा जन्मानि चत्वारि वृथा दानानि षोडश।
वृथा जन्म ह्यपुत्रस्य ये च धर्मबहिष्कृताः॥
परपाकेषु येऽश्नन्ति आत्मार्थं तु पचेत्तु यः।
पर्यश्नन्ति वृथा यच्च तदसत्यं प्रकीर्तितम्॥
आरूढपतिते दत्तमन्यायोपहृतं च यत्।
व्यर्थं तु पतिते दानं ब्राह्मणेतरके तथा॥
गुरौ चानृतिके पापे कृतघ्ने ग्रामयाजके।
वेदविक्रयिणे दत्तं तथा वृषलयाजके॥
ब्रह्मबन्धुषु यद्दत्तं यद्दत्तं वृषलीपतौ।
स्त्रीजनेषु च यद्दत्तं व्यालग्राहे तथैव च॥
परिचारकेषु यद्दत्तं वृथा दानानि षोडश।
तमोवृतस्तु यो दद्याद्भयात्क्रोधात्तथैव च॥
भुङ्क्ते च दानं तत्सर्वं गर्भस्थस्तु नरः सदा।
ददद्दानं द्विजातिभ्यो वृद्धभावेन मानवः॥
तस्मात्सर्वास्ववस्थासु सर्वदानानि पार्थिव।
दातव्यानि द्विजातिभ्यः स्वर्गमार्गजिगीषया॥ इति।

अत्रेदं बोध्यम्। पूर्वोदाहृतेषु फलाधिक्यबोधकेषु वचनेषु शूद्रादीनां पात्रत्वकथनमन्नदानविषयम्। तद्व्यतिरिक्तविषये चापात्रत्वकथनम्।

सर्वेषामेव दानानामन्नदानं विशिष्यते।
अन्नदानात्परं दानं न भूतं न भविष्यति॥
नात्र पात्रपरीक्षा स्यान्न कालनियमस्तथा।
न च देशः परीक्ष्यो ऽत्र देयमन्नं सदैव तत्॥

श्वभ्यश्च श्वपचेभ्यश्च पतितेभ्यस्तथैव च ।
कृमिकीटपतङ्गेभ्यो देयमन्नं सदैव तु ॥
अन्नं हि जीवितं लोके प्राणाश्चान्ननिबन्धनाः ।
अन्नदः प्राणदो लोके सर्वदश्च तथान्नदः ॥

इति मोक्षधर्मोत्तरात् ।

अन्नाद्भूतानि जायन्ते देवा ह्यन्नाद्यकाङ्क्षिणः ।
न तस्य पात्रादिविधिर्विना श्राद्धं प्रकीर्तितम् ।

इति नन्दिपुराणाच्च ।

अन्ये चात्र बहवो गवादीनां दानविशेषास्तेषां फलविशेषाश्च विधयश्च महानिबन्धेषु विस्तरेण निरूपितास्तत एवावगन्तव्याः ।

सर्वस्य चास्य समादेर्धर्मस्य राजदण्डभयाद्दम्भाद्वाऽऽचर्यमाणस्य नास्ति परलोकसाधनता । यथाऽऽह मनुः ।

धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः ।
बैडालव्रतिको ज्ञेयो हिंस्रःसर्वाभिसंधकः ॥
अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः ॥
ये बकव्रतिनो विप्रा ये च मार्जारलिङ्गिनः ।
ते पतन्त्यन्धतामिस्रे तेन पापेन कर्मणा ॥ इति ।

अत एव भावस्यैव सर्वधर्मनिदानत्वमुक्तं युधिष्ठिरं प्रति मार्कण्डेयेन । वनप॰ अ॰ २०६

प्राकारैश्च पुरद्वारैः प्रासादैश्च पृथग्विधैः ।
नगराणि न शोभन्ते हीनानि ब्राह्मणोत्तमैः ॥ ६० ॥
वेदाढ्या वृत्तसंपन्ना ज्ञानवन्तस्तपस्विनः ।
यत्र तिष्ठन्ति वै विप्रास्तन्नाम नगरं नृप ॥

ग्रामे वाप्यथ वारण्ये यत्र सन्ति बहुश्रुताः ।
तत्तन्नगरमित्याहुः पार्थ तीर्थं च तद्भवेत् ॥
रक्षितारं च राजानं ब्राह्मणं च तपस्विनम् ।
अभिगम्याभिपूज्याथ सद्यः पापात्प्रमुच्यते ॥
पुण्यतीर्थाभिषेकं च पवित्राणां च कीर्तनम् ।
सद्भिः संभाषणं चैव प्रशस्तं कीर्त्यते बुधैः ॥
साधुसंगमपूतेन वाक्सुभाषितवारिणा ।
पवित्रीकृतमात्मानं सन्तो मन्यन्ति नित्यशः ॥
त्रिदण्डधारणं मौनं जटाभारो ऽथ मुण्डनम् ।
वल्कलाजिनसंवेष्टं व्रतचर्या ऽभिषेचनम् ॥
अग्निहोत्रं वने वासः शरीरपरिशोषणम् ।
सर्वाण्येतानि मिथ्या स्युर्यदि भावो न निर्मलः ॥
न दुष्करमनाशित्वं सुकरं ह्यशनं विना ।
विशुद्धिश्चक्षुरादीनां षण्णामिन्द्रियगामिनाम् ॥
विकारि तेषां राजेन्द्र सुदुष्करतरं मनः ।
ये पापानि न कुर्वन्ति मनोवाक्कायकर्मभिः ॥
ते तपन्ति महात्मानो न शरीरस्य शोषणम् ।
न ज्ञातिभ्यो दया यस्य शुक्लदेहो विकल्मषः ॥
हिंसा सा तपसस्तस्य नानाशित्वं तपः स्मृतम् ।
आत्मानं विन्दते येन सर्वभूतगुहाशयम् ॥
श्लोकेन यदि वा ऽर्धेन क्षीणं तस्य प्रयोजनम् ।
ब्रह्माक्षरादभिसंधाय के चिच्छ्लोकपदाङ्कितैः ।
शतैरन्यैः सहस्रैश्च प्रत्ययो मोक्षलक्षणम् ॥
नायं लोको ऽस्ति न परो न सुखं संशयात्मनः ।
ऊचुर्ज्ञानविदो वृद्धाः प्रत्ययो मोक्षलक्षणम् ॥

विहितार्थस्तु वेदानां परिवेद प्रयोजनम्।
उद्विजेत्स तु वेदेभ्यो दावाग्नेरिव मानवः॥
शुष्कतर्कं परित्यज्य आश्रयस्व श्रुतिं स्मृतिम्। इति।

अतश्च मनसा संकल्पितस्यैव शमादेः सुखसाधनत्वमिति सर्वधर्माणां धर्मत्वस्य संपादकं शीलमेवेति पर्यवस्यति। यथा हि विविधभूषणभूषिता सुरूपाऽपि वनिता चेद् व्यभिचारिणी सा न पतिं सुखाकरोति तथा विद्वानपि धनिकोऽपि पुरुषश्चेच्छीलविहीनस्त्याज्य एव स्याद्बुद्धिमताम्। अत एव मनुः।

गायत्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः।
नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी॥ इत्याह।

मुनीनामप्याचारस्य शीलानुगुणस्यैव धर्मप्रमापकत्वमिति दर्शयति स एव।

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव चेति॥

अत्र च शीलस्य स्मृत्या समं पाठादाचारस्य पृथगुपादानाच्च तस्याचारापेक्षया प्राबल्यं स्मृतितौल्यं च स्वरसतः प्रतीयते। तच्च शीलं सद्वृत्तरूपम्। शीलं स्वभावे सद्वृत्त इति कोशात्। तच्च हारीतेन प्रदर्शितम्। ब्रह्मण्यता देवपितृभक्तता सौम्यता ऽपरोपतापिता ऽनसूयता मृदुता ऽपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यं प्रशान्तिश्चेति त्रयोदशविधं शीलमिति। अस्य च प्राधान्यमैहिकामुष्मिकसकलसुखसाधनत्वं च। उ॰ अ॰ ३४।

जिता सभा वस्त्रवता मिष्टाशा गोमता जिता।
अध्वा जितो यानवता सर्वं शीलवता जितम्॥ ४७॥
शीलं प्रधानं पुरुषे तद्यस्येह विनश्यति।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः॥ ४८॥

इति वदता विदुरेण दर्शितम्।

एवं शीलस्यैव कुलोत्कर्षाधायकत्वं न तु धनादेरिति स एवाह।

उ० प० ३६।

येषां न वृत्तं व्यथते न योनिश्चित्तप्रसादेन चरन्ति धर्मम्।
ये कीर्तिमिच्छन्ति कुले विशिष्टां त्यक्तानृतास्तानि महाकुलानि॥ २४

कुलानि समुपेतानि गोभिः पुरुषतोऽर्थतः।
कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः॥ २५॥
वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि।
कुलसंख्यां च गच्छन्ति कर्षन्ति च महद्यशः॥ २६॥
वृत्तं यत्नेन संरक्ष्यं वित्तमेति च याति च।
अक्षीणो वित्ततःक्षीणो वृत्ततस्तु हतो हतः॥ इति।

उ० प० ३४।

सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते॥ ३८॥ इति च।

उ० प० ३९

शूद्रेषु यत्र कुलं तात न स्वाध्यायो न च श्रुतम् ।
कारणं हि द्विजत्वे च वृत्तमेव न संशयः ॥ १०६ ॥
वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः ।
अक्षीणवृत्तो न क्षीणो वृत्ततस्तु हतो हतः ॥
पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः ।
सर्वे व्यसनिनो मूर्खा यः क्रियावान् स पण्डितः ॥
इत्युत्तरयता वृत्तमेव ब्राह्मण्यसाधनमिति सिद्धान्तितम् ।
इदमेवोपपादयितुं प्रवर्तते भरद्वाजभृगुसंवादः । मोक्षधर्मे अ·१८८
भृगुरुवाच ।
असृजद्ब्राह्मणानेवं पूर्वं ब्रह्मा प्रजापतीन् ॥
आत्मतेजोऽभिनिर्वृत्तान् भास्कराग्निसमप्रभान् ।
ततः सत्यं च धर्मं च तपो ब्रह्म च शाश्वतम् ॥
आचारं चैव शौचं च स्वर्गाय विदधे प्रभुः ।
देवदानवगन्धर्वा दैत्यासुरमहोरगाः ॥
यक्षराक्षसनागाश्च पिशाचा मनुजास्तथा ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम ॥
ये चान्ये भूतसंघानां वर्णास्तांश्चापि निर्ममे ।
ब्राह्मणानां सितो वर्णः क्षत्रियाणां च लोहितः ॥
वैश्यानां पीतको वर्णः शूद्राणामसितस्तथा ।
भरद्वाज उवाच ।
चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभिद्यते ॥
सर्वेषां खलु वर्णानां दृश्यते वर्णसङ्करः ।
कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः ॥
सर्वेषां नः प्रभवति कस्माद्वर्णो विभज्यते ।
स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम् ॥

तनुः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते ।
जङ्गमानामसंख्येयाः स्थावराणां च जातयः ॥
तेषां विविधवर्णानां कुतो वर्णविनिश्चयः ।

भृगुरुवाच ।

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ॥
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ।
कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ॥
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ।
गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः ॥
स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ।
हिंसा ऽनृतप्रिया लुब्धाः सर्वकर्मोपजीविनः ॥
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः
इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः ।
धर्मो यज्ञक्रिया तेषां नित्यं न प्रतिषिध्यते ।
इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती ॥
विहिता ब्रह्मणा पूर्वं लोभात्त्वज्ञानतां गताः ।
ब्राह्मणा ब्रह्मतन्त्रस्थास्तपस्तेषां न नश्यति ॥
ब्रह्म धारयतां नित्यं व्रतानि नियमांस्तथा ।
ब्रह्म चैव परं सृष्टं ये न जानन्ति ते ऽद्विजाः
तेषां बहुविधास्त्वन्यास्तत्र तत्र हि जातयः ।
पिशाचा राक्षसाः प्रेता विविधा म्लेच्छजातयः
प्रनष्टज्ञानविज्ञानाः स्वच्छन्दाचारचेष्टिताः ।
प्रजा ब्राह्मणसंस्काराः स्वकर्मकृतनिश्चयाः ॥
ऋषिभिः स्वेन तपसा सृज्यन्ते चापरे परैः ।
आदिदेवसमुद्भूता ब्रह्ममूला ऽक्षया ऽव्यया ॥
सा सृष्टिर्मानसी नाम धर्मतन्त्रपरायणा ।